# INDEX

TO THE

FIFTH KANDA

OF

# THE TAITTIRIYA-SANHITA.

## AGNICHAYANA BRAHMANAM

PRAPATHAKA 1–7

### PRAPÁTHAKA 1

PRAPÁTHAKA 2



PRAPÁTHAKA 3

Prapáthaka 7

# तैत्तिरीयसंहिता-पञ्चमकाण्डस्य।

## सूचीपत्रम्।

## अग्निचयनब्राह्मणम्।

प्रपाठकाः १—७।

### प्रपाठकः १।

प्रपाठकः २ ।



---

प्रपाठकः ३ ।

## प्रपाठकः ४ ।



---

## प्रपाठकाः ५—७ ।

### अग्निचितेः शिष्टाङ्गविषयकम् औपानुवाक्यम्

### उत्तरं काण्डम् ।

### प्रपाठकः ५ ।

# शुद्धिपत्रम् ।

| अशुद्ध | शुद्ध | पृष्ठा | पङ्क्ति । |
|---|---|---|---|
| वृक्षाम | वक्ष्याम | १ | ४ |
| समर्द्धयेति | समर्द्धयेति | २ | ८ |
| ऋर्द्धयेति | ऋद्धयेति | ३ | १ |
| रीय॰ | रिय | ५ | १४ |
| जिघर्म्यमि | जिघर्म्यमि | ७ | ३ |
| जनिष्या | जनिष्या | १० | ५ |
| प्राणां | प्राणं | १० | २५ |
| ओषधिभ्वियाह | ओषधीभ्विजाह | ११ | १४ |
| नाहेलेषे | नालिषे | १२ | १ |
| उपसृजति | उप सृजति | १४ | ३ |
| ऋभं | ऋमं | १४ | ८ |
| पयसि | पयसा | १६ | २० |
| भवति | भवन्ति | १७ | ८ |
| नैव | तेनैव | १८ | ५ |
| ग्रादित्यैव | ग्रादित्यस्येव | १९ | ९ |
| मौज | मौञ्ज | २३ | ११ |
| उर्जेवेम | ऊर्जेवेन | २३ | १० |
| समाद्धो | समिद्धो | २४ | १ |
| सुशिल्पे | सुशिल्पे | २४ | १६ |
| ऋमे | ग्रग्ने | २९ | १४ |
| ऋमे | ग्रग्ने | ३० | १२ |
| सुस्ता | सुपत्ता | ३७ | १३ |
| ज्योतिस्मान् | ज्योतिष्मान् | ३७ | १९ |
| ग्रस्ये | ग्रस्यै | ३८ | ४ |
| समवलीयन्त | समवलीयन्त | ३९ | २ |
| समप्य | सम्राप्य | ४० | १३ |
| यय | यया | ४२ | १९ |
| लोप्रान्त | लोप्रानत | ४३ | १७ |

| अशुद्ध | शुद्ध | पृष्ठा | पङ्क्तिः। |
|---|---|---|---|
| लोए | लोए | ४३ | १८ |
| वयासि | वयासि | ४६ | १० |
| सृत्वे | स्पृत्वे | ४८ | ५ |
| यदमिं | यदमि | ४८ | ७ |
| अयं। सर्पत्। | यं। असर्पत्। | ५१ | २ |
| तङ्क्षेन | तङ्क्षेन | ५२ | ३ |
| रएण्या | मारएण्या | ५२ | १८ |
| प्रतीचि | प्रतीची | ५३ | १ |
| नुदृप् | नुदृक् | ५६ | १ |
| हरीणी | हरिणी | ५६ | ६ |
| नमो वृक्तिं | नमोवृक्तिं | ५६ | १२ |
| वायो | वयो | ६१ | २ |
| दक्षिणतो | दक्षिणतो | ६८ | १५ |
| दक्षिणतो | दक्षिणतो | ६८ | १८ |
| खिंश | त्रिंश | ७० | २ |
| ऊर्द्धा | ऊर्द्धा | ७१ | १४ |
| मीथुनी | मिथुनी | ७५ | १५ |
| अमुष्मिन् | अमुष्मिन् | ७७ | २ |
| एनाम् | एनाः | ७८ | ४ |
| हरत्य | हरन्त्य | ८१ | ४ |
| मरिव | वरिव | ८२ | ८ |
| क्रतू | क्रतू | ८३ | एवं १. |
| दध्यात् | दधत् | ८१ | १२ |
| लोके | श्लोके | ८२ | २ |
| धर्मं | घर्मं | ८३ | १ |
| ग्रमपति | ग्रामपति | ८४ | १४ |
| पाव कें | पावको | ८५ | १ |
| यदमिं | यदमि | ८५ | २ |
| ऊताद् | ऊराद | ८६ | ६ |

॥०॥ श्रीगणेशाय नमः ॥०॥

# तैत्तिरीयसंहिताभाष्ये

## पञ्चमकाण्डे प्रथमप्रपाठके

### प्रथमोऽनुवाकः ।

हरिः ओम् ।

सावित्राणि जुहोति प्रसूत्यै चतुर्गृहीतेन जुहोति चतुष्पादः पशवः पशूनेवावरुन्धे चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठति छन्दाꣳसि देवेभ्योऽपाक्रामन् न वो भागानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुर्गृहीतमधारयन् पुरोऽनुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुर्गृहीतं जुहोति छन्दाꣳस्येव तत् प्रीणाति तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्ति यं कामयेत ॥ १ ॥

पापीयान्त्स्यादित्येकैकं तस्य जुहुयादाहुतीभिरेवैनमप गृह्णाति पापीयान् भवति यं कामयेत वसीयान्त्स्यादिति सर्वाणि तस्यानुद्रुत्य जुहुयादाहुत्यैवैनमभि क्रमयति वसीयान् भवत्यथो यज्ञस्यैवैषाभिक्रान्तिरेति

वै एष यज्ञमुखादृध्या योऽग्नेर्देवताया एत्यष्टावेतानि सावित्राणि भवन्ति अष्टाक्षरा गायत्री गायत्रः ॥ २ ॥

अग्निस्तेनैव यज्ञमुखादृध्या अग्नेर्देवतायै नैत्यष्टौ सावित्राणि भवन्ति आहुतिर्नवमी त्रिवृतमेव यज्ञमुखे वि यातयति यदि कामयेत छन्दाᳲसि यज्ञयशसेनार्पयेयमित्यृचमन्तमां कुर्याच्छन्दाᳲस्येव यज्ञयशसेनार्पयति यदि कामयेत यजमानं यज्ञयशसेनार्पयेयमिति यजुरन्तमं कुर्याद्यजमानमेव यज्ञयशसेनार्पयत्यृचा स्तोमᳲ समर्द्धयेति ॥ ३ ॥

आह समृद्ध्यै चतुर्भिरभ्रिमा दत्ते चत्वारि छन्दाᳲसि छन्दोभिरेव देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै अग्निर्देवेभ्यो निलायत स वेणुं प्राविशत् स एतामूतिमनु समचरद् यद्वेणोः सुषिरᳲ सुषिराऽभ्रिर्भवति सयोनित्वाय स यत्रयत्रावसत् तत्कृष्णमभवत् कल्माषी भवति रूपसमृद्ध्यै उभयतःक्ष्णूर्भवतीतश्च, अमुतश्चार्कस्यावरुध्यै व्याममात्री भवत्येतावद्वै पुरुषे वीर्यं वीर्यसम्मिताऽपरिमिता भवत्यपरिमितस्यावरुध्यै यो वनस्पतीनां फलग्रहिः स एषां वीर्यावान् फलग्रहिर्वेणुर्वैणवी भवति वीर्यस्यावरुध्यै* ॥ ४ ॥

---

* अस्य व्याख्यानं चतुर्थकाण्ड प्रथमप्रपाठक प्रथमानुवाकभाष्ये द्रष्टव्यम्।

कामयेत। गायत्र्यः। अर्द्धयेति। च। सप्तविंशतिश्च॥
॥ १ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ * ॥

श्रीगणेशाय नमः ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
चतुर्थकाण्डे चित्यर्थमन्त्राः सर्वत्र वर्णिताः।
ब्राह्मणं पञ्चमे काण्डे, तत्र सप्त प्रपाठकाः ॥
मन्त्रव्याख्या चतुर्थादौ, शिष्टमौपानुवाक्यगम्।
एकादशानुवाका स्युराद्येऽर्थास्त्वेवमीरिताः ॥
सावित्राहुतिरभ्रेश्च स्वीकारः प्रथमे भवेत्।
द्वितीये मृत्खनं गच्छन्नश्वेनाक्रामयेद्भुवम् ॥
तृतीये तूत्क्रमय्याश्वं* भूसंस्कारो जलादिभिः।
चतुर्थे तु मृदं खात्वा सम्भरेच्चर्मपत्रयोः ॥
पञ्चमे सम्भृतामेतां यज्ञभूमौ समाहरेत्।
षष्ठे तूखां निर्मिमीत, सप्तमे संस्करोति ताम् ॥
अष्टमे पशवो वह्नेरुख्यस्य नवमे जनिः।

* 'मृत्क्रमय्याश्वम्' इति सार्व्वत्रिक पाठो न सम्यगिव प्रतिभाति।

उख्यं दधीत दशमे, स्यादन्यस्याश्वमेधिकः* ॥
अध्येतुमनुवाकोऽत्र प्रोक्त, उत्तरस्य तां ततः ।
'समिद्धः' इत्येवमाद्या अश्वस्याप्रिय ईरिताः ॥
आप्रियः स्युः प्रयाजानां याज्या एकादशात्र ताः ।
अश्वमेधाख्यकाण्डे ताः विनियुक्ता स्फुटं श्रुतम् ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः ॥०॥

---

व्यृद्धं वा एतद्यज्ञस्य यदयजुष्केण क्रियत इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते यजुष्कृत्यै यज्ञस्य समृद्ध्यै प्रतूर्त्तं वाजिन्ना द्रवेत्यश्वमभि दधाति रूपमेवास्यैतन्महिमानं व्याचष्टे युञ्जाथां रासभं युवमिति गर्दभमसत्येव गर्दभं प्रति ष्ठापयति तस्मादश्वाद्गर्दभो सत्तरो योगेयोगे तवस्तरमित्याह ॥१॥

योगेयोग एवैनं युङ्क्ते वाजेवाजे हवामह इत्याहान्नं वै वाजोऽन्नमेवाव रुन्धे सखाय इन्द्रमूतय इत्याहेन्द्रियमेवाव रुन्धेऽग्निर्देवेभ्यो निलायत तं प्रजापतिरन्वविन्दत् प्राजापत्योऽश्वोऽश्वेन सम्भरत्यनुवित्त्यै पापवस्यसं वा एतत् क्रियते यच्छ्रेयसा च पापीयसा च समानं कर्म कुर्वन्ति पापीयान् ॥ २ ॥

* 'स्यादन्यस्याश्वमेधिका' इति ह्यनेकेषु पाठो न सङ्गति ।

अश्वान्नर्दभोऽश्वं पूर्वं नयन्ति पापवस्यसस्य व्यावृत्त्यै तस्माच्छ्रेयाꣳसं पापीयान् पश्चादन्वेति बहुर्वै भवतो भ्रातृव्यो भवतीव खलु वा एष योऽग्निं चिनुते वज्र्यश्वः प्रतूर्वन्नेह्यवक्रामन्नशस्तीरित्याह वज्रेणैव पाप्मानं भ्रातृव्यमव क्रामति रुद्रस्य गाणपत्यादित्याह रौद्रा वै पशवो रुद्रादेव ॥ ३ ॥

पशून्निर्याच्यात्मने कर्म कुरुते पूष्णा सयुजा सहे-त्याह पूषा वा अध्वनाꣳसन्नेता समष्ट्यै पुरीषायतनो वा एष यदग्निरङ्गिरसो वा एतमग्रे देवतानाꣳ सम-भरन् पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदच्छेही-त्याह सायतनमेवैनं देवताभिः सम्भरत्यग्निं पुरीष्य-मङ्गिरस्वदच्छेम इत्याह येन ॥ ४ ॥

सङ्गच्छते वाजमेवास्य वृङ्क्ते प्रजापतये प्रति-प्रोच्याग्निः सम्भृत्य इत्याहेयं वै प्रजापतिस्तस्या एतच्छ्रोत्रं यद्वल्मीकोऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम इति वल्मीकवपामुप तिष्ठते साक्षादेव प्रजापतये प्रति-प्रोच्याग्निꣳ सम्भरत्यग्निं पुरीष्यमङ्गिरस्वद्भराम इत्याह येन सङ्गच्छते वाजमेवास्य वृङ्क्तेऽन्वग्निरुषसामग्रं ॥ ॥ ५ ॥

अख्यदित्याहानुख्यात्या आगत्य वाज्यध्वन आक्रम्य

वाजिन् पृथिवीमित्याहेच्छत्येवैनं पूर्वया विन्दत्युत्तरया द्वाभ्यामा क्रमयति प्रतिष्ठित्या अनुरूपाभ्यां तस्मादनुरूपाः पशवः प्र जायन्ते द्यौस्ते पृष्ठं पृथिवी सधस्थमीत्याह एभ्यो वा एतं लोकेभ्यः प्रजापतिः समैरयत् रूपमेवास्यैतन्महिमानं व्याचष्टे वज्री वै, एष यदश्वो दद्भिरन्यतोदद्भ्यो भूयाल्लोमभिरुभयादद्भ्यो यं द्विष्यात्तमधस्पदं ध्यायेद्वज्रेणैवैनं स्तृणुते* ॥ ६ ॥

आह। पापीयान्। रुद्रादेव। येन। अग्रं। वज्री वै। सप्तदश च॥ २॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥०॥

---

उत्क्रामोदक्रमीदिति द्वाभ्यामुत्क्रमयति प्रतिष्ठित्या अनुरूपाभ्यां तस्मादनुरूपाः पशवः प्र जायन्तेऽप उप सृजति यत्र वा आप उपगच्छन्ति तदोषधयः प्रति तिष्ठन्त्योषधीः प्रतितिष्ठन्तीः पशवोऽनु प्रति तिष्ठन्ति पशून् यज्ञो यज्ञं यजमानो यजमानं प्रजास्तस्मादप उप सृजति प्रतिष्ठित्यै यदध्वर्युरनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः ॥ १ ॥

* अस्य व्याख्यानं चतुर्थकाण्ड-प्रथमप्रपाठक, द्वितीयानुवाकभाष्ये द्रष्टव्यम्।

स्याद्रक्षांꣳसि यज्ञꣳ हन्युर्हिरण्यमुपास्य जुहोत्यग्नि-वत्येव जुहोति नान्धोऽध्वर्युर्भवति न यज्ञꣳ रक्षांꣳसि घ्नन्ति जिघर्म्यग्निं मनसा घृतेनेत्याह मनसा हि पुरुषो यज्ञमभिगच्छति प्रतिक्ष्यन्तं भुवनानि विश्वेत्याह सर्वꣳ ह्येष प्रत्यङ् क्षेति पृथुं तिरश्चा वयसा बृहन्तमि-त्याहाल्पो ह्येष जातो महान् ॥ २ ॥

भवति व्यचिष्ठमन्नꣳ रभसं विदानमित्याहान्नमे-वास्मै स्वदयति सर्वमस्मै स्वदते य एवं वेद आ त्वा जिघर्मि वचसा घृतेनेत्याह तस्माद्यत् पुरुषो मनसाभि गच्छति तद्वाचा वदत्यरक्षसेत्याह रक्षसामपहत्यै मर्यश्रीः स्पृहयद्वर्णो अग्निरित्याहापचितिमेवास्मिन् दधात्यपचितिमान् भवति य एवं ॥ ३ ॥

वेद मनसा तु [*]वै तामाप्नुमर्हति यामध्वर्युरनग्ना-वाहुतिं जुहोति मनस्वतीभ्यां जुहोत्याहुत्योराप्त्यै द्वाभ्यां प्रतिष्ठित्यै यज्ञमुखेयज्ञमुखे वै क्रियमाणे यज्ञꣳ रक्षांꣳ-सि जिघांसन्त्येतर्हि खलु वा एतद्यज्ञमुखं यर्ह्येनदा-हुतिरश्नुते परि लिखति रक्षसामपहत्यै तिसृभिः परि लिखति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्माद्रक्षांꣳस्यप हन्ति ॥ ४ ॥

---

[*] त्वैतामिति B पु० पाठः।

गायत्रिया परि लिखति तेजो वै गायत्री तेजसैवैनं परि गृह्णाति त्रिष्टुभा परि लिखतीन्द्रियं वै त्रिष्टुगिन्द्रियेणैवैनं परि गृह्णात्यनुष्टुभा परि लिखत्यनुष्टुप् सर्वाणि छन्दांसि परिभूः पर्याप्त्यै मध्यतोऽनुष्टुभा वाग्वा अनुष्टुप् तस्मान्मध्यतो वाचा वदामो गायत्रिया प्रथमया परि लिखत्यथानुष्टुभाथ त्रिष्टुभा तेजो वै गायत्री, यज्ञोऽनुष्टुगिन्द्रियं त्रिष्टुप् तेजसा चैवेन्द्रियेण चोभयतो यज्ञं परि गृह्णाति* ॥ ५ ॥

अन्वोऽध्वर्युः। महान्। भवति य एवं। हन्ति। त्रिष्टुभा तेजो वै गायत्री। त्रयोदश च ॥ ३ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः ॥०॥

---

देवस्य त्वा सवितुः प्रसव इति खनति प्रसूत्या अग्नो धूममेवैतेन जनयति ज्योतिष्मन्तं त्वाग्ने सुप्रतीकमित्याह ज्योतिरेवैतेन जनयति सोऽग्निर्जातः प्रजाः शुचार्पयत् तं देवा अर्धर्चेनाशमयन् शिवं प्रजाभ्योऽहिंसन्तमित्याह प्रजाभ्य एवैनं शमयति द्वाभ्यां खनति प्रतिष्ठित्या अपां पृष्ठमसीति पुष्करपर्णमा ॥ १ ॥

* अस्य व्याख्यानं चतुर्थकाण्डे प्रथमप्रपाठके द्वितीयानुवाकभाष्ये द्रष्टव्यम्।

हृत्यायां वै एतत् पृष्ठं यत् पुष्करपर्णꣳ रूपेणैवै-नत् आ हरति पुष्करपर्णेन सम्भरति योनिर्वा अग्नेः पुष्करपर्णꣳ सयोनिमेवाग्निꣳ सम्भरति कृष्णाजिनेन सम्भरति यज्ञो वै कृष्णाजिनं यज्ञेनैव यज्ञꣳ सम्भरति यद् ग्राम्याणां पशूनां चर्मणा सम्भरेद् ग्राम्यान् पशून् शुचार्पयेत् कृष्णाजिनेन सम्भरत्यारण्यानेव पशून् ॥२॥

शुचार्पयति तस्मात् समावत् पशूनां प्रजायमानाना-मारण्याः पशवः कनीयाꣳसः शुचा ह्यृता लोमतः सम्भरत्यतो ह्यस्य मेध्यं कृष्णाजिनञ्च पुष्करपर्णञ्च सꣳस्तृणाति इयं वै कृष्णाजिनमसौ पुष्करपर्णमाभ्या-मेवैनमुभयतः परि गृह्णात्यग्निर्देवेभ्यो निलायत तम-थर्वान्वपश्यदथर्वा त्वा प्रथमो निरमन्थदग्न इति ॥३॥

आह य एवैनमन्वपश्यत् तेनैवैनꣳ सम्भरति त्वा-मग्ने पुष्करादधि इत्याह पुष्करपर्णे ह्येनमुपश्रितम-विन्दत्तमु त्वा दध्यङ्ङृषिरित्याह दध्यङ् वा आथर्वण-स्तेजस्व्यासीत् तेज एवास्मिन् दधाति तमु त्वा पाथ्यो वृषेत्याह पूर्वमेवोदितमुत्तरेणाभि गृणाति ॥ ४ ॥

चतसृभिः सम्भरति चत्वारि छन्दाꣳसि छन्दोभिरेव गायत्रीभिर्ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुभी-राजन्यस्य त्रैष्टुभो हि राजन्यो यं कामयेत वसीया-

न्त्यादित्युभयीभिस्तस्य सम्भरेत् तेजश्चैवास्मै इन्द्रियं च समीची दधात्यष्टाभिः सम्भरत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तꣳ सम्भरति सीद होतरिति, आह देवता एवास्मै सꣳ सादयति नि होतेति मनुष्यान्त्सꣳ सीदस्वेति वयाꣳसि जनिष्वा हि जेन्यो अग्रे अह्नामित्याह देवमनुष्यानेवास्मै सꣳसन्नान् प्र जनयति ॥ ५ ॥

आ। एव पशून्। इति। गृणाति। होतरिति। सप्तविꣳशतिश्च ॥ ४ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे प्रथमप्रपाठके* चतुर्थोऽनुवाकः ॥०॥

---

क्रूरमिव वै अस्याः एतत् करोति यत् खनत्यप उप-सृजत्यापो वै शान्ताः शान्ताभिरेवास्यै शुचꣳ शमयति सन्ते वायुर्मातरिश्वा दधात्वित्याह प्राणो वै वायुः प्राणेनैवास्यै प्राणꣳ सन्दधाति सन्ते वायुरित्याह तस्माद्वायुप्रच्युता दिवो वृष्टिरीर्त्ते तस्मै च देवि वषडस्तु ॥ १ ॥

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयप्रथमप्रपाठकस्य तृतीयानुवाकभाष्ये द्रष्टव्यम्।

तुभ्यमित्याह पड्वा ऋतवं ऋतुष्वेव वृष्टिं दधाति तस्मात् सर्वान् ऋतून् वर्षति यद्वषट्कुर्याद् यातयामा अस्य वषट्कारः स्याद्यन्न वषट्कुर्याद् रक्षांसि यज्ञं हन्युर्वडित्याह परोक्षमेव वषट्करोति नास्य यातयामा वषट्कारो भवति न यज्ञं रक्षांसि घ्नन्ति सुजातो ज्योतिषा सहेत्यनुष्टुभा उप नह्यत्यनुष्टुप् ॥ २ ॥

सर्वाणि छन्दांसि छन्दांसि खलु वा अग्नेः प्रिया तनूः प्रिययैवैनं तनुवा परि दधाति वेदुको वासो भवति य एवं वेद वारुणो वै अग्निरुपनद्ध उदु तिष्ठ स्वध्वर ऊर्ध्व ऊ षु ण ऊतये इति साविचीभ्यामुत्तिष्ठति सवितृप्रसूत एवास्योर्ध्वां वरुणमेनिमुत्सृजति द्वाभ्यां प्रतिष्ठित्यै स जातो गर्भो असि ॥ ३ ॥

रोदस्योरित्याह इमे वै रोदसी तयोरेष गर्भो यत् अग्निस्तस्मादेवमाह अग्ने चारुविभृत ओषधिष्वित्याह यदा ह्येतं वि भरन्ति अथ चारुतरो भवति प्र मातृभ्यो अधि कनिक्रदद्गा इत्याह ओषधयो वा अस्य मातरस्ताभ्य एवैनं प्र च्यावयति स्थिरो भव वीड्वङ्ग इति गर्दभ आ सादयति ॥ ४ ॥

सन्नह्यत्येवैनमेतया स्थेम्ने गर्दभेन सं भरति तस्मात् गर्दभः पशूनां भारभारितमो गर्दभेन सं भरति तस्मा-

ङ्गर्दभोऽध्यनाहेलेशोऽत्यन्यान् पशून् मेद्यत्यन्नꣳ॰ ह्येने-
नार्कꣳ स भरन्ति गर्दभेन सं भरति तस्माद् गर्दभो
द्विरेताः सन् कनिष्ठं पशूनां प्रजायतेऽग्निर्ह्यस्य योनिं
निर्दहति प्रजासु वै एष एतर्ह्यारूढः ॥ ५ ॥

स ईश्वरः प्रजाः शुचा प्रदहः शिवो भव प्रजाभ्य
इत्याह प्रजाभ्य एवैनꣳ शमयति मानुषीभ्यस्त्वमङ्गिर
इत्याह मानव्यो हि प्रजाः मा द्यावापृथिवी अभि
शूशुचो मा अन्तरिक्षꣳ मा वनस्पतीनित्याह एभ्य
एवैनं लोकेभ्यः शमयति प्रैतु वाजी कनिक्रददित्याह
वाजी ह्येष नानदद्रासभः पत्वेति ॥ ६ ॥

आह रासभ इति ह्येतमृषयोऽवदन् भरन्नग्निं
पुरीष्यमित्याह अग्निꣳ ह्येष भरति मा पादि आयुषः
पुरेत्याह आयुरेवास्मिन् दधाति तस्माद्गर्दभः सर्वमायु-
रेति तस्माद्गर्दभे पुरा आयुषः प्रमीते बिभ्यति वृषाग्निं
वृषणं भरन्नित्याह वृषा ह्येष वृषाग्निरपां गर्भं ॥
॥ ७ ॥

समुद्रियमित्याह अपाꣳ ह्येष गर्भो यदग्निरग्न आ
याहि वीतये इति वै इमौ लोकौ वि एतामग्न आ याहि
वीतये इति यदाहानयोर्लोकयोर्वीत्यै प्रच्युतो वै एष
आयतनात् अगतः प्रतिष्ठाꣳ स एतर्हि अध्वर्युञ्च यज-

मानञ्च ध्यायति ऋतं सत्यमित्याह इयं वा ऋतमसौ ॥
॥ ८ ॥

सत्यमनयोरेवैनं प्रति ष्ठापयति नातिमाच्छेत्यध्वर्युर्न यजमानो वरुणो वै एष यजमानमभ्यैति यदग्निरुपनद्ध ओषधयः प्रति गृह्णीताग्निमेतमित्याह शान्त्यै व्यस्यन् विश्वा अमतीररातीरित्याह रक्षसामपहत्यै निषीदन् नो अप दुर्मतिꣳ हनदित्याह प्रतिष्ठित्यै ओषधयः प्रति मोदध्वं ॥ ९ ॥

एनमित्याहौषधयो वै अग्नेर्भागधेयं ताभिरेवैनꣳ समर्धयति पुष्पावतीः सुपिप्पला इत्याह तस्मादोषधयः फलं गृह्णन्त्ययं वो गर्भ ऋत्वियः प्रत्नꣳ सधस्थमासददित्याह याभ्य एवैनं प्र च्यावयति तास्वेवैनं प्रति ष्ठापयति द्वाभ्यामुपावहरति प्रतिष्ठित्यै* ॥ १० ॥

अस्तु । अनुष्टुप् । असि । सादयति । आरूढः । पत्वेति । गर्भम् । असौ । मोदध्वम् । द्विचत्वारिꣳशच्च ॥
॥ ५ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥०॥

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयप्रथमप्रपाठकस्य चतुर्थानुवाकभाष्ये द्रष्टव्यम् ।

वारुणो वै अग्निरुपनद्धो वि पाजसा इति वि स्रंसयति सवितृप्रसूत एवास्य विषूचीं वरुणमेनिं वि सृजति अप उपसृजति आपो वै शान्ताः शान्ताभिरेवास्य शुचꣳ शमयति तिसृभिरुपसृजति चिवृद्वै अग्निर्यावानेव अग्निस्तस्य शुचꣳ शमयति मित्रः सꣳसृज्य पृथिवीमित्याह मित्रो वै शिवो देवानां तेनैव ॥ १ ॥

एनꣳ सꣳ सृजति शान्त्यै यद् ग्राम्याणां पात्राणां कपालैः सꣳसृजेद् ग्राम्याणि पात्राणि शुचार्पयेद् अर्भकपालैः सꣳ सृजत्येतानि वै अनुपजीवनीयानि तान्येव शुचार्पयति शर्कराभिः सꣳ सृजति धृत्यै अथो शन्त्वाय्यजलोमैः सꣳ सृजत्येषा वै अग्नेः प्रिया तनूर्यदजा प्रिययैवैनं तनुवा सꣳ सृजत्यथो तेजसा कृष्णाजिनस्य लोमभिः सं ॥ २ ॥

सृजति यज्ञो वै कृष्णाजिनं यज्ञेनैव यज्ञꣳ सꣳ सृजति रुद्राः सम्भृत्य पृथिवीमित्याहैता वै एतं देवता अग्रे समभरन् ताभिरेवैनꣳ सम्भरति मखस्य शिरोऽसीत्याह यज्ञो वै मखस्तस्य एतच्छिरो यदुखा तस्मादेवमाह यज्ञस्य पदे स्थ इत्याह यज्ञस्य ह्येते ॥ ३ ॥

पदे अथो प्रतिष्ठित्यै प्र अन्याभिर्यच्छति अनु अन्यैर्मन्त्रयते मिथुनत्वाय त्र्युद्धिं करोति त्रय इमे लोका एषां

लोकानामाप्त्यै छन्दोभिः करोति वीर्यं वै छन्दांसि वीर्येणैवैनां करोति यजुषा बिलं करोति व्यावृत्त्यै इयतीं करोति प्रजापतिना यज्ञमुखेन सम्मितां द्विस्तनां करोति द्यावापृथिव्योर्दोहाय चतुस्तनां करोति पशूनां दोहाय अष्टास्तनां करोति छन्दसां दोहाय नवाश्रिम् अभिचरतः, कुर्यात् त्रिवृतमेव वज्रं सम्भृत्य भ्रातृव्याय प्र हरति स्तृत्यै कृत्वाय सा महीम् उखामिति नि दधाति देवतास्वेवैनां प्रति ष्ठापयति* ॥ ॥ ४ ॥

तेनैव। लोमभिः सं। एते। अभिचरतः। एकविंशतिश्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥०॥

---

सप्तभिर्धूपयति सप्त वै शीर्षण्याः प्राणाः शिर एतद् यज्ञस्य यदुखा शीर्षन्नेव यज्ञस्य प्राणान् दधाति तस्मात् सप्त शीर्षन् प्राणा अश्वशकेन धूपयति प्राजापत्यो वै

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयप्रथमप्रपाठकस्य पञ्चमानुवाकभाष्ये द्रष्टव्यम्।

अश्वः सयोनित्वाय अदितिस्त्वेत्याह इयं वै अदिति-रदित्या एव अदित्यां खनत्यस्याः अक्रूरङ्काराय न हि स्वः स्वꣳ हिनस्ति देवानां त्वा पत्नीरित्याह देवानाम्॥ ॥ १ ॥

वै एतां पत्नयोऽग्रेऽकुर्वꣳस्ताभिरेवैनां दधाति धिषणा-स्त्वा इत्याह विद्या वै धिषणा विद्याभिरेवैनामभीन्धे ग्नास्त्वेत्याह छन्दाꣳसि वै ग्नाश्छन्दोभिरेवैनाꣳ श्रपयति वरूत्रयस्त्वेत्याह होत्राः वै वरूत्रयो होत्राभिरेवैनां पचति जनयस्त्वा इत्याह देवानां वै पत्नीः ॥ २ ॥

जनयस्ताभिरेवैनां पचति षड्भिः पचति षड्वै ऋतव ऋतुभिरेवैनां पचति द्विः पचन्त्वित्याह तस्मात् द्विः संवत्सरस्य सस्यं पच्यते वारुण्युखा अभीद्धा मैत्रिया उपैति शान्त्यै देवस्त्वा सविता उद्वपत्वित्याह सवितृ-प्रसूत एवैनां ब्रह्मणा देवताभिरुद्वपति अपद्यमाना पृथिवि आशा दिश आ पृण ॥ ३ ॥

इत्याह तस्मादग्निः सर्वा दिशोऽनु वि भाति उत्तिष्ठ बृहती भवोर्ध्वा तिष्ठ ध्रुवा त्वमित्याह प्रतिष्ठित्यै असूर्यं पात्रमनाच्छृणमा च्छृणत्ति देवत्रा अकः अज-क्षीरेण आ च्छृणत्ति परमं वै एतत् पयो यदजक्षीरं परमेणैवैनां पयसि आ च्छृणत्ति यजुषा व्यावृत्त्यै

छन्दोभिरा च्छृणत्ति छन्दोभिर्वै एषा, क्रियते छन्दोभिरेव छन्दांꣳसि आ च्छृणत्ति* ॥ ४ ॥

आह देवानां । वै पत्नीः । मृण । एषा । षट् च ॥ ॥ ७ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ॥०॥

---

एकविꣳशत्या माषैः पुरुषशीर्षमच्छैति अमेध्या वै माषा अमेध्यं पुरुषशीर्षममेध्यैरेवास्य अमेध्यं निरवदाय मेध्यं कृत्वा आ हरति एकविꣳशतिर्भवति एकविꣳशो वै पुरुषः पुरुषस्याप्त्यै व्यृद्धं वा एतत् प्राणैरमेध्यं यत् पुरुषशीर्षꣳ सप्तधा वितृण्णां वल्मीकवपां प्रति नि दधाति सप्त वै शीर्षण्याः प्राणाः प्राणैरेवैनत् समर्द्धयति मेध्यत्वाय यावन्तः ॥ १ ॥

वै मृत्युबन्धवस्तेषां यम आधिपत्यं परीयाय यमगाथाभिः परि गायति यमादेवैनद्वृङ्क्ते तिसृभिः परि गायति चय इमे लोका एभ्य एवैनल्लोकेभ्यो वृङ्क्ते तस्माद् गायते न देयं गाथा हि तद् वृङ्क्तेऽग्निभ्यः

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयप्रथमप्रपाठकस्य षष्ठानुवाकभाष्ये द्रष्टव्यम् ।

षड्भिर्दीक्षयति षड्वै ऋतव ऋतुभिरेवैनं दीक्षयति सप्तभिर्दीक्षयति सप्त छन्दांसि छन्दोभिरेवैनं दीक्षयति विश्वे देवस्य नेतुरित्यनुष्टुभा उत्तमया जुहोति वाग्वै अनुष्टुप् तस्मात् प्राणानां वागुत्तमा एकस्मात् अक्षरादनाप्तं प्रथमं पदं तस्माद् यद्वाचोऽनाप्तं तन्मनुष्या उप जीवन्ति पूर्णया जुहोति पूर्ण इव हि प्रजापतिः ॥ १ ॥

प्रजापतेराप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजानां सृष्ट्यै यदर्चिषि प्रवृञ्ज्याद् भूतमव रुन्धीत यदङ्गारेषु भविष्यदङ्गारेषु प्र वृणक्ति भविष्यदेवाव रुन्धे भविष्यद्धि भूयो भूताद्द्वाभ्यां प्र वृणक्ति द्विपाद् यजमानः प्रतिष्ठित्यै ब्रह्मणा वै एषा यजुषा सम्भृता यदुखा सा यद्भिद्येत आर्त्तिमार्च्छेत् ॥ २ ॥

यजमानो हन्येतास्य यज्ञो मित्रैतामुखान्तपेत्याह ब्रह्म वै मित्रो ब्रह्मन्नेवैनां प्रति ष्ठापयति नार्त्तिमार्च्छति यजमानो नास्य यज्ञो हन्यते यदि भिद्येत तैरेव कपालैः संसृजेत् सैव ततः प्रायश्चित्तिर्यो गतश्रीः स्यान्मथित्वा तस्य अव दध्याद् भूतो वै एष स स्वां ॥ ३ ॥

देवतामुपैति यो भूतिकामः स्याद् य उखायै स-

भवेत् स एव तस्य स्यादतो ह्येष सम्भवति एष वै स्वयम्भू-र्नाम भवत्येव यं कामयेत भ्रातृव्यमस्मै जनयेयमित्य-न्यतस्तस्याहृत्य अवं दध्यात् साक्षादेवास्मै भ्रातृव्यं जनयति अम्बरीषादन्नकामस्य अवं दध्यात् अम्बरीषे वै अन्नं भ्रियते सयोन्येवान्नं ॥ ४ ॥

अवं रुन्धे मुञ्जानवं दधाति ऊर्जं मुञ्जा ऊर्जमेवास्मै अपि दधाति अग्निर्देवेभ्यो निलायत स क्रुमुकं प्राविशत् क्रुमुकमवं दधाति यदेवास्य तत्र न्यक्तं तदेवाव रुन्धे आज्येन सं यौति एतद्वै अग्नेः प्रियं धाम यदाज्यं प्रियेणैवैनं धाम्ना समर्द्धयति अथो तेजसा ॥ ५ ॥

वैकङ्कतीमा दधाति भा एवाव रुन्धे शमीमयीमा दधाति शान्त्यै सीद त्वं मातुरस्या उपस्थे इति तिसृभिर्जातमुप तिष्ठते त्रय इमे लोका एष्वेव लोकेषु आविदं गच्छति अथो प्राणानेवात्मन् धत्ते* ॥ ६ ॥

प्रजापतिः। ऋच्छत्। स्वां। एवान्नं। तेजसा। चतुस्त्रिंशच्च ॥ ९ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः ॥ ० ॥

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयप्रथमप्रपाठकस्य नवमानुवाक-भाष्ये द्रष्टव्यम्।

न ह स्म वै पुराग्निरपरशुवृक्णं दहति तदस्मै प्रयोगः एव ऋषिरस्वदयत् यदग्ने यानि कानि चेति समिधमा दधात्यपरशुवृक्णमेवास्मै स्वदयति सर्वमस्मै स्वदते य एवं वेद औदुम्बरीमा दधाति ऊर्वै उदुम्बर ऊर्जमेवास्मै अपि दधाति प्रजापतिरग्निमसृजत तꣳ सृष्टꣳ रक्षाꣳसि ॥ १ ॥

अजिघाꣳसन्त्स एतद्राक्षोघ्नमपश्यत् तेन वै स रक्षाꣳस्यपाहत यद्राक्षोघ्नं भवत्यग्नेरेव तेन जातात् द्रक्षाꣳस्यप हन्ति आश्वत्थीमा दधाति अश्वत्थो वै ... स्पत्नीनाꣳ सपत्नसाहो विजित्यै वैकङ्कतीमा ... भा एवाव रुन्धे शमीमयीमा दधाति शान्त्यै ... मे ब्रह्म उदेयां ब्राह्म अतिरमित्युत्तमे औदुम्बरी ॥ २ ॥

वाचयति ब्रह्मणैव क्षत्रꣳ सꣳश्यति क्षत्रेण ... तस्माद् ब्राह्मणो राजन्यवानति अन्यं ब्राह्मणं तस्माद् राजन्यो ब्राह्मणवानति अन्यꣳ राजन्यं मृत्युर्वै एष यत् अग्निरमृतꣳ हिरण्यꣳ रुक्ममन्तर' प्रति मुञ्चतेऽमृतमेव मृत्योरन्तर्धत्ते एकविꣳशतिनिर्बाधो भवति एकविꣳशतिर्वै देवलोका द्वादश मासाः पञ्च ऋतवस्त्रय इमे लोका असावादित्यः ॥ ३ ॥

एकविꣳश एतावन्तो वै देवलोकास्तेभ्य एव भ्रातृव्य-

न्तरेति निर्बाधैर्वै देवा असुरान्निर्बाधैऽकुर्वत तत् निर्बाधानां निर्बाधत्वं निर्बाधी भवति भ्रातृव्यानेव निर्बाधे कुरुते साविचिया प्रति मुञ्चते प्रसूत्यै नक्तोषासेत्युत्तरया अहोराचाभ्यामेवैनमुद्यच्छते देवा अग्निं धारयन् द्रविणोदा इत्याह प्राणा वै देवा द्रविणोदा अहोराचाभ्यामेवैनमुद्यत्य ॥ ४ ॥

प्राणैर्दाधारासीनः प्रति मुञ्चते तस्मादासीनाः प्रजाः प्र जायन्ते कृष्णाजिनमुत्तरं तेजो वै हिरण्यं ब्रह्म कृष्णाजिनं तेजसा चैवैनं ब्रह्मणा चोभयतः परि गृह्णाति षड्यामꣳ शिक्यं भवति षड्वा ऋतव ऋतुभिरेवैनमुद्यच्छते यद् द्वादशयामꣳ संवत्सरेणैव मौञ्जं भवति ऊर्ग्वै मुञ्जा ऊर्जैवैनꣳ सम् अर्धयति सुपर्णोऽसि गरुत्मानित्यवेक्षते रूपमेवास्य एतन्महिमानं व्याचष्टे दिवं गच्छ सुवः पतेत्याह सुवर्गमेवैनं लोकं गमयति*
॥ ५ ॥

रक्षाꣳसि। औदुम्बरी। आदित्यः। उद्यत्य। सं। चतुर्विꣳशतिश्च ॥ १० ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः ॥०॥

---

*अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयप्रथमप्रपाठकस्य दशमानुवाकभाष्ये द्रष्टव्यम्।

समीड्यो अञ्जन्त्सदरं मतीनां घृतमग्ने मधुमत् पिन्वमानः। वाजी वहन् वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम्[१]। घृतेनाञ्जन्त्सं पथो देवयानान् प्रजानन्वाजी अप्येतु देवान्। अनु त्वा सप्त प्रदिशः सचन्ताꣳ स्वधामस्मै यजमानाय धेहि[२] इड्यश्चासि वन्द्यश्च वाजिन्नाशुश्चासि मेध्यश्च सप्ते अग्निष्ट्वा ॥ १ ॥

देवैर्वसुभिः सजोषाः प्रीतं वह्निं वहतु जातवेदाः[३] स्तीर्णं बर्हिः सुष्टरीमा जुषाणा उरु पृथु प्रथमानं पृथिव्याम्। देवेभिर्युक्तमदितिः सजोषाः स्योनं कृण्वाना सुविते दधातु[४]। एता उ वः सुभगा विश्वरूपा वि पक्षोभिः श्रयमाणा उत आतैः। ऋष्वाः सतीः कवषः शुम्भमाना द्वारो देवीः सुप्रायणा भवन्तु[५]। अन्तरा मित्रावरुणा चरन्ती मुखं यज्ञानामभि संविदाने। उषासा वां ॥ २ ॥

सुहिरण्ये सुशिल्पे ऋतस्य योनाविह सादयामि[६]। प्रथमा वाꣳ सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा। अपिप्रयं चोदना वां मिमाना होतारा ज्योतिः प्रदिशा दिशन्ता[७]। आदित्यैर्नो भारती वष्टु यज्ञꣳ सरस्वती सह रुद्रैर्न आवीत्। इडा उपहूता

पृश्ञवः स्युः(८१)। न ह्वं स्म(१०।१)। नवपञ्चाशत्* ॥
॥ ५९ ॥

समाप्तः प्रथमप्रपाठकः।

॥०॥ हरिः ओम् ॥०॥

---

एव हि श्रूयते, 'समिद्धो अञ्जन्कृदरम्मतीनामित्यश्वस्याप्र
भवन्ति सरूपत्वाय' इति। तत्र प्रथमामृचमाह,—"समिद्धो अञ्ज
कृदर मतीनां घृतमग्ने मधुमत् पिन्वमान'। वाजी वहन् वाजि
जातवेदो देवानां वक्षि प्रियमा सधस्थम्(१)" इति। हे 'जातवेद' 'अग्नें
'वाजिन' (अश्वं) 'वहन्' (वह, देवान् प्रापयेत्यर्थ)। कीदृशोऽग्नि'?—
'समिद्ध' (सम्यक् प्रदीप्त),'वाजी' (अन्नवान्, अन्नसम्पादक इत्यर्थ)
किं कुर्वन्?—'मतीनां 'कृदर' 'अञ्जन्', कृदरशब्दो धान्यानां आवाप
कुसूलादिकमाचष्टे, 'मतीनां' (अभिज्ञानां) 'कृदर' (कुसूलस्थानीय
त्वकस्वरूपम् 'अञ्जन्' (प्रकाशयन्), 'मधुमत्' (मधुर) 'घृ
'पिन्वमान'' (पिवन्), तथा देवार्थं सर्वाणि हवींषि वहन्। कीदृ
वाजिन?—'देवानां' 'प्रियं' (प्रीतिहेतुं), 'आ'—'सधस्थं' (सर्वत पश्यन्तं
सह स्थित)। अत एवाश्वमेधकाण्डे समाम्नायते,—'आग्नेयं कृष्णग्रीं
पुरस्ताल्ललाटे' इत्यादि।

---

* प्रथमे अनुवाके ४, द्वितीये ६, तृतीये ५, चतुर्थे ५, पञ्चमे १
षष्ठे ४, सप्तमे ३, अष्टमे ६, नवमे ६, दशमे ५, एकादशे ४ इ
नवपञ्चाशत्।

अथ द्वितीयामृचमाह,—"घृतेनाञ्जन्त्सं पथो देवयानान् प्रजानन् वाज्यप्येतु देवान्। अनु त्वा सप्ते प्रदिशः सचन्ताᳪ स्वधामस्मै यजमानाय धेहि[१]" इति। अयं 'वाजी' 'देवान्' 'अप्येतु' (प्राप्नोतु)। किं कुर्वन्?'—घृतेन' (स्वस्योपरिभूतेनाज्येन) 'देवयानान्' 'पथः' (देवलोकस्थितान् मार्गान्) 'सं'–'अञ्जन्' (सम्यक् द्रवीकुर्वन्), 'प्रजानन्' (तेन घृतलाञ्छनेन मार्गो यथा ज्ञायते तथा कुर्वन्)। हे 'सप्ते' (अश्व), 'प्रदिशः' (प्रकृष्टाः सर्वा दिशः) 'त्वा' (त्वाम्) 'अनु'–स्थित्य 'सचन्तां' (सर्वे वेत्तारो भवन्तु*), देवप्राप्त्यावानुकूल्यमेव कुर्वन्तु; त्वञ्च 'अस्मै' (यजमानाय) 'स्वधां' (स्वधाकारोपलचितमन्नं) 'धेहि' (सम्पादय)॥

अथ तृतीयामृचमाह,—"ईड्यश्चासि वन्द्यश्च वाजिन्नाशुश्चासि मेध्यश्च सप्ते। अग्निष्ट्वा देवैर्वसुभिः सजोषाः प्रीतं वह्निं वहतु जातवेदाः[२]" इति। हे 'वाजिन्' (अश्व), त्वम् अस्माभिः 'ईड्यश्च' (स्तोतव्यश्च), 'वन्द्यश्च' (नमस्कार्यश्च) 'असि'। हे 'सप्ते' (अश्व), 'आशुश्च' (शीघ्रगामी च), 'मेध्यश्च' (यागयोग्यश्च) 'असि'। 'जातवेदाः' 'अग्निः' 'त्वा' (त्वां) 'वहतु' (देवान् प्रापयतु)। कीदृशः 'अग्निः'? 'वसुभिः' (जगन्निवासहेतुभिः) 'देवैः' 'सजोषाः' (समानप्रीतिः)। कीदृशं त्वां?-'प्रीतं' (प्रीतिविषयं) 'वह्निं' (वोढारं)॥

अथ चतुर्थीमृचमाह,—"स्तीर्णं बर्हिः सुष्टरीमा जुषाणा उरु पृथु प्रथमानं पृथिव्याम्। देवेभिर्युक्तमदितिः सजोषाः स्योनं कृण्वाना सुविते दधातु[३]" इति। 'अदितिः' (भूमिदेवी) 'सुविते'

* सर्वा वेत्त्यो भवन्तु इति ब पु० पाठः।

यावती वै पृथिवी तस्यै यम आधिपत्यं परीयाय यो वै यमं देवयजनमस्याः अनिर्याच्याग्निं चिनुते यमायैनꣳ स चिनुते अप इत इत्यध्यवसाययति यममेव देवयजनमस्मै निर्याच्यात्मनेऽग्निं चिनुते इष्वग्रेण वै अस्या अनामृतमिच्छन्तो नाविन्दन्ते देवा एतद्यजुरपश्यन् अप इत इति यदेतेनाध्यवसाययति ॥ १ ॥

अनामृत एवाग्निं चिनुते उद्धन्ति यदेवास्याः अमेध्यं तदप हन्ति अपोऽवोक्षति शान्त्यै सिकता नि वपत्येतद्वै अग्नेर्वैश्वानरस्य रूपꣳ रूपेणैव वैश्वानरमव रुन्धे ऊषान् नि वपति पुष्टिर्वै एषा प्रजननं यदूषाः पुष्ट्यामेव प्रजननेऽग्निं चिनुते ऽथो संज्ञाने एव संज्ञानꣳ ह्येतत ॥ २ ॥

पशूनां यदूषाः द्यावापृथिवी सहास्तां ते वियती अब्रूतामस्त्वेव नौ सह यज्ञियमिति यदमुष्या यज्ञियमासीत्तदस्यामदधात् ते ऊषाः अभवन् यदस्या यज्ञियमासीत्तदमुष्यामदधात्तददश्चन्द्रमसि कृष्णमूषान्निवपन्नदो ध्यायेद् द्यावापृथिव्योरेव यज्ञियेऽग्निं चिनुते ऽयꣳ सो अग्निरिति विश्वामित्रस्य ॥ ३ ॥

सूक्तं भवत्येतेन वै विश्वामित्रोऽग्नेः प्रियं धाम अवं अरुन्ध अग्नेरेवैतेन प्रियं धामाव रुन्धे छन्दोभिर्वै

देवाः सुवर्गं लोकमायन् चतस्रः प्राचीरुप दधाति चत्वारि छन्दाꣳसि छन्दोभिरेव तद्यजमानः सुवर्गं लोकमेति तेषाꣳ सुवर्गं लोकं यतां दिशः समव्लीयन्त ते द्वे पुरस्तात् समीची उपादधत द्वे ॥ ४ ॥

पश्चात् समीची ताभिर्वै ते दिशोऽदृꣳहन् यत् द्वे पुरस्तात् समीची उपदधाति द्वे पश्चात् समीची दिशां विधृत्यै अथो पशवो वै छन्दाꣳसि पशूनेवास्मै समीचीं दधाति अष्टावुप दधाति अष्टाक्षरा गायत्री गायत्रो-ऽग्निर्यावानेवाग्निस्तं चिनुतेऽष्टावुप दधाति अष्टाक्षरा गायत्री गायत्री सुवर्गं लोकमञ्जसा वेद सुवर्गस्य लोकस्य ॥ ५ ॥

प्रज्ञात्यै त्रयोदश लोकंपृणा उप दधाति एकविꣳश-तिः सम्पद्यन्ते प्रतिष्ठा वै एकविꣳशः प्रतिष्ठा गार्हपत्यः एकविꣳशस्यैव प्रतिष्ठां गार्हपत्यमनु प्रति तिष्ठति प्रत्यग्निं चिक्यानस्तिष्ठति य एवं वेद पञ्च चितीकं चिन्वीत प्रथमं चिन्वानः पांक्तो यज्ञः। पांक्ताः पशवो यज्ञमेव पशूनव रुन्धे त्रिचितीकं चिन्वीत द्वितीयं चिन्वानस्त्रय इमे लोका एष्वेव लोकेषु ॥ ६ ॥

प्रति तिष्ठति एकचितीकं चिन्वीत तृतीयं चिन्वानः एकधा वै सुवर्गो लोक एकवृतैव सुवर्गं लोकमेति

पुरीषेणाभ्यूहति तस्मान्मा॑ꣳसेनास्थि छन्नं न दुश्चर्मा भवति य एवं वेद पञ्च चितयो भवन्ति पञ्चभिः पुरीषैरभ्यूहति दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड् विराज्येवान्नाद्ये प्रति तिष्ठति* ॥ ७ ॥

अध्यवसाययति । ह्येतत् । विश्वामित्रस्य । आदधत द्वे । लोकस्य । लोकेषु । सप्तचत्वारिꣳशच्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥०॥

---

वि वै एतौ द्विषाते यश्च पुराग्निर्यश्चोखायाꣳ समितमिति चतसृभिः सन्नि वपति चत्वारि छन्दाꣳसि छन्दाꣳसि खलु वै अग्नेः प्रिया तनूः प्रिययैवैनौ तनुवा सꣳ शास्ति समितमित्याह तस्मात् ब्रह्मणा क्षत्रꣳ समेति यत् सन्मुप्य विहरति तस्मात् ब्रह्मणा क्षत्रं व्येति ऋतुभिः ॥ १ ॥

यं एनं दीक्षयन्ति स ऋतुभिरेव विमुच्यो मातेव पुत्रं पृथिवी पुरीष्यमित्याह ऋतुभिरेवैनं दीक्षयित्वा ऋतुभिर्वि मुञ्चति वैश्वानर्या शिक्यमा दत्ते स्वदयत्येवैनत नैर्ऋतीः कृष्णास्तिस्रस्तुषपक्वा भवन्ति निर्ऋत्यै

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयद्वितीयप्रपाठकस्य चतुर्थानुवाकभाष्ये द्रष्टव्यम् ।

वै एतद्भागधेयं यत्तुषाः निर्ऋत्यै रूपं कृष्णांऽ रूपेणैव निर्ऋतिं निरवंदयते इमां दिशं यन्त्येषा ॥ २ ॥

· वै निर्ऋत्यै दिक् स्वायामेव दिशि निर्ऋतिं निरवंदयते स्वकृते इरिणे उपं दधाति प्रदरे वैतद्वै निर्ऋत्याः आयतनंऽ स्व एवायतने निर्ऋतिं निरवंदयते शिक्यमभ्युपं दधाति नैर्ऋतो वै पाशः साक्षादेवैनं निर्ऋतिपाशात् मुञ्चति तिस्र उपं दधाति त्रेधाविहितो वै पुरुषो यावानेव पुरुषस्तस्मात् निर्ऋतिमवं यजते पराचीरुपं ॥ ३ ॥

· दधाति पराचीमेवास्मात् निर्ऋतिं प्र णुदते ऽप्रतीक्षम् आ यन्ति निर्ऋत्याः अन्तर्हित्यै मार्जयित्वोपं तिष्ठन्ते मेध्यत्वाय गार्हपत्यमुपं तिष्ठन्ते निर्ऋतिलोके एव चरित्वा पूता देवलोकमुपावर्तन्ते एकयोपं तिष्ठन्ते एकधैव यजमाने वीर्यं दधति निवेशनः सङ्गमनो वसूनामित्याह प्रजा वै पशवो वसु प्रजयैवैनं पशुभिः समर्धयन्ति* ॥ ४ ॥

कृतुभिः। एषा। पराचीरुप। अष्टाचत्वारिंशच्च॥ ४॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥०॥

* व्याख्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयद्वितीयप्रपाठकस्य पञ्चमानुवाकभाष्ये द्रष्टव्यम्।

पुरुषमात्रेण वि मिमीते यज्ञेन वै पुरुषः सम्मितो यज्ञपुरुषेणैवैनं वि मिमीते यावान् पुरुष ऊर्द्ध्वबाहुस्तावान् भवति एतावद्वै पुरुषे वीर्यं वीर्येणैवैनं वि मिमीते पक्षी भवति न ह्यपक्षः पतितुमर्हति अरत्निना पक्षौ द्राघीयाꣳसौ भवतस्तस्मात् पक्षप्रवयाꣳसि वयाꣳसि व्याममात्रौ पक्षौ च पुच्छञ्च भवति एतावद्वै पुरुषे वीर्यं ॥ १ ॥

वीर्यसम्मितो वेणुना वि मिमीते आग्नेयो वै वेणुः सयोनित्वाय यजुषा युनक्ति यजुषा कृषति व्यावृत्त्यै षड्गवेन कृषति षड्वा ऋतवः ऋतुभिरेवैनं कृषति यद् द्वादशगवेन संवत्सरेणैव इयं वै अग्नेरतिदाहादबिभेत् सा एतद्द्विगुणमपश्यत् कृष्टञ्चाकृष्टञ्च ततो वै इमां न अत्यदहत् यत्कृष्टञ्चाकृष्टञ्च ॥ २ ॥

भवत्यस्या अनतिदाहाय द्विगुणं त्वा* अग्निमुद्यन्तुमर्हतीत्याहुर्यत् कृष्टञ्चाकृष्टञ्च भवति अग्नेरुद्यत्यै एतावन्तो वै पशवो द्विपादश्च चतुष्पादश्च तान् यत् प्राचं उत्सृजेत् रुद्रायापि दध्याद् यद्दक्षिणा पितृभ्यो नि धुवेत् यत् प्रतीचो रक्षाꣳसि हन्युरुदीच उत्सृजति एष वै देवमनुष्याणाꣳ शान्ता दिक् ॥ ३ ॥

---

* 'सु वै' इति पदपाठपाठः ।

तामेवैनान् अनु उत्सृजति अथो खल्विमां दिशम् उत्सृजति असौ वै आदित्यः प्राणः प्राणमेवैनान् अनु उत्सृजति दक्षिणा पर्य्यावर्त्तन्ते स्वमेव वीर्य्यमनु पर्य्यावर्त्तन्ते तस्माद्दक्षिणोऽर्द्ध आत्मनो वीर्यावत्तरोऽथो आदित्यस्यैवावृतमनु पर्यावर्त्तन्ते तस्मात् पराञ्चः पशवो वि तिष्ठन्ते प्रत्यञ्च आ वर्त्तन्ते तिस्रस्तिस्रः सीताः ॥ ४ ॥

कृषति त्रिवृतमेव यज्ञमुखे वि यातयत्योषधीर्वपति ब्रह्मणा अन्नमव रुन्धेऽर्कोऽर्क्यीयते चतुर्दशभिर्वपति सप्त ग्राम्या ओषधयः सप्तारण्या उभयीषामवरुध्यै अन्नस्यान्नस्य वपति अन्नस्यान्नस्यावरुध्यै कृष्टे वपति कृष्टे हि ओषधयः प्रतितिष्ठन्ति अनुसीतं वपति प्रजात्यै द्वादशसु सीतासु वपति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मै अन्नं पचति यदग्निचित् ॥ ५ ॥

अनवरुद्धस्य अश्नीयादवरुद्धेन व्यृध्येत ये वनस्पतीनां फलग्रहयस्तानिध्मेऽपि प्रोक्षेदनवरुद्धस्य अवरुध्यै दिग्भ्यो लोष्टान्त्समस्यति दिशामेव वीर्यमवरुध्य दिशां वीर्येऽग्निं चिनुते यं द्विष्याद् यत्र स स्यात् तस्यै दिशो लोष्टमाहरेत् इषमूर्जमहमित आ ददे इति इषमेवोर्ज तस्यै दिशोऽव रुन्धे क्षोधुको भवति यस्तस्यां दिशि

भवति उत्तरवेदिमुप वपति उत्तरवेद्याꣳ हि अग्नि-श्चीयते अथो पशवो वै उत्तरवेदिः पशूनेवाव रुन्धे अथो यज्ञपरुषोऽनन्तरित्यै* ॥ ६ ॥

च भवति एतावद्वै पुरुषे वीर्यं। यत् कृष्णाकर्षञ्च। दिक्। सीताः। अग्निचित्। अव। पञ्चविꣳशतिश्च॰॥५॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥०॥

---

अग्ने तव श्रवो वय इति सिकता नि वपति एतद्वै अग्नेर्वैश्वानरस्य सूक्तꣳ सूक्तेनैव वैश्वानरमव रुन्धे षड्भिर्नि वपति षड्वा ऋतवः संवत्सरः संवत्सरोऽग्नि-र्वैश्वानरः साक्षादेव वैश्वानरमव रुन्धे समुद्रं वै नाम एतच्छन्दः समुद्रमनु प्रजाः प्र जायन्ते यदेतेन सिकता निवपति प्रजानां प्रजननायेन्द्रः ॥ १ ॥

वृत्राय वज्रं प्राहरत् स त्रेधा व्यभवत् स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयं येऽन्तःशरा अशीर्यन्त ताः शर्करा अभवन् तच्छर्कराणाꣳ शर्करत्वं वज्रो वै शर्कराः पशुरग्निर्यच्छर्कराभिरग्निं परिमिनोति वज्रेणैव

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयद्वितीयप्रपाठकस्य पञ्चमषष्ठ-सप्तमानुवाक-भाष्ये द्रष्टव्यम्।

असौ पशून् परि गृह्णाति तस्माद् वज्रेण पशवः परिगृहीतास्तस्मात् स्थेयानस्थेयसो नोप हरते त्रिसप्ताभिः पशुकामस्य ॥ २ ॥

परि मिनुयात् सप्त वै शीर्षण्याः प्राणाः प्राणाः पशवः प्राणैरेवास्मै पशूनव रुन्धे त्रिणवाभिर्भ्रातृव्यवतस्त्रिवृतमेव वज्रꣳ सम्भृत्य भ्रातृव्याय प्र हरति स्तृत्यै अपरिमिताभिः परि मिनुयादपरिमितस्यावरुध्यै यं कामयेतापशुः स्यादित्यपरिमित्य तस्य शर्कराः सिकता व्यूहेत् अपरिगृहीत एवास्य विषूचीनꣳ रेतः परा सिञ्चति अपशुरेव भवति ॥ ३ ॥

यं कामयेत पशुमान्त्स्यादिति परिमित्य तस्य शर्कराः सिकता व्यूहेत् परिगृहीत एवास्मै समीचीनꣳ रेतः सिञ्चति पशुमानेव भवति सौम्या व्यूहति सोमो वै रेतोधा रेत एव तद्दधाति गायत्रिया ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्यः शंयुं बार्हस्पत्यं मेधो नोपानमत् सोऽग्निं प्राविशत् ॥४॥

सोऽग्नेः कृष्णो रूपं कृत्वोदायत सोऽश्वं प्राविशत् सोऽश्वस्यावान्तरशफोऽभवत् यदश्वमाक्रमयति य एव मेधोऽश्वं प्राविशत् तमेवाव रुन्धे प्रजापतिनाग्निश्चेतव्य इत्याहुः प्राजापत्योऽश्वो यदश्वमाक्रमयति प्रजापतिनैव

अग्निं चिनुते पुष्करपर्णमुप दधाति योनिर्वै अग्नेः पुष्करपर्णꣳ सयोनिम्, एवाग्निं चिनुतेऽपां पृष्ठमसीत्युप दधाति अपां वै एतत् पृष्ठं यत् पुष्करपर्णꣳ रूपेणैव एनदुप दधाति* ॥ ५ ॥

इन्द्रः। पशुकामस्य।, भवति। अविशत्। सयोनिं। विꣳशतिश्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

---

ब्रह्म जज्ञानमिति रुक्ममुप दधाति ब्रह्ममुखा वै प्रजापतिः प्रजा असृजत ब्रह्ममुखा एव तत् प्रजा यजमानः सृजते ब्रह्म जज्ञानमित्याह तस्माद् ब्राह्मणो मुख्यो मुख्यो भवति य एवं वेद ब्रह्मवादिनो वदन्ति न पृथिव्यां नान्तरिक्षे न दिव्यग्निश्चेतव्य इति यत् पृथिव्यां चिन्वीत पृथिवीꣳ शुचाऽर्पयेत् नौषधयो न वनस्पतयः ॥ १ ॥

प्र जायेरन् यदन्तरिक्षे चिन्वीत अन्तरिक्षꣳ शुचा अर्पयेत् न वयाꣳसि प्र जायेरन् यद्दिवि चिन्वीत दिवꣳ

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयद्वितीयप्रपाठकस्य सप्तमाष्टमानुवाकभाष्ये द्रष्टव्यम्।

शुचा अर्पयेत् न पर्जन्यो वर्षेद् रुक्ममुप दधाति अमृतं वै हिरण्यममृतं एवाग्निं चिनुते प्रजात्यै हिरण्मयं पुरुषमुप दधाति यजमानलोकस्य विधृत्यै यदिष्टकाया आतृण्णमनूपदध्यात् पशूनाञ्च यजमानस्य च प्राणमपि दध्याद्दक्षिणतः ॥ २ ॥

प्राञ्चमुप दधाति दाधारं यजमानलोकं न पशूनाञ्च यजमानस्य च प्राणमपि दधाति अथो खल्विष्टकाया आतृण्णमनूप दधाति प्राणानामुत्सृष्ट्यै द्रप्सः चस्कान्देत्यभि मृशति होत्रासु एवैनं प्रति ष्ठापयति सुचावुप दधात्याज्यस्य पूर्णां कार्ष्मर्यमयीं दध्नः पूर्णामौदुम्बरीम् इयं वै कार्ष्मर्यमयी असावौदुम्बरी इमे एवोप धत्ते ॥ ३ ॥

तूष्णीमुप दधाति न हीमे यजुषाप्तुमर्हति दक्षिणां कार्ष्मर्यमयीमुत्तरामौदुम्बरीं तस्मादस्या असावुत्तरा आज्यस्य पूर्णां कार्ष्मर्यमयीं वज्रो वै आज्यं वज्रः कार्ष्मर्यो वज्रेणैव यज्ञस्य दक्षिणतो रक्षांस्यप हन्ति दध्नः पूर्णामौदुम्बरीं पशवो वै दधि ऊर्क् उदुम्बरः पशुष्वेवोर्जं दधाति पूर्णे उप दधाति पूर्णे एवैनं ॥ ४ ॥

अमुष्मिंल्लोक उप तिष्ठेते विराजि अग्निश्चेतव्यं इत्याहुः सुग्वै विराट् यत् सुचावुपदधाति विराजि

एवाग्निं चिनुते यज्ञमुखे यज्ञमुखे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति यज्ञमुखꣳ रुक्मो यद् रुक्मं व्याघारयति यज्ञमुखादेव रक्षाꣳस्यप हन्ति पञ्चभिर्व्याघारयति पाङ्क्तो यज्ञो यावानेव यज्ञस्तस्माद् रक्षाꣳस्यप हन्ति अक्ष्णया व्याघारयति तस्मादक्ष्णया, पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै* ॥ ५ ॥

वनस्पतयः। दक्षिणतः। धत्ते। एवैनं। तस्मादक्ष्णया। पञ्च च ॥ ७ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ० ॥

---

स्वयमातृण्णामुप दधाति इयं वै स्वयमातृण्णा इमामेव उप धत्तेऽश्वमुप घ्रापयति प्राणमेवास्यां दधाति अथो प्राजापत्यो वै अश्वः प्रजापतिनैवाग्निं चिनुते प्रथमेष्टकोपधीयमाना पशूनाञ्च यजमानस्य च प्राणमपि दधाति स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्यै अथो सुवर्गस्य लोकस्यानुख्यात्यै अप्रावग्निश्चेतव्य इत्याहुरेप वै ॥ १ ॥

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयद्वितीयप्रपाठकस्य अष्टमनवमानुवाकभाष्ये द्रष्टव्यम्।

अग्निर्वैश्वानरो यद्ब्राह्मणस्तस्मै प्रथमामिष्टकां यजुष्कृतां प्रयच्छेत् तां ब्राह्मणश्चोपदध्यातामग्नावेव तदग्निं चिनुत ईश्वरो वा एष आर्तिमार्तोर्योऽविद्वानिष्टकाम् उप दधाति त्रीन् वरान् दद्यात् त्रयो वै प्राणाः प्राणानाꣳ स्पृत्यै द्वावेव देयौ द्वौ हि प्राणावेक एव देय एको हि प्राणः पशुः॥२॥

वा एष यदग्निं न खलु वै पशव आयवसे रमन्ते दूर्वेष्टकामुप दधाति पशूनां धृत्यै द्वाभ्यां प्रतिष्ठित्यै काण्डात् काण्डात् प्ररोहन्तीत्याह काण्डेन काण्डेन ह्येषा प्रतितिष्ठति एवा नो दूर्वे प्र तनु सहस्रेण शतेन चेत्याह साहस्रः प्रजापतिः प्रजापतेराप्त्यै देवलक्ष्मं वै त्र्यालिखिता तामुत्तरलक्ष्माणं देवा उप आ दधत अधरलक्ष्माणमसुरा यं॥३॥

कामयेत वसीयान्त्स्यादित्युत्तरलक्ष्माणं तस्योप दध्याद्वसीयानेव भवति यं कामयेत पापीयान्त्स्यादित्यधरलक्ष्माणं तस्योप दध्यादसुरयोनिमेवैनमनु परा भावयति पापीयान् भवति त्र्यालिखिता भवति इमे वै लोकास्त्र्यालिखितैभ्य एव लोकेभ्यो भ्रातृव्यमन्तरेति अङ्गिरसः सुवर्गं लोकं यतः पुरोडाशः कूर्मो भूत्वाऽनु प्र असर्पत्॥४॥

यत् कूर्ममुप दधाति यथा क्षेत्रविदञ्जसा नयत्येव-मेवैनं कूर्मः सुवर्गं लोकमञ्जसा नयति मेधो वा एष पशूनां यत् कूर्मो यत् कूर्ममुपदधाति स्वमेव मेधं पश्यन्तः पशव उप तिष्ठन्ते श्मशानं वा एतत् क्रियते यन्मृतानां पशूनाꣳ शीर्षाण्युपधीयन्ते यज्जीवन्तं कूर्म-मुपदधाति तेनाश्मशानचिदास्त्वयो वा एष यत् ॥ ५ ॥

कूर्मो मधु वाता ऋतायत इति दध्ना मधुमिश्रेणाभ्य-नक्ति स्वदयत्येवैनं ग्राम्यं वा एतदन्नं यद्दध्यारण्यं मधु यद्दध्ना मधुमिश्रेणाभ्यनक्ति उभयस्यावरुद्ध्यै मही द्यौः पृथिवी च न इत्याह आभ्यामेवैनमुभयतः परि गृह्णाति प्राञ्चमुप दधाति सुवर्गस्य लोकस्य समष्ट्यै पुरस्तात् प्रत्यञ्चमुप दधाति तस्मात् ॥ ६ ॥

पुरस्तात् प्रत्यञ्चः पशवो मेधमुप तिष्ठन्ते यो वा अप-नाभिमग्निं चिनुते यजमानस्य नाभिमनु प्र विशति स एनमीश्वरो हिꣳसितोरुलूखलमुप दधात्येषा वा अग्ने-र्नाभिः सनाभिमेवाग्निं चिनुतेऽहिꣳसायै औदुम्बरं भवत्यूर्ग्वा उदुंबर ऊर्जमेवाव रुन्धे मध्यत उप दधाति मध्यत एवास्मा ऊर्जं दधाति तस्मात् मध्यत ऊर्जा भुञ्जत इयद्भवति प्रजापतिना यज्ञमुखेन सम्मितमव हन्त्यन्नमेवाकर्वैष्णव्या ऋचा उप दधाति विष्णुर्वै यज्ञो

वैष्णवा वनस्पतयो यज्ञ एव यज्ञं प्रति ष्ठापयति* ॥ ७ ॥

एष वै। पशुः। अयं। सर्पत्। एष यत्। तस्मात्। सप्तविंशतिश्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे द्वितीयप्रपाठके अष्टमोऽनुवाकः ॥०॥

---

एषां वा एतल्लोकानां ज्योतिः सम्भृतं यदुखा यदुखामुपदधात्येभ्य एव लोकेभ्यो ज्योतिरव रुन्धे मध्यत उप दधाति मध्यत एवास्मै ज्योतिर्दधाति तस्मात् मध्यतो ज्योतिरुपास्महे सिकताभिः पूरयत्येतद्वा अग्नेर्वैश्वानरस्य रूपꣳ रूपेणैव वैश्वानरमव रुन्धे यं कामयेत क्षोधुकः स्यादित्यूनां तस्योप ॥ १ ॥

दध्यात् क्षोधुक एव भवति यं कामयेतानुपदस्यत् अन्नमद्यादिति पूर्णां तस्योप दध्यादनुपदस्यदेवान्नमत्ति सहस्रं वै प्रति पुरुषः पशूनां यच्छति सहस्रमन्ये पशवो मध्ये पुरुषशीर्षमुप दधाति सवीर्यत्वायोखायामपि दधाति प्रतिष्ठामेवैनं गमयति व्यृद्धं वा एतत्प्राणैरमेध्यं यत् पुरुषशीर्षममृतं खलु वै प्राणाः ॥ २ ॥

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयद्वितीयप्रपाठकस्य नवमानुवाकभाष्ये द्रष्टव्यम्।

अमृत॑ꣳ हिर॑ण्यं प्राणेषु॑ हिरण्यशल्कान् प्रत्य॑स्यति प्रति॒ष्ठामे॒वैन॑द्गमयि॒त्वा प्रा॒णैः सम॑र्द्धयति द॒भ्रा मधु॑मिश्रेण॑ पूरयति मध॒व्यो॑ऽसा॒नीति॑ शृताट॒ङ्केन मेध्य॒त्वाय॑ ग्रा॒म्यं वा ए॒तद॒न्नं यद्दध्या॑र॒ण्यं मधु॒ यद्द॒भ्रा मधु॑मिश्रेण॑ पू॒रय॑त्यु॒भय॑स्या॒व॑रुध्यै प॒शु॒शी॒र्षाण्युप॑ दधाति प॒श॒वो वै प॒शु॒शी॒र्षाणि॑ प॒शूने॒वाव॑ रुन्धे॒ यं का॒मये॑ताप॒शुः स्या॒दिति॑ ॥ ३ ॥

विषू॒चीना॑नि॒ तस्योप॑ दध्या॒द् विषू॑च ए॒वास्मा॑त् प॒शून् द॑धात्यप॒शुरे॒व भ॑वति॒ यं का॒मये॑त प॒शु॒मान्त्स्या॒दिति॑ स॒मी॒ची॒नानि॒ तस्योप॑ दध्यात् स॒मीच॑ ए॒वास्मै॑ प॒शून् द॑धाति प॒शु॒माने॒व भ॑वति पु॒रस्ता॑त् प्र॒तीची॒नमश्व॑स्य उप॑ दधाति प॒श्चात् प्रा॒चीन॑मृष॒भस्या॑प॑श॒वो वा अ॒न्ये गो॒अ॒श्वेभ्यः॑ प॒श॒वो गो॒अ॒श्वाने॒वास्मै॑ स॒मीचौ॑ दधात्ये॒ताव॑न्तो॒ वै प॒श॒वः ॥ ४ ॥

द्वि॒पाद॑श्च॒ चतु॑ष्पादश्च॒ तान् वा ए॒तद॒ग्नौ प्र द॑धाति॒ यत् प॑शुशी॒र्षाण्यु॑प॒दधा॑त्य॒मुमा॑र॒ण्यमनु॑ ते दिशामी॒त्या॑ह ग्रा॒म्येभ्य॑ ए॒व प॒शुभ्य॑ आर॒ण्यान् प॒शून्छु॒चम॑नू॒त्सृ॑जति॒ तस्मा॑त् स॒माव॑त् प॒शू॒नां प्र॒जाय॑माना॒नामा॑र॒ण्याः प॒श॒वः कनी॑या॒ꣳसः शु॒चा ह्यृ॒ताः स॑र्पशी॒र्षमु॒प॑दधाति॒ यैव स॒र्पे त्विषि॒स्तामे॒वाव॑ रुन्धे ॥ ५ ॥

यत्समीचीनं पशुशीर्षैरुपदध्याद् ग्राम्यान् पशून् दꣳशुकाः स्युर्यद्विषूचीनमारण्यान् यजुरेव वदेदव तां त्विषिꣳ रुन्धे या सर्पे न ग्राम्यान पशून् हिनस्ति नारण्यानथो खलूपधेयमेव यदुपदधाति तेन तां त्विषिमव रुन्धे या सर्पे यद्यजुर्वदति तेन शान्तम्* ॥ ६ ॥

ऊनां तस्योप । प्राणाः । स्यादिति । वै पशवः । रुन्धे । चतुश्चत्वारिꣳशच्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ० ॥

———

पशुर्वा एष यदग्निर्योनिः खलु वा एषा पशोर्वि क्रियते यत् प्राचीनमैष्टकाद्यजुः क्रियते रेतोऽपस्या अपस्या उप दधाति योनावेव रेतो दधाति पञ्चोप दधाति पांक्ताः पशवः पशूनेवास्मै प्र जनयति पञ्च दक्षिणतो वज्रो वा अपस्या वज्रेणैव यज्ञस्य दक्षिणतो रक्षाꣳसि अप हन्ति पञ्च पश्चात् ॥ १ ॥

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयद्वितीयप्रपाठकस्य नवमदशमानुवाकभाष्ये द्रष्टव्यम्।

प्राचीरूपं दधाति पश्चाद्धे प्राचीनꣳ रेतो धीयते पश्चा-
देवास्मै प्राचीनꣳ रेतो दधाति पञ्च पुरस्तात् प्रतीची-
रूपं दधाति पञ्च पश्चात् प्राचीस्तस्मात् प्राचीनꣳ रेतो
धीयते प्रतीचीः प्रजा जायन्ते पञ्चोत्तरतश्छन्दस्याः
पशवो वै छन्दस्याः पशूनेव प्रजातान्त्स्वमायतनमभि
पर्यूहते इयं वा अग्नेरतिदाहादबिभेत् सैताः ॥ २ ॥

अपस्या अपश्यत् ता उपाधत्त ततो वा इमान्नात्य-
दहद् यदपस्या उपदधात्यस्या अनतिदाहायोवाच
हेयमदद् इत् स ब्रह्मणाऽन्नं यस्यैता उपधीयान्तै य उ
चैना एवं वेददिति प्राणभृत उप दधाति रेतस्येव प्राणान्
दधाति तस्माद्वदन् प्राणन् पश्यन् शृण्वन् पशुर्जायते-
ऽयं पुरः ॥ ३ ॥

भुव इति पुरस्तादुप दधाति प्राणमेवैताभिर्दाधा-
रायं दक्षिणा विश्वकर्मेति दक्षिणतो मन एवैताभि-
र्दाधारायं पश्चाद्विश्वव्यचा इति पश्चाच्चक्षुरेवैताभि-
र्दाधारेदमुत्तरात् सुवरित्युत्तरतः श्रोत्रमेवैताभिर्दा-
धारेयमुपरि मतिरित्युपरिष्टाद्वाचमेवैताभिर्दाधार दश
दशोप दधाति स वीर्यत्वायाक्ष्णया ॥ ४ ॥

उप दधाति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति
प्रतिष्ठित्यै याः प्राचीस्ताभिर्वसिष्ठ आर्ध्नोत् या दक्षिणा

ताभिर्भरद्वाजो याः प्रतीचिस्ताभिर्विश्वामित्रो या उदीचीस्ताभिर्जमदग्निर्या ऊर्ध्वास्ताभिर्विश्वकर्मा य एवमेतासामृद्धिं वेद्यर्ध्नोत्येव य आसामेवं बन्धुतां वेद बन्धुमान् भवति य आसामेवं क्लृप्तिं वेद कल्पते॥ ५॥

अस्मै य आसामेवमायतनं वेदायतनवान् भवति य आसामेवं प्रतिष्ठां वेद प्रत्येव तिष्ठति प्राणभृत उपधाय संयत उप दधाति प्राणानेवास्मिन्धित्वा संयद्भिः सं यच्छति तत् संयतां संयत्त्वमथो प्राण एवापानं दधाति तस्मात् प्राणापानौ सं चरतो विषूचीरुप दधाति तस्माद्विष्वंचौ प्राणापानौ यद्वै अग्नेरसंयतम्॥ ६॥

असुवर्ग्यमस्य तत् सुवर्ग्योऽग्निर्यत् संयत उप दधाति समेवैनं यच्छति सुवर्ग्यमेवाकस्त्यविर्वयः कृतमयानामित्याह वयोभिरेवायानेव रुन्धे अयैर्वयांसि सर्वतो वायुमतीर्भवन्ति तस्मादयं सर्वतः पवते* ॥ ७ ॥

पश्चात्। एताः। पुरः। अच्छया। कल्पते। संयतम्। पञ्चत्रिंशच्च ॥१०॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः॥ ० ॥

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयतृतीयप्रपाठकस्य प्रथमद्वितीयतृतीयानुवाकभाष्ये द्रष्टव्यम्।

गायत्री त्रिष्टुप् जगत्यनुष्टुप् पङ्क्त्या सह। बृहत्युष्णिहा ककुत् सूचीभिः शिम्यन्तु त्वा[१]। द्विपदा या चतुष्पदा त्रिपदा या च षट्पदा। सच्छन्दा या च विच्छन्दाः सूचीभिः शिम्यन्तु त्वा[२]। महानाम्नी रेवतयो विश्वा आशाः प्रसूवरीः। मेध्या विद्युतो वाचः सूचीभिः शिम्यन्तु त्वा[३]। रजता हरिणीः सीसा युजो युज्यन्ते कर्मभिः। अश्वस्य वाजिनस्त्वचि सूचीभिः शिम्यन्तु त्वा[४]। नारीः॥ १॥

ते पत्नयो लोम वि चिन्वन्तु मनीषया। देवानां पत्नीर्दिशः सूचिभिः शिम्यन्तु त्वा[१]। कुविदङ्ग यवमन्तो यवंचिद्यथा दान्त्यनुपूर्वं वियूय। इहेहैषां कृणुत भोजनानि ये बर्हिषो नमो वृक्तिं न जग्मुः[२]॥ २॥

नारीः। त्रिऽचत्वारिंशच्च॥ ११॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे द्वितीयप्रपाठके एकादशोऽनुवाकः॥०॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥
उख्याग्निः प्रथमे प्रोक्तो द्वितीये चित्युपक्रमः।
द्वादशात्रानुवाकाः स्युरायन्त्या वज्ररवस्थिति॥
वात्सप्रेणाप्युपस्थानं प्रथमे समुदीरितम्।
द्वितीये त्वाख्यनयनं गार्हपत्यं चिनोति हि॥

तृतीये तु चतुर्थे तु उख्याग्निं तत्र संवपेत्।
पञ्चमे क्षपति चेत्थं षष्ठेऽच सिकतादिकम्॥
वपेद्, रुक्माद्युपादध्यात् सप्तमे, चाष्टमे पुनः।
स्थापयेत् स्वयमातृण्णासुखादीन्नवमे तथा॥
अपस्याश्च प्राणभृत. तथोपानस्तनश्चितौ।
प्रथमायामुपादध्यात् दशमे तत्समीरितम्॥
एकादशद्वादशौ तु विज्ञेयावाश्वमेधिकौ।
अश्वस्यासिपथाः कल्प्या गायत्रीत्यादिमन्त्रकैः॥
कस्त्वेत्यसिपथे छित्वा त्वरमाच्छ्यतो द्वयम्*।

कल्पः,—'गायत्री त्रिष्टुबिति द्वाभ्यां सौवर्णीभिः सूचीभि.† महिषी अश्वस्यासिपथान् कल्पयति प्राक् क्रोडात्' इति। राज्ञः पत्न्यः त्रिविधाः,—उत्तमा मध्यमा अधमा चेति, ताश्च, महिषी वावाता परिवृक्तीत्येतन्नामधेया., ताश्च मृतस्याश्वस्यासिना छेदनाय तत्तत्-स्थानेषु रेखाः सूचीभिः कुर्युः।

तत्र महिष्याः प्रथमामृचमाह,—"गायत्री त्रिष्टुप् जगती अनुष्टुप् पङ्क्त्या सह। बृहती उष्णिहा ककुत् सूचीभिः शिम्यन्तु त्वा(१)" इति। गायत्र्यादिककुदन्तैः शब्दैः अभिधेयाः छन्दोदेवताः, हे अश्व, त्वां सौवर्णसूचीभिः 'शिम्यन्तु' लिखन्तु।

अथ द्वितीयामृचमाह,—"द्विपदा या चतुष्पदा त्रिपदा या च

---

* "कस्त्वेत्यसिपथेऽश्वस्याच्छेत्त्वचं छ्यतो द्वयम्" (!) इति आदर्शपुस्तक-पाठः।
† "सूचितसूचीभि" इति आदर्शपुस्तके पाठः।

षट्पदा। सच्छन्दा या च विछन्दाः सूचीभिः शिम्यन्तु त्वा[१]" इति। द्विपदादिरूपाणां मन्त्राणामभिमानिन्यः तन्नामिका देवताः त्वां सूचीभिः 'शिम्यन्तु' लिखन्तु।

कल्पः,—'एवमुत्तराभ्यां राजतीभिर्वावाता प्रत्यक् क्रोडात् प्राङ् नाभेः' इति। यथा महिषी क्रोडात् प्राचीने मुखभागे लिखति, एवं वावाता क्रोड़नाभ्योर्मध्ये अनन्तरभाविना मन्त्रद्वयेन लिखेत्।

तत्र प्रथमामृचमाह,—"महानाम्नी रेवतयो विश्वा आशाः प्रसूवरीः। मेघ्या विद्युतो वाचः सूचीभिः शिम्यन्तु त्वा[६]" इति। महत् प्रौढ़ं,-देवेषु अत्यन्तं प्रसिद्धं, नाम यासां देवतानां ता महानाम्न्यः, एतन्नामधेयाः काश्चिद्देवताः, तथा, 'रेवतयः' धनवत्यः एतन्नामिका देवताः, तथा, 'प्रसूवरीः' सर्वप्रसवहेतुभूताः, 'विश्वा आशाः' सर्वा दिशः दिग्देवताः, तथा, मेघेषु भवा 'मेघ्याः' विद्युदभिमानिन्यो देवताः, तथा, 'वाचः' गर्जनाभिमानिन्यो देवताः, हे अश्व, त्वां राजतीभिः 'सूचीभिः शिम्यन्तु'।

अथ द्वितीयामृचमाह,—"रजता हरिणीः सीसा युजो युज्यन्ते कर्मभिः। अश्वस्य वाजिनस्त्वचि सूचीभिः शिम्यन्तु त्वा[१]" इति। 'रजताः' रौप्याः, 'हरिणीः' हिरण्मयाः, 'सीसाः' लोहमय्यः, 'युजः' लेखनकर्मयोग्याः सूच्यः, अत एव 'वाजिनः' अन्नहेतोः 'अश्वस्य' 'त्वचि', कर्मभिः लेखनादिव्यापारैः 'युज्यन्ते', तादृशीभिः सूचीभिः, हे अश्व, त्वां लेखनकुशला देवताः 'शिम्यन्तु'।

कल्पः,—'एवमुत्तराभ्यां लौहीभिः सीसाभिर्वा परिवृक्तीति श्रेपम्' इति।

तत्र प्रथमामृचमाह,—"नारीस्ते पत्नयो लोम वि चिन्वन्तु मनीषया । देवानां पत्नीर्दिशः सूचीभिः शिम्यन्तु त्वा[१]" इति । हे अश्व, 'नारीः' महिष्यादयो नार्यः, 'पत्नयः' राजपत्न्यः ताः, 'मनीषया' स्वबुद्ध्या, लोमानि 'वि'-'चिन्वन्तु' असिपथसिद्धये त्वदीयं लोमजातम् अपनयन्तु पृथक् कुर्वन्तु । तथा 'देवानां पत्नीः' "सेनेन्द्रस्य (का० ३ प्र० ८ अ०)" इत्याद्यनुवाकोक्ता देवपत्न्यः, तथा, 'दिशः' दिग्देवताः, 'सूचीभिः' लोहीभिः एताभिः त्वां 'शिम्यन्तु' ।

अथ द्वितीयामृचमाह,—"कुविदङ्ग यवमन्तो यवञ्चिद्यथा दान्त्यनुपूर्वं वि-यूय । इहेहैषां कृणुत भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः[२]" इति । अङ्गशब्दः प्रियसम्बोधनवाची,* हे प्रियाः, अश्वमेधहविर्भाजो देवाः, ये यज्वानः, 'बर्हिषः' यागस्य 'नमोवृक्तिं' नमस्कारविनाशनं 'न जग्मुः' न प्रापुः, किन्तु अत्यन्तश्रद्धालवोऽनुतिष्ठन्ति, तेषाम् 'एषां' यज्वनां हविर्विषयाणि 'भोजनानि' 'इहेह' 'कृणुत', यज्ञानामेकैकत्वे† वीप्सा । तत्रोपमानमुच्यते,— कुविच्छब्दो बह्वर्थवाची, चिच्छब्दः समुच्चये, यथा लोके 'यवमन्तः' यवादिधान्योपेताः कृषिकाः 'कुवित्' 'चित्' 'यवं' बहुलं यवं अन्यानि च गोधूमप्रियङ्ग्वादिधान्यानि, 'अनुपूर्वं' तत्तत्परिपाकानुक्रमेण 'वि-यूय' इदं पक्वमिदमपक्वमिति विशेषेण पृथक्कृत्य, 'दान्ति' लुनन्ति, तथा यूयमपि, नमस्कारादिरहितः नास्तिकोऽयं यज्वा, श्रद्धालुरयं यज्वेति विविच्य श्रद्धालोर्हवींषि भुङ्ध्वम् ॥

---

* 'प्रियासम्बोधनवाची' इति आदर्शपुस्तकपाठः ।

† 'एकैकत्वे वीप्सा' इति आदर्शपुस्तकपाठः ।

अथ विनियोगसंग्रहः,—

गाय,—द्वाभ्यान्तु महिषी, वावाता तु मन्त्रा,-द्वयात्।
परिवृक्ती तु ना,-द्वाभ्यां कल्पयेयुरसेः पथः ॥

इति श्रीसायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे द्वितीयप्रपाठके एकादशोऽनुवाकः ॥०॥

---

कस्त्वा छ्यति कस्त्वा वि शास्ति कस्ते गात्राणि शिम्यति। क उ ते शमिता कविः[१]। ऋतवस्त ऋतुधा परुः शमितारो वि शासतु। संवत्सरस्य धायसा शिमीभिः शिम्यन्तु त्वा[२]। दैव्या अध्वर्यवस्त्वा छ्यन्तु वि च शासतु। गात्राणि पर्वशस्ते शिमाः कृण्वन्तु शिम्यन्तः[३]। अर्धमासाः परूꣳसि ते मासाश्छ्यन्तु शिम्यन्तः। अहोरात्राणि मरुतो विलिष्टं ॥ १ ॥

सूदयन्तु ते[४]। पृथिवी तेऽन्तरिक्षेण वायुश्छिद्रं भिषज्यतु। द्यौस्ते नक्षत्रैः सह रूपं कृणोतु साधुया[५]। शं ते परेभ्यो गात्रेभ्यः शमस्त्ववरेभ्यः। शमस्थभ्यो मज्जभ्यः शमु ते तन्वे भुवत्[६] ॥ २ ॥

विलिष्टं। त्रिꣳशच्च ॥ १२ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे द्वितीयप्रपाठके द्वादशोऽनुवाकः ॥०॥

विष्णुमुखा। अन्नपते। यावती। वि वै। पुरुषमात्रेण। अग्ने तव श्रवो वयो। ब्रह्म जज्ञानम्। स्वयमातृणाम्। एषां वै। पशुः। गायत्री। कस्त्वा। द्वादश ॥

॥ १२ ॥

विष्णुमुखा(१।१)। अपचितिमान् (२।४)। वि वा एतौ (४।१)। अग्ने तव (६।१)। स्वयमातृणां (८।१)। विषूचीनानि (९।४)। गायत्री (११।१)। चतुःषष्टिः ॥

॥ ६४ ॥ २ ॥

इति तैत्तिरीयसंहितायां पञ्चमाष्टके द्वितीयः प्रश्नः ॥

॥०॥ हरिः ओम् ॥०॥

एकादशानुवाके सूचीभिरसिपथा क्लृप्तिरभिहिता*। अथ द्वादशे विशसनमुच्यते।

कल्पः,—'कस्त्वा छ्यति कस्त्वा विशास्तीत्यश्वस्य त्वचमाच्छ्यति' इति।

तस्मिन्ननुवाके प्रथमामृचमाह,—"कस्त्वा छ्यति कस्त्वा वि शास्ति कस्ते गात्राणि शिम्यति। क उ ते शमिता कविः(१)" इति। हे अश्व, त्वां 'कः' प्रजापतिः 'छ्यति' छिनत्ति, छित्वा च अनन्तरं 'कः' प्रजापतिरेव त्वां 'वि शास्ति' सदवयवान् विभज्य स्थापयति, ततः 'कः' प्रजापतिरेव 'ते गात्राणि' अवयवान् 'शिम्यति' शमयति, सुरचितानि करोतीत्यर्थः। 'कविः' विद्वान् अनर्थशः छेदनाभिज्ञः

* 'असिपथक्लृप्तिरभिहिता' इति का० क्रो० पाठः।

'क' 'उ' प्रजापतिरेव 'ते' तव 'शमिता' न तु इतरपशुवदन्यः कश्चिन्मनुष्यः ।

द्वितीयामृचमाह,—"ऋतवस्ते ऋतुधा पर्व. शमितारो वि शासतु । संवत्सरस्य धायसा शिमीभिः शिम्यन्तु त्वा(२)" इति। 'ऋतवो' वसन्तादयो देवा, 'शमितारो' भूत्वा, 'ऋतुधा' तत्तदृतुकाले 'ते' 'पर्वः' त्वदीयं पर्व 'वि शासतु' विविध स्थापयन्तु । 'संवत्सरस्य धायसा' धारणेन 'शिमीभि' शमनहेतुभिः क्रियाभिः 'त्वा' त्वां 'शिम्यन्तु' शमयन्तु, ऋतुदेवा एव संवत्सरधारका. सन्त. तत्तत्कालोचितव्यापारैः त्वां देवयोग्यं कुर्वन्त्वित्यर्थ. ॥

तृतीयामृचमाह,—"दैव्या अध्वर्यवस्त्वा छ्यन्तु वि शासतु । गात्राणि पर्वशस्ते शिमाः कृण्वन्तु शिम्यन्त(३)" इति । देवेषु भवाः 'दैव्या.' 'अध्वर्यवो' द्युप्रभृतयः, 'द्यौरध्वर्युः अश्विनावध्वर्यू सत्यहविरध्वर्युः' इति श्रुतेः । तादृशाः सर्वे त्वां 'छ्यन्तु' शस्त्रेण छिन्दन्तु, किञ्च, 'वि शासतु' विविधं स्थापयन्तु । 'शिमाः' शमनहेतवः सन्तः 'ते' 'गात्राणि' त्वदीयान अवयवान् 'पर्वश.' तत्तत्पर्वानुसारेण 'शिम्यन्त.' शमयन्त रचन्त. 'कृण्वन्तु' तत्र-तत्रोचितं व्यापारं कुर्वन्तु ।

चतुर्थीमृचमाह,—"अर्धमासाः परूंषि ते मासाश्छ्यन्तु शिम्यन्त.। अहोरात्राणि मरुतो विलिष्टं सूदयन्तु ते(४)" इति । 'अर्धमासा.' 'मासा.' च देवा. 'ते' 'परूंषि' 'शिम्यन्त.' शमयन्तो रचन्तः 'छ्यन्तु' छिन्दन्तु । तथा, 'अहोरात्राणि' तदभिमानिनी देवता 'मरुत.' च 'ते' सर्वेऽपि 'विलिष्ट' विनाशितमङ्ग 'सूदयन्तु' स्वादु कुर्वन्तु ॥

पञ्चमीमृचमाह,—"पृथिवी अन्तरिक्षेण वायुश्छिद्रं भिषज्यतु ।

द्यौस्ते नक्षत्रैः सह रूपं कृणोतु साधुया"[५] इति । हे अश्व, 'ते' 'छिद्रं' त्वदीयं विनष्टम् अङ्गम्, 'अन्तरिक्षेण' सहिता 'पृथिवी' 'भिषज्यतु' समादधातु, 'वायुः' च 'भिषज्यतु' । इयं 'द्यौः' 'नक्षत्रैः' सहिता 'ते' 'रूपं' त्वदीयं स्वरूपभूतमिदं हविः 'साधुया' साधु समीचीनं यथा भवति, तथा 'कृणोतु' करोतु ।

षष्ठीमृचमाह,—"शन्ते परेभ्यो गात्रेभ्यः शमस्त्ववरेभ्यः । शमस्थभ्यो मज्जभ्यः शमु ते तनुवे भुवत्[६]" इति । हे अश्व, ते 'तव' 'परेभ्यः' 'गात्रेभ्यः' उत्कृष्टेभ्योऽवयवेभ्यः, 'शं' सुखं अस्तु ; तथा 'अवरेभ्यः' निकृष्टेभ्यः अवयवेभ्यः 'शमस्तु' । तथा 'अस्थभ्यः' त्वदीयेभ्योऽस्थिभ्यः, 'मज्जभ्यः' च 'शम्' अस्तु । तथा 'ते' 'तनुवे' शरीराय 'शमु' 'भुवत्' सुखमेव भवतु ॥

अत्र विनियोगसंग्रहः—

कस्त्वेति मन्त्रषट्केन ह्यश्वस्य त्वचमाच्छ्यति ॥

वेदार्थस्य प्रकाशेन तमो हार्दं विनाशयन् ।

पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे द्वितीयप्रपाठके द्वादशोऽनुवाकः ॥०॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरेण सायनाचार्येण विरचिते माधवीये वेदार्थ-प्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये पञ्चमकाण्डे द्वितीयः प्रपाठकः सम्पूर्णः ॥०॥

॥०॥ ॐ तत्सत् ॥०॥

॥०॥ श्रीगणेशाय नमः ॥०॥



## अथ तैत्तिरीयसंहिताभाष्ये

पञ्चमकाण्डे तृतीयप्रपाठके

प्रथमोऽनुवाकः ।

उत्सन्नयज्ञो वा एष यद्ग्निः किं वा अहैतस्य क्रियते किं वा न यद्वै यज्ञस्य क्रियमाणस्यान्तर्यन्ति पूयति वै अस्य तदाश्विनीरुप दधात्यश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोति पञ्चोप दधाति पाङ्क्तो यज्ञो यावानेव यज्ञस्तस्मै भेषजं करोत्यृतव्या उप दधात्यृतूनां क्लृप्त्यै ॥ १ ॥

पञ्चोप दधाति पञ्च वै ऋतवो यावन्त एव ऋतवस्तान् कल्पयति समानप्रभृतयो भवन्ति समानोदर्कास्तस्मात् समाना ऋतव एकेन पदेन व्यावर्तन्ते तस्मादृतवो व्यावर्तन्ते प्राणभृत उपदधात्यृतुष्वेव प्राणान् दधाति तस्मात् समानाः सन्त ऋतवो न जीर्यन्त्यथो प्र जनयत्येवैनानेष वै वायुर्यत् प्राणो यदृतव्या उपधाय प्राणभृतः ॥ २ ॥

उपदधाति तस्मात् सर्वानृतूननु वायुरा वरीवर्त्ति वृष्टिसनीरुप दधाति वृष्टिमेवाव रुन्धे यदेकधोपदध्यादेकमृतुं वर्षेदनुपरिहारꣳ सादयति तस्मात् सर्वानृतून् वर्षति यत् प्राणभृत उपधाय वृष्टिसनीरुपदधाति तस्माद् वायुप्रच्युता दिवो वृष्टिरीर्त्ते पशवो वै वयस्या नानामनसः खलु वै पशवो नानाव्रतास्तेऽप एवाभि समनसः ॥ ३ ॥

यङ्कामयेतापशुः स्यादिति वयस्यास्तस्योपधाय अपस्या उप दध्यादसंज्ञानमेवास्मै पशुभिः करोत्यपशुरेव भवति यङ्कामयेत पशुमान्त्स्यादित्यपस्यास्तस्योपधाय वयस्या उप दध्यात् संज्ञानमेवास्मै पशुभिः करोति पशुमानेव भवति चतस्रः पुरस्तादुप दधाति तस्माच्चत्वारि चक्षुषो रूपाणि द्वे शुक्ले द्वे कृष्णे ॥ ४ ॥

मूर्द्धन्वतीर्भवन्ति तस्मात् पुरस्तान् मूर्द्धा पञ्च दक्षिणायाꣳ श्रोण्यामुप दधाति पञ्चोत्तरस्यां तस्मात् पश्चाद् वरीयान् पुरस्तात् प्रवणः पशुर्बस्तो वय इति दक्षिणेऽꣳसे उप दधाति वृष्णिर्वय इत्युत्तरेऽꣳसावेव प्रति दधाति व्याघ्रो वय इति दक्षिणे पक्ष उप दधाति सिꣳहो वय

इत्युत्तरे पक्षयोरेव वीर्यं दधाति पुरुषो वय इति, मध्ये तस्मात् पुरुषः पशूनामधिपतिः ॥ ५ ॥*

कृत्यै। उपधाय प्राणभृतः। समनसः। कृष्णे। पुरुषो वय इति। पञ्च च ॥ १ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ ० ॥

---

इन्द्राग्नी अव्यथमानामिति स्वयमातृणामुप दधातीन्द्राग्निभ्यां वा इमौ लोकौ विधृतावनयोर्लोकयोर्विधृत्या अधृतेव वा एषा यन्मध्यमा चितिरन्तरिक्षमिव वा एषेन्द्राग्नी इत्याहेन्द्राग्नी वै देवानामोजोभृतावोजसैव एनामन्तरिक्षे चिनुते धृत्यै स्वयमातृणामुप दधात्यन्तरिक्षं वै स्वयमातृणाऽन्तरिक्षमेवोप धत्तेऽश्वमुप ॥ १ ॥ घ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चिनुते स्वयमातृणा भवति प्राणानामुत्सृष्ट्यै अथो सुवर्गस्य लोकस्यानुख्यात्यै देवानां सुवर्गं लोकं यतां दिशः समव्लीयन्त त एता

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयतृतीयप्रपाठकस्य चतुर्थपञ्चमानुवाकभाष्ये द्रष्टव्यम्।

दिश्या अपश्यन् ता उपादधत ताभिर्वै ते दिशोऽदृꣳहन् यद्दिश्या उपदधाति दिशां विधृत्यै दश प्राणभृतः पुरस्तादुप ॥ २॥

दधाति नव वै पुरुषे प्राणा नाभिर्दशमी प्राणानेव पुरस्ताद् धत्ते तस्मात् पुरस्तात् प्राणा ज्योतिष्मतीमुत्तमामुप दधाति तस्मात् प्राणानां वाग्ज्योतिरुत्तमा दशोप दधाति दशाक्षरा विराड्विराट् छन्दसां ज्योतिर्ज्योतिरेव पुरस्ताद् धत्ते तस्मात् पुरस्ताज्ज्योतिरुपास्महे छन्दाꣳसि पशुष्वाजिमयुस्तान् बृहत्युदजयत् तस्माद् बार्हताः ॥ ३ ॥

पशव उच्यन्ते मा छन्द इति दक्षिणत उप दधाति तस्माद्दक्षिणावृतो मासाः पृथिवी छन्द इति पश्चात् प्रतिष्ठित्यै अग्निर्देवतेत्युत्तरत ओजो वा अग्निरोज एवोत्तरतो धत्ते तस्मादुत्तरतोऽभिप्रयायी जयति षट्चिꣳशत् सम्पद्यन्ते षट्चिꣳशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशूनव रुन्धे बृहती छन्दसाꣳ स्वाराज्यं परीयाय यस्यैताः ॥ ४ ॥

उपधीयन्ते गच्छति स्वाराज्यं सप्त वालखिल्याः पुरस्तादुप दधाति सप्त पश्चात् सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ प्राणानाꣳ सवीर्यत्वाय मूर्धासि राडिति

पुरस्तादुप दधाति यन्त्री राडिति पश्चात् प्राणानेव अस्मै समीचो दधाति ॥ ५ ॥*

अश्मुप। पुरस्तादुप। बार्हताः। एता। चतुस्त्रिंशच्च ॥ २ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ ० ॥

---

देवा वै यज्ञे अकुर्वत तदसुरा अकुर्वत ते देवा एता अक्ष्णयास्तोमीया अपश्यन् ता अन्यथाऽनूच्यान्यथोपादधत तदसुरा नान्ववायन् ततो देवा अभवन् परा ऽसुरा यदक्ष्णयास्तोमीया अन्यथाऽनूच्यान्यथोपदधाति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्याशुस्त्रिवृदिति पुरस्तादुप दधाति यज्ञमुखं वै त्रिवृत् ॥ १ ॥

यज्ञमुखमेव पुरस्ताद्वि यातयति व्योम सप्तदश इति दक्षिणतोऽन्नं वै व्योम अन्नं सप्तदशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते धरुण एकविंश इति पश्चात् प्रतिष्ठा वा एकविंशः प्रतिष्ठित्यै भान्तः पञ्चदश इत्युत्तरत ओजो वै भान्तः ओजः पञ्चदश ओज

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयतृतीयप्रपाठकस्य षष्ठसप्तमानुवाकभाष्ये द्रष्टव्यम्।

एवोत्तरतो धत्ते तस्मादुत्तरतोऽभिप्रयायी जयति प्रतूर्तिरष्टादश इति पुरस्तात् ॥ २ ॥

उप दधाति द्वौ त्रिवृतावभिपूर्वं यज्ञमुखे वि यातयति अभिवर्तः सविंश इति दक्षिणतोऽन्नं वा अभिवर्तोऽन्नं सविंशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते वर्चो द्वाविंश इति पश्चाद्यद्विंशतिर्द्वे तेन विराजौ यद्द्वे प्रतिष्ठा तेन विराजोरेवाभिपूर्वमन्नाद्ये प्रति तिष्ठति तपो नवदश इत्युत्तरतस्तस्मात् सव्यः ॥ ३ ॥

हस्तयोस्तपस्वितरो योनिश्चतुर्विंश इति पुरस्तादुप दधाति चतुर्विंशत्यक्षरा गायत्री गायत्री यज्ञमुखं यज्ञमुखमेव पुरस्ताद् वि यातयति गर्भाः पञ्चविंश इति दक्षिणतोऽन्नं वै गर्भा अन्नं पञ्चविंशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यत ओजस्त्रिणव इति पश्चादिमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रति तिष्ठति सम्भरणस्त्रयोविंश इति ॥ ४ ॥

उत्तरतस्तस्मात् सव्यो हस्तयोः सम्भार्यतरः क्रतुरेकत्रिंश इति पुरस्तादुप दधाति वाग्वै क्रतुर्यज्ञमुखं वाग्यज्ञमुखमेव पुरस्ताद्वि यातयति ब्रध्नस्य विष्टपं चतुस्त्रिंश इति दक्षिणतोऽसौ वा आदित्यो ब्रध्नस्य विष्टपं ब्रह्मवर्चसमेव दक्षिणतो धत्ते तस्माद्दक्षिणोऽर्धो ब्रह्म-

वज्रसिर्नरः प्रतिष्ठा चयस्त्रिꣳश इति पश्चात् प्रतिष्ठित्यै नाकः षट्त्रिꣳश इत्युत्तरतः सुवर्गो वै, लोको नाकः सुवर्गस्य लोकस्य समष्ट्यै ॥ ५ ॥*

वै त्रिवृत् । इति पुरस्तात् । सव्यः । चयोविꣳश इति । सुवर्गो वै । पञ्च च ॥ ३ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाकः ॥०॥

---

अग्नेर्भागोऽसीति पुरस्तादुप दधाति यज्ञमुखं वा अग्निर्यज्ञमुखं दीक्षा यज्ञमुखं ब्रह्म यज्ञमुखं त्रिवृद्यज्ञमुखमेव पुरस्ताद्वि यातयति नृचक्षसां भागोऽसीति दक्षिणतः शुश्रुवाꣳसो वै नृचक्षसोऽन्नं धाता जातायैव अस्मै अन्नमपि दधाति तस्माज्जातोऽन्नमत्ति जनित्रꣳस्पृतꣳ सप्तदशस्तोम इत्याहान्नं वै ब्योमान्नेवꣳ ॥ १ ॥

अन्नꣳ सप्तदशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेन अन्नमद्यते मित्रस्य भागोऽसीति पश्चात् प्राणो वै मित्रोऽपानो वरुणः प्राणापानावेवास्मिन् दधाति दिवो वृष्टिर्वाताः स्पृता एकविꣳशस्तोम इत्याह प्रतिष्ठा वा

---

* षष्ठानुवाकस्य व्याख्यानं चतुर्थकाण्डे तृतीयप्रपाठकस्य षष्ठानुवाकभाष्ये द्रष्टव्यम् ।

एकविंशः प्रतिष्ठित्यै इन्द्रस्य भागोऽसीत्युत्तरत ओजो वा इन्द्र ओजो विष्णुरोजः क्षत्रमोजः पञ्चदशः ॥ ॥ २ ॥

ओज एवोत्तरतो धत्ते तस्मादुत्तरतोऽभिप्रयायी जयति नृम्णां भागोऽसीति पुरस्तादुप दधाति यज्ञमुखं वै वसवो यज्ञमुखं रुद्रा यज्ञमुखं चतुर्विंशो यज्ञमुखमेव पुरस्ताद्वि यातयति आदित्यानां भागोऽसीति दक्षिणतोऽन्नं वा आदित्या अन्नं मरुतोऽन्नं गर्भा अन्नं पञ्चविंशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनाऽन्नमद्यते अदित्यै भागः ॥ ३ ॥

असीति पश्चात् प्रतिष्ठा वा अदितिः प्रतिष्ठा पूषा प्रतिष्ठा त्रिणवः प्रतिष्ठित्यै देवस्य सवितुर्भागोऽसीत्युत्तरतो ब्रह्म वै देवः सविता ब्रह्म बृहस्पतिर्ब्रह्म चतुष्टोमो ब्रह्मवर्चसमेवोत्तरतो धत्ते तस्मादुत्तरोऽर्द्धो ब्रह्मवर्चसितरः सावित्रवतो भवति प्रसूत्यै तस्माद्ब्राह्मणानामुदीची सनिः प्रसूता धर्त्रश्चतुष्टोम इति पुरस्तादुप दधाति यज्ञमुखं वै धर्त्रः ॥ ४ ॥

यज्ञमुखं चतुष्टोमो यज्ञमुखमेव पुरस्ताद्वि यातयति यावानां भागोऽसीति दक्षिणतो मासा वै यावा अर्द्धमासा अयावास्तस्माद्दक्षिणावृतो मासा अन्नं वै यावा

अन्नं प्रजा अन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते ऋभूणां भागोऽसीति पश्चात् प्रतिष्ठित्यै विवर्तोऽष्टाचत्वारिꣳश इत्युत्तरतोऽनयोर्लोकयोः सवीर्यत्वाय तस्मादिमौ लोकौ समावद्वीर्यौ ॥ ५ ॥

यस्य मुख्यवतीः पुरस्तादुपदधीयन्ते मुख्य एव भवति आ अस्य मुख्यो जायते यस्यान्नवतीर्दक्षिणतोऽत्त्यन्नम् आ अस्यान्नादो जायते यस्य प्रतिष्ठावतीः पश्चात् प्रत्येव तिष्ठति यस्यौजस्वतीरुत्तरत ओजस्व्येव भवति आ अस्यौजस्वी जायतेऽर्को वा एष यदग्निस्तस्यैतदेव स्तोत्रमेतत् शस्त्रं यदेषा विधा ॥ ६ ॥

विधीयतेऽर्क एव तदर्कमनु वि धीयतेऽत्त्यन्नम् आ अस्यान्नादो जायते यस्यैषा विधा विधीयते य उ चैनामेवं वेद सृष्टीरुप दधाति यथासृष्टमेव अव रुन्धे न वा इदं दिवा न नक्तमासीदव्यावृत्तं ते देवा एता व्युष्टीरपश्यन् ता उपादधत ततो वा इदं, व्यौच्छत् यस्यैता उपधीयन्ते वि एवास्मै उच्छत्यथो तम एवाप हते ॥ ७* ॥

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयतृतीयप्रपाठकस्य नवमदशमैकादशानुवाकभाष्ये द्रष्टव्यम्।

वै ज॒नित्र॑ꣳ। पञ्च॒द॒शः। अदि॑त्यै भा॒गः। वै ध॒र्त्रः। स॒मा॒व॒द्वी॒र्या॑। वि॒धा। ततो॒ वा इ॒दं। चतु॑र्दश च॥ ४॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः॥०॥

---

अग्ने॑ जा॒तान् प्र णु॑दा नः स॒पत्ना॒निति॑ पु॒रस्ता॒दुप॑ दधाति॒ जा॒ताने॒व भ्रातृ॑व्या॒न् प्र णु॑दते॒ सह॑सा जा॒ता॒निति॑ प॒श्चात् ज॑निष्यमा॑णाने॒व प्रति॑ नुदते॒ चतुश्चत्वा॒रि॒ꣳश॒स्तोम॒ इति॑ द॒क्षि॒ण॒तो ब्र॑ह्मवर्च॒सं वै च॑तुश्चत्वा॒रि॒ꣳशो ब्र॑ह्मवर्च॒समे॒व द॑क्षिण॒तो ध॑त्ते तस्मा॒द्दक्षि॒णोऽर्धो॑ ब्रह्मवर्च॒सित॑रः षोड॒शस्तोम॒ इत्यु॑त्तर॒त ओजो॒ वै षो॑ड॒श ओज॑ ए॒वोत्त॑र॒तो ध॑त्ते॒ तस्मा॑त्॥ १॥

उ॒त्त॒र॒तो॒ऽभि॒प्र॒या॒यी ज॑यति॒ वज्रो॒ वै च॑तुश्चत्वारि॒ꣳशो वज्रः॑ षोड॒शो यदे॒ते इष्ट॑के उप॒दधा॑ति जा॒ताꣳश्चै॒व ज॑निष्यमा॑णाꣳश्च भ्रातृ॑व्या॒न् प्र णु॒द्य वज्र॒मनु॒ प्र ह॑रति॒ स्तृत्यै॒ पुरी॑षवतीं॒ मध्य॒ उप॑ दधाति॒ पुरी॑षं॒ वै मध्य॑मा॒त्मनः॒ सात्मा॑नमे॒वाग्निं चि॑नुते॒ सात्मा॒मुष्मि॑न् लो॒के भ॑वति॒ य ए॒वं वेदै॒ता वा अ॑सप॒त्ना नामेष्ट॑का॒ यस्यै॒ता उ॑पधी॒यन्ते॑॥ २॥

नास्य॑ स॒पत्नो॑ भवति प॒शुर्वा ए॒ष यद॒ग्निर्वि॒राज॑ उत्त॒माया॑॑

चित्यासुप दधाति विराजमेवोत्तमां पशुषु दधाति तस्मात् पशुमानुत्तमां वाचं वदति दश-दशोप दधाति सवीर्यत्वायाक्ष्णयोप दधाति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै यानि वै छन्दाꣳसि सुवर्ग्याणि आसन् तैर्देवाः सुवर्गं लोकमायन् तेनर्षयः ॥ ३ ॥

अश्राम्यन् ते तपोऽतप्यन्त तानि तपसा अपश्यन् तेभ्य एता इष्टका निरमिमत एवश्छन्दो वरिवश्छन्द इति ता उपा दधत ताभिर्वै ते सुवर्गं लोकमायन् यदेता इष्टका उपदधाति यान्येव छन्दांसि सुवर्ग्याणि तैरेव यजमानः सुवर्गं लोकमेति यज्ञेन वै प्रजापतिः प्रजा असृजत ताः स्तोमभागैरेवासृजत यत् ॥ ४ ॥

स्तोमभागा उपदधाति प्रजा एव तद् यजमानः सृजते बृहस्पतिर्वा एतद् यज्ञस्य तेजः समभरद् यत् स्तोमभागा यत् स्तोमभागा उपदधाति सतेजसमेवाग्निं चिनुते बृहस्पतिर्वा एतां यज्ञस्य प्रतिष्ठामपश्यत् यत् स्तोमभागाः यत् स्तोमभागा उपदधाति यज्ञस्य प्रतिष्ठित्यै सप्त-सप्तोप दधाति सवीर्यत्वाय तिस्रो मध्ये प्रतिष्ठित्यै ॥ ५ *

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डस्य तृतीयप्रपाठकादशानुवाकभाष्ये चतुर्थप्रपाठकप्रथमानुवाकभाष्ये च द्रष्टव्यम्।

उत्तरतो धर्त्तै तस्मात्। उपधीयन्ते। ऋर्षयः। सृजत। त्रिचत्वारिꣳशच्च ॥ ५ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

---

रश्मिरित्येवादित्यमसृजत प्रेतिरिति धर्ममन्वितिरिति दिवꣳ सन्धिरित्यन्तरिक्षं प्रतिधिरिति पृथिवीं विष्टम्भ इति वृष्टिं प्रवेत्यहरनुवेति रात्रिमुशिगिति वसून् प्रकेत इति रुद्रान् सुदीतिरित्यादित्यानोज इति पितॄꣳस्तन्तुरिति प्रजाः पृतनाषाडिति पशून् रेवदित्योषधीरभिजिदसि युक्तग्रावा ॥ १ ॥

इन्द्राय त्वा इन्द्रं जिन्वेत्येव दक्षिणतो वज्रं पर्यौहदभिजित्यै ताः प्रजा अपप्राणा असृजत तास्वधिपतिरसीत्येव प्राणमदधात् यन्तेत्यपानꣳ सꣳसर्प इति चक्षुर्वयोधा इति श्रोत्रं ताः प्रजाः प्राणतीरपानतीः पश्यन्तीः शृण्वतीर्न मिथुनी अभवन् तासु त्रिवृदसीत्येव मिथुनमदधात् ताः प्रजा मिथुनी ॥ २ ॥

भवन्तीर्न प्राजायन्त ताः सꣳरोहोऽसि नीरोहोऽसीत्येव प्राजनयत् ताः प्रजाः प्रजाता न प्रत्यतिष्ठन् ता

वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीत्येवैषु लोकेषु प्र
स्थापयद् यदाह वसुकोऽसि वेषश्रिरसि वस्यष्टिरसि
प्रजा एव प्रजाता एषु लोकेषु प्रतिष्ठापयति सात्
ऽन्तरिक्षꣳ, रोहति सप्राणोऽमुष्मिन् लोके प्रति तिष्
अव्यर्धुकः प्राणापानाभ्यां भवति य एवं वेद ॥ ३ ॥*

युक्तग्रावा । प्रजा मिथुनी । अन्तरिक्षं । द्वादश च ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे तृतीयप्रपा
षष्ठोऽनुवाकः ॥०॥

---

नाकसद्भिर्वै देवाः सुवर्गं लोकमायन् तत् नाक-
सदाम् नाकसत्त्वं यन्नाकसद उपदधाति ना सद्भि
रेव तत् यजमानः सुवर्गं लोकमेति सुवर्गो वै लोक
नाको यस्यैता उपधीयन्ते नास्मा अकं भवति यजमान
यतनं वै नाकसदो यन्नाकसद उपदधात्यायतनं
तद् यजमानः कुरुते पृष्ठानां वा एतत् तेजः संभृ
यन्नाकसदो यन्नाकसदः ॥ १ ॥

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयचतुर्थप्रपाठकस्य
भाष्ये द्रष्टव्यम् ।

उपदधाति पृष्ठानामेव तेजोऽवरुन्धे पञ्चचोडा उप
ात्यप्सरस एवैनमेता भूता अमुष्मिन् लोक उप
ऽथो तनूपानीरेवैता यजमानस्य यं द्विष्यात् तमुप
त् ध्यायेदेताभ्य एवैनं देवताभ्य आ वृश्चति ताज
र्तिमार्च्छत्युत्तरा नाकसदा उप दधाति यथा जाया
नीय गृहेषु निषादयति तादृगेव तत् ॥ २ ॥

पश्चात् प्राचीमुत्तमामुप दधाति तस्मात् पश्चात्
ची पत्नी अन्वास्ते स्वयमातृण्णाञ्च विकर्णीञ्च उत्तमे
प दधाति प्राणो वै स्वयमातृण्णायुर्विकर्णी प्राणञ्चैव
ायुश्च प्राणानामुत्तमौ धत्ते तस्मात् प्राणश्चायुश्च प्रा
ानामुत्तमौ नान्यामुत्तरामिष्टकामुप दध्याद् यदन्या
त्तरामिष्टकामुपदध्यात् पशूनाम् ॥ ३ ॥

च यजमानस्य च प्राणं चायुश्चापि दध्यात् तस्मात्
ान्योत्तरेष्टकोपधेया स्वयमातृण्णामुप दधात्यसौ वै
यमातृण्णाम … प धत्ते ऽश्वमुपघ्रापयति प्राणमेवा
… ा अश्वः प्रजापतिनैवाग्निं
… ्राणानामुत्सृष्ट्यै अथो

मनु वि क्रमते उत्तरत उप दधाति तस्मादुत्तरत उपचारोऽग्निर्वायुमती भवति समिध्यै ॥ ४ ॥*

संभृतं यन्नाकसदो यन्नाकसदः। तत्। पशूनाम्। एषा वै। द्वाविंशतिश्च ॥ ७ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

छन्दांस्युप दधाति पशवो वै छन्दांसि पशूनेवाव रुन्धे छन्दांसि वै देवानां वामं पशवो वाममेव पशूनव रुन्धे एतां ह वै यन्नसेनश्चैचियायणश्यितिं विदांचकार तया वै स पशूनवारुन्ध यदेतामुपदधाति पशूनेवाव रुन्धे गायत्रीः पुरस्तादुप दधाति तेजो वै गायत्री तेज एव ॥ १ ॥

मुखतो धत्ते मूर्द्धन्वतीर्भवन्ति मूर्द्धानमेवैनं समानानां करोति त्रिष्टुभ उप दधाति इन्द्रियं वै त्रिष्टुगिन्द्रियमेव मध्यतो धत्ते जगतीरुप दधाति जागता वै पशूनेवाव रुन्धेऽनुष्टुभ उप दधाति प्राणा वा नुष्टु प्राणानामुत्सृष्ट्यै बृहतीरुष्णिहाः पङ्क्तीरक्षरपङ्क्ति

---

* अस्यानुवाकस्य व्याख्यानं पञ्चमकाण्डीयचतुर्थप्रपाठकस्य (दशीयष्टीयानुवाक-भाष्ये द्रष्टव्यम्।

रिति विपुरूपाणि छन्दाꣳस्युप दधाति विपुरूपा वै पशवः पशवः ॥ २ ॥

छन्दाꣳसि विपुरूपानेव पशूनव रुन्धे विपुरूपमस्य गृहे दृश्यते यस्यैता उपधीयन्ते य उ च एनाम् एवं वेदातिछन्दसमुप* दधात्यतिछन्दा वै सर्वाणि छन्दाꣳसि सर्वैभिरेवैनं छन्दोभिश्चिनुते वर्ष्मवा एषा छन्दसां यदतिछन्दा यदतिछन्दसमुपदधाति वर्ष्मैवैनꣳ समानानां करोति द्विपदा उप दधाति द्विपाद् यजमानः, प्रतिष्ठित्यै ॥ ३ ॥†

तेज एव । पशवः पशवः । यजमानः । एकञ्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे तृतीयप्रपाठके अष्टमोऽनुवाकः ॥ ० ॥

---

सर्वाभ्यो वै देवताभ्योऽग्निश्चीयते यत् सयुजो नोपदध्याद् देवता अस्याग्निं वृञ्जीरन् यत् सयुज उपदधात्यात्मनैवैनꣳ सयुजं चिनुते नाग्निना व्यृध्यतेऽथो यथा पुरुषः स्नावभिः सन्तत एवमेवैताभिरग्निः सन्ततो-

---

*'त्यतिच्छन्दसम्' इति B एवं मौतपुस्तके पाठः। परन्तु वेदे छकारस्य कुत्रापि द्वित्वादर्शनात् एष पाठ उपेक्षितः।

† एतस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयचतुर्थप्रपाठकस्य चतुर्थानुवाकभाष्ये द्रष्टव्यम्।

एवैताभिर्यजमान इमान् लोकान्त्सं याति स्रुवो एषोऽग्नेर्यत् संयानीर्यत् संयानीरुपदधाति स्रुवमेतमग्नये उप दधात्युत यस्यैतास्तूपहिताखापोऽग्निꣳ हरत्यहृत एवास्याग्निरादित्येष्टका उप दधात्यादित्या वै एतं भूत्यै प्रति नुदन्ते योऽलंभूत्यै सन् भूतिं न प्राप्नोत्यादित्याः ॥ २ ॥

एवैनं भूतिं गमयन्त्यसौ वै एतस्यादित्यो रुचमा दत्ते योऽग्निं चित्वा न रोचते यदादित्येष्टका उप दधात्यसावेवास्मिन्नादित्यो रुचं दधाति यथासौ देवानाꣳ रोचत एवमेवैष मनुष्याणाꣳ रोचते घृतेष्टका उप दधात्येतद्वै अग्नेः प्रियं धाम यद् घृतं प्रियेणैवैनं धाम्ना समर्धयति ॥ ३ ॥

अथो तेजसानुपरिहारꣳ सादयत्यपरिवर्गमेवास्मिन् तेजो दधाति प्रजापतिरग्निमचिनुत स यशसा व्यार्ध्यत स एता यशोदा अपश्यत् ता उपाधत्त ताभिर्वै स यश आत्मन्नधत्त यत् यशोदा उपदधाति यश एव ताभिर्यजमान आत्मन् धत्ते पञ्चोप दधाति पाङ्क्तः पुरुषो यावानेव पुरुषस्तस्मिन् यशो दधाति ॥ ४ ॥*

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डस्य चतुर्थप्रपाठकषष्ठानुवाकभाष्ये द्रष्टव्यम्।

एवं। प्राप्नोत्यादित्याः। अर्द्धयति। एकान्नपञ्चाशच्च ॥१०॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः ॥०॥

---

देवासुराः संयत्ता आसन् कनीयाꣳसो देवा आसन् भूयाꣳसोऽसुरास्ते देवा एता इष्टका अपश्यन् ता उपादधत भूयस्कृदसीत्येव भूयाꣳसोऽभवन् वनस्पतिभिरोषधीभिः परिवस्कृदसीतीमामजयन् प्राच्यसीति प्राचीन्दिशमजयन्नूर्ध्वासीत्यमूमजयन्नन्तरिक्षसदस्यन्तरिक्षे सीदेत्यन्तरिक्षमजयन्ततो देवा अभवन् ॥१॥

पराऽसुरा यस्यैता उपधीयन्ते भूयानेव भवत्यभीमान् लोकान् जयति भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्यप्सुषदसि श्येनसदसीत्याहैतद्वै अग्नेरूपꣳ रूपेणैवाग्निमव रुन्धे पृथिव्यास्त्वा द्रविणे सादयामीत्याहेमानेवैताभिर्लोकान् द्रविणावतः कुरुते आयुष्या उपदधात्यायुरेव ॥२॥

अस्मिन् दधात्यग्ने यत् ते परꣳ हृन्नामेत्याहैतद्वै अग्नेः प्रियं धाम प्रियमेवास्य धामोपाप्नोति तावेहि सꣳरभावहै इत्याह वि एवैनेन परि धत्ते पाञ्चजन्येष्वप्येधि अग्ने

इत्याहैष वै अग्निः पाञ्चजन्यो यः पञ्चचितीकस्तस्मा-
देवमाह ऋतव्याः उप, दधात्येतद्वै ऋतूनां प्रियं धाम
यदृतव्या ऋतूनामेव प्रियं धामाव रुन्धे सुमेक इत्याह
संवत्सरो वै सुमेकः संवत्सरस्यैव प्रियं धामोपाप्नोति॥३॥*

अभूवन्। आयुरेव। ऋतव्या उप। षड्विंशतिश्च
॥ ११ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे तृतीयप्रपाठके
एकादशोऽनुवाकः ॥०॥

---

• प्रजापतेरक्षि अश्वयत् तत्परापतत्तदश्वोऽभवद् यद-
श्वयत् तदश्वस्याश्वत्वं तद्देवा अश्वमेधेनैव प्रत्यदधुरेष
वै प्रजापतिꣳ सर्वं करोति योऽश्वमेधेन यजते सर्व एव
भवति[1] सर्वस्य वै एषा प्रायश्चित्तिः सर्वस्य भेषजꣳ सर्वं
वै एतेन पाप्मानं देवा अतरन्नपि वै एतेन ब्रह्म-
हत्यामतरन् सर्वं पाप्मानम् ॥ १ ॥

तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैन-
मेवं वेद[2] उत्तरं वै तत् प्रजापतेरक्षि अश्वयत् तस्मा-
दश्वस्योत्तरतोऽव द्यन्ति दक्षिणतोऽन्येषां पशूनां[3] वैतसः
कटो भवत्यप्सुयोनिर्वै अश्वोऽप्सुजो वेतसः स्व एवैनं

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयचतुर्थप्रपाठकस्य सप्तमानुवाक-
भाष्ये द्रष्टव्यम्।

योनौ प्रति ष्ठापयति[४] चतुष्टोमः स्तोमो भवति सरट्
ह वै अश्वस्य सक्थि आ अवृहत्, तद्देवाश्चतुष्टोमेनैव
प्रत्यदधुर्यत् चतुष्टोमः स्तोमो भवत्यश्वस्य सर्वत्वाय[५]॥२॥
सर्वं पाप्मानम्। आ अवृहत्। द्वादश च॥ १२॥
उत्सन्नयज्ञः। इन्द्राग्नी। देवा वै अद्धायास्तोमीयाः।
अग्नेर्भागोऽसि। अग्ने जातान्। रश्मिरिति। नाकसद्भिः।
छन्दांसि सर्वाभ्यो। वृष्टिसनीः। देवासुराः, कनीयांसः।
प्रजापतेरक्षि। द्वादश च॥ १२॥
उत्सन्नयज्ञः (१।१)। देवा वै (३।१)। यस्य सुख्यवतीः
(४।६)। नाकसद्भिः (७।१)। एवैताभिः (१०।२)। अष्टा-
चत्वारिंशत्॥ ४८॥
इति तैत्तिरीयसंहितायां पञ्चमकाण्डे तृतीयप्रपाठके
द्वादशोऽनुवाकः॥०॥
इति संहितापञ्चमाष्टके तृतीयः प्रश्नः॥*
॥०॥ हरिः ओम॥०॥
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥
चितिराद्या द्वितीये स्यात् तृतीये तु चतुष्टयम्।

---

* इति तैत्तिरीयसंहितायां पञ्चमकाण्डे तृतीय प्रपाठकः इत्यपि क्वचित् पाठः।

द्वादशात्रानुवाकाः स्युः प्रथमे त्विष्टका इमाः ॥
आश्विन्यश्च तथर्त्तव्याः प्राणभृत्संज्ञकास्तथा ।
अपस्याश्च वयस्याश्च द्वितीयस्यां चितौ श्रुताः ॥
द्वितीये स्वयमातृण्णा दिश्याः प्राणभृतस्तथा ।
बृहत्यो वालखिल्याश्च तृतीयस्यां चिताविमाः ॥
तृतीयतुर्ययोरक्ष्णयास्तोमीयाश्च सृष्टयः ।
व्युष्टयश्चेष्टकाः प्रोक्ताश्चतुर्थ्याश्च चिताविमाः ॥
पञ्चमे त्वसपत्नाख्या विराडाख्याश्च वर्णिताः ।
षष्ठे तु स्तोमभागाख्या नाकसत्संज्ञकास्तु याः ॥
चोडाख्या स्वयमातृण्णा विकर्णीताश्च सप्तमे ।
छन्दोभिधा अष्टमे स्युः पञ्चम्यां तु चिताविमाः ॥
अथावशिष्टाः कथ्यन्ते ता विज्ञेया यथाचिति ।
मयुजो मण्डलाख्याश्च विश्वज्योतिष इत्यमूः ॥
नवमे दशमे वृष्टिसनि-संयानिकाभिधाः ।
आदित्याख्या घृताख्याश्च यशोदाश्चेति वर्णिताः ॥
एकादशे तु भूयस्कृदग्निरूपाभिधा अपि ।
द्रविणोदास्तथायुष्या स्यादग्निहृदयाभिधा ॥
ऋतव्याश्चेत्येवमेताः क्रमादिह समीरिताः ।
द्वादशे त्वश्वमेधस्य विधिरित्येव* निर्णयः ॥

तमिममश्वमेधं विधत्ते,—"प्रजापतेरक्षि अश्वयत्तत्परापतत्तद् श्वोऽभवद्यदश्वयत्तदश्वस्याश्वत्वं तद्देवा अश्वमेधेनैव प्रत्यदधुरेष वै प्रजा-

* "विधिरित्यत्र" इति का॰ मी॰ पु॰ पाठः।

पतिं सर्वं करोति योऽश्वमेधेन यजते सर्व एव भवति"[1] इति।

'प्रजापतेः' चतुर्मुखस्य अक्षिगोलकं केनापि व्याधिना उच्छून-मभूत्, तच्च भूमौ पतितं सत् अश्वरूपेण आविर्बभौ, यस्मात् कारणात् अश्वयत्, तस्मात् कारणात्, तत्र उत्पन्नस्य प्राणिनोऽश्वनाम सम्पन्नं। ततो देवाः प्रतीकारं विचार्य अश्वमेधमनुष्ठाय तेन अश्वमेधसामर्थ्येन 'तत्' प्रजापतेरक्षि समादधुः, तस्मादेवं* प्रशस्तत्वात् अश्वमेधेन यजेत, स च यष्टा प्रजापतिं संपूर्णं करोति, स्वयञ्च प्रजापतिप्राप्त्या सर्वात्मको भवति।

तदेवं सर्वभावप्राप्त्यर्थं अश्वमेधं विधाय पुनः पापक्षयार्थ-मश्वमेधक्रतुं तदुपासनं च विधत्ते,—"सर्वस्य वा एषा प्रायश्चित्तिः सर्वस्य भेषजꣳ सर्वं वा एतेन पाप्मानं देवा अतरन्नपि वा एतेन ब्रह्म-हत्यामतरन् सर्वस्य पाप्मानन्तरन्ति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद[2]" इति। येयमश्वमेधानुष्ठितिः, सैषा 'सर्वस्य' पाप्मनः उपपातकरूपस्य महापातकरूपस्य च 'प्रायश्चित्तिः' भवति। किञ्च, 'सर्वस्य' व्याधिजातस्य तद्धेतुपापक्षयद्वारेण अश्वमेधानुष्ठानं 'भेषजम्', अतएव इदानीन्तना 'देवाः' पूर्वस्मिन् मनुष्ये जन्मनि 'एतेन' अश्वमेधेन गोवधादिरूपमुपपातकं ब्रह्महत्यादिरूपं महापातकं च परिहृतवन्तः; तस्मादिदानीमपि 'यः' अश्वमेधक्रतुना 'यजते' सोऽयमुपपातकमहा-पातके 'तरति'। योऽपि च पुरुष एतमश्वमेधं शास्त्रोक्तप्रकारेण जानाति। ज्ञानञ्च द्विविधम्,—अर्थनिर्णयः, उपासनञ्च; तत्र अर्थनिर्णयः, पदवाक्यप्रमाणपर्यालोचनया सम्पद्यते; उपासनाप्रकारस्तु सप्तमका-

* तस्मादेव इति भादर्शपुस्तकपाठः।

षड्स्यान्तिमानुवाके "यो वा अश्वस्य मेध्यस्य शिरो वेद" (७।५।२५) इत्यस्मिन्नभिधास्यते। चोदकप्राप्तं दक्षिणावदानं बाधितुं विधत्ते,— "उत्तरं वै तत् प्रजापतेरक्षि अश्वयत् तस्मादश्वस्योत्तरतोऽवद्यन्ति दक्षिणतोऽन्येषां पशूनाम्[१]" इति। यस्मात् प्रजापतेः उत्तरभागवर्ति वामाक्षि उच्छूनमभवत्, तस्मादश्वसम्बन्धिनो हविषः अवदानमपि उत्तरस्यां दिशि कर्तव्यम्। 'अन्येषाम्' अश्वव्यतिरिक्तानां पशूनां दक्षिस्यां दिशि अवदानम्।

अतएव सूत्रकार आह,—'पशुकाल उत्तरत उपरिष्टाद्ग्रैवेतसे कटे अश्वं प्राञ्चं यथाङ्गं चिनोति एवं पुरस्तात् प्रत्यञ्चं तूपरं पश्चात् प्राचीनं गोमृगं दक्षिणतः प्रचशाखाखितराम् पशूनामादयति' इति। हविःसादनाधारं विधत्ते,—'वैतसः कटो भवत्यप्सुयोनिर्वा अश्वोऽप्सुजो वेतसः स्व एवैनं योनौ प्रति ष्ठापयति[४]" इति। अप्सु जलेषु योनिः निवासस्थानं यस्यासौ 'अप्सुयोनिः', वड़वा हि समुद्रजलेषु अवतिष्ठते, वेतसस्योदकजन्यत्वं प्रसिद्धम्।

यदुक्तं सूत्रकारेण, 'श्वोभूते प्रजापते गोतमचतुष्टोमयोः पूर्व्वा रथन्तरसामा' इति। गोतमेन दृष्टौ यौ चतुष्टोमाख्यौ एकाहक्रतू, तयोर्मध्ये यः पूर्व्वचतुष्टोमः सोऽत्र कर्तव्य इति सूत्रार्थः। तमिमं विधत्ते,—"चतुष्टोमस्तोमो भवति सरट् ह वा अश्वस्य सक्थ्य आ अवृहत् तद्देवाश्चतुष्टोमेनैव प्रत्यदधुर्यच्चतुष्टोमः स्तोमो भवत्यश्वस्य सर्व्वत्वाय[४]" इति। चत्वारस्तोमाः,-त्रिवृत्, पञ्चदश, सप्तदश, एकविंशः, यस्मिन्नग्निष्टोमे विद्यन्ते सोऽयं 'चतुष्टोमः', द्वितीयेन स्तोमशब्देन विशेष्यभूतोऽग्निष्टोमो लक्ष्यते, भीमसेनो भीमः, सत्यभामा

भामेतिवत्, 'त्रिवृदग्निष्टोमः' इत्यत्र विधानात्। एकस्तोमकोऽपि कश्चिदग्निष्टोमो विद्यते, तद्व्यावृत्त्यै 'चतुष्टोमः' इति विशिनष्टि, त्रिवृत्याद्यात्मकस्याश्वमेधस्य प्रथममहश्चतुष्टोमात्मकाग्निष्टोमरूपं कुर्यात्। सप्तशब्देन शृकलामोऽभिधीयते। स कदाचित् अश्वस्य सक्थि-प्रदेशमारुह्य तत्सक्थिमांसमुद्धृत्य भक्षितवान्, तच्च सक्थिरूपं विकल-मङ्गं देवाश्चतुष्टोमेनैव समादधुः, तस्मादयं चतुष्टोमः अश्वस्य संपूर्त्तये भवति॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः॥०॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-श्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरेण सायनाचार्येण विरचिते माधवीये वेदार्थ-प्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये पञ्चमकाण्डे तृतीयः प्रपाठकः संपूर्णः॥०॥

॥०॥ ॐ तत्सत्॥०॥

---

॥०॥ श्रीगणेशाय नमः ॥०॥

# तैत्तिरीयसंहिताभाष्ये

## पञ्चमकाण्डे चतुर्थप्रपाठके

### प्रथमोऽनुवाकः ।

हरिः ओम् ।

देवासुराः संयत्ता आसन् ते न व्यजयन्त स एता इन्द्रस्तनूरपश्यत् ता उपाधत्त ताभिर्वै स तनुवमिन्द्रियं वीर्यमात्मन्नधत्त ततो देवा अभवन् परासुरा यदिन्द्र-तनूरुपदधाति तनुवमेव ताभिरिन्द्रियं वीर्यं यजमान आत्मन्धत्तेऽथो सेन्द्रमेवाग्निꣳ सतनुं चिनुते भवत्या-त्मना परास्य भ्रातृव्यः ॥ १ ॥

भवति यज्ञो देवेभ्योऽपाक्रामत् तमवरुन्धन्नाशक्नुवन् त एता यज्ञतनूरपश्यन् ता उपादधत ताभिर्वै ते यज्ञ-मवारुन्धत यद्यज्ञतनूरुपदधाति यज्ञमेव ताभिर्यजमानो ऽव रुन्धे त्रयस्त्रिꣳशतमुप दधाति त्रयस्त्रिꣳशद्वै देवता देवता एवाव रुन्धेऽथो सात्मानमेवाग्निꣳ सतनुं चिनुते सात्माऽमुष्मिन् लोके ॥ २ ॥

भवति य एवं वेद ज्योतिष्मतीरुप दधाति ज्योतिरेवास्मिन् दधात्येताभिर्वै अग्निश्चितो ज्वलति ताभिरेवैनꣳ समिन्धे उभयोरस्मै लोकयोर्ज्योतिर्भवति नक्षत्रेष्टका उप दधात्येतानि वै दिवो ज्योतीꣳषि तान्येवाव रुन्धे सुकृतां वै एतानि ज्योतीꣳषि यन्नक्षत्राणि तान्येवाप्नोत्यथो अनूकाशमेवैतानि ॥ ३ ॥

ज्योतीꣳषि कुरुते सुवर्गस्य लोकस्यानुख्यात्यै यत्सꣳस्पृष्टा उपदध्याद् वृष्ट्यै लोकमपि दध्यादवर्षुकः पर्जन्यः स्यादसꣳस्पृष्टा उप दधाति वृष्ट्या एव लोकं करोति वर्षुकः पर्जन्यो भवति पुरस्तादन्याः प्रतीचीरुप दधाति पश्चादन्याः प्राचीस्तस्मात् प्राचीनानि च प्रतीचीनानि च नक्षत्राण्या वर्तन्ते ॥ ४ ॥*

भ्रातृव्यः। लोके। एवैतानि। एकचत्वारिꣳशच्च ॥१॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥०॥

---

ऋतव्या उप दधाति ऋतूनां क्लृप्त्यै द्वन्द्वमुप दधाति तस्माद्द्वन्द्वमृतवोऽधृतेव वै एषा यन्मध्यमा चितिरन्त-

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डस्य चतुर्थप्रपाठकस्याष्टमनवमदशमानुवाकभाष्ये द्रष्टव्यम्।

रिक्षमिव वै एषा द्वन्द्वमन्यासु चितीषूप दधाति चतस्रो मध्ये धृत्या अन्तःश्लेषेण वा एताश्चितीनां यद्दतव्या यद्दतव्या उपदधाति चितीनां विधृत्यै अवकामनूप दधात्येषा वै अग्नेर्योनिः सयोनिम्॥१॥

एवाग्निं चिनुत उवाच ह विश्वामित्रोऽददित्स ब्रह्मणाऽन्नं यस्यैता उपधीयान्तै य उ चैना एवं वेदद् इति संवत्सरो वै एतं प्रतिष्ठायै नुदते योऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्त्य यषष्ठीं चितिं चिनुते षड् ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रतितिष्ठत्येता वै॥ २॥

अधिपत्नीर्नामेष्टका यस्यैता उपधीयन्तेऽधिपतिरेव समानानां भवति यं द्विष्यात्तमुपदध्याद् ध्यायेद्देताभ्य एवैनं देवताभ्य आ वृश्चति ताजगातिमाच्छ्त्यङ्गिरसः सुवर्गं लोकं यन्तो या यज्ञस्य निष्कृतिरासीत्ताम्‌ऋषिभ्यः प्रत्यौहन् तद्धिरण्यमभवत् यद्धिरण्यशल्कैः प्रोक्षति यज्ञस्य निष्कृत्यै अथो भेषजमेवास्मै करोति ॥ ३॥

अथो रूपेणैवैनत्‌ समर्धयति अथो हिरण्यज्योतिषैव सुवर्गं लोकमेति साहस्रवता प्रोक्षति साहस्रः प्रजापतिः प्रजापतेराप्त्यै इमा मे अग्ने इष्टका धेनवः

सन्नित्याह धेनूरेवैनाः कुरुते ता एनं कामदुघा अमुत्रामुष्मिंल्लोके उप तिष्ठन्ते ॥ ४ ॥

सयोनिम्। एता वै। करोति। एकान्नचत्वारिꣳशच्च ॥ २ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥०॥

---

रुद्रो वै एष यदग्निः स एतर्हि जातो यर्हि सर्वश्चितः स यथा वत्सो जातः स्तनं प्रेप्सत्येवं वै एष एतर्हि भागधेयं प्रेप्सति तस्मै यदाहुतिं न जुहुयादध्वर्युं च यजमानं च ध्यायेत् शतरुद्रीयं जुहोति भागधेयेनैवैनꣳ शमयति नार्तिमार्च्छत्यध्वर्युर्न यजमानो यद्ग्राम्याणां पशूनां ॥ १ ॥

पयसा जुहुयाद् ग्राम्यान् पशून् छुचार्पयेत् यदारण्यानामारण्यान् जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नारण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोत्याग्नेयी वा एषा यदजाहुत्यैव जुहोति न ग्राम्यान् पशून् हिनस्ति नारण्यानङ्गिरसः सुवर्गं लोकं यन्तः॥२॥

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयचतुर्थप्रपाठकस्य एकादशानुवाकभाष्ये द्रष्टव्यम्।

अजायां धूमं प्रासिञ्चन्त्सा शोचन्ती पूर्णं परा-
जिहीत सोऽर्को भवत्तदर्कस्यार्कत्वमर्कपर्णेन जुहोति
सयोनित्वायोदङ्तिष्ठन् जुहोति एषा वै रुद्रस्य दिक्
स्वायामेव दिशि रुद्रं निरवदयते चरमायामिष्टकायां
जुहोत्यन्तत एव रुद्रं निरवदयते त्रेधाविभक्तं जुहोति
त्रय इमे लोका इमानेव लोकान्त्समावद्वीर्यान् करो-
तीयत्यग्रे जुहोति ॥ ३ ॥

अथेयत्यथेयति त्रय इमे लोका एभ्य एवैनं लोकेभ्यः
शमयति तिस्र उत्तरा आहुतीर्जुहोति षट् सम्पद्यन्ते
षड्वा ऋतव ऋतुभिरेवैनꣳ शमयति यदनुपरिक्रामं
जुहुयादन्तरवचारिणꣳ रुद्रं कुर्यादथो खल्वाहुः कस्यां
वाह दिशि रुद्रः कस्यां वेत्यनुपरिक्राममेव होतव्य-
मपरिवर्गमेवैनꣳ शमयति ॥ ४ ॥

एता वै देवताः सुवर्ग्या या उत्तमास्ता यजमानं
वाचयति ताभिरेवैनꣳ सुवर्गं लोकं गमयति यं द्विष्यात्
तस्य सञ्चरे पशूनां न्यस्येद्यः प्रथमः पशुरभितिष्ठति स
आर्तिमार्च्छति ॥ ५ ॥*

पशूनां। यन्तः। अग्रे जुहोति। अपरिवर्गमेवैनꣳ
शमयति। त्रिꣳशच्च ॥ ३ ॥

* षष्ठानुवाकस्य व्याख्यानं चतुर्थकाण्डीयपञ्चमप्रपाठकस्य एकादशानु-
वाकभाष्ये द्रष्टव्यम्।

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ० ॥

---

अश्मन्नूर्जमिति परि षिञ्चति मार्जयत्येवैनमथो तर्पयत्येव स एनं तृप्तोऽक्षुध्यन्नशोचन्नमुष्मिँल्लोक उप तिष्ठते तृप्यति प्रजया पशुभिर्य एवं वेद तां न इषमूर्जं धत्त मरुतः संरराणा इत्याहान्नं वै ऊर्गन्नं मरुतोऽन्नमेवाव रुन्धेऽश्मंस्ते क्षुदमुं ते शुक् ॥ १ ॥

ऋच्छतु यं द्विष्म इत्याह यमेव द्वेष्टि तमस्य क्षुधा च शुचा चार्पयति त्रिः परिषिञ्चन् पर्येति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्य शुचꣳशमयति त्रिः पुनः पर्येति षट् सम्पद्यन्ते षड्वा ऋतव ऋतुभिरेवास्य शुचꣳशमयत्यपां वा एतत्पुष्पं यद्वेतसोऽपां ॥ २ ॥

शरोऽवका वेतसशाखया चावकाभिश्च विकर्षत्यापो वै शान्ताः शान्ताभिरेवास्य शुचꣳशमयति यो वा अग्निं चितं प्रथमः पशुरधिक्रामतीश्वरो वै तꣳशुचा प्रदहो मण्डूकेन वि कर्षत्येष वै पशूनामनुपजीवनीयो न वा एष ग्राम्येषु पशुषु हितो नारण्येषु तमेव शुचार्पयति अष्टाभिर्वि कर्षति ॥ ३ ॥

अष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तस्य

शुचꣳ शमयति पावकवतीभिरन्नं वै पाव॒कोऽन्नेनैवास्य शुचꣳ शमयति मृत्युर्वा एष यद॒ग्निं ब्रह्मण एतद्रूपं यत् कृष्णाजिनं कार्ष्णी उपानहावुपं मुञ्चते ब्रह्मणैव मृत्योरन्तर्धत्तेऽन्तर्मृत्योर्धत्तेऽन्तरन्नाद्यादित्याहुरन्यामुप-मुञ्चतेऽन्यां नान्तः ॥ ४ ॥

एव मृत्योर्धत्तेऽवान्नाद्यꣳ रुन्धे नमस्ते हरसे शोचिषे इत्याह नमस्कृत्य हि वसीयाꣳसमुपचरन्त्यन्यं ते अस्मत्तपन्तु हेतय इत्याह यमेव द्वेष्टि तमस्य शुचार्पयति पावको अस्मभ्यꣳ शिवो भवेत्याहान्नं वै पावको-ऽन्नमेवाव रुन्धे द्वाभ्यामधि क्रामति प्रतिष्ठित्यै अपस्य-वतीभ्यां शान्त्यै ॥ ५ ॥*

शुक्। वेतसोऽपाम्। अष्टाभिर्वि कर्षति। नान्तः। एकान्नपञ्चाशच्च ॥ ४ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥०॥

---

नृपदे वडिति व्याघारयति पङ्क्त्याहुत्या यज्ञमुखमा रभतेऽक्ष्णया व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै यद्वषट् कुर्याद्यातयामाऽस्य वषट्-

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डे५षष्ठप्रपाठकस्य प्रथमानुवाकभाष्ये द्रष्टव्यम्।

कारः स्याद् यन्न वषट्कुर्याद्रक्षांसि यज्ञꣳ हन्युर्वडित्याह परोक्षमेव वषट् करोति नास्य यातयामा वषट्कारो भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति हुतादो वै अन्ये देवाः ॥ १ ॥

अहुतादोऽन्ये तानग्निचिदेवोभयान्प्रीणाति ये देवा देवानामिति दध्ना मधुमिश्रेणावोक्षति हुतादश्चैव देवान् अहुतादश्च यजमानः प्रीणाति ते यजमानं प्रीणन्ति दध्नैव हुतादः प्रीणाति मधुषाऽहुतादो ग्राम्यं वै एतदन्नं यद्दधि आरण्यं मधु यद्दध्ना मधुमिश्रेणावोक्षत्युभयस्यावरुध्यै ग्रमुष्टिनाऽवोक्षति प्राजापत्यः ॥ २ ॥

वै ग्रमुष्टिः सयोनित्वाय द्वाभ्यां प्रतिष्ठित्यै अनुपरिचारमवोक्षत्यपरिवर्गमेवैनान् प्रीणाति वि वै एष प्राणैः प्रजया पशुभिर्ऋध्यते योऽग्निं चिन्वन्नधिक्रामति प्राणदा अपानदा इत्याह प्राणानेवात्मन्धत्ते वर्चोदा वरिवोदा इत्याह प्रजा वै वर्चः पशवो परिवः प्रजामेव पशूनात्मन्धत्ते इन्द्रो वृत्रमहन् तं वृत्रः ॥ ३ ॥

हतः षोडशभिर्भोगैरसिनात् स एतामग्नयेऽनीकवते आहुतिमपश्यत् तामजुहोत् तस्याग्निरनीकवान् स्वेन भागधेयेन प्रीतः षोडशधा वृत्रस्य भोगानप्यदहद्वैश्वकर्मणेन पाप्मनो निरमुच्यत यदग्नयेऽनीकवते आहुतिं

जुहोत्युग्निरेवास्यानीकवान्त्स्वेन भागधेयेन प्रीतः पाप्मानमपि दहति वैश्वकर्मणेन पाप्मनो निर्मुच्यते यं कामयेत चिरं पाप्मनः॥ ४ ॥

निर्मुच्येतेत्येकैकं तस्य जुहुयाच्चिरमेव पाप्मनो निर्मुच्यते यं कामयेत ताजक् पाप्मनो निर्मुच्येतेति सर्वाणि तस्यानुद्रुत्य जुहुयात्ताजगेव पाप्मनो निर्मुच्यतेऽथो खलु नानैव सूक्ताभ्यां जुहोति नानैव सूक्तयो वीर्यं दधात्यथो प्रतिष्ठित्यै* ॥ ५ ॥

देवाः। प्राजापत्यः। वृचः। चिरं पाप्मनः। चत्वारिंशच्च ॥ ५ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥०॥

---

उदेनमुत्तरां नयेति समिध आ दधाति यथा जनं यतेऽवसङ्करोति तादृगेव तत् तिस्र आ दधाति त्रिवृद्वै अग्निर्यावानेवाग्निस्तस्मै भागधेयं करोत्यौदुम्बरीर्भवन्त्यूर्क् वै उदुम्बर ऊर्जमेवास्मै अपि दधाति उदु त्वा विश्वे देवा इत्याह प्राणा वै विश्वे देवाः प्राणैः॥ १ ॥

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयषष्ठप्रपाठकस्य प्रथमद्वितीयानुवाकभाष्ये द्रष्टव्यम्।

एवैनमुद्यच्छतेऽग्ने भरन्तु चित्तिभिरित्याह यस्मा एवैनं चित्तायोद्यच्छते तेनैवैनꣳ समर्धयति पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरित्याह दिशो ह्येषोऽनु प्रच्यवते अप अमतिं दुर्मतिं बाधमाना इत्याह रक्षसामपहत्यै रायस्पोषे यज्ञपतिमाभजन्तीरित्याह पशवो वै रायस्पोषः ॥ २ ॥

पशूनेवाव रुन्धे षड्भिर्हरति षड्वा ऋतव ऋतुभिरेवैनꣳ हरति द्वे परिगृह्यवती भवतो रक्षसामपहत्यै सूर्यरश्मिर्हरिकेशः पुरस्तादित्याह प्रसूत्यै ततः पावका आशिषो नो जुषन्तामित्याहान्नं वै पावकोऽन्नमेवाव रुन्धे देवासुराः संयत्ता आसन् ते देवा एतदप्रतिरथमपश्यन्तेन वै तेऽप्रति ॥ ३ ॥

असुरान् अजयन् तदप्रतिरथस्याप्रतिरथत्वं यदप्रतिरथं द्वितीयो होताऽन्वाह अप्रत्येव तेन यजमानो भ्रातृव्यान् जयत्यथो अनभिजितमेवाभि जयति दशर्चं भवति दशाक्षरा विराड् विराजा इमौ लोकौ विधृतावनयोर्लोकयोर्विधृत्या अथो दशाक्षरा विराडन्नं विराड्विराजि एवान्नाद्ये प्रति तिष्ठति असदिव वै अन्तरिक्षमन्तरिक्षमिवाग्नीध्रमाग्नीध्रे ॥ ४ ॥

अश्मानं नि दधाति सत्त्वाय द्वाभ्यां प्रतिष्ठित्यै वि-

मानं एष दिवो मध्यं आस्त इत्याह वि एवैतया मिमीते मध्ये दिवो निहितः पृश्निरस्मै-इत्याह अन्नं वै पृश्नि अन्नमेव अवं रुन्धे चतसृभिरा पुच्छादेति चत्वारि छन्दांसि छन्दोभिरेवेन्द्रं विश्वा अवीवृधन्नित्याह वृद्धिमेवोपावर्त्तते वाजानांः सत्पतिं पतिं ॥ ५ ॥

इत्याहान्नं वै वाजोऽन्नमेवाव रुन्धे सुमनुस्यन्तो देवाः आ च वक्षदित्याह प्रजा वै पशवः सुम्नं प्रजामेव पशून् आत्मन्धत्ते यक्षदग्निर्देवो देवाः आ च वक्षदित्याह स्वगाकृत्यै वाजस्य मा प्रसवेनोद्ग्राभेण उदग्रभीदित्याह असौ वै आदित्य उद्यन्नुद्ग्राभ एष, निम्रोचन् निग्राभो ब्रह्मणैवात्मानमुद्गृह्णाति ब्रह्मणा भ्रातृव्यं नि गृह्णाति* ॥ ६ ॥

प्राणैः। योपः। अप्रति। आग्नीध्रे। पतिम्। एष। दश च ॥ ६ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

---

प्राचीमनु प्रदिशं प्रेहि विद्वानित्याह देवलोकमेवैतयोपावर्त्तते क्रमध्वमग्निना नाकमित्याहेमानेव

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयषष्ठप्रपाठकस्य तृतीयचतुर्थानुवाकभाष्ये द्रष्टव्यम्।

एतया लोकान् क्रमते पृथिव्या अहमुदन्तरिक्षमा अरु-
हमित्याह इमानेवैतया लोकान् समारोहति सुवर्यन्तो
नापेक्षन्त इत्याह सुवर्गमेवैतया लोकमेत्यग्ने प्रेहि ॥ १ ॥

प्रथमो देवयतामित्याह उभयेष्वेवैतया ·देवमनुष्येषु
चक्षुर्दधाति पञ्चभिरधि क्रामति पांक्तो यज्ञो यावानेव
यज्ञस्तेन सह सुवर्गं लोकमेति नक्तोषासेति पुरोनुवा-
क्यामन्वाह प्रत्यै अग्ने सहस्राक्षेत्याह साहस्रः प्रजा-
पतिः प्रजापतेराप्त्यै तस्मै ते विधेम वाजाय स्वाहेत्याह
अन्नं वै वाजोऽन्नमेवाव ॥ २ ॥

रुन्धे दध्नः पूर्णामौदुम्बरीꣳ स्वयमातृण्णायां जुहोति
ऊर्ग् वै दधि ऊर्गुदुम्बरोऽसौ स्वयमातृण्णाऽमुष्यामेवोर्जं
दधाति तस्मादमुतोऽर्वाचीमूर्जमुपजीवामस्तिसृभिः
सादयति त्रिवृद्वै अग्निर्यावानेवाग्निस्तं प्रतिष्ठां गमयति
प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरीमा दधात्येषा
वै समीं कर्णकावती एतया ह स्म ॥ ३ ॥

वै देवा असुराणाꣳ शततर्हाꣳस्तृꣳहन्ति यदेतया
समिधमादधाति वज्रमेवैतच्छतघ्नीं यजमानो भ्रातृव्याय
प्रहरति स्तृत्यै अच्छं वट्कारं विधेम ते परमे जन्म-
न्नग्ने इति वैकङ्कतीमा दधाति भा एवाव रुन्धे
ताꣳ सवितुर्वरेण्यस्य चित्रामिति शमीमयीꣳ शान्त्यै

3283 .



अग्निर्वा ह वै अग्निचितं दुहेऽग्निचिदाग्निं दुहे तां
॥ ४ ॥

सवितुर्वरेण्यस्य चित्रामित्याहैष वा अग्नेर्दोहस्त-
मस्य कण्व एव श्रायसोऽवेत्तेन ह स्मैनं स दुहे यदे-
तया समिधमादधात्यग्निचिदेव तदग्निं दुहे सप्त ते अग्ने
समिधः सप्त जिह्वा इत्याह सप्तैवास्य सामानि प्रीणाति
पूर्णया जुहोति पूर्ण इव हि प्रजापतिः प्रजापतेः ॥ ५ ॥

आप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा
असृजत प्रजानां सृष्ट्यै अग्निर्देवेभ्यो निलायत स
दिशोऽनु प्राविशज्जुह्वत् मनसा दिशो ध्यायेद्दिग्भ्य
एवैनमव रुन्धे दध्ना पुरस्ताज्जुहोति आज्येनोपरिष्टात्
तेजश्चैवास्मै इन्द्रियञ्च समीची दधाति द्वादशकपालो
वैश्वानरो भवति द्वादश मासाः संवत्सरः संवत्सरो-
ऽग्निर्वैश्वानरः साक्षात् ॥ ६ ॥

एव वैश्वानरमव रुन्धे यत् प्रयाजानूयाजान् कुर्यात्
विकस्तिः सा यज्ञस्य दर्विहोमं करोति यज्ञस्य प्रतिष्ठित्यै
राष्ट्रं वै वैश्वानरो विट् मरुतो वैश्वानरं हुत्वा मारुतान्
जुहोति राष्ट्र एव विशमनु बध्नात्युच्चैर्वैश्वानरस्य आ
श्रावयति उपांशु मारुतान् जुहोति तस्माद्राष्ट्रं विशमति
वदति मारुता भवन्ति मरुतो वै देवानां विशो देव-

विशेनैवास्मै मनुष्यविशम्, अव रुन्धे सप्त भवन्ति सप्तगणा वै मरुतो गणश एव विशमव रुन्धे गणेन गणमनुद्रुत्य जुहोति विशमेवास्मै अनुवर्त्मानङ्करोति ॥ ७ ॥*

अग्ने मेहि। अव। स्म। दृंहे तां। प्रजापतेः। साक्षात्। मनुष्यविशम्। एकविंशतिश्च ॥ ७ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥०॥

---

वसोर्धारां जुहोति वसोर्मे धारा असदिति वै एषा ह्रूयते घृतस्य वै एनमेषा धारा अमुष्मिन् लोके पिन्वमाना उपतिष्ठत आज्येन जुहोति तेजो वै आज्यं तेजो वसोर्धारा तेजसैवास्मै तेजोऽव रुन्धेऽथो कामा वै वसोर्धारा कामानेवाव रुन्धे यं कामयेत प्राणानस्य अन्नाद्यं वि ॥ १ ॥

छिन्द्यामिति विग्राहन्तस्य जुहुयात् प्राणानेवास्य अन्नाद्यं विच्छिनत्ति यं कामयेत प्राणानस्यान्नाद्यꣳ संतनुयामिति सन्ततां तस्य जुहुयात् प्राणानेवास्यान्नाद्यꣳ सन्तनोति द्वादश द्वादशानि जुहोति द्वादश मासाः

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयषष्ठप्रपाठकस्य सप्तमानुवाकभाष्ये द्रष्टव्यम्।

संवत्सरः संवत्सरेणैवास्मै अन्नमव रुन्धेऽन्नञ्च मे क्षुच्च मे इत्याहैतद्वै ॥ २ ॥

अन्नस्य रूपꣳ रूपेणैवान्नमव रुन्धेऽग्निश्च म आपश्च मे इत्याहैषा वै अन्नस्य योनिः सयोन्येवान्नमव रुन्धेऽर्द्धेन्द्राणि जुहोति देवता एवाव रुन्धे यत्सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तम इन्द्रमुत्तरमाहेन्द्रियमेवास्मिन्नुपरिष्टाद्दधाति यज्ञायुधानि जुहोति यज्ञः ॥ ३ ॥

वै यज्ञायुधानि यज्ञमेवाव रुन्धे अथो एतद्वै यज्ञस्य रूपꣳ रूपेणैव यज्ञमव रुन्धेऽवभृथश्च मे स्वगाकारश्च मे इत्याह स्वगाकृत्या अग्निश्च मे घर्मश्च मे इत्याह एतद्वै ब्रह्मवर्चसस्य रूपꣳ रूपेणैव ब्रह्मवर्चसमव रुन्धे ऋक् च मे साम च मे इत्याह ॥ ४ ॥

एतद्वै छन्दसाꣳ रूपꣳ रूपेणैव छन्दाꣳस्यव रुन्धे गर्भाश्च मे वत्साश्च मे इत्याहैतद्वै पशूनाꣳ रूपं रूपेणैव पशूनव रुन्धे कल्पान् जुहोति अक्लृप्तस्य क्लृप्त्यै युग्मदयुजे जुहोति मिथुनत्वाय उत्तरावतो भवतोऽभिक्रान्त्यै एका च मे तिस्रश्च मे इत्याह देवच्छन्दसं वै एका च तिस्रश्च ॥ ५ ॥

मनुष्यछन्दसं चतस्रश्चाष्टौ च देवच्छन्दसञ्चैव मनुष्य-

छन्दस्त्वाव रुन्धे आ चयस्त्रिꣳशतो जुहोति चयस्त्रिꣳशद्वै देवता देवता एवाव रुन्धे आ अष्टाचत्वारिꣳशतो जुहोत्यष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्धे वाजश्च प्रसवश्चेति द्वादशं जुहोति द्वादश मासाः संवत्सरः संवत्सर एव प्रति तिष्ठति ॥ ६ ॥ *

वि। वै। यज्ञः। साम च मे इत्याह। च तिस्रश्च। एकान्नपञ्चाशच्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे चतुर्थप्रपाठके अष्टमोऽनुवाकः ॥ ० ॥

---

अग्निर्देवेभ्योऽपाक्रामद्भागधेयमिच्छमानस्तं देवा अब्रुवन्नुप न आ वर्तस्व हव्यन्नो वहेति सोऽब्रवीद्वरं वृणै मह्यमेव वाजप्रसवीयं जुहवन्निति तस्मादग्नये वाजप्रसवीयं जुह्वति यद्वाजप्रसवीयं जुहोत्यग्निमेव तद्भागधेयेन समर्धयत्यथो अभिषेक एवास्य स चतुर्दशभिर्जुहोति सप्त ग्राम्या ओषधयः सप्त ॥ १ ॥

आरण्या उभयीषामवरुन्ध्या अन्नस्यान्नस्य जुहोति

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयसप्तमप्रपाठकस्य एकादशानुवाकभाष्ये द्रष्टव्यम्।

अन्नस्य अन्नस्याव रुन्धे औदुम्बरेण स्रुवेण जुहोत्यूर्ग्वै उदुम्बर उर्गन्नम् ऊर्जैवास्मै ऊर्जमन्नमव रुन्धेऽग्निर्वै देवानामभिषिक्तोऽग्निचिन्मनुष्याणां तस्मादग्निचिद्वर्षति न धावेदवरुद्धꣳ ह्यस्यान्नमन्नमिव खलु वै वर्षं यद्धावेदन्नाद्याद्धावेदुपावर्त्ततान्नाद्यमेवाभि ॥ २ ॥

उपावर्त्तते नक्तोषासेति कृष्णायै श्वेतवत्सायै पयसा जुहोत्यह्नैवास्मै रात्रिं प्र दापयति रात्रिया अहः अहोरात्रे एवास्मै प्रत्ते काममन्नाद्यं दुहाते राष्ट्रभृतो जुहोति राष्ट्रमेवाव रुन्धे षड्भिर्जुहोति षड्वै ऋतवः ऋतुष्वेव प्रति तिष्ठति भुवनस्य पत इति रथमुखे पञ्चाहुतीर्जुहोति वज्रो वै रथो वज्रेणैव दिशः ॥ ३ ॥

अभि जयत्यग्निचितꣳ ह वै असुष्मिन् लोके वातोऽभिपवते वातनामानि जुहोत्यभि एवैनमसुष्मिन् लोके वातः पवते त्रीणि जुहोति त्रय इमे लोका एभ्य एव लोकेभ्यो वातमव रुन्धे समुद्रोऽसि नभस्वानित्याहैतद्वै वातस्य रूपꣳ रूपेणैव वातमव रुन्धेऽञ्जलिना जुहोति न ह्येतेषामन्यथा, आहुतिरवकल्पते* ॥ ४ ॥

ओषधयः सप्त । अभि । दिशः । अन्यथा । द्वे च ॥ ८ ॥

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयसप्तमप्रपाठकस्य द्वादशानुवाकभाष्ये द्रष्टव्यम् ।

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ० ॥

---

सुवर्गाय वै लोकाय देवरथो युज्यते यत्राकूताय मनुष्यरथ एष खलु वै देवरथो यदग्निः अग्निं युनज्मि शवसा घृतेनेत्याह युनक्त्येवैनं स एनं युक्तः सुवर्गं लोकमभि वहति यत्सर्वाभिः पञ्चभिर्युञ्ज्याद्युक्तो ऽस्याग्निः प्रच्युतः स्यादप्रतिष्ठिता आहुतयः स्युरप्रतिष्ठिता स्तोमा अप्रतिष्ठितान्युक्थानि तिसृभिः प्रातःसवनेऽभि मृशति त्रिवृत ॥ १ ॥

वै अग्निर्यावानेवाग्निस्तं युनक्ति यथानसि युक्ते आधीयते एवमेव तत् प्रत्याहुतयस्तिष्ठन्ति प्रति स्तोमाः प्रत्युक्थानि यज्ञायज्ञियस्य स्तोत्रे द्वाभ्यामभि मृशति एतावान् वै यज्ञो यावानग्निष्टोमो भूमा तु वै* अस्य अत ऊर्ध्वः क्रियते यावानेव यज्ञस्तमन्ततोऽन्वारोहति द्वाभ्यां प्रतिष्ठित्यै एकया अप्रस्तुतं भवत्यथ ॥ २ ॥

अभिमृशति उपैनमुत्तरो यज्ञो नमति अथो सन्तत्यै प्र वै एषोऽस्मात् लोकात् च्यवते योऽग्निं चिनुते न वै एतस्यानिष्टके आहुतिरव कल्पते यां वै एषे ऽनिष्टके

---

* तु वै इत्यत्र त्वा इति व्यादर्शपुस्तकेषु पाठः ।

आहुतिं जुहोति स्रवति वै सा ताः स्रवन्तीं यज्ञोऽनु परा भवति यज्ञं यजमानो यत्पुनश्चितिं चिनुते आहुतीनां प्रतिष्ठित्यै प्रत्याहुतयस्तिष्ठन्ति ॥ ३ ॥

न यज्ञः परा भवति न यजमानोऽष्टावुप दधाति अष्टाक्षरा गायत्री गायत्रेणैवैनं छन्दसा चिनुते यदेकादश त्रैष्टुभेन यद्द्वादश जागतेन छन्दोभिरेवैनं चिनुते नपात्को वै नामैषोऽग्निर्यत्पुनश्चितिर्य एवं विद्वान् पुनश्चितिं चिनुते आ तृतीयात् पुरुषादन्नमत्ति यथा वै पुनराधेयः एवं पुनश्चितिर्योऽग्न्याधेयेन न ॥ ४ ॥

ऋध्नोति स पुनराधेयमाधत्ते योऽग्निं चित्वा न ऋध्नोति स पुनश्चितिं चिनुते यत्पुनश्चितिं चिनुते ऋध्यै अथो खल्वाहुः न चेतव्येति रुद्रो वै एष यदग्निः यथा व्याघ्रꣳ सुप्तं बोधयति तादृगेव तत् अथो खल्वाहुश्चेतव्येति यथा वसीयाꣳसम्भागधेयेन बोधयति तादृगेव तन्मनुरग्निमचिनुत, तेन न आर्ध्नोत्स एतां पुनश्चितिमपश्यत् तामचिनुत तया वै स आर्ध्नोयत् पुनश्चितिं चिनुते ऋध्यै* ॥ ५ ॥

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयसप्तमप्रपाठकस्य त्रयोदशानुवाकभाष्ये द्रष्टव्यम्।

चिद्दत्। अथ। निर्घ्नन्ति। अग्न्याधेयेन न। अचिनुत। सप्तदश च ॥ १० ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः ॥०॥

---

छन्दश्चितं चिन्वीत पशुकामः पशवो वै छन्दांसि पशुमानेव भवति श्येनचितं चिन्वीत सुवर्गकामः श्येनो वै वयसाम्पतिष्ठः श्येन एव भूत्वा सुवर्गं लोकं पतति कङ्कचितं चिन्वीत यः कामयेत शीर्षण्वान् अमुष्मिन् लोके स्यामिति शीर्षण्वानेवामुष्मिन् लोके भवति अलजचितं चिन्वीत चतुःसीतं प्रतिष्ठाकामश्चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठति प्रउगचितं चिन्वीत भ्रातृव्यवान् प्र ॥ १ ॥

एव भ्रातृव्यान्नुदते उभयतः प्रउगं चिन्वीत यः कामयेत प्र जातान् भ्रातृव्यान्नुदेय प्रति जनिष्यमाणानिति प्रैव जातान् भ्रातृव्यान्नुदते प्रति जनिष्यमाणान् रथचक्रचितं चिन्वीत भ्रातृव्यवान् वज्रो वै रथो वज्रमेव भ्रातृव्येभ्यः प्र हरति द्रोणचितं चिन्वीतान्नकामो द्रोणे वै अन्नं भ्रियते सयोन्येवान्नमव रुन्धे समूह्यं चिन्वीत पशुकामः पशुमानेव भवति ॥ २ ॥

परिचाय्यं चिन्वीत ग्रामकामो ग्राम्येव भवति श्मशानचितं चिन्वीत यः कामयेत पितृलोके ऋध्नुयामिति पितृलोके एव ऋध्नोति विश्वामित्रजमदग्नी वसिष्ठेन अस्पर्धेतां स एता जमदग्निर्विहव्या अपश्यत् ता उपाधत्त ताभिर्वै स वसिष्ठस्येन्द्रियं वीर्यमवृङ्क्त यद्विहव्या उपदधाति इन्द्रियमेव ताभिर्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते होतुर्धिष्णिये उप दधाति यजमानायतनं वै ॥ ३ ॥

होता स्वे एवास्मै आयतने इन्द्रियं वीर्यमव रुन्धे द्वादशोप दधाति द्वादशाक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनव रुन्धेऽष्टौ अष्टौ अन्येषु धिष्णियेषु उप दधाति अष्टाशफाः पशवः पशूनेवाव रुन्धे षट् मार्जालीये षट् वै ऋतवः ऋतवः खलु वै देवाः पितर ऋतूनेव देवान पितॄन् प्रीणाति* ॥ ४ ॥

प्र। भवति। यजमानायतनं वै। अष्टाचत्वारिंशच्च ॥ ११ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे चतुर्थप्रपाठके एकादशोऽनुवाकः ॥ ० ॥

---

* अस्यानुवाकस्य व्याख्यानं चतुर्थकाण्डीयसप्तमप्रपाठकस्य चतुर्दशानुवाकभाष्ये द्रष्टव्यम्।

पवस्व वाजसातय इत्यनुष्टुक् प्रतिपद्भवति तिस्रोऽनुष्टुभश्चतस्रो गायत्रीयो यत् तिस्रोऽनुष्टुभस्तस्मादश्वस्त्रिभिस्तिष्ठंस्तिष्ठति यच्चतस्रो गायत्रियः तस्मात् सर्वांश्चतुरः पदः प्रतिदधत् पलायते[१] परमा वै एषा छन्दसां यदनुष्टुक् परमश्चतुष्टोमः स्तोमानां परमस्त्रिरात्रो यज्ञानां परमोऽश्वः पशूनां परमेणैवैनं परमतां गमयति[२] एकविंशमहर्भवति ॥ १ ॥

यस्मिन्नश्व आलभ्यते द्वादश मासाः पञ्च ऋतवस्त्रय इमे लोका असावादित्य एकविंश एष प्रजापतिः प्राजापत्योऽश्वस्तमेव साक्षादृध्नोति[३] शक्वरयः पृष्ठं भवन्ति अन्यत् अन्यच्छन्दोऽन्येऽन्ये वै एते पशव आ लभ्यन्त उत इव ग्राम्या उत इव आरण्या यच्छक्वरयः पृष्ठं भवन्ति अश्वस्य सर्वत्वाय[४] पार्थुरश्मं ब्रह्मसामं भवति रश्मिना वै अश्वः ॥ २ ॥

यत ईश्वरो वै अश्वोऽयतोऽप्रतिष्ठितः परां परावतं गन्तोर्यत् पार्थुरश्मं ब्रह्मसामं भवति अश्वस्य यत्यै धृत्यै[५] संहृत्यै अच्छावाकसामं भवति उत्सन्नयज्ञो वै एष यदश्वमेधः कस्तद्वेदेत्याहुर्यदि सर्वो वै क्रियते न वा सर्वः इति यत् संकृति अच्छावाकसामं भवत्यश्वस्य सर्वत्वाय पर्याप्त्यै अनन्तरायाय[६] सर्वस्तोमोऽतिरात्र

उत्तममहर्भवति, सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेव तेनाप्नोति सर्वं जयति(७) ॥ ३ ॥

अहर्भवति। वै अश्वः। अहर्भवति। दश च ॥ १२ ॥

देवासुराः,-ते न। ऋतव्याः। रुद्रः। अश्मन्। नृपदे वट्। उदेनं। प्राचीम्,—इति। वसोर्धाराम्। अग्निदेवेभ्यः। सुवर्गाय,-यचाकूताय। छन्दश्चितं। पवस्व। द्वादश ॥ १२ ॥

देवासुराः (१।१)। अजायां (३।३)। वै ग्रुमुष्टिः (५।३)। प्रथमो देवयताम् (७।२)। एतद्वै छन्दसाम् (८।५)। काप्नोति (१०।५)। अष्टौ पञ्चाशत्* ॥ ५८ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥०॥

इति संहितापञ्चमाष्टके चतुर्थः प्रश्नः ॥

॥ ० ॥ हरिः ओम् ॥ ० ॥

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
प्रपाठके तु तार्तीये वर्णिताश्चितयोऽखिलाः।

---

* प्रथमे ४, द्वितीये ५, तृतीये ५, चतुर्थे ५, पञ्चमे ५, षष्ठे ५, सप्तमे ७, अष्टमे ६, नवमे ४, दशमे ५, एकादशे ४, एवं द्वादशे ३। इति समष्टिः ५८।

चतुर्थे चितिसंस्कारः, द्वादशात्रानुवाककाः ॥
इष्टका इन्द्रतन्वाख्या यज्ञतन्वाभिधास्तथा ।
नक्षत्राख्याश्च विहिताः प्रथमेऽप्यनुवाकके ॥
ऋतव्या वैश्वदेव्यश्च द्वितीये प्रोक्षणं तथा ।
शतरुद्रीयहोमस्तु तृतीये समुदीरितः ॥
परिषेचनमप्युक्तं तुर्ये तद्वद्विकर्षणम् ।
व्याघारणं वैश्वकर्मणाहुतिश्चात्र पञ्चमे ॥
षष्ठे तु समिदाधानमग्निप्रणयनं तथा ।
होतान्वाह्याप्रतिरथं दशर्चं सविकल्पकम् ॥
सप्तमे चितिमारुह्य वह्निं तत्र विनिक्षिपेत् ।
वसोर्धाराष्टमे वाजप्रसवीयोऽप्यनन्तरे ॥
दशमे वह्नियोगाश्च पुनश्चितिरितीरितः ।
एकादशे तु काम्यानि विहव्याश्च समीरिताः ॥
द्वादशे त्वश्वमेधीयस्तोत्रे* त्रयमुदारितम् ।
एक स्तोमः साम चेत्येवं प्रपाठक उदीरितः ॥

तत्रादौ बहिष्पवमानस्तोत्रे चोदकप्राप्तां गायत्रीमपवदितुमन्यामृचं विधत्ते,—"पवस्व वाजसातये इत्यनुष्टुक् प्रतिपद्भवति तिस्रोऽनुष्टुभश्चतस्रो गायत्रियो यत् तिस्रोऽनुष्टुभस्तस्मादश्वस्त्रिभिस्तिष्ठंस्तिष्ठति, यच्चतस्रो गायत्रियस्तस्मात् सर्वांश्चतुरः पदः प्रतिदधत् पलायते" इति । बहिष्पवमानस्तोत्रे प्राकृते त्र्यृचा गायत्राः, तेऽत्र चोदकेन प्राप्ताः । तत्परित्यागेन 'पवस्व' इत्यादिका येयमृगनुष्टुक्,

* स्तोत्रत्रयमिति का० श्री० पुस्तके पाठः ।

'चतस्रो गायत्रियो' भवन्ति। तत्र यस्मात् स्वरूपेण तिस्रोऽनुष्टुभः, 'तस्माद्' अश्वो गमनं परित्यज्य एकत्र यदा तिष्ठति, तदा एकस्मिन् पादे भारमुपेक्ष्य त्रिष्वेषु पादेषु भारमवलम्ब्य तिष्ठति। यस्मादेता विभज्यमानाः 'चतस्रो गायत्रियः', तस्मात् पलायमानोऽश्वः 'चतुरः' पादान् सर्वानपि भूमौ प्रक्षिपन्नेव 'पलायते'।

प्रकारान्तरेणानुष्टुभं प्रशंसति,—"परमा वै एषा छन्दसां यदनुष्टुक् परमश्चतुष्टोमः स्तोमानां परमस्त्रिरात्रो यज्ञानां परमोऽश्वः पशूनां परमेणैवैनं परमतां गमयति[१]" इति। सर्ववागात्मकत्वात् छन्दसां मध्ये अनुष्टुभः परमत्वं, 'वाग्वै अनुष्टुप्'-इति बहुशः श्रुतं। 'स्तोमानां' त्रिवृदग्निष्टोमादीनां मध्ये प्रकृतत्वात् चतुष्टोमस्य परमत्वं। त्रिरात्रस्याश्वमेधस्य महापातकप्रायश्चित्तरूपत्वात् यज्ञानां मध्ये परमत्वं। तादृशयज्ञसाधनत्वात् सग्रामजयहेतुत्वाच्च पशूनां मध्ये अश्वस्य परमत्वम्। एवं सति परमस्य त्रिरात्रस्य या परमे चतुष्टोमे परमस्याश्वस्य सम्बन्धित्वेनानुष्टुभि परमायां 'परमेणैवैनं' साधनसमूहेन 'परमतां' श्रैष्ठ्यतां* प्राप्नोति।

प्रकृतिप्राप्तान् त्रिवृदादिस्तोमान् बाधितुं स्तोमान्तरं विधत्ते,—एकविंशमहर्भवति यस्मिन्नश्व आलभ्यते द्वादश मासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकविंश एष प्रजापतिः प्राजापत्योऽश्वस्तमेव साक्षादृध्नोति[१]"—इति। एकविंशाद्व्यात्मकेन स्तोमेन सर्वत्र युक्तं, न तु स्तोमान्तरेण तादृशमेकविंशमहः कर्त्तव्यम्। प्रथमतृतीययोरह्नोर्व्यावृत्तये विशेष्यते,—'यस्मिन्' मध्यमे अहनि

* श्रेष्ठतामिति पाठो भवितुं युक्तः।

'अश्वः' 'आलभ्यते', तद् 'अह.' 'एकविंशं', अश्वो हि उक्थमन्त्रके द्वितीयेऽहनि आलभ्यते, मासर्तुलोकादित्यानां एकविंशतिसङ्ख्योपेतत्वात्, जगद्रूपेण प्रजापतिशरीरत्वात्, अश्वस्य प्रजापतिजन्यत्वाच्च तस्याश्वस्य सम्बद्धार्थमयमेकविंशतिस्तोमो युक्त.।

अथ पृष्ठस्तोत्रगतानामृचां छन्दोऽन्तरं वारयितुं शक्वर्याख्यं छन्दो विधत्ते,—"शक्वरयः पृष्ठं भवन्त्यन्यदन्यच्छन्दोऽन्येऽन्ये वा एते पशव आलभ्यन्त उतेव ग्राम्या उतेवारण्या यच्छक्वरयः पृष्ठं भवन्त्यश्वस्य सर्वत्वाय[४]"—इति। शक्वरीछन्दोपेता ऋच 'शक्वरय.', ताभिर्युक्तं पृष्ठस्तोत्रं कुर्यात्। सप्तपादात्मके शक्वर्यात्मके छन्दसि पादत्रयात्मकं गायत्र्याख्यं छन्दः, पादचतुष्टयात्मकं त्रिष्टुभाख्यं छन्द., पादपञ्चकात्मकं पङ्क्त्यात्मकं छन्दः;—इत्येवं 'अन्यदन्यत्' नानाविधं छन्द., अन्तर्भवति, अश्वमेधेऽपि अश्वप्रधानके 'अन्येऽन्ये' नानाजातीया एव पशव आलभ्यन्ते। तत्र केचन ग्राम्या एव, केचन आरण्या एव, तत्रापि अवान्तरभेदा बहुधा द्रष्टव्या। एवं सर्वपृष्ठस्तोत्रे अश्वमेधसम्बन्धिनि नानाछन्दोगर्भितशक्वरीस्वीकारे सति मुख्यस्याश्वस्य सर्वपश्वात्मकत्वं सम्पादितं भवति।

अथ चोदकप्राप्तं सामान्तरमपवदितुं सामविशेषं विधत्ते,—"पार्थुरश्मं ब्रह्मसाम भवति रश्मिना वै अश्वो यत ईश्वरो वै अश्वोऽयतोऽप्रतिष्ठित. परां परावतं गन्तोर्यत्पार्थुरश्मं ब्रह्मसामं भवत्यश्वस्य यत्यै धृत्यै[५]"—इति। पृथुरश्मिना महर्षिणा दृष्टं साम 'पार्थुरश्मं', ब्रह्मणऋत्विजमभिलक्ष्य गीयमानं साम 'ब्रह्मसामं', तच्च नात्र प्रकृतं कार्यं, किन्तु पार्थुरश्मं कार्यं। 'यस्मात्' कारणात् 'रश्मिना' रज्जुविशेषेण दृढभृतः 'अश्व.' पुरुषम् अपेक्षितदेशं नेतुं 'ईश्वर.' समर्थ., यस्माच्च

कारणात् 'अयतो' नियमनरहितोऽश्वः क्वापि 'अप्रतिष्ठितः' सन् अत्यन्तं दूरं गन्तुं समर्थः; तस्मात् अश्वस्य 'यत्यै' दूरगमननियमनाय, उपरितनपुरुषेण धारणाय च 'पार्थुरश्म' कार्यं। तथैव अच्छावाकं प्रतिगातव्यं सामविशेषं विधत्ते,—"संकृत्यच्छावाकसाम भवति उत्सन्नयज्ञो वै एष यदश्वमेधः कस्तद्वेदेत्याहुर्यदि सर्वो वै क्रियते न वा सर्व इति, यत् संकृत्यच्छावाकसामं भवति अश्वस्य सर्वत्वाय पर्याप्त्यै अनन्तरायाय[१]"—इति। समीचीना आकृतिर्यस्य साम्नस्तत् 'संकृति', विकलमङ्गं सम्यक् कर्तुं समर्थमित्यर्थः। एतन्नामकं सामगानां यत् प्रसिद्धं तत् अच्छावाकमभिलक्ष्य गातव्यं। योऽयमश्वमेधः क्रतुः, सोऽयं विनष्टयज्ञावयवैर्बहुभिरवयवैरुपेतत्वात् कृत्स्नोऽयमवयवसङ्घातः* क्रियते; क्वचित् किञ्चिदवयवोऽतिविस्मृतो वा इति को नाम लोके वेत्ति, तस्मात् संकृतिगानेन अश्वसम्बन्धिनः क्रतोः सर्वावयवसाकल्यं भवति, तत्र देवानां सपूर्त्यै यजमानस्य च स्वर्गप्राप्तिविघ्नपरिहाराय सम्पद्यते।

अपेक्षितविशेषगुणैर्युक्तं द्वितीयमहर्विधाय अथ तृतीयमहर्विधत्ते,—"सर्वस्तोमोऽतिरात्र उत्तममहर्भवति सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेव तेनाप्नोति सर्वं जयति[२]"—इति। त्रिवृदाद्याः त्रयस्त्रिंशद् अन्ता† आम्नाताः, सर्वेऽपि स्तोमा यस्मिन्नतिरात्रे सन्ति, सोऽयमतिरात्रः तृतीयदिवसे कर्त्तव्यः। तत्र स्तोमगतं सर्वत्वं स्तेन पूर्वमप्राप्तस्य सुखतोऽपि,‡ प्राप्त्यै भवति यस्तु वैरी पूर्वमजितः तस्य सर्वस्यापि

* सन्धानः इति का० क्रो० पु० पाठ।
† त्रिवृदाद्यास्त्रयस्त्रिंशदन्ता इति आदर्शपुस्तकपाठ।
‡ सुखतोऽपि सर्वस्य इति का० का० पु० पाठ।

विजयाय भवति, तस्मादयं यजमानः तेन सर्वस्तोमेन प्राप्तव्यं धनादिकं सर्वं प्राप्नोति, जेतव्यं वैरिवर्गं जयति ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

*इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-*
संहिताभाष्ये पञ्चमकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥०॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक-श्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थ-प्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये पञ्चमकाण्डे चतुर्थः प्रपाठकः संपूर्णः ॥०॥

॥०॥ ॐ तत्सत् ॥०॥

---

।•। श्रीगणेशाय नमः ।•॥

# तैत्तिरीयसंहिताभाष्ये ।

## प्रथमकाण्डे प्रथमप्रपाठके

## प्रथमोऽनुवाकः ।

हरिः ओम् ।

यदेकेन संस्थापयति यज्ञस्य सन्तत्यै अविच्छेदाय[१] ऐन्द्राः पशवो ये मुष्करा यदैन्द्राः सन्तोऽग्निभ्य आलभ्यन्ते देवताभ्यः समदं दधात्याग्नेयीस्त्रिष्टुभो याज्यानुवाक्याः कुर्यात् यदाग्नेयीस्तेनाग्नेया यत्त्रिष्टुभः तेन ऐन्द्राः समृद्धौ न देवताभ्यः समदं दधाति[१] वायवे नियुत्वते तूपरमा लभते तेजोऽग्नेर्वायुस्तेजस एष आ लभ्यते तस्मात् यद्रियङ् वायुः ॥ १ ॥

वाति तद्रिय अग्निर्दहति स्वमेव तत्तेजोऽन्वेति[१] यन्न नियुत्वते स्यात् उन्माद्येत् यजमानो नियुत्वते भवति यजमानस्यानुन्मादाय[१] वायुमती श्वेतवती याज्यानुवाक्ये भवतः सतेजस्त्वाय[१] हिरण्यगर्भः समवर्त्तताग्रे

इत्याघारमा घारयति प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय[६] सर्वाणि वै एष रूपाणि पशूनां प्रत्यालभ्यते यत् श्मश्रुणस्तत् ॥ २ ॥

पुरुषाणाꣳ रूपं यत्तूपरस्तदश्वानां यदन्यतोदन्तद्गवां यदव्या इव शफास्तदवीनां यदजस्तदजानां[७] वायुर्वै पशूनां प्रियन्धाम यद्वायव्यो भवत्येतमेवैनमभिसंजानानाः पशव उप तिष्ठन्ते[८] वायव्यः कार्याः। प्राजापत्या इत्याहुर्यद्वायव्यं कुर्यात् प्रजापतेरीयाद् यत् प्राजापत्यं कुर्याद्वायोः ॥ ३ ॥

इयाद्यद्वायव्यः पशुर्भवति तेन वायोर्नैति यत् प्राजापत्यः पुरोडाशो भवति तेन प्रजापतेर्नैति यद् द्वादशकपालस्तेन वैश्वानरान्नैति[९] आग्नावैष्णवमेकादशकपालं निर्वपति दीक्षिष्यमाणोऽग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञञ्च आ रभते[१०] अग्निरवमो देवतानां विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति देवताः ॥ ४ ॥

एवोभयतः परिगृह्य यजमानोऽव रुन्धे[११] पुरोडाशेन वै देवा अमुष्मिꣳल्लोके आर्ध्नुवन चरुणाऽस्मिन् यः कामयेतामुष्मिन् लोके ऋध्नुयामिति स पुरोडाशं कुर्वीत अमुष्मिन्नेव लोके ऋध्नोति[१२] यदष्टाकपालस्तेनाग्नेयो

यस्त्रिकपालस्तेन वैष्णवः सम्बद्धो[१३] यः कामयेतास्मिन् लोके ऋध्नुयामिति स चरुं कुर्वीताग्नेष्टं विष्णोस्तण्डुलास्तस्मात् ॥ ५ ॥

चरुः कार्योऽस्मिन्नेव लोके ऋध्नोति[१४] आदित्यो भवति इयं वै अदितिरस्यामेव प्रतितिष्ठत्यथो अस्यामेवाधि यज्ञं तनुते[१५] यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते यथा सामिगर्भोऽवपद्यते तादृगेव तद् आर्त्तिमा ऋच्छेद् वैश्वानरं द्वादशकपालं पुरस्तात् निर्वपेत् संवत्सरो वै अग्निर्वैश्वानरो यथा संवत्सरमाप्त्वा ॥ ६ ॥

काले आगते विजायते एवमेव संवत्सरमाप्त्वा काले आगतेऽग्निं चिनुते नार्त्तिमार्च्छति[१६] एषा वै अग्नेः प्रिया तनूर्यद् वैश्वानरः प्रियामेवास्य तनुवमव रुन्धे[१७] चीणि एतानि हवींषि भवन्ति चय इमे लोका एषां लोकानाम् रोहाय[१८] ॥ ७ ॥

यद्रियङ् वायुः । प्रमश्रुणस्तत् । वायोः । निर्वपति देवताः । तस्मात् । आप्त्वा । अष्टाचिंशच्च ॥ १ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ ० ॥

---

श्रीगणेशाय नमः।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥
मन्त्राणां ब्राह्मणं प्रोक्तं प्रपाठकचतुष्टये।
अथ प्रश्नत्रये तत्र शिष्टमङ्गं विविच्यते॥

प्रथमप्रपाठके "एकविꣳशत्या माषैः" इत्यस्मिन्ननुवाके(८) "अग्निभ्यः पशूनालभते" इति विधाय अन्येषां पशूनां पर्यग्निकृतानामुत्सर्गमुक्त्वा "प्राजापत्येन सꣳस्थापयति" इति यदुक्तं तदनुभाषयितुमनुवदति,— "यदेकेन सꣳस्थापयति यज्ञस्य सन्तत्यै अविच्छेदाय(१)" इति। इतरान् पशूनुत्सृज्य प्राजापत्येनैकेन समापनं यत् तत् प्रारब्धस्य पशुकर्मणः सान्तत्याय भवति, असमापने तु विच्छेदः स्यात्।

अथ तस्मिन् कर्मणि मन्त्रविशेषं विधत्ते,—"ऐन्द्राः पशवो ये मुष्कराः यदैन्द्राः सन्तोऽग्निभ्य आलभ्यन्ते देवताभ्यः समदं दधाति आग्नेयीस्त्रिष्टुभो याज्यानुवाक्याः कुर्याद्यदाग्नेयीस्तेनाग्नेया यत्त्रिष्टुभस्तेनैन्द्राः समृद्ध्यै न देवताभ्यः समदं दधाति(२)" इति। 'ये' लोकेषु 'मुष्कराः' अण्डसहिताः पशवः सन्ति, ते सर्वे पुंस्त्वलक्षणेन्द्रियवृद्ध्या युक्तत्वात् इन्द्रदेवताकाः, तादृशानां अन्ययालभने देवतानां कलहं सम्पादयेत्, अतः कलहपरिहाराय अग्निदेवताकाः त्रिष्टुप्छन्दस्का ऋचः याज्यानुवाक्याः कुर्यात्, तथा सति ऋचामाग्नेयत्वेन पशवोऽप्याग्नेयाः सम्पद्यन्ते, त्रिष्टुभः इन्द्रेण सह उत्पन्नत्वात् तेन छन्दसा पशव ऐन्द्रा अपि सम्पद्यन्ते, तदुभयं मिलित्वा कलहं परिहृत्य 'समृद्धिं' सम्पद्यते। यदुक्तं सूत्रकारेण,—'अपि वा सर्वेषामेतेषां

स्थाने वायवे नियुत्वते श्वेतमजन्तूपरमालभते वायुमती वपाया श्वेतवती याज्यानुवाक्ये' इति। तमिमं पक्षं विधत्ते,—"वायवे नियुत्वते तूपरमा लभते तेजोऽग्नेर्वायुस्तेजस एष आ लभ्यते तस्मात् यद्रियङ्वायुर्वाति तद्रियं अग्निर्दहति स्वमेव तत् तेजोऽन्वेति"(१) इति। नियुत्संज्ञकाः अश्वविशेषा यस्य वायोः सन्ति सोऽयं नियुत्वान्। तूपरः शृङ्गरहितः। अग्निज्वालायाः उद्बोधकत्वात् 'वायुः' एव 'अग्नेः' 'तेजः'; तस्मात् 'तेजसः' 'एषः' तूपर आलब्धो भवति। यां दिशं प्रतिगच्छतीति 'यद्रियङ्' वायुः यद्दिगभिमुखो वाति, तद्दिगभिमुख एव 'अग्निर्दहति'। तेन दहनेन स्वकीयमेव तेजः अनुगतवान् भवति। 'नियुत्वते' इत्येतद्वायुविशेषणम्।

अन्वयव्यतिरेकाभ्यां प्रशंसति,—"यन्न नियुत्वते स्यादुन्माद्येद् यजमानो नियुत्वते भवति यजमानस्यानुन्मादाय"(२) इति। वायो-र्नियामकाश्वाभावे सति यजमानोऽपि नियामकबुद्धिरहितः सन् उन्मत्तः यत्र-क्वापि गच्छेत् यत्किञ्चिद्वा वदेत्, अतस्तत्परिहाराय नियुत्वद्विशेषणं।

वायोरपेक्षितं मन्त्रविशेषं विधत्ते,—"वायुमती श्वेतवती याज्यानुवाक्ये भवतः सतेजस्त्वाय"(३) इति। 'पीवोअन्नाꣳ रयिवृध' इत्यृचौ वायुमत्यौ श्वेतवत्यौ च, 'ते वायवे समनसः' इति वायुशब्द-सद्भावात्, 'श्वेतः सिषक्ति' इति श्वेतशब्दसद्भावाच। वायोरग्नितेजस्त्वात् पशुश्वैत्यस्य च तेजोरूपत्वात् तदुभयं सतेजस्त्वाय सम्पद्यते।

द्वितीयाघारे प्राकृतमन्त्रं बाधितुं विधत्ते,—'हिरण्यगर्भः समवर्त्तताग्रे इत्याघारमा घारयति प्रजापतिर्वै हिरण्यगर्भः प्रजा-

पतेरनुरूपत्वाय"(६) इति। हिरण्यं ब्रह्माण्डरूपं यस्येश्वरस्य प्रजापतेर्गर्भे वर्तते, सोऽयं हिरण्यगर्भः, यद्वा हिरण्मयस्य ब्रह्माण्डस्य मध्ये सत्यलोके गर्भरूपत्वेनावस्थितः चतुर्मुखो हिरण्यगर्भः, अतोऽयं मन्त्रः प्रजापतेरनुरूपः।

पशुं प्रशंसति,—"सर्वाणि वै एष रूपाणि पशूनां प्रत्यालभ्यते यत् श्मश्रुणस्तत्पुरुषाणाꣳ रूपं यत्तूपरस्तदश्वानां यदन्यतोदन् यद्गवां यदव्या इव शफास्तदवीनां यदजस्तदजानाम्"(७) इति। पशूनां द्विपदां* च यानि रूपाणि सन्ति, तानि सर्वाणि प्रति तद्रूपत्वेनैव पशुरालभ्यते, तत्र 'यत्'† श्मश्रुयुक्तत्वेन द्विपदा पुरुषेण साम्यं, शृङ्गरहितत्वेनाश्वस्य साम्यं, अधस्तनपङ्क्तावेव दन्तसद्भावेन गोसाम्यम्, अविसदृशैः क्षुल्लकैः द्विखुरैरुपेतत्वात् अविसाम्यम्, अजजात्या सर्वेषामजानां साम्यम्।

अथ वायुदेवतां प्रशंसति,—"वायुर्वै पशूनां प्रियन्धाम यद्वायव्यो भवत्येतमेवैनमभि सञ्जानानाः पशव उप तिष्ठन्ते"(८) इति। पशूनां प्रावरणरहितत्वेन सञ्चरणाद्, 'वायुः' 'प्रियन्धाम' अतः पशोर्वायव्यत्वे सति 'एनं'वायुमभिलक्ष्य सम्यक् स्वकीयं धाम जानन्तः पशवः प्राप्यन्ते।

अथ मीमांसया निर्णेतुं कञ्चिदर्थविशेषमनुष्ठेयं विधत्ते,—"वायव्यः कार्याः प्राजापत्या इत्याहुर्यद्वायव्यं कुर्यात् प्रजापतेरियात् यत्प्राजापत्यं कुर्याद्वायोरियाद्यद्वायव्यः पशुर्भवति तेन वायोर्नैति

---

* "द्विपदां चतुष्पदानां" इति च्यादर्शपुस्तकेऽधिक पाठः।

† अत्र यदिति पदं तत्पदं विना साकाङ्क्षमिति यत्पदं लिपिकरप्रमादादुद्धृतमिव प्रतिभाति।

यत्प्राजापत्यः पुरोडाशो भवति तेन प्रजापतेर्नैति यद् द्वादशकपालस्तेन वैश्वानरान्नैति"[९] इति। पशोर्वायव्यत्वे सति अयं पशुः प्रजापतेः अपेयात्, प्राजापत्ये सति वायोरपेयात्। एवमपि अन्यदप्यत्रा-ध्याहर्त्तव्यं, पचद्वयेऽपि वैश्वानरादप्यपेयात् वैश्वानरसम्बन्धित्वे ताभ्या-मपेयादिति प्रथमपचोपन्यासेऽपि वैश्वानरादित्यपि तृतीयः पचो ऽध्याहर्त्तव्यः, तथायं निर्णयः,—पशुर्वायव्यः, पशुपुरोडाशः प्राजापत्यः, तस्य द्वादशकपालत्वं वैश्वानरसम्बन्धि, तेन देवतात्रयाणि अपैति इति।

यदुक्तं सूत्रकारेण,—'यत्प्राक् दीचणीयायास्तत्कृत्वा चिद्दविधं दीचणीयां निर्वपति वैश्वानरं द्वादशकपालं तृतीयं पुरस्तादभंवत्सरभृत.' इति। अत्राग्नावैष्णवमेकादशकपालम्, आदित्यं चापेक्ष्य वैश्वानरस्य तृतीयत्वम्। तत्र प्रथमं हविर्विधत्ते। "आग्नावैष्णवमेकादशकपालं निर्वपति दीचिष्यमाणोऽग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चारभते"[१०] इति। अग्नेः सर्वदेवतारूपत्वं सोमप्रकरणे स्पष्टमा-म्नातम्,—'ते देवा विभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निः सर्वा देवताः' इति। यज्ञस्य सर्वाङ्गव्यापित्वात् विष्णुत्वम्, अतः एतदीयेन हविषा सर्वा देवता यज्ञं च उपक्रान्तवान् भवति।

प्रकारान्तरेण देवताद्वयं प्रशंसति,—"अग्निरवमो देवतानां विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता एवोभयतः परिगृह्य यजमानोऽवरुन्धे"[११] इति। शस्त्राणां मध्ये प्रथमशस्त्रे 'भुरग्निर्ज्योतिः' इत्युक्तत्वात् अग्नेरवमत्वं चरमशस्त्रे 'विष्णोर्नुकम्' इत्युक्तत्वाद्विष्णुः परमः; अतः आग्नावैष्णवनिर्वापेण मध्यवर्तिनीः सर्वा देवताः उभयतः परिगृह्य स्वाधीनाः करोति।

कामनाविशेषेण पुरोडाशं विधत्ते,—"पुरोडाशेन वै देवा अमुष्मिन् लोके आर्ध्नुवन् चरुणाऽस्मिन् यः कामयेतामुष्मिन् लोके ऋध्नुयामिति स पुरोडाशं कुर्वीत अमुष्मिन्नेव लोके ऋध्नोति"(११) इति।

अथ कपालगतामेकादशसङ्ख्यां विभज्य प्रशंसति,—"यदष्टाकपाल-स्तेनाग्नेयो यत्त्रिकपालस्तेन वैष्णवः समृद्धौ,—"(१२) इति। अन्यत्र हि 'आग्नेयमष्टाकपालं निर्वपति' इत्युक्तत्वादष्टसङ्ख्या अग्नेः प्रिया। तथा 'वैष्णवं त्रिकपालम्' इत्युक्तत्वात् त्रिसङ्ख्या विष्णोः प्रिया। तदुभयं 'समृद्धौ' भवति।

कालविशेषाय चरुं विधत्ते,—"यः कामयेतास्मिँल्लोके ऋध्नुयामिति स चरुं कुर्वीताग्नेर्घृतं विष्णोस्तण्डुलास्तस्माच्चरुः कार्योऽस्मिन्नेव लोके ऋध्नोति"(१४) इति। 'घृतम्' 'अग्नेः', 'घृतमस्य योनिर्घृतः श्रित' इत्यादिमन्त्रवर्णात्। तण्डुलास्तु विष्णोः प्रिया, 'येऽशिष्टास्तान् विष्णवे शिपिविष्टाय' इति श्रुतेः। तस्मादुभयप्रियत्वात् घृतयुक्तश्चरुः कार्यः, एतेनास्मिन् लोके समृद्धो भवति।

अथ हविरन्तरं विधत्ते,—"आदित्यो भवतीयं वा अदितिरस्यामेव प्रतितिष्ठत्यथो अस्यामेवाधियज्ञं तनुते"(१५) इति। अदितिर्देवता यस्य चरोः सोऽयमादित्यः, आग्नावैष्णवं हविः प्रथमं कृत्वा द्वितीय-हविष्ट्वेन अयमादित्यश्चरुः कार्यः। अदितिशब्देनेयमेव भूमिरुच्यते अस्यामेव भूमौ उपरि यज्ञं कृतवान् भवति, भूमौ प्रतिष्ठितश्च भवति।

अथ तृतीयं हविर्विधत्ते,—"यो वै संवत्सरमुख्यमभृत्वाग्निं चिनुते यथा सामिगर्भोऽवपद्यते तादृगेव तदार्तिमार्च्छेद्वैश्वानरं द्वादशकपालं पुरस्ताम्निर्वपेत् संवत्सरो वै अग्निर्वैश्वानरो यथा संवत्सरमाप्त्वा काले

आगते विजायते एवमेव संवत्सरमाप्त्वा काले आगतेऽग्निं चिनुते नार्तिमार्च्छति"(१६) इति। उख्यस्याग्नेः संवत्सरधारणं उपरिष्टात् विधास्यति 'संवत्सरमुख्यं भृत्वा' इति। तेन च धारणेन विना, अग्निचयनमपरिपक्वगर्भपातेन समानम्, अतो यजमानो म्रियते। तत् तस्मात् संवत्सरं धारयितुम् अशक्तः, पुमान् संवत्सरात् प्रागेव तिस्रः षट् द्वादश वा रात्रीः दीक्षाः चिकीर्षुः वैश्वानरं द्वादशकपालं निर्वपेत् तस्य च वैश्वानरस्याग्नेः संवत्सररूपत्वात् यथा लोके सवत्सरेण पूर्णा गर्भा काले सुखेन जायते एवमपि अनयेष्ट्या संवत्सरं प्राप्य काले प्राप्ते चिनवान् भवति ततो न म्रियते।

प्रकारान्तरेण प्रशंसति—"एषा वा अग्नेः प्रिया तनुर्यद्वैश्वानरः प्रियामेवास्य तनुमव रुन्धे"(१७) इति। सर्वेषां पुरुषाणां उपकारकः कश्चिदग्निमूर्त्तिविशेषो वैश्वानरः, सा च मूर्तिः 'अग्नेः' 'प्रियं' शरीरं, ततः तयेष्ट्या अग्निसम्बन्धिनीं प्रियामेव तनुं प्राप्नोति।

विहितानां हविषां चित्वं प्रशंसति,—"त्रीण्येतानि हवीꣳषि भवन्ति त्रय इमे लोका एषां लोकानाꣳ रोहाय"(१८)—इति। प्राप्तये इत्यर्थः। यद्यपि आग्नावैष्णवं हविः प्रकृतावपि विद्यमानत्वाचोदकप्राप्तं, तथापि उपरितनहविर्विधानायायमनुवाद इत्यविरोधः। सेयं दीक्षणीयेष्टिः 'षड्भिर्दीक्षयति' इत्येतस्मादनुवाकात् पूर्वं द्रष्टव्या। प्रकृतौ दीक्षाहुतीनां इष्ट्यनन्तरभावित्वात्। यत्तु, 'रुक्ममन्तरं प्रतिमुञ्चते' इति विहित,* उपरितने 'न ह स्म वै पुराग्निः' इत्येतस्मिन्ननुवाके समाम्नातम्।

* अत्र 'तत्' इति पदमपेक्षितमिव प्रतिभाति।

तत्रेयं मीमांसा,—

"पञ्चमाध्यायस्य द्वितीयपादे चिन्तितम्। (१२अधि०),—

"चयने रुक्मस्त्यादिः पुरोत स्वामिसंस्कृतिः।

पाठादाद्योऽन्तिमः क्रृप्तः क्रमात्पाठस्य न क्षतिः॥

अग्निचयने दीक्षणीयादेरूर्द्ध्वं रुक्मधारणमाम्नातम्, कण्ठे-धृतः सन्नुरसि लम्बमानः सौवर्णं आभरणविशेषो रुक्मशब्दार्थः। उखास्थितो ऽग्निः शिक्येऽवस्थापितः कण्ठे धार्यमाणो यथा उरःप्रदेशं न दहति, तथा व्यवधायकत्वेन तद्धारणम्। अत एव ब्राह्मणम्,—'रुक्ममन्तरं प्रतिमुञ्चते ऽस्तमेव त्वचोरन्तर्धत्ते' इति। यजमानसंस्काराश्च वपनादयः प्रकृतौ दीक्षणीयानन्तरभाविनः, इह चोदकेन प्राप्ताः, तेभ्यः पूर्व्वमेव रुक्मप्रतिमोकः पदार्थः कार्यः,तस्य प्रत्यक्षपाठात् सावित्रादिषु प्रत्यादृतत्वादिति चेत्। मैवम्, यजमानसंस्काराणां दीक्षणीयानन्तर्यं प्रकृतौ क्रृप्तं, रुक्मस्य तु पाठेन तत्कल्पनीयम्। तस्मात् संस्काराः पूर्व्वभाविनः। न च, सावित्रदृष्टान्तो युज्यते, दीक्षणीयाया इव संस्काराणां प्रतिमोकादूर्द्ध्वं पुनःपाठात्, न च, दीक्षणीयानन्तर्यं बोधिते रुक्मप्रतिमोकपाठवैयर्थ्यं, स्वरूपबोधनेन चरितार्थत्वात्। ततो रुक्मप्रतिमोकः पश्चात्कार्यः।

चतुर्थाध्यायस्य चतुर्थपादे (६अ०) चिन्तितम्,—

नित्यो नैमित्तिको वा स्यादाग्नेयो वैश्वानरश्चितौ।

नित्यः पुरेव यच्छब्दादविरोधाच्च पश्चिमः॥

अग्निचयने श्रूयते,—"यो वै संवत्सरमुख्यमभृत्वाग्निं चिनुते यथा सामिगर्भोऽवपद्यते तादृगेव तदार्तिमार्च्छेद्वैश्वानरं द्वादशकपालं पुर-

स्तान्निर्वपेत्" इति। उखा पीठरः, तामुखां "युञ्जानः प्रथमं मन." इत्यादिप्रपाठकाम्नातैर्मन्त्रैः सम्पाद्य, तस्यामुखायामग्निं निधाय यद्युखामेव द्वादशोखामेव बिभ्यते* तामुखामवस्थाप्य तच्छिक्यं स्वकण्ठे बध्वा तम् उख्यमग्निं संवत्सरं भृत्वा पश्चादिष्टकाभिरग्निश्चेतव्यः, अभरणे त्वपूर्णगर्भपातवद्विनाशः स्यात्। ततो वैश्वानरेष्टिं चयनात् प्रागेव कुर्यादित्यर्थः। अत्रापि अन्तरायवाक्यवद् अभरणवाक्यस्यार्थवादत्वान्नित्या वैश्वानरेष्टिरिति चेत्। मैवं, 'यः पुमान् भृत्वा चिनुते स निर्व्वपेद्' इति कर्त्तृसमानाधिकृत-यच्छब्दवशादभरणेष्ट्योर्निमित्तनैमित्तिकभावावभासात्। किञ्च दधिग्रहस्य नित्यस्य पाचिकलक्षणं नैमित्तिकत्वं विरुद्धम्। इह तु नित्यत्वे प्रमाणाभावादेव नैमित्तिकत्वमित्यविरोधः॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः॥१॥

प्रजाप॑तिः प्र॒जाः सृ॒ष्ट्वा प्रे॒णानु॒ प्रावि॑श॒त्ताभ्यः॒ पुन॒ः सम्भ॑वितुं॒ नाश॑क्नो॒त् सो॑ऽब्रवीद् ऋ॒ध्नव॒दित्स यो मा॒ ऽतः पुन॑ः सञ्चि॒नव॒दिति॒ तं दे॒वाः सम॑चिन्व॒न् ततो॒ वै ते

* 'बिभृयात्' इति सर्व्वत्र पाठो न सम्यगिव प्रतिभाति।

आर्भुवन् यत्समचिन्वन् तच्चित्यस्य चित्यत्वम्[१] य एवं विद्वानग्निं चिनुते ऋध्नोत्येव[२] कस्मै कमग्निश्चीयत इत्याहुरग्निवान् ॥ १ ॥

असानीति वै अग्निश्चीयतेऽग्निवानेव भवति[३] कस्मै कमग्निश्चीयत इत्याहुर्देवा मा वेदन्निति वै अग्निश्चीयते विदुरेनं देवाः[४] कस्मै कमग्निश्चीयत इत्याहुर्गृही असानीति वै अग्निश्चीयते गृह्येव भवति[५] कस्मै कमग्निश्चीयत इत्याहुः पशुमानसानीति वै अग्निः ॥ २ ॥

चीयते पशुमानेव भवति[६] कस्मै कमग्निश्चीयत इत्याहुः सप्त मा पुरुषा उप जीवानिति वै अग्निश्चीयते त्रयः प्राञ्चः त्रयः प्रत्यञ्च आत्मा सप्तम एतावन्त एवैनममुष्मिन् लोके उप जीवन्ति[७] प्रजापतिरग्निमचिकीषत तं पृथिव्यब्रवीत् न मय्यग्निं चेष्यसेऽति मा धक्ष्यति सा त्वातिदह्यमाना वि धविष्ये ॥ ३ ॥

स पापीयान् भविष्यसीति सोऽब्रवीत् तथा वै अहं करिष्यामि यथा त्वा नातिधक्ष्यतीति स इमामभ्यमृशत् प्रजापतिस्त्वा सादयतु तया देवतयाऽङ्गिरस्वद् ध्रुवा सीदेतीमामेवेष्टकां कृत्वोपाधत्तानतिदाहाय[८] यत् प्रत्यग्निं चिन्वीत तदभि मृशेत् प्रजापतिस्त्वा सादयतु तया देवतयाङ्गिरस्वद् ध्रुवा सीद ॥ ४ ॥

इतीमामेवेष्टकां कृत्वोप धत्तेऽनतिदाहाय(९) प्रजापति-रकामयत प्र जायेयेति स एतमुख्यमपश्यत्तꣳ संवत्सर-मबिभस्ततो वै स प्राजायत तस्मात् संवत्सरं भार्यः प्रैव जायते(१०) तं वसवोऽब्रुवन् प्र त्वमजनिष्ठा वयं प्र जायामहै’इति तं वसुभ्यः प्रायच्छत्तं त्रीण्यहानि अविभरुस्तेन ॥ ५ ॥

त्रीणि च शतानि असृजन्त त्रयस्त्रिꣳशतञ्च तस्मात् त्र्यहं भार्यः प्रैव जायते तान् रुद्रा अब्रुवन् प्र यूय-मजनिढ्वं वयं प्र जायामहै इति तꣳ रुद्रेभ्यः प्रायच्छन्तꣳ षडहानि अविभरुस्तेन त्रीणि च शतानि असृजन्त त्रयस्त्रिꣳशतञ्च तस्मात् षडहं भार्यः प्रैव जायते तानादित्या अब्रुवन् प्र यूयमजनिढ्वं वयं ॥ ६ ॥

प्र जायामहै इति तमादित्येभ्यः प्रायच्छन्तं द्वादशाहानि अबिभरुस्तेन त्रीणि च शतानि असृजन्त त्रयस्त्रिꣳशतञ्च तस्मात् द्वादशाहं भार्यः प्रैव जायते(११) तेन वै ते सहस्रमसृजन्तोखाꣳ सहस्रतमीम्(१२) य एवमुख्यꣳ साहस्रं वेद प्र सहस्रं पशूनाप्नोति ॥ ७ ॥

अग्निवान्। पशुमानसानीति वै ऋग्निः। धविष्ये। मृशेत् प्रजापतिस्त्वा सादतु तया देवतयाऽङ्गिरस्वद्

ध्रुवा सीद। तेन। तानादित्या अब्रुवन् प्र यूयमजनिद्धं वयं। चत्वारिंशच्च ॥ २ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥०॥

---

दीक्षणीयेष्टिराद्यानुवाके चिद्दविरीरिता।

अथ द्वितीये चयन-तत्फले अभिधीयेते। तत्रादौ चयनं विधातुं प्रस्तौति,—"प्रजापतिः प्रजाः सृष्ट्वा प्रेणानु प्राविशत् ताभ्यः पुनः सम्भवितुं नाशक्नोत्सोऽब्रवीदृध्नवदित्स यो मेतः पुनः संचिनवदिति तं देवाः समचिन्वन् ततो वै ते आर्ध्नुवन् यत्समचिन्वन्तत् चित्यस्य चित्यत्वम्"(१) मिति। पुरा कदाचित् प्रजापतिः सर्वाः प्रजाः 'सृष्ट्वा' 'प्रेणा' प्रेम्णा प्रियातिशयेन तासु प्रजासु स्वय 'प्राविशत्', प्रविश्य च 'ताभ्यः' प्रजाभ्यः सकाशात् स्वकीयेन केनचिद्रूपेण 'पुनः' उद्भवितुं, 'नाशक्नोत्', अशक्तश्चैव स्थित इदम् 'अब्रवीत्'-'सः'-कश्चिन्माम् 'इतः' प्रजाभ्यः पुनः-सम्भवो यथा भवति तथा 'चिनवत्' चिनोति। 'स' पुरुषो 'ऋध्नवत् इति' ऋध्नोत्येवेति। तद्वाक्यं श्रुत्वा देवा अग्निरूपेण पुनः संभूतो यथा भवति, तथा 'तं' प्रजापतिरूपमग्निमिष्टकाभिः 'अचिन्वन्' तेन चयनेन ते देवा ऋद्धिं प्राप्ताः। यस्मादेवं सम्यक् अचिन्वन्; तस्माच्चयनविषयादग्नेश्चित्यमिति नाम सम्पन्नम्।

इदानीं विधत्ते,—"य एवं विद्वानग्निं चिनुते ऋध्नोत्येव"(२)—इति।

अथ प्रश्नोत्तराभ्यां क्रमेण फलविशेषान्निदर्शयिषुरादावेकं फलं दर्शयति,—"कस्मै कमग्निश्चीयते?—इत्याहुरग्निवान् असानीति वै अग्निश्चीयतेऽग्निवानेव भवति"(१) इति। कमित्यव्ययं, कामायेत्यस्मिन्नर्थे वर्त्तते। ब्रह्मवादिषु मध्ये केचिदेव पप्रच्छुः, 'कस्मै' कामाय अयम् 'अग्निश्चीयते?'—'इति' उक्ते एवमुत्तरम् 'आहुः',—'अग्निवानसानीति', —शास्त्रीयाग्नियुक्तोऽहं भवानि—इति कामयित्वा अयमग्निश्चीयते इति। ततोऽग्निं चित्वा उत्तरक्रतुयोग्यशास्त्रीयाग्नियुक्त एव भवति।

द्वितीयं फलं दर्शयति,—"कस्मै कमग्निश्चीयते?—इत्याहुर्देवा मा वेदन्निति वै अग्निश्चीयते विदुरेनं देवा"(२) इति। स्वर्गस्था 'देवाः' सर्वे 'मा' मां यजमानं 'वेदन्' अयं यजमानः सम्यगनुष्ठितवानित्येवं विदन्तु—इति कामयित्वा अग्नेश्चितत्वाद्देवा एनं विदन्त्येव।

तृतीयं फलं दर्शयति,—"कस्मै कमग्निश्चीयते?—इत्याहुर्गृही असानीति वै अग्निश्चीयते गृह्येव भवति"(४) इति। शास्त्रीयसर्व-कर्मानुष्ठानसमर्थो गृहस्थो भवानि इति कामयित्वा अग्निं चित्वान्-स्तथैव भवति।

चतुर्थं फलं दर्शयति,—"कस्मै कमग्निश्चीयते?—इत्याहुः पशु-मानसानीति वै अग्निश्चीयते पशुमानेव भवति"(५) इति। पशु-समृद्धेः कामितत्वात् पशुसमृद्धिर्भवत्येव।

पञ्चमं फलं दर्शयति —"कस्मै कमग्निश्चीयते?—इत्याहुः सप्तमा पुरुषा उपजीवानिति वै अग्निश्चीयते त्रय प्राञ्चस्त्रय प्रत्यञ्च आत्मा सप्तम एतावन्त एवैनममुष्मिन् लोके उपजीवन्ति"(७) इति 'प्राञ्चः' पूर्वभाविनः, पितृपितामहप्रपितामहास्त्रयः पुरुषाः। 'प्रत्यञ्चः'

पश्चाज्ञाविनः, पुत्रपौत्रप्रपौत्रास्तस्य पुरुषाः। मध्यवर्त्ती स्वयं मध्यमः। एते सर्वे पुरुषाः मामुपजीवन्तु,—अहमेवैतेषां रक्षको भविष्यामि इति कामयमानोऽग्निं चित्वा स्वर्गलोके तथैव रक्षको भवति।

यदुक्तं सूत्रकारेण,—'प्रजापतिस्त्वा सादयतु तया देवतयाङ्गिरस्वद् ध्रुवा सीदेत्युत्तरवेदिमभिमृश्य' इति। तदिदं विधातुं प्रस्तौति,—"प्रजापतिरग्निमचिकीषत* तं पृथिवी अब्रवीन्न मय्यग्निं चेष्यसेऽति मा धक्ष्यति, सा त्वातिदह्यमाना विधविष्ये। स पापीयान् भविष्यसीति सोऽब्रवीत् तथा वै अहं करिष्यामि यथा त्वा नाति धक्ष्यति इति स इमामभ्यमृशत प्रजापतिस्त्वा सादयतु तया देवतयाऽङ्गिरस्वद् ध्रुवा सीदेतीमामेवेष्टकां कृत्वोपाधत्त अनतिदाहाय"[(ङ)] इति। पुरा कदाचित्, प्रजापतिरग्निं, चेतुमिच्छां चकार, 'तं' चयनार्थिनं प्रजापतिं 'पृथिवी' एवम् 'अब्रवीत्',—हे प्रजापते, ममोपरि 'अग्निं न चेष्यसे', अग्निचयनं न करिष्यसि मा कुर्वित्यर्थः। कुतः? इति चेत्। तच्छृणु, ममोपरि चीयमानोऽग्निर्मामतिशयेन 'धक्ष्यति', तदानीमत्यन्तं दह्यमाना 'सा' अहम् इतस्ततः परिलुठन्ती ममोपरिस्थितं त्वामपि कम्पयिष्ये। ततः 'स' त्वं पापिष्ठो दरिद्रो† 'भविष्यसि-इति', तच्छ्रुत्वा प्रजापतिरिदमब्रवीत्,-'यथा' अयं चीयमानोऽग्निस्त्वां नातिशयेन 'धक्ष्यति', 'तथा' एव 'अहं करिष्यामि'—इत्युक्त्वा प्रजापतिर्वक्ष्यमाणेन मन्त्रेण 'इमां' भूमिमभितः स्पृष्टवान्।

मन्त्रस्य चायमर्थः,—हे भूमे, त्वामाद्यकारणभूताम्‡ आद्य-

* अचिकीर्षत इति का० क्री० पु० पाठो न सम्यक्।

† दरिद्रोऽयं इति का० क्री० पु० पाठो न सम्यक्।

‡ त्वा ममापि कारणभूताम्—इति का० क्री० पु० पाठः।

प्रजापतिः त्वां* 'सादयतु' स्थापयतु, अथ प्रजापतिरूपया 'तया' त्वया तत्र रचयित्र्या देवतया 'ध्रुवा' सती 'सीद' उपविश, अङ्गिरोभि. स्थापिता यथा ध्रुवा भवति तद्वदिति। अनेन समन्तक-स्पर्शनेन 'इमां' सर्वां भूमिम् 'इष्टकाम्' 'एव' 'कृत्वा' अग्निशरीरान्तः-पातित्वेन 'उपाधत्त', न ह्यग्निः स्वात्मानमतिदहति।

अथ विधत्ते,—"यत्प्रत्यग्निं चिन्वीत तदभिमृशेत् प्रजापतिस्त्वा सादयतु तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेति इमामेवेष्टकां कृत्वोप धत्तेऽनतिदाहाय"[९] इति। 'यत्' चयनस्थानं, 'प्रति' इष्टकाभिः 'अग्निं' चेतुमिच्छति, 'तत्' स्थानं 'प्रजापतिः'—इत्यादिमन्त्रेण 'अभिमृशेत्'। तेन अभितः-स्पर्शनेन 'इमां' भूमिं कृत्स्नामपि 'इष्टकां' 'कृत्वा' उपहितवान् भवति। तेन चातिदाहो न भवति।

अथोखाग्नेर्धारणं विधत्ते,—"प्रजापतिरकामयत प्रजायेयेति स एतमुख्यमपश्यत्तꣳ संवत्सरमबिभस्ततो वै स प्राजायत तस्मात् संवत्सरं भार्यः प्रैव जायते"[१०] इति। प्रजोत्पादनसाधनत्वेनो-ख्याग्निमेकस्मिन् संवत्सरे प्रतिदिनमुपस्थानकाले स्वगले शिक्यपाशं बध्वा धारयेत्। तत उत्पादको भवति।

अथ त्रीणि पक्षान्तराणि त्र्यह-षडह-द्वादशाह-धारणरूपाणि क्रमेण विधत्ते,—"तं वसवोऽब्रुवन् प्र त्वमजनिष्ठा वयं प्र जायामहै इति तं वसुभ्यः प्रायच्छत् तं त्रीण्यहान्यबिभरुस्तेन त्रीणि च शतानि असृजन्त त्रयस्त्रिꣳशतं च तस्मात् त्र्यहं भार्यः प्रैव जायते।

* त्वामिति पदं पुनरुक्तमिव प्रतिभाति।

तान् रुद्रा अब्रुवन् प्र यूयमजनिढ्व वयं प्र जायामहै इति तᳪं रुद्रेभ्यः प्रायच्छन् तं षडहानि अविभरुस्तेन त्रीणि च शतान्यसृजन्त त्रयस्त्रिᳪंशतं च तस्मात् षडहं भार्यः प्रैव जायते। तानादित्या अब्रुवन् प्र यूयमजनिढ्व वयं प्र जायामहै इति तमादित्येभ्यः प्रायच्छन् तं द्वादशाहानि अविभरुस्तेन त्रीणि च शतान्यसृजन्त त्रयस्त्रिᳪंशतं च तस्मात् द्वादशाहं भार्य. प्रैव जायते"(११) इति। 'तं' प्रजापतिं 'वसव' एवम् 'अब्रुवन्',- हे प्रजापते, त्वं प्रजा उत्पादितवानसि, तथा वयमप्युत्पादयाम इति, ततः प्रजापतिः 'तम्' उख्यमग्निं वसुभ्यः 'प्रायच्छत्'; ते च तमग्निं त्र्यहं धृत्वा त्रयस्त्रिंशदधिकं प्रजानां शतत्रयम् 'असृजन्त', तस्मात् प्रजोत्पत्तये त्र्यहं भार्य इत्येकः पक्षः। एवं रुद्रादित्यवाक्ययोरपि व्याख्येयं।

पक्षत्रयार्थवादान् समूह्याकारेण निगमयति,—"तेन वै ते सहस्रमसृजन्त उखाᳪं सहस्रतमीम्"(१२) इति। 'ते' वसुरुद्रादित्याः। उखा सहस्रतमी यथा भवति, तथा एकोनं प्रजासहस्रम् 'असृजन्त'।

वेदनं प्रशंसति,—"य एवमुख्यं साहस्रं वेद प्र सहस्रं पशून् आप्नोति"(१३) इति। अत्र चयनविधि-तद्ब्राह्मणं "सावित्राणि जुहोति" (५।१।१) इत्येतस्मात् प्राक् द्रष्टव्यं। भूमिस्पर्शनमन्त्रब्राह्मणे तु "अग्ने तव श्रवो वय" (५।६।६) इत्यनुवाके "शंयु बार्हस्पत्यं मेधो नोपानमत्" (४) इत्यतः प्राक् द्रष्टव्ये। उख्यधारणब्राह्मणं तु "न ह स्म वै पुराग्निः" (५।१।१०) इत्यनुवाके द्रष्टव्यम्॥

अथ मीमांसा,—

द्वितीयाध्यायस्य तृतीयपादे (१०अ०) चिन्तितम्,—

"अग्निं चिनुत इत्यत्र यागो वा संस्कृतिर्यजिः।
लिङ्गेन यागनामत्वाद्यजिना चानुवादतः॥
रूढ्या द्रव्यस्य नामैतदङ्गेराधानवच्चितिः।
संस्कृतिः संस्कृते वह्नावग्निष्टोमो विधीयते॥

'य एवं विद्वानग्निं चिनुते' इत्येवं विधाय श्रूयते,—'अथातोऽग्निमग्निष्टोमेनानुयजति तमुक्थ्येन तं षोडशिना तमतिरात्रेण' इति। अत्राग्निशब्दो यागवाची स्तोत्रशस्त्रादेः क्रतुलिङ्गस्य श्रूयमाणत्वात्। तच्च लिङ्गमेवं श्रूयते,—'अग्नेः स्तोत्रमग्नेः शस्त्रम्' इति षडुपसदोऽग्नेश्चित्यस्य भवन्ति' इति। यदि लिङ्गं ज्ञापकार्येवं, तर्हि यजिना तदनुवादः प्रापकोऽस्तु, 'अग्निमग्निष्टोमेनानुयजति' इत्यस्मिन् वाक्ये 'अग्निं यजति' इति यजिसामानाधिकरण्यात्, 'उपांशु याजयति' इतिवत् यागनामत्व। अथोच्येत,—'अनुशब्दस्य अग्निशब्देनान्वयाद् यज्यन्वयोऽग्निष्टोमस्येति'। तथाप्यग्नेः पुरोयजने सति अग्निष्टोमस्यानुयजनं सम्भवति, 'देवदत्तमनुगच्छति यज्ञदत्तः' इत्यत्र देवदत्ते पुरोगमनदर्शनात्। तस्माद् 'अग्निं चिनुते' इत्यत्राग्निनामको याग आख्यातेन विधीयते। चिनोतिस्तु 'इष्टकाभिरग्निं चिनुते' इतिवाक्यप्राप्तस्य चयनस्य सोमयागविकृतित्वप्राप्तस्य यद्दमसमुदायस्यैवानुवादः।

इति प्राप्ते ब्रूमः,—अग्निशब्दो रूढ्या वह्निद्रव्यमाचष्टे, रूढिश्च क्लृप्ततया लिङ्गादिकल्प्याद् यागवाचित्वात् बलीयसी,—इति न यागनामत्वं। न च, अत्र यागरूपमस्ति, द्रव्यदेवतयोरसिद्धेः, अतः

'अग्निमादधीत' इत्युक्ताधानवद् 'अग्निं चिनुते' इत्युक्तं चयनम् अग्निद्रव्य-संस्कारः। न च, संस्कृतस्य विनियोगाभावः, 'अग्निमग्निष्टोमेन यजते' इत्यादिवाक्यैरग्निष्टोमादौ विनियोगात्। तस्मात् संस्कारविधिः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः॥०॥

---

यजु॑षा॒ वै ए॒षा क्रि॒यते॒ यजु॑षा पच्यते॒ यजु॑षा॒ वि मु॑च्यते॒ यदु॒खा सा वै ए॒षैतर्हि॑ या॒तया॑म्नी॒ सा न पुनः॑ प्र॒युज्येत्या॑हु॒रग्ने॑ यु॒क्ष्वा हि(१) ये तव॑ यु॒क्ष्वा हि दे॒वहू॑तमा॒ँ इत्यु॒खायां॑ जुहोति॒ तेनै॒वैना॒न् पुनः॒ प्र यु॑ङ्क्ते॒ तेनाया॑तयाम्नी॒ यो वै अ॒ग्निं योगे॒ आग॑ते यु॒नक्ति॑ यु॒ङ्क्ते यु॑ञ्जा॒नेष्व॒ग्ने ॥ १ ॥

यु॒क्ष्वा हि ये तव॑ यु॒क्ष्वा हि दे॒वहू॑तमा॒ँ इत्या॑है॒ष वै अ॒ग्नेर्योग॒स्तेनै॒वैनं॑ युनक्ति॒ यु॒ङ्क्ते यु॑ञ्जा॒नेषु(१) ब्रह्मवा॒दिनो॑ वदन्ति॒ न्य॑ङ्ङ॒ग्निश्चे॒तव्या॒ ३। उ॑त्ता॒ना३ इति॒ वय॑सां॒ वै ए॒ष प्र॑ति॒मया॑ चीयते॒ यद॒ग्निर्यद् न्य॑ञ्चं चिनु॒यात् पृ॒ष्ठित॑ ए॒नमाहु॑तय ऋच्छेयु॒र्यदु॑त्ता॒नं न पति॑तुꣳ शक्नुया॒द् अ॒सु॒व॒र्ग्यो॑ऽस्य स्यात् प्रा॒चीन॑मुत्ता॒नं ॥ २ ॥

पु॒रु॒ष॒शी॒र्षमु॑प॒ दधाति॒ मु॑ख॒त ए॒वैन॒माहु॑तय ऋच्छन्ति॒ नोत्ता॒नं चि॑नुते सुव॒र्ग्यो॑ऽस्य भवति(१) सौ॒र्या जु॑होति॒

चक्षुरेवास्मिन् प्रति दधाति(४) द्विर्जुहोति द्वे हि चक्षुषी(५) समान्या जुहोति समानꣳ हि चक्षुः समृद्ध्यै(६) देवासुराः संयत्ता आसन् ते वामं वसु सं न्यदधत तद्देवा वामभृता अवृञ्जत तद्वामभृतो वामभृत्त्वं यद्वामभृतम्, उपदधाति वाममेव तया वसु यजमानो भ्रातृव्यस्य वृङ्क्ते(७) हिरण्यमूर्ध्नी भवति ज्योतिर्वै हिरण्यं ज्योतिर्वामं ज्योतिषैवास्य ज्योतिर्वामं वृङ्क्ते(८) द्वियजुर्भवति प्रतिष्ठित्यै(९) ॥ ३ ॥

युञ्जानेष्वग्नें। प्राचीनमुत्तानं। वामभृतम्। चतुर्विꣳशतिश्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥०॥



चयनस्य विधिस्तस्य फलमुख्यस्य धारणम्।
अनुवाके द्वितीये हि तदेतच्चयमीरितम् ॥

अथ तृतीयानुवाके उख्यहोमादिकमभिधीयते। तमेतं होमं विधत्ते,—"यजुषा वै एषा क्रियते यजुषा पच्यते यजुषा वि मुच्यते यद् उखा सा वै एतर्हि यातयाम्नी सा न पुनः प्रयुज्येत्याहुरग्ने युच्वा हि ये तव युच्वा हि देवहूतमाꣳ इत्युखायां जुहोति तेनैवैनान्

पुनः स युङ्क्ते तेनायातयाम्नी"(१) इति। 'एषा' उखा "वसवस्त्वा छृन्दन्तु"*—(४।१।६ २) इत्यादिना 'यजुषा' 'क्रियते'; "धिषणास्त्वा" (४।१।६।२) इत्यादिना 'यजुषा' सेयमुखा 'पच्यते'; "मातेव पुत्रम्" (४।२।५।२) इत्यादिना 'यजुषा' शिक्यात् 'मुच्यते', सेयम् 'उखा' बहुधा यजुर्भिरनुष्ठिता, 'सा' इयमुखा एतस्मिन् काले गतसारा सम्पन्ना, बहुधा प्रयुक्तत्वात्; अतः 'सा' गतसारा उखा 'पुन.' प्रयोक्तुं न योग्येत्येवमभिज्ञा 'आहुः'; अतः पुनः ससारत्वसम्पादनाय "अग्ने युक्ष्वा हि"(५)—इति मन्त्रद्वयेनोखायां जुहुयात्; 'तेन' होमेनोखां पुनः-प्रयोगयोग्यां करोति, होमेनैव ससारत्वस्य-सम्पादितत्वात्। "अग्ने युक्ष्वा हि"-इत्यादिके ऋचौ तु "ध्रुवासि"(४।१।८) इत्यनुवाके समाम्नाते व्याख्याते च ॥

मन्त्रगतस्य 'युक्ष्व'—इतिशब्दस्य तात्पर्यं दर्शयति,—"यो वै अग्निं योगे आगते युनक्ति युङ्क्ते युञ्जानेषु"(१) इति। 'यो' यजमानो योगकाले समागते सति अप्रमत्तः 'अग्निं' 'युनक्ति', स यजमानोऽग्नियोगानुष्ठातृषु यजमानेषु मध्ये स्वयमपि अग्नियोगानुष्ठातेति-व्यपदेशार्हो भवति। स च योगो मन्त्रे युक्ष्व-पदोच्चारणेन सिध्यति, हे अग्ने, त्वं युक्तो भवेत्येवं तस्य पदस्य वाच्यार्थत्वात्। अतस्तदुच्चारणेन एनमग्निं 'युनक्ति', 'युञ्जानेषु' यजमानेषु च परिगण्यते। एतच† होमब्राह्मणे "एषां वै एतमोकानाम्" (५।२।८) इत्यनुवाके "पूर्णां तस्योप दध्यादनुपदस्यदेवान्नम्"(१)—इति वाक्यादूर्ध्वं द्रष्टव्यम् ॥

---

* एवमेव सर्व्वत्र पाठः। 'कृन्दन्तु' इति पाठो भवितुं युक्तः।
† तच इति का० को० पु० पाठः।

अथ पुरुषशीर्षोपधानं विधत्ते,—"ब्रह्मवादिनो वदन्ति न्यङ्ग्निश्चेतव्या३ उत्ताना३ इति वयसां वै एष प्रतिमया चीयते यदग्निर्यत् न्यञ्चं चिनुयात् पृष्ठित एनमाहुतय ऋच्छेयुर्यदुत्तानं न पतितुं शक्नुयादसुवर्ग्योऽस्य स्यात् प्राचीनमुत्तानं पुरुषशीर्षमुप दधाति मुखत एवैनमाहुतय ऋच्छन्ति नोत्तानं चिनुते सुवर्ग्योऽस्य भवति"(१) इति। 'न्यङ्' अधोमुखः, 'उत्तानः' ऊर्द्ध्वमुखो योऽयम् 'अग्निः', स एष पक्षिणामाकारेण 'चीयते', तथा सति अधोमुखत्वे न चितस्याग्नेः पृष्ठभागे सर्वा आहुतय एनमग्निमाप्नुयुः, ऊर्द्ध्वमुखत्वे स पक्षाभ्यामाकाशे गन्तुं न शक्नुयात्, गमनाभावे च स्वर्गाय हिता न भवति। अत्र दोषद्वयपरिहाराय 'पुरुषशीर्षम्' उप-दध्यात्। तच्च शिरः प्राचीनं, केशभागं* प्राच्यान्दिशि, छिन्नगलभागं प्रतीच्यान्दिशि कृत्वा ऊर्ध्वमुखं स्थापयेत्। एवं सति तत्र हूयमाना आहुतयो मुखप्रदेशे एवाग्निं प्राप्नुवन्ति, न तु पृष्ठतः; पद्मा-कारस्योर्ध्वमुखत्वाभावेन आकाशे गन्तुं शक्यत्वात् स्वर्गाय हिता एव भवन्ति। अस्य चोपधानमन्त्रस्तु "आदित्यं गर्भम्" (४।२।१०) इत्यादिके, उपधानविधिस्तु "मध्ये पुरुषशीर्षमुप दधाति"(२)-इति, स च, "एषां वै एतल्लोकानाम्" (५ २।८) इत्यनुवाके समाम्नातः। अत्र तु उक्तं विधिमनूद्य प्राचीनोत्ताने च गुणे विधीयेते॥

यदुक्तं सूत्रकारेण 'चित्रं देवानामित्यर्द्धर्चाभ्यामभिकटयो हुत्वा' —इति। तदिदं विधत्ते,—"सौर्या जुहोति चक्षुरेवास्मिन् प्रति दधाति"(३) इति। सौरी "चित्रं देवानाम्"(१) इत्यादिका, सा

* केशभागः एवं छिन्नगलभाग इति च प्रथमान्तपाठो न युक्तः।

च "उदुत्यञ्जातवेदसम्" (१।४।४३)—इत्यनुवाके समाम्नातत्वात् तत्रैव व्याख्याता, सूर्यस्य चक्षुरभिमानीदेवत्वात्* तन्मन्त्रहोमेनास्मिन् पुरुषशीर्षे चक्षुरिन्द्रियं सम्पादयति। चक्षुरभिमानित्वञ्च ऐतरेयिणः समामनन्ति,—'आदित्यश्चक्षुर्भूत्वा अक्षीणि प्राविशद्'—इति॥

अर्धर्चं इयं† विभज्य विनियुङ्क्ते, "द्विर्जुहोति द्वे हि चक्षुषी"(६) इति। इन्द्रियस्यैकत्वेऽपि गोलकभेदात् द्वित्वम्॥

ऋग्भेदशङ्कां वारयितुमेकत्वं विधत्ते,—"समान्या जुहोति समानं हि चक्षुः समृद्ध्यै(१) इति। गोलकभेदेऽपि इन्द्रियस्यैकत्वादृगेकत्वम्। इदं होमब्राह्मणमपि पुरुषशीर्षविधिसमीपे द्रष्टव्यम्॥

अथ वामभृताख्यायां‡ इष्टकाया उपधानं विधत्ते,—"देवासुराः संयत्ता आसन् ते वामं वसु सं न्यदधत तद्देवा वामभृता ऽवृञ्जत तद्वामभृतो वामभामभृत्त्वं यद्वामभृतमुपदधाति वाममेव तया वसु यजमानो भ्रातृव्यस्य वृङ्क्ते"(७) इति। यदा देवाश्चासुराश्च युद्धायोद्यताः, तदानीं तदुभयेऽपि वननीयं 'वसु' स्वं धनं एकैकत्र मूलत्वेन § सम्यक् स्थापितवन्तः। तत्रासुरसम्बन्धि यद्धनं, तदेतद्देवा अनया वामभृता स्वेष्टकया विनाशितवन्तः, अतो वामं हरन्ति नाशयन्तीति व्युत्पत्त्या हकारस्थाने भकारादेशे सति वामभृदिति नाम सम्पन्नं। अतो यजमानोऽप्येतदुपधानेन भ्रातृव्यस्य धनं विनाशयति॥

* एवमेव सर्व्वत्र पाठः। चक्षुरभिमानिदेवत्वादिति पाठो भवितुं युक्तः।
† एवमेव सर्व्वत्र पाठः। 'अर्द्धर्चमिमं' इत्याकारकः कश्चित्पाठो भवितुं युक्तः।
‡ वामभृदाख्याया इति पाठो भवितुं युक्तः।
§ गूढत्वेन इति आदर्शपुस्तकपाठः।

यदुक्तं सूत्रकारेण,—'प्रत्यङ्गिष्टकायां हिरण्यशकलावध्यूह्य यास्ते अग्ने सूर्ये रुच इति द्वाभ्यां वामभृतम्'— इति। तत्र हिरण्यशकलौ विधत्ते,—हिरण्यमूर्ध्नी भवति ज्योतिर्वै हिरण्यं ज्योतिर्वामं ज्योतिरेव अस्य ज्योतिर्वामं वृङ्क्ते"(८) इति। हिरण्यशकलद्वयं मूर्ध्नि उपरिभागे यस्या इष्टकायाः सा हिरण्यमूर्ध्नी, हिरण्यं प्रकाशरूपत्वात् ज्योतिः, वाममपि मणिमुक्तादिकं तथा ज्योतिः॥

"यास्ते अग्ने सूर्ये रुचः" इत्यादिमन्त्रद्वय तत्र विनियुङ्क्ते,— द्वियजुर्भवति प्रतिष्ठित्यै(९) इति। द्वे यजुषी यस्या वामभृतः सा द्वियजुः। इदञ्च वामभृद्ब्राह्मणं "स्वयमातृण्णामुप दधाति" (५।२।८) इत्यनुवाके दूर्वेष्टकाब्राह्मणादूर्ध्वं "देवलक्ष्यं वै त्र्यालिखिता"(३) इत्यतः पूर्वं द्रष्टव्यम्॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥०॥



आपो॒ वरु॑णस्य॒ पत्न॑य आस॒न् ता अ॒ग्निर॒भ्य॑ध्याय॒त् ताः सम॑भव॒त् तस्य॒ रेतः॒ परा॑पत॒त् तदि॒यम॑भव॒द् यद्द्वि॒तीय॒ं परा॑पत॒त् तद॒सावभ॑वदि॒यं वै वि॒राड॒सौ स्व॒राड् यद् वि॒राजा॑वुप॒दधा॑ती॒मे ए॒वोप॑ धत्ते(१) यद्वै अ॒सौ रेतः॑ सि॒ञ्चति॒ तद॒स्यां प्रति॑ तिष्ठति॒ तत् प्र जा॑यते॒ ता ओष॑धयः ॥ १ ॥

वीरुधो भवन्ति ता अग्निरत्ति[7] यः एवं वेद प्रैव जायतेऽन्नादो भवति[8] यो रेतस्वी स्यात् प्रथमायां तस्य चित्यामुभे उप दध्यादिमे एवास्मै समीची रेतः सिञ्चतो यः सिक्तरेता स्यात् प्रथमायां तस्य चित्यामन्यामुप दध्यादुत्तमायामन्याꣳ रेत एवास्य सिक्तमाभ्यामुभयतः परि गृह्णाति[9] संवत्सरं न कं ॥ २ ॥

चन प्रत्यवरोहेत् न हीमे कं चन प्रत्यवरोहतस्तदेनयोर्व्रतं[6] यो वै अपशीर्षाणमग्निं चिनुतेऽपशीर्षाऽमुष्मिन् लोके भवति यः सशीर्षाणं चिनुते सशीर्षाऽमुष्मिंल्लोके भवति[7] चित्तिं जुहोमि मनसा घृतेन यथा देवा इहा गमन् वीतिहोत्रा ऋतावृधः समुद्रस्य वयुनस्य पत्मन् जुहोमि विश्वकर्मणे विश्वा अहाऽमर्त्यꣳ हविः[8] इति स्वयमातृण्णामुपधाय जुहोति ॥ ३ ॥

एतद्वै अग्नेः शिरः सशीर्षाणमेवाग्निं चिनुते[9] सशीर्षाऽमुष्मिन् लोके भवति यः एवं वेद[10] सुवर्गाय वै एष लोकाय चीयते यदग्निस्तस्य यदयथापूर्वं क्रियते सुवर्ग्यमस्य तत् सुवर्ग्योऽग्निः[11] चितिमुपधायाभि मृशेत्[12]चित्तिमचित्तिं चिनवद् वि विद्वान् पृष्ठेव वीता वृजिना च मर्तान् राये च नः स्वपत्याय, देव दितिं

च रास्व अदितिमुरुष्येति[१३] यथापूर्वमेवैनामुप धत्ते प्राञ्चमेनं चिनुते सुवर्ग्योऽस्य भवति[१४] ॥ ४ ॥

आपयः । कं । जुहोति । स्वपत्याय । अष्टादश च ॥४॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥०॥

---

उखाहुतिः पुंशिरश्च वामभूच्च तृतीयके ।

अथ चतुर्थे रेतःसिगाद्या उच्यन्ते, यदुक्तं सूत्रकारेण,—'विराट् ज्योतिरिति तिस्रो रेतःसिचस्तासां द्वे प्रथमायां चित्यां यून उप दध्यात् सर्वा मध्यमायां विवयस एकां प्रथमायामेकामुत्तमायां स्थविरस' इति। तत्र द्वयोरुपधानं विधत्ते,—"आपो वरुणस्य पत्नयः आसन् ताः अग्निरभ्यध्यायन् ताः समभवत् तस्य रेतः परापतत् तदियमभवद्-यद्द्वितीयं परापतत् तदसावभवत् इयं वै विराट् असौ स्वराट् यद्विराजौ उपदधाति इमे एवोप धत्ते"[१] इति। वरुणपत्न्यो या अप्-देवताः, 'ताः' कामुकः 'अग्निरभ्यध्यायत्', ध्यात्वा 'समभवत्', तत्र मानसेन सम्भावनन स्खलितं रेतोऽधः अपतत्, 'तत्' च रेत 'इय' पृथिवी 'अभवत्', द्वितीयवारं पतितं रेतो 'असौ' द्युलोकः 'अभवत्'। तत्र येयं पृथिवी सा विविधा प्राणाधारत्वेन राजते इति 'विराट्' इत्युच्यते, या त्वसौ द्यौः, 'सा' स्वातन्त्र्येण राजते इति 'स्वराट्'। एवं सति अत्र द्वे विराजावुप

दध्यात्, विराटशब्दोपेताभ्यां मन्त्राभ्यामुपधेये विराजौ। मन्त्रद्वयं च "विराड् ज्योतिरधारयत् सम्राड् ज्योतिरधारयद्" (४।२।६।४) इत्यत्राम्नातं व्याख्यातं च। अनेन विराड्द्वयोपधानेन इमे द्वे द्युभूमी एवायमुपधत्ते ॥

तदेतद्विराडुपधानं प्रकारान्तरेण प्रशंसति,—"असौ असौ रेत. सिञ्चति तदस्यां प्रति तिष्ठति तत् प्र जायते ता ओषधयः वीरुधो भवन्ति ता अग्निरत्ति"(१) इति। 'असौ' द्यौः यदेव 'रेतो' वृष्टिरूपं 'सिञ्चति', 'तद्' 'अस्यां' भूमौ प्रतिष्ठितं सत् नानाकारेण उत्पद्यते, 'ताः' च उत्पन्ना 'ओषधयो' व्रीहियवाद्याः,'वीरुधो' नागवल्ल्यादयश्च भवन्ति। 'ता.' च जाठराग्निं 'अत्ति'। एवंविधे द्युभूमिरूपे* विराजाविति।

तयोः प्रशस्तावेदनं प्रशंसति,—"य एवं वेद प्रैव जायतेऽन्नादो भवति"(२) इति ॥

अथाधिकारिभेदेन प्रकारान्तरेण विशेषं विधत्ते,—"यो रेतस्वी स्यात् प्रथमायां तस्य चित्यामुभे उप दध्यादिमे एवास्मै समीची रेत सिञ्चतो यः सिक्तरेताः स्यात् प्रथमायां तस्य चित्यामन्यामुप दध्यादुत्तमायामन्याम् रेत एवास्य सिक्तमाभ्यामुभयत. परि गृह्णाति,(४) इति। 'रेतस्वी' युवा, तस्य 'प्रथमायाम् एव चिता-वुभयोरुपधाने सति ते 'उभे' अपि भूमिरूपे अनुकूले भूत्वा यजमानार्थं 'रेत. सिञ्चत.', 'सिक्तरेता.' स्थविरः, तस्य प्रथमोत्तमचित्यो' क्रमेण द्वयोरुपधाने सति स्वकीयं रेत 'आभ्याम्'

---

* एवं विधा द्युभूमिरूपे विराजौ इति पाठो न समञ्जस।

इष्टकाभ्याम् 'उभयतः' परिगृहीतं भवति। एतद् विराड्ब्राह्मणं पूर्वोक्त-(५।५।३अ०)-वामभृद्ब्राह्मणादनन्तरमेव द्रष्टव्यम्।

अथाग्निचितः कञ्चिन्नियमं विधत्ते,—"संवत्सरं न कं चन प्रत्यवरोहेत् न हीमे कं चन प्रत्यवरोहतस्तदेनयोर्व्रतम्"[५] इति। अग्निञ्चित्वा संवत्सरपूर्त्तिपर्यन्तं वयोवृद्धेषु विद्यावृद्धेषु च समागतेष्वपि 'कम्' अपि पुरुषं प्रति अभ्युत्थानं न कुर्यात्, 'इमे' भूमिरूपे विराजौ इष्टके 'कम्' अप्युत्कृष्टं पुरुषं प्रति नाभ्युत्थानं कुरुतः, 'तद्' अनभ्युत्थानम् 'एनयोः' इष्टकयोः 'व्रतं', अतस्तयोरुपधातापि नाभ्युत्तिष्ठति। यद्यप्ययं नियमः कृत्स्नब्राह्मणान्ते वक्तव्यः, तथापि विराड्द्वारेण स्तोतुमिहाम्नातः।

अथ कञ्चिद्धोमं विधातुं प्रस्तौति,—"यो वै अपशीर्षाणमग्निं चिनुतेऽपशीर्षाऽमुष्मिँल्लोके भवति, यः सशीर्षाणं चिनुते सशीर्षा अमुष्मिँल्लोके भवति"[६] इति। अग्नेः शिरोराहित्यसाहित्याभ्यां यजमानोऽपि स्वर्गे तथा भवति।

विधित्सितस्य होमस्य मन्त्रमुत्पादयति,—"चित्तिं जुहोमि मनसा घृतेन यथा देवा इहागमन्वीतिहोत्रा ऋतावृधः समुद्रस्य वयुनस्य पत्मन् जुहोमि विश्वकर्मणे विश्वा अहा अमर्त्यꣳ हविः"[७] इति। 'यथा देवा इहागमन्',—येन प्रकारेण हविर्भाजो देवा अस्मिन् कर्मणि आगच्छन्ति, तथा अहं 'मनसा' मनोगतया भक्त्या, 'घृतेन' द्रव्येण, 'चित्तिं जुहोमि' देवानां चित्तमुपाददे, प्रसादयामि इत्यर्थः। कीदृशा देवाः?-'वीतिहोत्राः' कमनीयहविषः, 'ऋतावृधः' यज्ञस्य वर्धयितारः। तत ऊर्द्ध्वं 'विश्वकर्मणे' प्रजापतये, 'विश्वा

अस्य' सर्वेष्वपद सु,'अमर्त्य' विनाशरहितं स्वाहुतं 'हविः' 'जुहोमि'। होमस्य स्थानमुच्यते,—'वयुनस्य' कमनीयस्य, 'समुद्रस्य' समुद्रवद् उत्कृष्टस्य, स्वयमातृणाखरूपस्य 'पत्मन्' पतने आहुतियोग्ये उपरिभागे इत्यर्थः।

उत्पादितं मन्त्रं विनियुङ्क्ते,—"इति स्वयमातृणामुपधाय जुहोत्येतद्वै अग्नेः शिरः सशीर्षाणमेवाग्निं चिनुते"(८) इति। चित्तिं जुहोमीति यो मन्त्र उत्पादितः, 'इति' अनेन मन्त्रेण स्वयमातृणोपधानादनन्तरं जुहुयात्। एतदेवाहुतिस्वरूपं अग्नेः शिरःस्थानीयम्। अतः शिरःसहितमेवाग्निं चितवान् भवति।

वेदनं प्रशंसति,—"सशीर्षाऽमुष्मिँलोके भवति य एवं वेद"(९)—इति। तदेतद्धोमब्राह्मणं "स्वयमातृणाम्" इत्यनुवाके (५।३।८अ०) द्रष्टव्यम्।

अथाभिमर्शनं विधातुं प्रस्तौति,—"सुवर्गाय वै एष लोकाय चीयते यदग्निस्तस्य यदयथापूर्वं क्रियतेऽसुवर्ग्यमस्य तत् सुवर्ग्योऽग्निः"(१०)—इति। योऽयमग्निरस्ति, स 'एष' स्वर्गलोकार्थं चीयते, अतः 'तस्य' अग्नेः 'यद्' अङ्गं 'अयथापूर्वं', क्रमोल्लङ्घनेन 'क्रियते', 'तद्' अङ्गम् 'असुवर्ग्यं' स्वर्गाय हित न भवति। 'अग्निः' सर्गाय हितः; तस्मात् क्रममनुसृत्यैव तदङ्गमनुष्ठेयम्।

अथ यदर्थं प्रस्तावः कृतः तद्विधत्ते,—"चितिमुपधायाभिमृशेत्"(११)—इति। उपधानादूर्ध्वं तामुपहितां चितिं हस्तेन स्पृशेत्।

तच मन्त्रमुत्पादयति,—चित्तिमचित्तिं चिनवद्वि विद्वान् पृष्ठेव वीता वृजिना च मर्तान् राये च नः स्वपत्याय देव दितिं च

रास्व अदितिमुरुष्येति"(११)—इति। अयमग्निः 'चित्तिमचित्तिम्, अस्मदीयां मानसीं भक्तिमभक्तिं च 'वि'-'चिनवत्', विविच्य निश्चिनोतु। कीदृशोऽग्निः? 'पृष्ठेव वीता वृजिना च' 'विद्वान्'—पृष्ठोपलक्षितानि* सर्व्वावयवसदृशानि कर्म्माङ्गानि, 'वीता' कान्तानि, 'वृजिना च' स्खलितानि च,—इत्युभयं जानानः। तथा 'मर्त्तान्', मनुष्यरूपान् मङ्गलान् अस्मानपि 'विद्वान्'। हे 'देव', 'नः' अस्माकं 'राये' धनाय 'स्वपत्याय' च शोभनपुत्रार्थमपि 'दितिं' च 'रास्व' यद्देयं† तदपि देहि। 'अदितिमुरुष्य',—यदपि इतः परं न देयं, किन्तु पूर्व्वमेव दत्तं, तदपि मङ्गलं कर्तुमिच्छ।

अनेन मन्त्रेणानुष्ठितमभिमर्शनं प्रशंसति,—"यथापूर्व्वमेवैनामुप धत्ते प्राञ्चमेनं चिनुते सुवर्ग्योऽस्य भवति"(१२)—इति। अत्र भक्तयभक्तयोः स्खलनास्खलनयोर्विवेककारिणा वह्निना वैकल्यस्य समाहितत्वात् क्रममनुल्लङ्घ्यैव 'एनां' चितिम् 'उप'-'धत्ते', अग्निञ्च प्राङ्मुखं चिनुते; स चाग्निः 'अस्य' यजमानस्य स्वर्गाय हितो भवति। तदिदं ब्राह्मणं 'पशुर्वा एष यदग्निः'—इत्यनुवाके (५।२।१०) प्रथमचितिसमाप्तौ द्रष्टव्यम्॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः॥०॥

---

* पृष्ठोपलक्षित इति सर्व्वत्र पाठो न समीचीनः।

† यद्देयमिति का० क्री० पु० पाठो न सम्यगिव प्रतिभाति।

विश्वकर्मा दिशाम्पतिः स नः पशून् पातु सोऽस्मान् पातु तस्मै नमः प्रजापतीरुद्रो वरुणोऽग्निर्दिशाम्पतिः स नः पशून् पातु सोऽस्मान् पातु तस्मै नमः[१] एता वै देवता एतेषां पशूनामधिपतयस्ताभ्यो वै एष आ वृश्च्यते यः पशुशीर्षाण्युपदधाति हिरण्येष्टका उप दधाति एताभ्य एव देवताभ्यो नमस्करोति[२] ब्रह्मवादिनः ॥१॥

वदन्त्यग्नौ ग्राम्यान् पशून् प्र दधाति शुचारण्यानर्पयति किं तत उच्छिंष्यतीति यद्धिरण्येष्टका उपदधाति अमृतं वै हिरण्यममृतेनैव ग्राम्येभ्यः पशुभ्यो भेषजं करोति नैनान् हिनस्ति[३] प्राणो वै प्रथमा स्वयमातृण्णा व्यानो द्वितीयापानस्तृतीया अनु प्राण्यात् प्रथमाꣳ स्वयमातृण्णामुपधाय प्राणेनैव प्राणꣳ समर्धयति व्यन्यात् ॥ २ ॥

द्वितीयामुपधाय व्यानेनैव व्यानꣳ समर्धयत्यपान्यात् तृतीयामुपधायापानेनैवापानꣳ समर्धयत्यथो प्राणैरेवैनꣳ समिन्धे[४] भूर्भुवः सुवरिति स्वयमातृण्णा उप दधातीमे वै लोका स्वयमातृण्णा एताभिः खलु वै व्याहृतीभिः प्रजापतिः प्राजायत यदेताभिर्व्याहृतीभिः स्वयमातृण्णा उपदधातीमानेव लोकानुपधायैषु ॥ ३ ॥

लोकेष्वधि प्रजायते[१] प्राणाय व्यानायापानाय वाचे त्वा चक्षुषे त्वा तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद[१] अग्निना वै देवाः सुवर्गं लोकमजिगाꣳसन् तेन पतितुं नाशक्नुवन् ते एताश्चतस्रः स्वयमातृणा अपश्यन् ता दिक्षूपादधत तेन सर्वतश्चक्षुषा सुवर्गं लोकमायन् तच्चतस्रः स्वयमातृणा दिक्षूपदधाति सर्वतश्चक्षुषैव तदग्निना यजमानः, सुवर्गं लोकमेति[७] ॥ ४ ॥

ब्रह्मवादिनः। व्यन्यात्। एषु। यजमानः। चीर्णि च ॥ ५ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ * ॥



रेत सिग्घोमसस्वर्गाश्चतुर्थे समुदीरिता।

अथ पञ्चमे हिरण्येष्टकाद्या उच्यन्ते,—यदुक्तं सूत्रकारेण, 'विश्वकर्मा दिशां पति इति पञ्च हिरण्येष्टका' प्रतिदिशमेकां मध्ये' इति। तत्र मन्त्रानुत्पादयति,—"विश्वकर्मा दिशाम्पति. स न पशून् पातु सोऽस्मान् पातु तस्मै नम प्रजापतीरुद्रो वरुणोऽग्नि-र्दिशाम्पति स न पशून् पातु सोऽस्मान् पातु तस्मै नम"[१]—इति।

विश्वकर्मा दिशाम्पतिः स नः पशून् पातु सोऽस्मान् पातु तस्मै नमः प्रजापतीरुद्रो वरुणोऽग्निर्दिशाम्पतिः स नः पशून् पातु सोऽस्मान् पातु तस्मै नमः(१) एता वै देवता एतेषां पशूनामधिपतयस्ताभ्यो वै एष आ वृश्च्यते यः पशुशीर्षाण्युपदधाति हिरण्येष्टका उप दधाति एताभ्य एव देवताभ्यो नमस्करोति(२) ब्रह्मवादिनः ॥१॥

वदन्त्यग्नौ ग्राम्यान् पशून् प्र दधाति शुचारण्यान-र्पयति किं तत उच्छिंष्यतीति यद्धिरण्येष्टका उप-दधाति अमृतं वै हिरण्यममृतेनैव ग्राम्येभ्यः पशुभ्यो भेषजं करोति नैनान् हिनस्ति(३) प्राणो वै प्रथमा स्वयमातृण्णा व्यानो द्वितीयापानस्तृतीया अनु प्राण्यात् प्रथमां स्वयमातृण्णामुपधाय प्राणेनैव प्राणं सम-र्द्धयति व्यन्यात् ॥ २ ॥

द्वितीयामुपधाय व्यानेनैव व्यानं समर्द्धयत्यपा-न्यात् तृतीयामुपधायापानेनैवापानं समर्द्धयत्यथो प्राणैरेवैनं समिन्धे(४) भूर्भुवः सुवरिति स्वयमातृण्णा उप दधातीमे वै लोका स्वयमातृण्णा एताभिः खलु वै व्याहृतीभिः प्रजापतिः प्राजायत यदेताभिर्व्याहृतीभिः स्वयमातृण्णा उपदधातीमानेव लोकानुपधायेषु ॥ ३ ॥

लोकेऽध्यधि प्रजायते(५) प्राणाय व्यानायापानाय वाचे त्वा चक्षुषे त्वा तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद(६) अग्निना वै देवाः सुवर्गं लोकमजिगाꣳसन् तेन पतितुं नाशक्नुवन् ते एताश्चतस्रः स्वयमातृणा अपश्यन् ता दिक्षूपादधत तेन सर्वतश्चक्षुषा सुवर्गं लोकमायन् यच्चतस्रः स्वयमातृणा दिक्षूपदधाति सर्वतश्चक्षुषैव तदग्निना यजमानः, सुवर्गं लोकमेति(७) ॥ ४ ॥

ब्रह्मवादिनः। व्यन्यात्। एषु। यजमानः। त्रीणि च ॥ ५ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ * ॥

---

रेतःसिग्घोमसंस्पर्शाश्चतुर्थे समुदीरिताः।

अथ पञ्चमे हिरण्येष्टकाद्या उच्यन्ते,—यदुक्तं सूत्रकारेण, 'विश्वकर्मा [illegible]शां पतिः इति पञ्च हिरण्येष्टकाः [illegible]कां मध्ये' इति। तत्र मन्त्रानुत्[illegible]—"वि[illegible]तः स नः पशून् पातु सोऽस्मान् पातु तस्मै नमः प्रजापतीरुद्रो [illegible]श्वकर्मा दिशाम्प[illegible]रुणोऽग्नि-दिशाम्पतिः स नः पशून् पातु सोऽस्मान् पातु तस्मै [illegible]"(१)—इति।

योऽयं 'विश्वकर्मा' 'दिशां' पालकः, 'स' अस्मदीयान् 'पशून्' अस्माँश्च रक्षतु, 'तस्मै' विश्वकर्मणे 'नमः'। प्रजापतिरित्यादिभिः षड्भिश्चत्वारो मन्त्राः उत्पन्नाः सर्वत्रानुषङ्गाय दिशाम्पतिरिति पुनःपाठः ।

एतन्मन्त्रसाध्यमुपधानं विधत्ते,—"एता वै देवताः एतेषां पशूनामधिपतयस्ताभ्यो वै एष आ वृश्च्यते यः पशुशीर्षाण्युपदधाति हिरण्येष्टका उप दधात्येताभ्य एव देवताभ्यो नमस्करोति"(१)—इति। पुरुषाश्वर्षभवृष्णिवस्तानामेतेषां पशूनां विश्वकर्मादयः स्वामिभूता 'देवताः', एवं सति पशुशीर्षोपधाने 'ताभ्यो' देवताभ्य 'आ-वृश्च्यते', तासां देवतानां द्रोही भवतीत्यर्थः । अतस्तत्परिहाराय हिरण्येष्टका उपदध्यात् । हिरण्यशकला एव हिरण्येष्टकाः, तदुपधानेन ताभ्यो 'नमस्करोति', तन्मन्त्रेषु 'तस्मै नमः' इति दर्शनात् ।

प्रकारान्तरेण हिरण्येष्टकाः प्रशंसति,—"ब्रह्मवादिनो वदन्त्यग्नौ ग्राम्यान् पशून् प्र दधाति शुचारण्यानर्पयति किं तत उच्छिंष्यतीति यद्धिरण्येष्टका उपदधाति अमृतं वै हिरण्यममृतेनैव ग्राम्येभ्यः पशुभ्यो भेषजङ्करोति नैनान् हिनस्ति"(२)—इति । लोके हि द्विविधा एव पशवः,—ग्राम्याश्चारण्याश्चेति, तत्र 'ग्राम्यान्' पुरुषाश्वादीन् अयं यजमानश्चीयमाने 'अग्नौ' स्थापितवान्; 'मयुमारण्यमनु ते दिशामि' —इत्यादि[illegible] 'आरण्यान्' च शोकेन योजितवान्*। 'ततं' उभयविधेभ्य पशु[illegible] 'किं' नामोच्छिष्यते?

* योऽ[illegible]

† अन्यदग्[illegible] इति व्यादर्शपुस्तके पाठः ।

[illegible]दितमिति व्यादर्शपुस्तके पाठः ।

अतः कष्टोऽयं सर्वकर्मोपद्रवको यजमानव्यापार* इति 'ब्रह्मवादिनः' परस्परमाहुः। तत्रैतदुत्तरं द्रष्टव्यं नायं कष्टो व्यापारः,—यस्मादयं हिरण्येष्टका उपदधाति', 'हिरण्यं' च 'अमृतम्', तेन 'अमृतेन' ग्राम्येभ्यः पशुभ्यो', भेषजकरणात् एतदीयहिंसादोषं न प्राप्नोति। तच्चोपलक्षणं,—आरण्यपशुशोकस्यापि भेषजमेतदिति द्रष्टव्यम्। एतासां कृत्तिकानक्षत्रेष्टकाभ्य ऊर्ध्वभावित्वात् तद्ब्राह्मणानन्तरमेवैतद्ब्राह्मणं द्रष्टव्यम्।

अथ तिसृणां स्वयमातृणानामुपधानानन्तरं प्राणनादिकं विधत्ते,—"प्राणो वै प्रथमा स्वयमातृणा व्यानो द्वितीया अपानस्तृतीया अनु प्राण्यात् प्रथमाꣳ स्वयमातृणामुपधाय प्राणेनैव प्राणꣳ समर्धयति व्यन्याद् द्वितीयामुपधाय व्यानेनैव व्यानꣳ समर्धयति अपान्यात् तृतीयामुपधायापानेनैवापानꣳ समर्धयति अथो प्राणैरेव एनꣳ समिन्धे"[४]—इति। प्रथममध्यमोत्तमचितिषु तिस्रः स्वयमातृणाः, ताश्च क्रमेण प्राणव्यानापानस्वरूपा प्रागवृत्ति-मध्यवृत्ति-पश्चाद्वृत्तित्व-साम्यादतः प्रथमचितौ स्वयमातृणाम् उपधाय 'प्राण्यात्' उच्छ्वासं कुर्यात्। मध्यमचितौ 'व्यन्यात्' प्राणापानस्तम्भनं कुर्यात्। उत्तमचितौ 'अपान्यात्',—निश्वासं कुर्यात्। स एवं सति स्वकीयैः प्राणादिभिरग्नेः प्राणादीन् 'समर्धयति'। अपि च प्राणवायुभिरेव एनमग्निं प्रदीपयति।

अथ तिसृषु स्वयमातृणासु व्याहृतित्रयं क्रमेण विनियुङ्क्ते,—"भूर्भुवः सुवरिति स्वयमातृणा उपदधातीमे वै लोकाः स्वयमा-

---

* सर्व्वकर्मोपद्रवयजमानकार्य्य इति का० क्री० पु० पाठः। सर्व्वकर्मोपद्रवकार्य्यजन्यमानव्यापार इति तु व्यादर्शपुस्तके पाठः।

टणा एताभिः खलु वै व्याहृतीभिः प्रजापतिः प्राजायत यदेताभि-र्व्याहृतीभिः स्वयमातृण्णा उपदधातीमानेव लोकानुपधायैषु लोकेषु अधि प्रजायते"(४) इति। तत्तत्स्वयमातृण्णोपधानब्राह्मणानन्तरमेव एतदपि ब्राह्मणं विभज्य योजयितव्यम्।

यदुक्तं सूत्रकारेण,—'प्राणाय त्वा चक्षुषे त्वेति चतस्रः स्वयमातृण्णाः प्रतिदिशम्' इति। तत्र मन्त्रानुत्पादयति,—"प्राणाय व्यानायापानाय वाचे त्वा चक्षुषे त्वा तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद"(६) इति। प्राणादिपदैश्चत्वारो मन्त्राः, 'प्राणाय', 'त्वा चक्षुषे त्वा तया'—इत्यादि सर्वत्रानुषज्यते। हे पूर्वदिग्वर्त्तिस्वयमातृण्णे, प्राणवृत्तिसिद्धये त्वामुपदधामि, 'चक्षुषे' दृष्टिसिध्यर्थं त्वामुपदधामि, या तव स्वामिभूता देवता, 'तया' अनुगृहीता 'ध्रुवा' सती इह 'सीद' उपविश, यथाऽङ्गिरोभिः उपहिता ध्रुवा, तद्वत्। एवं व्यानायेत्यादिमन्त्रत्रये योजनीयम्।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"अग्निना वै देवाः सुवर्गं लोकमजिगाꣳसन् तेन पतितुं नाशक्नुवन् ते एतायतस्रः स्वयमातृण्णा अपश्यन् ता दिक्षूपादधत तेन सर्वतश्चक्षुषा सुवर्गं लोकमायन् यच्चतस्रः स्वयमातृण्णा दिक्षु उपदधाति सर्वतश्चक्षुषैव तदग्निना यजमानः सुवर्गं लोकमेति"(७) इति। पुरा कदाचिद्देवाश्चीयमानमग्निं साधनं कृत्वा स्वर्गं प्राप्तुमैच्छन्, 'तेन' चाग्निना साधनेन प्राप्तुं 'नाशक्नुवन्'; अतः अग्निसाधनबलेन स्वयमातृण्णां निश्चित्योपधाय तद्बलेन सर्वदिग्वर्त्तिना 'चक्षुषा' स्वर्गं प्राप्ताः, तदीयमन्त्रेषु हि, 'चक्षुषे त्वा'—इत्यादि सर्वेष्वप्यनुषक्तं। अत एताश्चतस्रः स्वयमातृण्णाश्चतसृषु दिक्षु उपधाय

सर्वदिगवगतचतुर्युक्तेनाग्निना* स्वर्गं प्राप्नोति। हिरण्येष्टकाब्राह्मणेन सहैतद्ब्राह्मणं द्रष्टव्यम्॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥०॥

---

अग्ने आ याहि वीतये इत्याहाह्वतैवैनमग्निं दूतं वृणीमहे इत्याह हुत्वैवैनं वृणीतेऽग्निनाग्निः समिध्यते इत्याह समिन्धे एवैनमग्निर्वृत्राणि जङ्घनदित्याह समिद्धे एवास्मिन्निन्द्रियं दधात्यग्नेः स्तोमं मनामहे इत्याह मनुते एवैनम्[१] एतानि वै अह्नाः रूपाणि॥१॥

अन्वहमेवैनं चिनुतेऽवाह्नाः रूपाणि रुन्धे[२] ब्रह्मवादिनो वदन्ति कस्मात् सत्याद् यातयाम्नीरन्या इष्टका अयातयाम्नी लोकंपृणेत्यैन्द्राग्नी हि बार्हस्पत्येति ब्रूयादिन्द्राग्नी च हि देवानां बृहस्पतिश्चायातयामानः[३] अनुचरवती भवत्यजामित्वाय[४] अनुष्टुभानुचरत्यात्मा वै लोकंपृणा प्राणोऽनुष्टुप् तस्मात् प्राणः सर्वाण्यङ्गानि अनु चरति[५]ता अस्य सूददोहसः॥२॥

---

* चतुर्युक्तेनाग्निना इति सर्व्वत्र पाठो न समीचीन इव प्रतिभाति।

इत्याह तस्मात्परुषि-परुषि रसः[६] सोमं श्रीणन्ति पृश्नये इत्याह अन्नं वै पृश्नि अन्नमेवाव रुन्धे अर्को वै अग्निरर्कोऽन्नमन्नमेवाव रुन्धे[७] जन्मन्देवानां विशस्त्रिष्वा रोचने दिव इत्याहेमानेवास्मै लोकान् ज्योतिष्मतः करोति[८] यो वै इष्टकानां प्रतिष्ठां वेद प्रत्येव तिष्ठति तया,देवतयाऽङ्गिरस्वद्ध्रुवा सीदेत्याह एषा वै इष्टकानां प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति[९] ॥ ३ ॥

रूपाणि। हृदहोहसः। तया। षोडश च ॥ ६ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ * ॥

---

हिरण्मयमाहृत्याभिधाः पञ्चम ईरिताः।

अथ षष्ठेऽक्षां रूपादयः कथ्यन्ते। यदुक्तं सूत्रकारेण,—'अग्ने आ याहि वीतये[१] अग्नि दूतं वृणीमहे[२] अग्निनाग्निः समिध्यते[३] अग्निर्वृत्राणि जङ्घनत्[४] अग्नेः स्तोम मनामहे सिध्रमद्य* दिविस्पृशं देवस्य द्रविणस्य[५] इति पञ्चाक्षाः रूपाणि' इति। तदिदं विधातुं मन्त्राणां तात्पर्याणि क्रमेण दर्शयति;—"अग्ने आ याहि वीतये इत्याहाकृत्यैवेनमग्निं दूतं वृणीमहे इत्याह हुत्वैवेनं वृणीतेऽग्निनाग्निः समिध्यते इत्याह, समिन्ध एवैनमग्निर्वृत्राणि जङ्घनदित्याह, समिद्ध एवास्मिन्निन्द्रियं दधात्यग्नेः स्तोमं मनामहे इत्याह मनुते एवैनम्[१]"

* एवमेव सर्वत्र पाठ।

इति। प्रथममन्त्रे, 'आ याहि' इत्युक्तत्वादाह्वानं प्रतीयते। द्वितीये तु, 'वृणीमहे' इत्युक्तत्वात् आहूय पश्चाद्वरणं प्रतीयते। तृतीये, 'समिध्यते' इत्युक्तत्वात् समिन्धनम् प्रतीयते। चतुर्थे, 'वृत्राणि जङ्घनत्' इति शत्रुवधोक्तेः सामर्थ्यं प्रतीयते। पञ्चमे तु 'मनामहे' इत्युक्तत्वान्मननं प्रतीयते। तत्र प्रथमद्वितीयौ होतृकाण्डे (ब्रा०-३।५।२अ०) 'प्र वो वाजा'-इत्यनुवाके समाम्नातौ, तौ चास्माभि-र्द्वितीयकाण्डस्य पञ्चमप्रपाठके (७।३।एव ८।५) सामिधेनीब्राह्मणे व्याख्यातौ। तृतीयो 'यस्त्वा हृदा' इत्यनुवाके (१।४।४६।२) समाम्नातत्वात् तत्रैव व्याख्यातः। चतुर्थस्तु चतुर्थकाण्डस्य तृतीय-प्रपाठकस्यान्त्यानुवाके (१३।१) व्याख्यातः। पञ्चमः शाखान्तरगतः। एतैर्मन्त्रैरुपधेयानामिष्टकानाम् 'अह्नां रूपाणि' इत्येतन्नामधेयम्।

तेषामुपधानविधिमर्थवादेनोन्नयति,—"एतानि वै अह्नाᳲ रूपाणि अन्वहमेवैन चिनुतेऽवाह्नाᳲ रूपाणि रुन्धे[१]" इति। पञ्चसु अहःसु तस्यां तस्यां चितावुपधेयत्वादेतन्मन्त्रसाध्यानि इष्टकास्वरूपाणि अह्नां रूपाणीत्युच्यन्ते। तान्युपदध्यादिति विधिरुन्नेयः। तदुपधानेन सर्वदा प्रतिदिनमग्निं चितवान् भवति, कालविशेषाणामह्नां स्वरूपं च प्राप्नोति। एतच्च ब्राह्मणवाक्यं तत्तच्चितिप्रस्तावे विभज्य द्रष्टव्यम्।

अथ लोकम्पृणाया विधिमर्थवादेनोन्नयति,—"ब्रह्मवादिनो वदन्ति, कस्मात् सत्याद् यातयाम्नीरन्या इष्टका अयातयाम्नी लोकम्पृणेत्यैन्द्राग्नी हि बार्हस्पत्येति ब्रूयादिन्द्राग्नी च हि देवानां बृहस्पति-श्चायातयामान[१]" इति। "लोकं पृण छिद्रं पृण" (सं०४।२।१।१)

इति मन्त्रेणोपधेया लोकंपृणा तद्व्यतिरिक्तानामिष्टकानामेकस्यां चितौ सकृदेवोपधानं, तावतैव गतसारत्वात्; लोकंपृणायास्तु अगतसारत्वाद् असकृदुपधानं क्रियते, तदेतदगतसारत्वम् 'कस्मात्' कारणात्?—इति ब्रह्मवादिभिः पृष्टे सति ऐन्द्राग्नत्वात् बार्हस्पत्यत्वाच्चेति बुद्धिमान् उत्तरं ब्रूयात्, 'इन्द्राग्नी त्वा बृहस्पतिः'—इति मन्त्रे समाम्नातत्वात् तदीयत्वम्। इन्द्राग्नी बृहस्पतिरित्येते देवाः सामर्थ्यातिशयोपेतत्वात् कदाचिदपि गतसारा न भवन्ति। तादृशीमयातयाम्नीं लोकंपृणाख्यामिष्टकामुपदध्याद्-इति विधिरुन्नेयः।

अथ लोकंपृणेतिमन्त्रस्य मन्त्रान्तरोपेतत्वं विधत्ते,—"अनुचरवती भवत्यजामित्वाय(७)" इति। "लोकं पृण छिद्रं पृण" इति मन्त्रम् 'अनु' पश्चात् चरति पठ्यते इत्यनुचरः* द्वितीयमन्त्रः, तेनाप्युपधेयत्वात्† इयमिष्टका अनुचरवती। एकेनैव मन्त्रेण पुनःपुनरुपधाने सति आलस्यं भवेत्, मन्त्रान्तरसद्भावे तु तदालस्यं न भवति।

अनुचरमन्त्रं सामान्यतो विधाय पुनर्विशेषतो विधत्ते,—"अनुष्टुभा अनुचरत्यात्मा वै लोकंपृणा प्राणोऽनुष्टुप् तस्मात् प्राणः सर्वाणि अङ्गानि अनु चरति(८)" इति। लोकंपृणेति मन्त्र 'आत्मा' शरीरम्, अनुचररूपो द्वितीयोऽनुष्टुप्छन्दस्कः प्राणरूप, यस्मादेवं, तस्माल्लोकेऽपि प्राणवायुः सर्वान् शरीरावयवाननुसृत्य चरति।

---

* 'अनुचरवतो' इति आदर्शपुस्तकपाठः। 'अनुचरीवतो' इति का० सी० पुस्तकपाठः।

† 'तेन ह्युपधेयत्वात्' इति आदर्शपुस्तकपाठः।

तस्मिन्ननुचरमन्त्रे प्रथमपादस्य तात्पर्यं दर्शयति,—"ता अस्य सूददोहस इत्याह तस्मात्परुषि-परुषि रसः(६) इति। 'सूद'शब्देन दोहनीयः क्षीरादिरस उपलक्ष्यते। सूदं दुहन्तीति 'सूददोहसः', 'ताः' इष्टकाः, यस्मादेवमुक्तं, 'तस्मात्' सोमवल्लयामपि, 'परुषि-परुषि' तत्तत्पर्वणि 'रसः' अवतिष्ठते।

द्वितीयपादस्य तात्पर्यं दर्शयति,—"सोमं श्रीणन्ति पृश्नय इत्याहान्नं वै पृश्नि अन्नमेवाव रुन्धेऽर्को वै अग्निरर्कोऽन्नमन्नमेवाव रुन्धे(७)" इति। पृश्नयः श्वेतगोरूपा इष्टकाः, अन्नञ्च श्वेतवर्णं, तस्मादन्नप्राप्तिः*। किञ्च इष्टकचितोऽग्निरर्चनीयः, अन्नं चार्चनीयं, तस्मादप्यन्नप्राप्तिः।

द्वितीयार्द्धे 'त्रिष्वारोचने दिवः'—इत्यस्य तात्पर्यं दर्शयति,—"जन्मन्देवानां विशस्त्रिष्वारोचने दिव इत्याहेमानेवास्मै लोकान् ज्योतिष्मतः करोति(८)" इति। त्रिशब्देन लोकत्रयं गृह्यते, आरोचनशब्देन ज्योतिः, "यावती वै पृथिवी' (५।२।३) इत्यनुवाके 'चयोदश लोकंपृणा उप दधाति' इत्यादूक्तेर्विहितत्वाद् यातयामत्वशङ्कायां तत्परिहारोऽत्राम्नातः, अतस्तत्रैवेद ब्राह्मणं द्रष्टव्यम्। तच शङ्खामाचविधिमभिप्रेत्य चिविधुन्नयनमुक्त; यदा तु तत्रैव विशिष्टोपधानविधिः, तदानीं नात्र विधिरुन्नेतव्यः।

अथ सर्वेष्टकाश्रेपत्नेन "तया देवतया" इति मन्त्रं विधत्ते,—"यो वै इष्टकानां प्रतिष्ठां वेद प्रत्येव तिष्ठति तया देवतयाऽङ्गिरस्वद्

---

* 'अन्नं प्राप्तम्' इति च्यादर्शपुस्तकपाठः। 'अन्न प्राप्ति' का० क्री० पुस्तकपाठः। एवं परत्रापि।

ध्रुवा सीदेत्याह एषा वै इष्टकानां प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति(८)"-इति। मन्त्रे ध्रुवेत्यभिधानादेवोपधाने सति इष्टकाः प्रतिष्ठिता भवन्ति, अतः सर्वास्वपि इष्टकासु इमं मन्त्रं पठेदित्यभिप्रायः। इदं ब्राह्मणं स्वयमातृणोपधानब्राह्मणे द्रष्टव्यम् ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥०॥



सुवर्गाय वै एष लोकाय चीयते यद॒ग्निर्वज्र एकादशिनी यद॒ग्नावेकादशिनीं मिनुयाद्वज्रेणैनꣳ सुवर्गाल्लोकाद॒न्तर्द्धा॒यान्न मिनुयात् स्वरुभिः वि प॒शून् अर्द्धयेदेकयूपं मिनोति नैनं वज्रेण सुवर्गाल्लोकाद॒न्तर्दधाति न स्वरुभिः पशून् वि अर्धयति(१) वि वै एष इन्द्रियेण वीर्येण ऋध्यते योऽग्निं चिन्वन्नधिक्रामत्यैन्द्रिया ॥ १

ऋचा आक्रमणं प्रतीष्टकामुप दध्यान्नेन्द्रियेण वीर्येण व्यृध्यते(२) रुद्रो वै एष यद॒ग्निस्तस्य तिस्रः शरव्याः प्रतीची तिरश्ची अनूची ताभ्यो वै एष आ वृश्च्यते योऽग्निं चिनुतेऽग्निं चित्वा तिसृधन्वमयाचितं ब्राह्मणाय दद्यात्ताभ्य एव नमस्करोत्यथो ताभ्य एवात्मानं निष्क्रीणीते(३) यत् ते रुद्र पुरः ॥ २ ॥

धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र संवत्सरेण

नमस्करोमि यत्ते रुद्र दक्षिणा धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र परिवत्सरेण नमस्करोमि यत्ते रुद्र पश्चाद्धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र इदावत्सरेण नमस्करोमि यत्ते रुद्र उत्तराद्धनुस्तत् ॥ ३ ॥

वातो अनु वातु ते तस्मै ते रुद्र उदुवत्सरेण नमस्करोमि यत्ते रुद्र उपरि धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र संवत्सरेण नमस्करोमि(४) रुद्रो वै एष यदग्निः स यथा व्याघ्रः क्रुद्धस्तिष्ठत्येवं वै एष एतर्हि सञ्चितमेतैरुप तिष्ठते नमस्कारैरेवैनꣳ शमयति(५) येऽग्नयः ॥ ४ ॥

पुरीष्याः प्रविष्टाः पृथिवीमनु तेषां त्वमस्युत्तमः प्र णो जीवातवे सुव । आपन्त्वा अग्ने मनसा आपन्त्वा अग्ने तपसा आपन्त्वा अग्ने दीक्षया आपन्त्वा अग्ने उपसद्भिरापन्त्वा अग्ने सुत्यया आपन्त्वा अग्ने दक्षिणाभिरापन्त्वा अग्ने अवभृथेन आपन्त्वा अग्ने वशया आपन्त्वा अग्ने स्वगाकारेण(६) इत्याह, एषा वै अग्नेराप्तिस्तयैवैनमाप्नोति(७) ॥ ५ ॥

ऐन्द्रिया । पुरः । उत्तराद्धनुस्तत् । अग्नयः । आह । अष्टौ च ॥ ७ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ० ॥

अङ्गां रूपाणीरितानि सर्वे लोकंपृणा* तथा।

अथ सप्तमे यूपैकलादीन्युच्यन्ते। यदुक्तम्, अश्वमेधकाण्डे, 'एकयूपो वैकादशिनी वा। अन्येषां यज्ञानां यूपा भवन्ति। एकविंशत्यश्वमेधस्य' इति। तत्र विकल्पेन प्राप्तां यूपैकादशिनीमपोह्य यूपैकलमेव विधत्ते,—"सुवर्गाय वै एष लोकाय चीयते यदग्निर्वज्र एकादशिनी यदग्नौ एकादशिनीं मिनुयादज्रेणैनꣳ सुवर्गाल्लोकादन्तर्दध्याद् यत् न मिनुयात् स्वरुभिः पशून् वि अर्धयेदेकयूपं मिनोति नैनं वज्रेण सुवर्गाल्लोकादन्तर्दधाति न स्वरुभि. पशून् वि अर्धयति(१)" इति।

योऽयमग्निः स एष सुवर्गार्थं चीयते, यूपैकादशिनी च वज्रसमाना। तत्रेद विचार्यते, किमग्नौ पश्वर्थं यूपैकादशिनी कर्त्तव्या न वा? इति। यदि तामेकादशिनीं प्रक्षिपेत्, तदा तद्रूपेण वज्रेण एनमग्निं स्वर्गलोकादन्तर्हितं कुर्यात्, वज्रयूपव्यवधानात् स्वर्गो न दृश्येत। अथ तामेकादशिनी न प्रक्षिपेत्, तदानीं पशून् स्वरुभिर्वियोजयेत्, स्वरुशब्देन यूपतक्षणकालीनानि शकलान्युच्यन्ते; यूपाभावे च कथं तानि सम्भवेयु, तदभावे च 'स्वरुणा पशुमनक्ति' इत्येतन्न सिध्येत्। अत्रोभयदोषपरीहारार्थेक यूपं प्रक्षिपेत्। तदानी वज्रात्मकवज्रयूपव्यवधानाभावादिममग्निं स्वर्गादन्तर्हित न करोति। यूपसद्भावेन स्वरुसद्भावात् तद्वियोगोऽपि न भविष्यति। अस्य च ब्राह्मणस्य चोदकप्राप्तापवादरूपत्वान्नाम्नाते कस्मिंश्चिदप्यनुवाकेऽन्तर्भाव.†।

---

* एवमेव सर्व्वत्र पाठो न सम्यगिव प्रतिभाति।

† नाम्नातः कस्मिंश्चिदप्यनुवाकेऽन्तर्भाव—इति का० ख्री० पुस्तकपाठः।

यदुक्तं सूत्रकारेण,—"इन्द्रं विश्वा अवीवृधन्नित्युत्तरेण पुच्छाप्ययमन्तर्विधाक्रमणं प्रतीष्टकामुपदध्यात्"—इति। पुच्छाप्ययः पुच्छपक्षयोः सन्धिः। तदिदं सूत्रोक्तमुपधानं विधत्ते,—"वि वै एष इन्द्रियेण वीर्येण ऋध्यते योऽग्निं चिन्वन्नधिक्रामति ऐन्द्रिया ऋचा आक्रमणं प्रतीष्टकामुप दध्यान्नेन्द्रियेण वीर्येण व्यृध्यते(१)"—इति। 'यः' उपधानकर्ता चयनकाले 'अग्निम्' 'अधिक्रामति', स 'एष' इन्द्रियसामर्थ्येन* वियुक्तो भवति। अतस्तत्परिहाराय 'आक्रमणं' प्रतिपादप्रक्षेपस्थाने काञ्चिद् 'इष्टकाम्' 'इन्द्रं विश्वा अवीवृधन्' (४।६।३।४) इति ऋचा 'उप'-'दध्यात्'। सा च अग्निप्रणयनप्रस्तावे समाम्नातत्वात् तत्रैव व्याख्याता। अत्र पुनर्वाचनिकं विनियोगान्तरम्। एतदुपधानेन इन्द्रियसामर्थ्यवियोगो न भवति। एतच्च ब्राह्मणं 'शं यु'-गार्हपत्यादेर्याक्रमणब्राह्मणात् (५।२।६) पूर्वं द्रष्टव्यम्।

अथ धनुर्दानं विधत्ते,—"रुद्रो† वै एष यदग्निस्तस्य तिस्रः शरव्याः प्रतीची तिरश्ची अनूची ताभ्यो वा एष आ वृश्च्यते योऽग्निं चिनुते योऽग्निं चित्वा तिसृधन्वमयाचितं ब्राह्मणाय दद्यात्ताभ्य एव नमस्करोति अथो ताभ्य एवात्मानं निष्क्रीणीते(२)"—इति। योऽयमग्निः स 'एष' 'रुद्रः' क्रूरो देवः। 'रुद्रो वै क्रूरः' (६।२।७) इति ह्यन्यत्राम्नातम्। 'तस्य' च क्रूरस्य 'तिस्रः' 'शरव्याः' शरेण साध्याः, प्रत्यञ्चः तिस्रः शरव्याः। यद्वा हिंसकत्वात् इषुरेव शरव्या‡, सा च

* एवमेव सर्व्वत्र पाठः। 'इन्द्रियेण सामर्थ्येन' इति पाठो भवितुं युक्तः।

† 'इन्द्रो वै' इति का० की० इ० पाठः।

‡ 'शरव्याः' इति सर्व्वत्र सविसर्गपाठो न सम्यक्।

त्रेधा,—'प्रतीची' म्मुखमागच्छन्ती, 'तिरश्ची' पार्श्वयोस्तु* गच्छन्ती, 'अनूची' पृष्ठत आगच्छन्ती चेति। एवं सति 'योऽग्निं चिनुते', स 'एष' 'ताभ्य.' इषुभ्यो निमित्तभूताभ्य 'आ वृश्च्यते' सर्वतश्छिद्यते, ताभि. प्रहृतो भवति इत्यर्थ। अतस्तत्परिहाराय तिसृभिरिषुभिर्युक्तमेकं धनु 'अयाचितम्' अपि 'ब्राह्मणाय दद्यात्'। तेन बाधिकाभ्य 'ताभ्य' इषुभ्यो 'नमस्करोति' 'एव'। अपि च 'ताभ्य.' इषुभ्य सकाशात् 'एव' 'आत्मानं' स्वशरीरं 'निष्क्रीणीते'।

यदुक्तं सूत्रकारेण,—"तिसृधन्वमयाचितं यजमानो ब्राह्मणाय दत्त्वा यत्ते रुद्र पुरोधनुरिति तैर्यथालिङ्गमुपतिष्ठते"—इति।

तदेतद्विधातुं मन्त्रानुत्पादयति, "यत्ते रुद्र पुरो धनुस्तद्वातो, वातु ते तस्मै ते रुद्र संवत्सरेण नमस्करोमि यत्ते रुद्र द. धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र परिवत्सरेण यत्ते रुद्र पश्चाद्धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र इदावत्सरेण नमस्करोमि यत्ते रुद्र उत्तराद्धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र इदुवत्सरेण नमस्करोमि यत्ते रुद्र उपरिधनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र वत्सरेण नमस्करोमि"—इति।

हे 'रुद्र', 'पुर' पूर्वस्यान्दिशि 'ते' त्वदीयं 'यत्' 'धनु' अस्ति, तदनुसृत्य 'वातो' 'वातु' प्रसरतु। किमर्थं? 'ते'-त्वदर्थं, त्वत्-सहायार्थमित्यर्थ। त्वया वाणे मुक्ते सति यदा वायुरनुकूलो भवति, तदा वाण शीघ्रमुद्गच्छति, तदिदं साहाय्यम्। हे 'रुद्र', 'ते' 'त्वदीयाय' 'तस्मै' धनुषे 'संवत्सरेण' कालेन नमोऽस्तु, एकस्मिन्

* अत्र सकारो न साधुरिव प्रतिभाति।

संवत्सरे निरन्तरं नमस्करोमीत्यर्थः। एवमुत्तरत्रापि योज्यम्। प्रभवविभवादीनां षष्टिसंवत्सराणां मध्ये एकैकस्मिन् पञ्चके स्थिताः संवत्सराः क्रमेण संवत्सर-परिवत्सरेदावत्सरेदुवत्सरवत्सरशब्दैराकृति-विवक्षिताः*। प्रथमः संवत्सरः, द्वितीयः परिवत्सरः, तृतीय इदावत्सरः, चतुर्थ इदुवत्सरः, पञ्चमो वत्सरः। एवं सति एकैकादिवर्निषधपुषे निरन्तरमेकैकस्मिन् संवत्सरे नमस्कारः कृतो भवति।

एतन्मन्त्रसाध्यमुपस्थानं विधत्ते,—"रुद्रो वै एष यदग्निः स यथा व्याघ्रः क्रुद्धस्तिष्ठत्येवं वै एष एतर्हि सञ्चितमेतैरुप तिष्ठते नमस्कारैरेवैनꣳ शमयति[५]"—इति। लोके क्रुद्धो व्याघ्रो गर्जन् भक्षणोद्यतो यथा भयङ्करस्तिष्ठति, एवमेवैष सम्यक् चितोऽग्निः उग्रः सन् उपस्थाने सति तन्मन्त्रगतैर्नमस्कारैः शान्तो भवति। तदिदमुपस्थानब्राह्मणं शतरुद्रीयहोमब्राह्मणाद् (५।४।२) ऊर्ध्वं द्रष्टव्यम्।

यदुक्तं सूत्रकारेण,—"येऽग्नय पुरीष्या इति प्रयासस्त्राभिर्†रग्निं यजमान उपतिष्ठते" इति। तदिदं विधातुं मन्त्रान् पठति,— "येऽग्नयः पुरीष्याः प्रविष्टाः पृथिवीमनु तेषां त्वमस्युत्तमः प्र णो जीवातवे सुव। आप त्वा अग्ने मनसा आप त्वा अग्ने तपसा आप त्वा अग्ने दीक्षया आप त्वा अग्ने उपसद्भिराप त्वा अग्ने सुत्यया आप त्वा अग्ने दक्षिणाभिराप त्वा अग्ने अवभृथेनाप त्वा अग्ने वशया आप त्वा अग्ने स्वगाकारेण[६]" इति। हे अग्ने, मया चीयमाना ये केचिदन्येऽचीयमानाः 'पुरीष्याः' पशवः निष्पाद्याः 'पृथिवीम' 'अनु' 'प्रविष्टाः' सन्ति,

* एवमेव सर्वत्र पाठः। आकृतिविवक्षितेति किंवा आकृतयो विवक्षिता इत्येव पाठो भवितुं युक्तः।

† प्रयासम्नाभिरिति सर्वत्र पाठः।

श्यैतन्त्वं। प्रतीच्या त्वा दिशा सादयामि सात्मानं चिनुते। द्वाविंशतिश्च॥८॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे अष्टमोऽनुवाकः॥०॥

---

एकयूपादिविधय सप्तमे समुदीरिता।

अथ अष्टमे उपस्थानादिकमुच्यते। यदुक्तं सूत्रकारेण— तिष्ठते गायत्रेण पुरस्ताद् बृहद्रथन्तराभ्यां पुच्छं दक्षिणस्यां श्रोण्यां वारवन्तीयेनोत्तरस्यां प्रजापते सामानूच गायन्ति"—इति। तदेतद्विधत्ते— पुरस्तादुप तिष्ठते प्राणमेवास्मिन् दधाति बृहद्रथन्तराभ्यां एवास्मिन् दधात्यृतुष्ठायज्ञायज्ञियेन पुच्छमृतुष्वेव प्रति पृष्ठैरुप तिष्ठते तेजो वै पृष्ठानि तेज एवास्मिन् दधाति(१)"—इति गायत्र्यादीनि सामविशेषनामानि, "तत्सवितुर्वरेण्यम्" (२।५।६) इत्यस्यामृचि उत्पन्नं गायत्रं, तेन शिरोभागस्य उपस्थाने अग्निस्थो प्राण स्थापितो भवति। "त्वामिद्धि हवामहे"(२।४ इत्यस्यामृचि उत्पन्नं बृहत् "अभि त्वा शूर नो नुम"(२।४।२४ इत्यस्यामृचि उत्पन्नं रथन्तरं, ताभ्यां पक्षयोरुपस्थाने मति क सम्पादित भवति। "वसन्तम्*" (१।६।१०) इत्यादिकायाम् ऋ

---

* 'वसन्त' इति सर्व्वत्र पाठः। परन्तु 'वसन्त' इति कस्या ऋ ऋचः स्यादिनाक्ताभिहितः।

उत्पन्नमृतुस्थायज्ञायज्ञियं, तेन पुच्छोपस्थाने सति ऋतुषु प्रतिष्ठितो भवति। यानि पृष्ठस्तोत्रगतानि सामानि, तै सर्वै रूक्षमग्निमुपतिष्ठेत। तेन शरीरकान्तिं प्राप्यते।

अथ श्रोणिद्वयोपस्थानाय सामद्वयं विधत्ते,—"प्रजापतिरग्निमसृजत सोऽस्मात् सृष्टः पराङैत् त वारवन्तीयेनावारयत तद्वारवन्तीयस्य वारवन्तीयत्वꣳ श्यैतेन श्येती अकुरुत तत् श्यैतस्य श्यैतत्वं यद्वारवन्तीयेनोपतिष्ठते वारयत एवैनꣳ श्यैतेन श्येती कुरुते[१]"—इति। "अश्वं नत्वा वारवन्तम्" (१।२७।१ऋ०वे०) इत्यस्यामृचि उत्पन्नं वारवन्तीयं, तेन साम्ना पराचीनं गच्छन्तमग्निं विनिवारयामास, निवारणसाधनत्वादेव वारवन्तीयं नाम सम्पन्नम्। "अभि प्र व सुराधसम्" (८।४९।१ऋ०वे०) इत्यस्यामृचि उत्पन्नं श्यैतं, तेन साम्ना तं निवारितमग्निं 'श्येती' स्ववशो यथा भवति तथा 'अकुरुत'। श्येतीकरणसाधनत्वात् श्यैतमिति साम्नो नाम। तेन सामद्वयेन श्रोणीद्वयोपस्थाने सति अस्य गमनं निवार्य्य, स्वाधीनं करोति। पक्षे तु शाखान्तरानुसारेण श्यैतस्थाने वामदेव्यमुक्तम् ॥

अथ पक्षमन्युपस्थानाय सामान्तरं विधत्ते,—"प्रजापतेर्हृदयेनापिपक्षम् प्रत्युप तिष्ठते प्रेमाणमेवास्य गच्छति[२]" इति अरण्यगेयेषु लोकेषु यदुत्पन्नं साम प्रजापतेर्हृदयं नाम, तेषु सोमविषयेन सद्भावात् तेन पक्षमन्युपस्थाने सति अग्नेः प्रीतिं प्राप्नोति। एतस्योपस्थानस्य विकर्षणानन्तरभावित्वात् "अग्ने भूर्भुव" (५।७।४) इत्यस्मिन् ब्राह्मणानुवाके तदेतत् द्रष्टव्यम्।

यदुक्तं सूचकेन,—'प्राच्या मा दिशा सादयामीति पद्धा-

त्मेष्टका प्रतिदिशमेकां मध्ये"—इति । तदेतद्विधातुं दर्शयति, "प्राच्या त्वा दिशा सादयामि गायत्रेण छन्दसा देवतया अग्ने शीर्ष्णा अग्ने शिर उप दधामि दक्षिणया दिशा सादयामि त्रैष्टुभेन छन्दसा इन्द्रेण देवतया अग्ने अग्ने पक्षमुप दधामि प्रतीच्या त्वा दिशा सादयामि सविता देवतया अग्ने पुच्छेनाग्ने पुच्छमुप दधामि उदीच्या त्वा दिशा सादयामि आनुष्टुभेन छन्दसा मित्रावरुणाभ्यां देवतया पक्षेणाग्ने पक्षम् उप दधामि ऊर्ध्वया त्वा दिशा सादयामि पाङ्क्तेन छन्दसा बृहस्पतिना देवतया अग्ने पृष्ठेनाग्ने पृष्ठमुप दधामि[(७)] इति"। येयं प्राची दिक्, यच्च गायत्राच्छन्द, यापि अग्निरूपा देवता देवतात्मनोऽग्नेः शिर, सर्वैः सहितोऽहं हे इष्टके, त्वामस्य वो शिरःस्थाने 'उप'-'दधामि'। एवमुत्तरेष्वपि योज्यम् ॥

इदानीमात्मेष्टका विधत्ते,—"यो वै अपात्मानमग्निं अपात्मा अमुष्मिन् लोके भवति यः सात्मानं चिनुते सात्मा, लोके भवति आत्मेष्टका उप दधाति एष वै अग्नेरात्मा सात्मानम् एवाग्निं चिनुते[(८)]" इति। आत्मा, शरीरं, तद्रहितमग्निं चिन्वन् अयं शरीररहितो भवति, सात्मकमग्निं चिन्वानस्तु सात्मक एव भवति। तस्मात् आत्मेष्टका उपदध्यात्। शिरः-पक्ष-पुच्छरूपं तन्निष्पादकत्वादेव एता आत्मेष्टका। 'एष' शिर.. एवाग्नेः शरीरं, तस्मादेतदुपधानेन सशरीरमग्निं चिनुते।

वेदनं प्रशंसति, "सात्मा अमुष्मिन् लोके भवति य एवं वेद[(९)]" इति॥

अथ मीमांसा,—

सप्तमाध्यायस्य तृतीयपादे (१४अ०) चिन्तितम्,—

"पृष्ठैरुपस्थितौ स्तोत्रधर्मा सन्ति नवाऽग्निम ।
अग्निहोत्रनयात्रैव मन्त्रोऽस्त्रेरात्मनेपदात् ॥

अग्निचयने श्रूयते,—'पृष्ठैरुपतिष्ठते' इति। पृष्ठशब्दो ज्योतिष्टोमे माध्यन्दिनसवनगतस्य स्तोत्रकर्मणो नामधेयमिति प्रथमाध्याये (४।२अ०)निर्णीतम् । सोऽग्निचयनगतोपस्थानकर्मणि प्रयुज्यमानोऽग्निहोत्रशब्दन्यायेन पृष्ठस्तोत्रधर्मान् उपस्थानेऽतिदिशतीति चेत् । मैवम्, अत्र पृष्ठशब्दस्य मन्त्रपरत्वेन कर्मपरत्वाभावात्। 'मासमग्निहोत्रं जुहोति' इत्यत्राग्निहोत्रशब्दो जुहोतिधातुना समानाधिकृत कर्मपर । अत्र "उपान्मन्त्रकरणे" (१।३।२५) इत्येतत्पाणिनीयसूत्रम् उपशब्दयुक्तात्तिष्ठतिधातोरात्मनेपदं विदधत् तृतीयान्तस्य पृष्ठशब्दस्य मन्त्रात्मककरणपरतां दर्शयति । यद्यपि स्तोत्रकर्मवाची पृष्ठस्तथापि तत्साधनभूतान् रथन्तरादिसामोपेतान् 'अभि त्वा शूर' इत्यादिमन्त्रान् उपलक्षयति। न च, लक्षणाश्रयणमेव दोष इति वाच्यम्, त्वत्पक्षेऽप्याश्रयणीयत्वात्। किञ्च, त्वत्पक्षे यथा नित्याग्निहोत्रवाचिना अग्निहोत्रशब्देन तद्धर्मानुपरक्तस्य तैश्च धर्मैर्युक्तं मासाग्निहोत्राख्यं कर्मान्तरं लक्ष्यते, तथा स्तोत्रवाचिना पृष्ठशब्देन तद्धर्मोपलक्षणद्वारेणोपस्थानरूपं कर्मान्तरं लक्षणीयमिति विप्रकृष्यते। तस्मात् पृष्ठशब्देन स्तोत्रधर्मान् अतिदिशन्ति ।

एतच्च मात्मन गवलेष्टकाभाष्यणाद् (४।७।१०अ०) अन्ये द्रष्टव्यम् ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ० ॥

अग्ने उदधे या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उपजीवन्तो भूयास्माग्ने दुध्र गह्य किंशिल वन्य या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उपजीवन्तो भूयास्म[१] पञ्च वा एतेऽग्नयो यच्चितय उदधिरेव नाम प्रथमो दुध्रः॥ १ ॥

द्वितीयो गह्यस्तृतीयः किंशिलश्चतुर्थो वन्यः पञ्चमस्तेभ्यो यदाहुतीर्न जुहुयादध्वर्युं च यजमानं च प्रदहेयुर्यदेता आहुतीर्जुहोति भागधेयेनैवैनाञ्छमयति नार्तिमार्छत्यध्वर्युर्न यजमानो[२] वाङ्म आसन्नसोः प्राणोऽक्ष्योश्चक्षुः कर्णयोः श्रोत्रं बाहुवोर्बलमूरुवोरोजोऽरिष्टा विश्वान्यङ्गानि तनूः॥ २ ॥

तनुवा मे सह नमस्ते अस्तु मा मा हिंसी[३]रप वा एतस्मात् प्राणाः क्रामन्ति योऽग्निं चिन्वन्नधिक्रामति वाङ्म आसन्नसोः प्राण इत्याह प्राणानेवात्मन्धत्ते[४] यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु[५] आहुतिभागा वा अन्ये रुद्रा हविर्भागाः॥ ३ ॥

अन्ये शतरुद्रीयं हुत्वा गावीधुकं चरुमेतेन यजुषा चरमायामिष्टकायां नि दध्याद्भागधेयेनैवैनं शमयति तस्य त्वै शतरुद्रीयं हुतमित्याहुर्यस्यैतदग्नौ क्रियत

इति[1] वसवस्त्वा रुद्रैः पुरस्तात्पान्तु पितरस्त्वा यमराजानः पितृभिर्दक्षिणतः पान्त्वादित्यास्त्वा विश्वैर्देवैः पश्चात्पान्तु द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतः पातु ॥ ४ ॥

देवास्त्वेन्द्रज्येष्ठा वरुणराजानोऽधस्ताच्चोपरिष्टाच्च पान्तु[2] न वा एतेन पूतो न मेध्यो न प्रोक्षितो यदेनमतः प्राचीन प्रोक्षति यत्सञ्चितमाज्येन प्रोक्षति तेन पूतस्तेन मेध्यस्तेन प्रोक्षितः ॥ ५ ॥

दृभः। तनूः। हविर्भागाः। पातु। द्वाचिंशच्च ॥ ९ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ० ॥

---

आक्षेष्टकासुपस्थान-मथाष्टम उदीरितम्।

अथ नवमे आहुत्यादिकमभिधीयते। यदुक्तं सूत्रकारेण, 'अग्न उदधे या ते इषुर्युवा नामेति पञ्चाज्याहुतीर्जुहोति' इति। तदिदं विधातुं मन्त्रानुत्पादयति। "अग्ने उदधे या ते इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्ते उपजीवन्तो भूयास्म अग्ने दुभ गह्य किंशिल वन्य या ते इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्ते उपजीवन्तो भूयास्म[1]" इति। उदधिरिति कस्यचिदग्नेर्नाम, उदधिनामक हे 'अग्ने', 'ते' त्वदीया 'या' इयम् 'इषु' 'युवा नाम' परशरीरे सहसा मिश्रणात् युवा बाणस्य नामधेयं, 'तया' युवाभिधेयया 'नः' अस्मान् 'मृड' सुखय। 'ते' त्वदीयाया 'तस्या'

इषोः 'नमः' अस्तु। 'ते' त्वदीयायाः 'तस्याः' इषोः प्रसादात् 'उपजीवन्तः' समीचीनजीवनयुक्ताः 'भूयास्म'। एवमुत्तरत्रापि योज्यम्। दुभादीनि चत्वारि अग्निविशेषनामानि; तैर्मन्त्रयतुर्धा भिद्यते। सर्वेषामप्यग्निशब्द आदावनुषज्यते। 'या ते इषुः' इत्यादिः अन्यानुषङ्गः।

अथ तैर्मन्त्रैराहुतीर्विधत्ते,—"पञ्च वै एतेऽग्नयो यच्चितय उदधिरेव नाम प्रथमः, दुभ्रो द्वितीयः, गह्वस्तृतीयः, किंशिलश्चतुर्थः, वन्यः पञ्चमः; तेभ्यो यदाहुतीर्न जुहुयादध्वर्युञ्च यजमानञ्च प्रदहेयुः यदेता आहुतीर्जुहोति भागधेयेनैवैनान् शमयति (नम॰) यजमानः(१)" इति। या एताः पञ्च 'चितयः' उपर्यधोभावेन निष्पादिताः, ता एव उदध्यादिनामकाः 'पञ्च' 'अग्नयः', तेषामाहुत्यभावे अध्वर्युयजमानयोः दाहः स्यात्, अतस्तत्परिहाराय तैर्मन्त्रैः पञ्च आज्याहुती*र्जुहुयात्।

एतामाद्य वाजनामाहुत्यनन्तरभावित्वात् "अग्निर्देवेभ्यः (५।४। ८अ॰) इत्यनुवाकान्ते तदेतद् ब्राह्मणं द्रष्टव्यम्।

यदुक्तं सूत्रकारेण, 'वाङ्म आसन्निति सर्वत्रारोहान् प्रत्यवरोहांश्च जपति सकृदा अन्ततः' इति। तमिमं विधिमुक्त्वा मन्त्रमुत्पादयति,—"वाङ्म आसन् नसोः प्राणोऽक्ष्योश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलम् ऊर्वोरोजोऽरिष्टा विश्वान्यङ्गानि तनूस्तनुवा मे सह नमस्ते अस्तु मा मा हिंसीः(२)" इति। 'मे' मदीया येयं 'वाक्', सेयम् 'आसन्' आस्ये मुखे सुस्थिता भवतु। 'नसोः' नासिकाच्छिद्रयोः 'प्राणः' सुस्थितो भवतु। तथा अक्षिगोलकयोः 'चक्षुः' इन्द्रियम्।

* पञ्च आहुतीः इति का॰ फी॰ पु॰ पाठः।

'कर्णयो' श्रोत्रेन्द्रियम्। वाङ्कोर्नानाविधव्यापारसामर्थ्यम्। ऊर्वोर्गमनसामर्थ्यम्। तथा 'विश्वानि' 'अङ्गानि' 'अरिष्टानि',—सर्वेऽप्यवयवा हिंसारहिता भवन्तु। 'तनूः' अवयवीभूत शरीरमपि हिंसारहितमस्तु। 'मे' 'तनुवा' मदीयेन शरीरेण 'सह' 'ते' तुभ्य 'नम' साष्टाङ्गदण्डप्रणाम 'अस्तु'। अतो 'मा' मा त्व 'मा हिंसी'।

अथ जपविधिमुन्नयति,—"अप वा एतस्मात प्राणा क्रामन्ति योऽग्नि चिन्वन्नधि-क्रामति वाड्मे आसन्नसो प्राण इत्याह प्राणानेवात्मन्धत्ते[४]" इति। 'यो' यजमानोऽध्वर्युर्वा अग्निचयनकाले चितम 'अग्निम' अधिरुह्य पादेनाक्रामति, 'एतस्मात' 'प्राणा' सर्वेऽपि 'अप'-'क्रामन्ति', अत प्राणधारणाय मन्त्रे वागादीना स्वस्थानावस्थितिरुच्यते। तस्मादिम मन्त्र जपेदितिविधिरभ्युन्नेय। यदा तु 'आह' इति पदस्यैव ब्रूयादिति लिङर्थ ब्रूते, तदा प्रत्यक्ष एव विधि।

एतच्च आक्रमणेष्टकाब्राह्मणात् (५।१।१२) ऊर्ध्व द्रष्टव्यम।

यदुक्त सूत्रकारेण,—'यो रुद्रो अग्नाविति रौद्र गावीधुकचरुमेतेन यजुषा यस्यामिष्टकाया शतरुद्रीय जुहोति तस्या प्रतिष्ठापयति' इति। तदिद विधातु मन्त्रमुत्पादयति,—"यो रुद्रो अग्नौ य अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु[५]" इति। रुद्रदेवतारूपोऽग्नि, स च लौकिके अङ्गाररूपे 'अग्नौ' उदकादिषु च प्रविश्य गूढो वर्त्तते, 'तस्मै' 'नमो अस्तु'।

एतन्मन्त्रसाध्य चरोरुपधान विधत्ते—"आहुतिभागा वै अन्ये रुद्रा हविर्भागा अन्ये, शतरुद्रीयꣳ हुत्वा गावीधुकचरुमेतेन यजुषा चरमायामिष्टकाया नि दध्याद्भागधेयेनैवैनꣳ शमयति तस्य त्वै (तु वै)

बृहती दिक् तस्यांस्ते बृहस्पतिरधिपतिः श्विचो वृश्निनी नामासीयन्दिक् तस्यांस्ते यमोऽधिपतिः कुल्माषग्रीवो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयता ते यं द्विष्मो यश्च ॥ २ ॥

नो द्वेष्टि तं वां जम्भे दधामि[१] एता वै देवता अग्निं चितꣳ रक्षन्ति ताभ्यो यदाहुतीर्न जुहुयादध्व॰ यजमानं च ध्यायेयुर्यदेता आहुतीर्जुहोति भागधेयेनैवैनाञ्छमयति नार्तिमार्छत्यध्वर्युर्न यजमानो[१] हेतयो नाम स्थ तेषां वः पुरो गृहा अग्निर्व इषवः सलिलो निलिम्पा नाम ॥ ३ ॥

स्थ तेषां वो दक्षिणा गृहाः पितरो व इषवः सगरो वज्रिणो नाम स्थ तेषां वः पश्चाद्गृहा स्वप्नो व इषवो गह्वरोऽवस्थावानो नाम स्थ तेषां व उत्तराद्गृहा आपो व इषव समुद्रोऽधिपतयो नाम स्थ तेषां व उपरि गृहा वर्षं व इषवोऽवस्वान् क्रव्या नाम स्थ पार्थिवा स्तेषां व इह गृहा ॥ ४ ॥

अन्नं व इषवो निमिषो वातनाम तेभ्यो वो नमस्ते नो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि[१] हुतादो वा अन्ये देवा अहुतादोऽन्ये तानग्निचिदुभयान् प्रीणाति दध्ना मधुमिश्रेणैता आहुती-

र्जुहोति भागधेयेनैवैनान् प्रीणात्यथो खल्वाहुरिष्टका वै देवा अहुताद इति ॥ ५ ॥

अनुपरिक्रामं जुहोत्यपरिवर्गमेवैनान् प्रीणाति[४] इमꣳ स्तनमूर्जस्वन्तं धयापां प्रप्यातमग्ने सरिरस्य मध्ये। उत्सं जुषस्व मधुमन्तमूर्व समुद्रियꣳ सदनमा विशस्व[५]। यो वै अग्निं प्रयुज्य न विमुञ्चति यथाऽश्वो युक्तोऽविमुच्यमानः क्षुध्यन् पराभवत्येवमस्याग्निः परा भवति तं पराभवन्तं यजमानोऽनु परा भवति सोऽग्निं चित्वा लूक्षः ॥ ६ ॥

भवतीमꣳ स्तनमूर्जस्वन्तन्धयापामित्याज्यस्य पूर्णाꣳ स्रुचं जुहोत्येष वै अग्नेर्विमोको विमुच्यैवास्मै अन्नमपि दधाति[६] तस्मादाहुर्यश्चैवं वेद यश्च न सुधायꣳ ह वै वाजी सुहितो दधातीत्यग्निर्वाव वाजी तमेव तत् प्रीणाति स एनं प्रीतः प्रीणाति वसीयान् भवति[७] ॥७॥

प्रतीची दिक् तस्यास्ते। द्विषो यश्च। निलिम्पा नाम। इह गृहाः। इति। लूक्षः। वसीयान् भवति॥१०॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः ॥१०॥

---

आज्याहुती प्रोक्षण चेत्यादिक नवमे श्रुतम्।

अथ दशमे सर्पाहुत्यादिकमुच्यते। यदुक्तं सूत्रकारेण,—'समीची नामासि प्राची दिगिति दध्ना मधुमिश्रेण षटसर्पाहुतीरनुपरिचारम्' इति। तदेतद्विधातुं मन्त्रानुत्पादयति,—"समीची नामासि प्राची दिक् तस्यास्तेऽग्निरधिपतिरसितो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि[१], ओजस्विनी नामासि दक्षिणा दिक् तस्यास्त इन्द्रोऽधिपतिः पृदाकुः[२], प्राची नामासि प्रतीची दिक् सोमोऽधिपतिः स्वजः[३], अवस्थावा नामासि उदीची दिक् तस्यास्ते वरुणोऽधिपतिस्तिरश्चराजिः[४] अधिपत्नी नामासि दिक् तस्यास्ते बृहस्पतिरधिपतिः श्वित्र[५] वशिनी नामासीयं तस्यास्ते यमोऽधिपतिः कल्माषग्रीवो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि[६](१)" इति। येयं प्राची दिक् तस्याः समीचीति नामधेयं, सम्यगञ्चतीति प्रातःकालानुष्ठानार्थं प्रवर्तते इति व्युत्पत्तेः। हे 'प्राचि', त्वं समीच्यभिधा 'असि' 'तस्याः' तादृश्याः 'अग्निः' देवः स्वामी, 'असितः' कृष्णसर्पः, स च तव 'रक्षिता', 'ताभ्याम्' अधिपतिरक्षितृभ्यां 'नमः' अस्तु, 'तौ' उभौ 'नः' अस्मान् 'मृडयतां' सुखयतां, 'ते' सुखिनो वयं 'यं' पुरुषं अस्मान् द्विषितुं प्रवर्तमानं 'द्विष्मः', 'यश्च' पुरुषः अस्मानुदासीनानपि 'द्वेष्टि', 'तं' द्विविधं पुरुषं 'वां' युवयोः अधिपतिरक्षित्रोः 'जम्भे' विदारितास्ये 'दधामि' स्थापयामि। एवमुत्तरत्रापि योज्यम्। 'ओजस्विनी' बलवतीति दक्षिणदिशो नाम।

'पृदाकुः' अजगरः सर्पः। 'रक्षिता' इत्यादि-शेषोऽनुषज्यते। प्रकर्षेण अञ्चतीति सायंसन्ध्याद्यनुष्ठानाय प्रवर्तते इति पश्चिमदिशः प्राचीति नामधेयम्। स्वस्मिन् जायते इति 'स्वजः', स्वाधीनबलः सर्पः। मनुष्यान् अवस्थापयति इति व्युत्पत्त्या 'अवस्थावा'-इति उदक्-दिशो नाम। तिरश्चीनाः कटकवलयाकाराः राजयो रेखाः यस्य सर्पस्य असौ 'तिरश्चराजिः'। अधिपालयतीति व्युत्पत्त्या 'अधिपत्नी'-इति ऊर्ध्वदिशो नाम। सा च प्रौढत्वात् 'बृहती'। 'श्वित्रः', यस्य सर्पस्य श्वासधारणेन स्वशरीरे उच्छूनता भवति, दशनेन मनुष्य-शरीरेऽप्युच्छूनता भवति, सोऽयं श्वित्रः। वशः (प्राणिनामवस्थातुं स्वाधीनता) अस्यामस्तीति 'वशिनी'। एतच्च भूमिरूपाया अधोदिशो नाम। कल्माषाः (कृष्णविन्दवो) ग्रीवायां यस्य सर्पस्य, सोऽयं 'कल्माषग्रीवः'। 'रक्षिता' इत्यादेः, सर्पस्य वाचकेभ्यः शब्देभ्यः ऊर्ध्वम् अनुषङ्गद्योतनाय अन्तिममन्त्रे पुनःपाठः।

एतन्मन्त्रसाध्या आहुतीर्विधत्ते,—"एता वै देवता अग्निं चितꣳ रक्षन्ति ताभ्यो यदाहुतीर्न जुहुयादध्वर्युं च यजमानं च ध्यायेयुर्यदेता आहुतीर्जुहोति भागधेयेनैवैनाञ्छमयति नार्तिमार्च्छत्यध्वर्युर्न यज-मानः(१)" इति। 'एताः' अग्नीन्द्राद्यधिपतिरूपा असितादिसर्परूपाश्च 'देवताः' इष्टकाभिः 'चितम्' 'अग्निं' 'रक्षन्ति' अतस्तासां शान्त्यै जुहुयात्।

यदुक्तं सूत्रकारेण, 'हेतयो नाम स्थेति षण्महाहुतीर्यथा सर्पाहुतीः' इति। तदेतद्विधातुं मन्त्रानुत्पादयति,—"हेतयो नाम स्थ तेषां वः पुरो गृहा अग्निर्व इषवः सलिलो[१] निलिम्पा नाम

स्थ तेषां वो दक्षिणा गृहाः पितरो व इषवः सगरो[२] वज्रिणो नाम स्थ तेषां वः पश्चाद्‌गृहाः स्वप्नो व इषवो गह्वर [३] अवस्थावानो नाम स्थ तेषां व उत्तराद्‌गृहाः आपो व इषवः समुद्र [४], अधिपतयो नाम स्थ तेषां व उपरि गृहाः वर्षं व इषवोऽवस्वान्[५] क्रव्या नाम स्थ पार्थिवास्तेषां व इह गृहाः अन्नं व इषवो निमिषो वातनाम तेभ्यो वो नमस्ते नो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि[६]-(१)" इति। 'हेतयः' मन्त्रेणा गन्तारः* हे गन्धर्वविशेषाः, यूयं हेतिनामकाः 'स्थ', 'तेषां' युष्माकं पूर्वस्यान्दिशि 'गृहाः' वर्त्तन्ते। 'अग्निः' युष्माकम् 'इषवः', अग्निसमाना इत्यर्थः। 'सलिलो' वायु-विशेषः। परमन्त्रे पठितं 'वातनामन्' इत्यादिकं सर्वेष्वपि मन्त्रेषु अनुषज्यते। पूर्वस्यान्दिशि सञ्चरतो वायोः 'सलिल' इति नामधेयम्। 'तेभ्यो वो नमः' इत्यादिकं विस्पष्टम्। नितरां चन्दनेनानुलिप्ता गन्धर्वास्तेषां 'निलिम्पा' इति नामधेयम्। 'पितरः' पितृसमानाः। 'सगर' इति तत्र स्थितस्य नामधेयम्। वज्रं येषामस्तीति 'वज्रिणः', तदेतद्गन्धर्वनाम। 'स्वप्नः' स्वप्नसमानाः, यथा स्वप्ने किञ्चिदपि यथार्थं नास्ति, एवमेतासामिषूणामित्यर्थः। 'गह्वरः' इति वायोर्नाम। अवस्था स्थितिः अवस्थानमेषामस्तीति 'अवस्थावान' तदेतद्गन्धर्वनाम। 'आपः' उदकसमानाः, जलवत् सर्वदा प्रसरन्तीत्यर्थः। 'समुद्रः' इति वायोर्नाम। अधिकं पालयन्तीति 'अधिपतयः'। 'वर्षं' वृष्टिसमानाः, निरन्तरं पतन्तीत्यर्थः। 'अवस्वान्' इति वायोर्नाम। 'क्रव्या' मांसप्रियाः, तदेतद्गन्धर्वनाम। ते च 'पार्थिवाः', पृथिव्यां वर्तन्ते।

* एवमेव सर्व्वत्र पाठः। गन्तारः इति तु भवितुमुचितः।

'इह' भूमौ। 'अन्नम' अन्नहेतव। 'निमिष' इति वायोर्नाम।

एतैर्मन्त्रैः साध्य होम विधत्ते,—"हुतादो वै अन्ये देवा अहुतादोऽन्ये तानग्निचिदेवोभयान प्रीणाति दध्ना मधुमिश्रेणैता आहुतीर्जुहोति भागधेयेनैवैनान् प्रीणात्यथो खल्वाहुरिष्टका वै देवा अहुताद इत्यनुपरिक्राम जुहोत्यपरिवर्गमेवैनान प्रीणाति(४)" इति। "पूर्व नृषदे वड़िति" (५।४।५अ०) इत्यनुवाके दध्ना मधुमिश्रेणावोक्षण अहुतभक्षकदेवप्रीत्यर्थमुक्तम्, इह तु हुतभक्षकदेवप्रीत्यर्थ तेनैव द्रव्येण होम उच्यते। अपि च एकेऽभिज्ञा एवम् 'आहु' 'इष्टका' एव 'अहुतादो' 'देवा',तच्च होमेन हुतभक्षकाणा प्रीतावप्येतासामिष्टकाना प्रीत्यर्थ होमकालेऽनुक्रमेण परित क्रमणीय, तेनैव परिक्रमणेन कमपि देवमवर्जयित्वा सर्वानप्येतावतो देवान 'प्रीणाति'। तदेव होमेनानुपरिक्रमणेन च हुतादामहुतादा च सर्वेषा प्रीतिरुपपद्यते। तदिद सर्वाहुतिमहाहुतिब्राह्मण वातनामब्राह्मणात् (५।४।८अ०) ऊर्ध्व द्रष्टव्यम्।

यदुक्त सूत्रकारेण,—'अनुबन्ध्यावपाया हुतायामौदुम्बरी स्रुच पूरयित्वेमꣳ स्तनमूर्जस्वन्त धयापामित्यग्नेर्विमोक जुहोति' इति। तदिद विधातु मन्त्रमुत्पादयति,—"इमꣳ स्तनमूर्जस्वन्त धय अपा प्रप्यातम अग्ने, सरिरस्य मध्ये उत्स जुषस्व मधुमन्तमूर्व, समुद्रियꣳ सदनमा विशस्व(५)" इति। हे 'अग्ने', 'इम' स्रुचि अवस्थित द्रव्यविशेष 'धय' पिब। कीदृश ?—'अपा' मातृस्थानीयाना 'स्तन' स्तनस्थानीय, घृतस्य गोद्वारा उदककार्य्यत्वात् तदीयस्तनत्वोपचार। 'ऊर्जस्वन्त' रसवन्त 'प्रप्यातम्' अतिप्रवृद्ध, 'सरिरस्य' 'मध्ये',—यथा जलस्य मध्ये 'उत्स' प्रवाहयक्ति, तथा प्रभूत, घृत 'मधुमन्त' माधुर्य्योपेत 'जुषस्व'

सेवस्व। हे 'जव' विलक्षणाग्ने, 'समुद्रियं' समुद्रसम्बन्धि 'सदनं' तदीयस्थानम् 'आ विशस्व' प्रविश।

एतेन मन्त्रेण साध्यं होमं विधत्ते,—"यो वै अग्निं प्रयुज्य न विमुञ्चति यथाश्वो युक्तोऽविमुच्यमानः क्षुध्यन् पराभवति, एवमस्याग्निः परा भवति तं पराभवन्तं यजमानोऽनु परा भवति सोऽग्निं चित्वा लूक्षो भवति। इमᳪ स्तनमूर्जस्वन्तं धयापामित्याज्यस्य पूर्णाᳪ स्रुचं जुहोति एष वै अग्नेर्विमोको विमुच्यैवास्मा अन्नमपि दधाति[१]" इति। 'यो' यजमानो "अग्निं युनज्मि" (४।७।१३अ०) इत्यादिभिर्मन्त्रैरेतम् 'अग्निं' कर्मणि 'प्रयुज्य' 'न' विमुञ्चेत्, 'अस्य' यजमानस्य 'अग्निः' 'परा भवति' विनश्यति, 'यथा' लोके 'अश्वो' रथे युज्यमानश्चिरम् 'अविमुच्यमानः' क्षुधाक्रान्तः पराभूतः पीडितो भवति तद्वत्। अग्निपराभवम् 'अनु' 'यजमानोऽपि' 'परा भवति'। तादृशः 'अग्निं' 'चित्वा' 'लूक्षः' सर्वदा रूक्षो दाक्ष्यरहितो 'भवति', अतो जुहुयात्। 'एष' च होमः 'अग्नेर्विमोकः'। ततोऽग्निं 'विमुच्य' 'अस्मै' 'अन्नं' समर्पितवान् भवति।

पुनः प्रकारान्तरेण प्रशंसति,—"तस्मादाङ्गर्यस्यैवं वेद यस्य न क्षुधायुङ्ह वै वाजी सुहितो दधातीत्यग्निर्वाव, वाजी तमेव तत्प्रीणाति स एनं प्रीतः प्रीणाति वसीयान् भवति[२]" इति। यस्मादेवाग्निं विमुच्य अन्नं प्रदीयते,'तस्मात्' कारणाल्लोके 'यश्च' पुरुषः एनमग्निहोत्रान्नं जानाति, 'यश्च' 'न' जानाति तादृशः सर्वेऽप्येवं 'आङ्गः'। 'सुहितः' सम्यक्खादितो, अश्वो 'वाजी' 'सुधायं' स्वस्योपरि धारणीयं पुरुषं पुनःपुनर्धारयित्वा गन्तव्यस्थले नीत्वा 'दधाति' स्थापयतीति। अथ ह-शब्दः आश्चर्य-

* एतमिव्यत्र 'एवम्' इति सम्यक्पाठः।

गोपालप्रसिद्धिं दर्शयति। एवं लौकिकोक्तौ सत्यामत्राप्यग्निरेव वाजिस्थानीयः। 'तमेव' अग्निं तेन विमोकहोमेन 'प्रीणाति'। 'स' च 'प्रीतः' अग्निः 'एनं' यजमानं प्रीणयति। स च यजमानोऽतिशयेन धनवान् 'भवति'। एतस्य च ब्राह्मणस्य आम्नातेष्वनुवाकेष्वन्त-र्भावासम्भवात् अन्ते निवेशः। एवमन्यस्यापि तादृशस्य द्रष्टव्यम्।

अत्र मीमांसा।

एकादशाध्यायस्य तृतीयपादे (८अ०) चिन्तितम्,—

"किमग्निमोकः सर्वान्ते मुख्यान्ते वाऽग्रिमो, यतः।
योगे सर्वार्थता, मैवं, मुख्यार्थोऽसौ तदन्तिमः॥

अग्निचयने योगविमोकौ अग्नेः श्रूयेते,—"अग्निं युनज्मि" (४।७।१३अ०) इतिमन्त्रहोमो योगः। "इमं स्तनम्" (५।५।१०।६) इतिमन्त्रहोमो विमोकः। स च साङ्गप्रधानविषयः सर्वप्रयोगान्ते कर्त्तव्यः। कुतः? योगस्य सर्वार्थत्वेन मध्ये तद्विमोकासम्भवात्। इति प्राप्ते ब्रूमः,— 'पञ्चभिर्युनक्ति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमाप्नोति' इत्यनेन यज्ञप्राप्तिवचनेन योगस्य प्रधानार्थत्वावगमात् प्रधानकर्मणोऽन्ते विमोकं कुर्यात्"। तत्रैव वार्त्तिककारमतेन चिन्तितम्,—

"व्यत्यस्तेतावुभौ पचावुत्पत्तावविशेषतः।
सर्वार्थत्वं गुणे भाति सर्वान्ते तद्विमोचनम्॥

'प्रधानान्ते विमोकः' इति यो भाष्ये सिद्धान्तः स एवात्र पूर्वः पक्षः। 'अग्निं युनज्मि शवसा घृतेन इति जुहोत्यग्निमेव तद्युनक्ति' इत्येतत् योगस्योत्पत्तिवाक्यम्। 'पञ्चभिर्युनक्ति' इति गुणविधिः। तत्र न तावदुत्पत्तौ प्रधानमात्रगामी योग इत्यस्यार्थस्य गमको विशेषोऽस्ति"

गुणविधिष्वपि यज्ञशब्दो न प्रधानमात्रमाचष्टे, किन्तु साङ्गम्। तस्मात् योगस्य सर्वार्थत्वादिमोकोऽपि सर्वान्ते कर्तव्य इति"।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः ॥०॥

---

इन्द्रा॑य॒ राज्ञे॑ सूक॒रो व॑रु॒णाय॒ राज्ञे॑ कृ॒ष्णो य॒माय॒ राज्ञे॒ ऋश्य॑ ऋष॒भाय॒ राज्ञे॑ गव॒यः शा॑र्दू॒लाय॒ राज्ञे॒ गौ॒रः पु॑रुषरा॒जाय॑ म॒र्कटः॑ क्षिप्रश्ये॒नस्य॒ वर्ति॑का नील॒ङ्गोः क्रिमिः॒ सोम॑स्य॒ राज्ञः॑ कुलु॒ङ्गः सिन्धोः॑ शिंशु॒मारो॑ हि॒मव॑तो ह॒स्ती ॥ १ ॥

इन्द्रा॑य॒ राज्ञेऽष्टावि॑ꣳशतिः ॥ ११ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके एकादशोऽनुवाकः ॥ ० ॥

---

सर्पाहुतिर्महाहोमो मोकश्च दशमे श्रुताः।

अथाग्निशेषमवस्थाप्याश्वमेधशेषभूता एकादशिनः पशवो विधीयन्ते। एकादशानां पशूनां समूहः एकादशिनी, सा चैकैकस्मिन्ननुवाके एकैका विधीयते। तत्र प्रथमामेकादशिनीमाह,—"इन्द्राय राज्ञे सूकरो वरुणाय राज्ञे कृष्णो यमाय राज्ञे ऋश्य ऋषभाय राज्ञे गवयः शार्दूलाय राज्ञे गौरः पुरुषराजाय मर्कटः क्षिप्रश्येनस्य वर्तिका नीलङ्गोः क्रिमिः सोमस्य राज्ञः कुलुङ्गः सिन्धोः शिंशुमारो हिमवतो हस्ती" इति।

अथ चतुर्थ्या षष्ठ्या तद्धितेन च देवतासम्बन्धः प्रतिपाद्यते। 'इन्द्राय' देवानां 'राज्ञे' 'सूकरो' वराहः आलभ्यते। 'वरुणाय' अपां 'राज्ञे' 'कृष्ण.' कृष्णमृग.। 'यमाय' धर्माणां 'राज्ञे' 'ऋश्यः' मृगविशेषः। 'वृषभाय' गवां 'राज्ञे' 'गवयो' गोसदृशः सास्नारहितः। 'शार्दूलाय' आरण्यानां 'राज्ञे' 'गौरो' गौरमृगः, रक्त इत्येके, शुक्ल इत्यन्ये। पुरुषाणां राज्ञे प्रधानाय 'मर्कटः' वानरः। 'क्षिप्रश्येनस्य' - क्षिप्रगते. शकुनिराजस्य श्येनविशेषस्य 'वर्त्तिका' चटकासदृशी। 'नीलङ्गो.' नीलप्रभस्य सर्पविशेषस्य सरीसृपाणां राज्ञे 'क्रिमिः' गोमयपिण्डकारी। 'सोमस्य' ओषधीनां 'राज्ञ.' 'कुलुङ्ग.' चित्रगः कटुकस्वरः। 'सिन्धो.' समुद्रस्य 'शिंशुमारः' ग्राहः। 'हिमवत.' पर्वतानां राज्ञ' 'हस्ती' गज.॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके एकादशोऽनुवाक.॥०॥

---

मयुः, प्राजापत्य ऊलो हलीक्ष्णो वृषदꣳशस्ते धातुः सरस्वत्यै शारिः श्येता पुरुषवाक् सरस्वते शुकः श्येतः पुरुषवागारण्योऽजो नकुलः शका ते पौष्णा ॥

[...]विꣳशतिः ॥ १२ ॥

[...]त्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके [...]नुवाकः ॥ ० ॥

अथाच दशिनीमाह,—

"मयु. प्राजापत्यः उलो हलीक्ष्णो वृषदंश. ते धातुः सरस्वत्यै शारि. श्येता पुरुषवाक् सरस्वते शुक. श्येतः पुरुषवाक आरण्योऽजो नकुल. शका ते पौष्णाः वाचे क्रौञ्च." इति। 'मयु.' किंपुरुष इत्येके, अरण्यमयूर इत्यपरे। स 'प्राजापत्य.'। उलादयस्त्रयो 'धातु'। 'उल' काकः, उलूक इत्यन्ये, दिव्यकर्ण इत्यपरे। 'हलीक्ष्ण.' हणहिंसक इत्येके, हरितचटक इत्यन्ये। 'वृषदंशो' मार्जार, तत्सदृश इत्येके। 'सरस्वत्यै' 'शारि.' शुकस्त्री, कीदृशी? 'श्येता' श्वेतवर्णा। पुनश्च विशेष्यते—'पुरुषवाक्',—पुरुषवत् वदितुं समर्था। 'सरस्वते' 'शुकः' 'श्येतः' 'पुरुषवाक्'। पूर्ववत् व्याख्येयम्। आरण्याजादयस्त्रयः 'पौष्णा.'। 'आरण्योऽज.' शरभ.। 'नकुल.' प्रसिद्ध.। 'शका' मक्षिका इत्येके, दीर्घकर्णो मृगविशेष इत्यन्ये। 'वाचे' वाग्देवतायै 'क्रौञ्चो' दारुणस्वनः पक्षिविशेष॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके द्वादशोऽनुवाकः॥०॥

---

अ॒पां नप्त्रे॑ ज॒षो ना॒क्रो मक॑रः कुली॒कय॒स्तेऽकू॑पा॒रस्य॑ वा॒चे पै॑ङ्गरा॒जो भगा॑य कुपीत॑क आ॒ती वा॑ह॒सो द॑र्वि॒दा ते वा॑य॒व्या॑ दि॒ग्भ्य॑श्चक्रवा॒कः॥ १॥

अ॒पां नप्त्रे॑। एका॒न्नविꣳश॒तिः॥ १३॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके त्रयोदशोऽनुवाकः॥ ०॥

द्वयोरनुवाकयोः एकादशिनी दशिनी चेति द्वौ मन्त्रावुक्तौ। एव-मुत्तरत्रापि यथायोगं द्रष्टव्यम्।

अथ तृतीयं मन्त्रमाह,—"अपां नप्त्रे जषो नाक्रो मकरः कुलीकयः ते अकूपारस्य वाचे पैङ्गराजो भगाय कुषीतकः आती वाहसो दर्विदा ते वायव्याः दिग्भ्यश्चक्रवाक." इति। 'अपां नप्त्रे' अपाम् अविनाशयित्रे देवविशेषाय 'जषः' जषवत्तुण्डो मकरः। नाक्रादयस्त्रयः 'अकूपारस्य' समुद्रस्य। 'नाक्रः' दीर्घतुण्डो ग्राहः, दीर्घपुच्छो मत्स्यविशेष इत्येके। 'मकरः' पर्यस्ततुण्ड.। 'कुलीकयो' बहुपात् मत्स्यविशेषः। 'वाचे' 'पैङ्गराजः' रक्ताचो भरद्वाजः, समुद्रतरङ्ग-चारी महापक्षी इत्यन्ये, चकोर इत्यपरे। 'भगाय' 'कुषीतक' समुद्रकाकः। आत्यादयस्त्रयो 'वायव्या.',—'आती' कुरङ्गी, चाष इत्यन्ये। 'वाहसः' पृष्ठे तृणग्राहु-वाही जन्तुः। 'दर्विदा' जलपक्षी, द्रुमकुक्कुट इत्येके। 'दिग्भ्यः' दिग्देवताभ्यः। 'चक्रवाक.' प्रसिद्धः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके त्रयोदशोऽनुवाकः॥०॥

---

बलायाजगर आखुः सृजया शयण्डकास्ते मैत्रा मृत्यवेऽसितो मन्यवे स्वजः कुम्भीनसः पुष्करसादो लोहिताहिस्ते त्वाष्ट्राः प्रतिश्रुत्कायै वाहसः॥१॥१४॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके चतुर्दशोऽनुवाकः॥ ० ॥

अथ चतुर्थं मन्त्रमाह,—

"बलाय अजगर आखुः सृजया शयण्डकः ते मैत्राः मृत्यवे असितो मन्यवे स्वजः कुम्भीनसः पुष्करसादो लोहिताहिः ते त्वाष्ट्राः प्रतिश्रुत्कायै वाहसः" इति। 'बलाय' बलाख्याय देवाय 'अजगरो' महोरगः। आखादयस्त्रयो 'मैत्राः'। 'आखु' प्रसिद्धः। 'सृजया' नीलमक्षिका, सूक्ष्मसर्प इत्येके, नीलमहिष इत्यपरे। 'शयण्डकः' कृकलासः। 'मृत्यवे' 'असितः' कृष्णसर्पः। 'मन्यवे' 'स्वजः' 'सर्पविशेषः' बिलादिषु यः स्वयमेव जायते। कुम्भीनसादयस्त्रयः 'त्वाष्ट्राः'। 'कुम्भीनसः' स्वापशीलः सर्पविशेषः। 'पुष्करसादः' पुष्करसर्पः, भ्रमर इत्येके। 'लोहिताहिः' श्वेतलोहितसर्पः। 'प्रतिश्रुत्कायै' प्रतिश्रुत्यै, 'वाहसः' कल्पप्रमाणसर्पः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके चतुर्दशोऽनुवाकः॥

---

पुरुषमृगश्चन्द्रमसे गोधा कालका दार्वाघाटस्ते वनस्पतीनामेण्यह्ने कृष्णो रात्रियै पिकः क्ष्विङ्का नीलशीर्ष्णी तेऽर्यम्णे धातुः कत्कटः॥ १॥ १५॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके पञ्चदशोऽनुवाकः॥ ०॥

अथ पञ्चमं मन्त्रमाह,—

"पुरुषमृगः चन्द्रमसे गोधा कालका दार्वाघाट. ते वनस्पतीनाम् एणी अह्ने कृष्णः रात्रियै पिकः क्ष्विङ्का नीलशीर्ष्णी ते अर्यम्णे धातुः कत्कट." इति। 'पुरुषमृगः' नरमुखो मृगविशेष. 'चन्द्रमसे'। गोधादयस्त्रयो॰ 'वनस्पतीनाम्'। 'गोधा' मुसलिका, महागोधा इत्येके। 'कालका' सरटा। 'दार्वाघाटः' द्रुमकुक्कुटः। 'एणी' मृगी 'अह्ने'। 'कृष्णः' कृष्णमृगः 'रात्रियै'। पिकादयस्त्रयः 'अर्यम्णे'। 'पिकः' कोकिलः। 'क्ष्विङ्का' रक्तमुखी वानरी। 'नीलशीर्ष्णी' कृष्णशिरस्का। 'धातुः' 'कत्कटः' विलवासी कर्कटः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके पञ्चदशोऽनुवाकः ॥०॥

---

सौरी बलाकर्श्यो मयूरः श्येनस्ते गन्धर्वाणां वसूनां कपिञ्जलो रुद्राणां तित्तिरी रोहित्कुण्डृणाची गोलत्तिका ता अप्सरसामरण्याय सृमरः॥ १॥ १६॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके षोडशोऽनुवाकः॥ ०॥

अथ षष्ठं मन्त्रमाह,—

"सौरी बलाका ऋश्यो मयूरः श्येनः ते गन्धर्वाणां वसूनां कपिञ्जलो रुद्राणां तित्तिरिः रोहित् कुण्डृणाची गोलत्तिका ताः

अप्सरसाम् अरण्याय सृमरः" इति। 'सौरी' 'बलाका' प्रसिद्धा। ऋश्यादयस्त्रयो 'गन्धर्वाणाम्', ते तु प्रसिद्धाः। 'वसूनां' 'कपिञ्जल' अधोनिपाती। 'रुद्राणां' 'तित्तिरिः' परुषस्वरः। रोहितादयस्त्रिमः 'अप्सरसाम्'। 'रोहित्' ऋष्यस्त्री। 'कुण्डृणाची' गृहगोधिका। 'गोलत्तिका' खञ्जरीटका, पीतशुक्लेति केचित्। 'अरण्याय' अरण्यनामकाय, 'सृमरः' चमरः॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके षोडशोऽनुवाकः॥०॥

---

पृष॒तो वै॑श्वदे॒वः पि॒त्वो न्य॒ङ्कुः क॒शस्तेऽनु॑मत्या अन्यवा॒पोऽर्धमा॒साना॑ मा॒सां क॒श्यपः॒ क्वयिः॒ कु॒टरु॑-र्दात्यौ॒हस्ते सि॑नीवा॒ल्यै बृह॒स्पत॑ये शित्पु॒टः॥ १॥ १७॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके सप्तदशोऽनुवाकः॥ ०॥

अथ सप्तमं सप्तमाह,—

"पृषतो वैश्वदेवः पित्वो न्यङ्कुः कशः ते अनुमत्यै अन्यवापः अर्धमासानां मासां कश्यपः क्वयिः कुटरुः दात्यौहः ते सिनीवाल्यै बृहस्पतये शित्पुटः" इति। 'पृषतः' श्वेतबिन्दुशबलाङ्गो मृगः। पित्वादयस्त्रयः 'अनुमत्यै'। 'पित्वो' व्याघ्रः। 'न्यङ्कुः' हरिणः, वृष इत्येके। 'कशः' 'अन्यवापः' 'कश्यपः' 'क्वयिः' कुटरवो* मृगविशेषाः।

---

* अत्र 'कुटरु,—रुते' इत्येतादृशः कोऽपि पाठो भवितुं युक्तः।

'दार्त्यौह.' कालकण्ठ इत्येके, पुष्करिणीवमतिरित्यन्ये। 'हृहस्पतये' 'शित्पुटः' मार्जारसदृशो जातिविशेषः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके सप्तदशोऽनुवाकः ॥०॥

---

शका, भौमी पांचः कशो मान्थीलवस्ते पितॄणा-मृतूनां जहका संवत्सराय लोपा कपोत उलूकः शशस्ते नैर्ऋताः कृकवाकुः सावित्रः ॥ १ ॥

बलाय। पुरुषमृगः। सौरी। पृषतः। शका। अष्टादश। अष्टादश ॥ १८ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके अष्टादशोऽनुवाकः ॥ ० ॥

अथाष्टम सद्गमाह,—

"शका भौमी पांचः कशो मान्थीलवः ते पितृणाम्, ऋतूनां जहका, संवत्सराय लोपा कपोत. उलूकः शश. ते नैर्ऋताः कृकवाकुः सावित्रः" इति। 'शका' मक्षिका। 'भौमी' भूमिदेवता। पांचादय-स्त्रय. 'पितृणाम्'। पांचकशौ पक्षिविशेषौ। 'मान्थीलवः' जल-कुक्कुट.। 'ऋतूनां' 'जहका' बिलवासी क्रोष्टा। 'संवत्सराय' 'लोपा' श्मशानशकुनिः। कपोतादयस्त्रयो नैर्ऋता.', ते च प्रसिद्धाः। 'कृकवाकु.' कुसरण्यकुक्कुटः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके अष्टादशोऽनुवाकः ॥०॥

---

रुरू रौद्रः कृकलासः शकुनिः पिप्पका ते शरव्यायै हरिणो मारुतो ब्रह्मणे शार्गस्तरक्षुः कृष्णः श्वा चतुरक्षो गर्दभस्त इतरजनानामग्नये धूङ्क्ष्णा ॥ १ ॥

रुरुः। विꣳशतिः ॥ १९ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके ऊनविंशोऽनुवाकः ॥ * ॥

नवमं संघमाह,—

"रुरुः रौद्रः कृकलासः शकुनिः पिप्पका ते शरव्यायै हरिणो मारुतो ब्रह्मणे शार्गः तरक्षु कृष्णः श्वा चतुरक्षो गर्दभ ते इतरजनानाम् अग्नये धूङ्क्ष्णा" इति। 'रुरु.' मृगविशेषः। कृकलासादयस्त्रय. 'शरव्यायै'। शरव्या बाणधारिणी देवता। 'कृकलास.' कामरूपी। 'शकुनि.' काकः। 'पिप्पका' पक्षिविशेषः। 'हरिण.' प्रसिद्धः। 'शार्ग.' आरण्यचटकः। तरक्ष्वादयस्त्रयः 'इतरजनानाम्'। 'तरक्षु' व्याघ्रविशेषो गर्दभाकारः। कृष्णवर्णः 'चतुरक्षः' 'श्वा' अक्ष्णोः उपरि बिन्दुद्वयवान् चतुरक्ष.। 'धूङ्क्ष्णा' श्वेतकाकी॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके एकोनविंशोऽनुवाकः ॥०॥

---

अलज आन्तरिक्ष उद्रो मद्गुः प्लवस्तेऽपामदित्यै हꣳससाचिरिन्द्राण्यै कीर्शा गृध्रः शितिकक्षी वार्ध्राणसस्ते दिव्या द्यावापृथिव्या आवित् ॥ १ ॥ २० ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके विंशोऽनुवाकः ॥ ० ॥

दशमं मन्त्रमाह,—

"अलज आन्तरिक्ष उद्रो मद्गुः प्लवः ते अपाम् अदित्यै हꣳससाचिः इन्द्राण्यै कीर्शा गृध्रः शितिकक्षी वार्ध्राणसः ते दिव्याः द्यावापृथिव्या आवित्" इति। 'अलजो' भासः। 'आन्तरिक्षः' प्रसिद्धः। उद्रादयस्त्रयः 'अपाम्'। 'उद्रो' जलबिडालः। 'मद्गुः' जलकाकः। 'प्लवः' तस्यैव अवान्तरजातिविशेषः। 'हंससाचि' सर्वश्वेतो हंसः। 'कीर्शा' कुलाली शकुनिका। गृध्रादयस्त्रयो 'दिव्याः'। 'गृध्रः' प्रसिद्धः। 'शितिकक्षी' पाण्डरोदरो गृध्रः। 'वार्ध्राणसः' खड्गमृगः। 'आवित्' शल्ली सूचीरोमा ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके विंशोऽनुवाकः ॥०॥

---

सुपर्णः पार्जन्यो हꣳसो वृको वृषदꣳशस्त ऐन्द्रा अपामुद्रोऽर्यम्णो लोपाशः सिꣳहो नकुलो व्याघ्रस्ते महेन्द्राय कामाय परस्वान् ॥ १ ॥

पेत." इति। अश्वादयस्त्रयः 'प्राजापत्या'। 'तूपर.' शृङ्गहीन। 'गोमृगो' गोर्हयामुत्पन्न। मकथ्योर्लोमशबङ्गलोमचाश्मकथ्यौ*। 'पृषोदर' श्वेतविन्दुमदुदर। 'बलक्ष' श्वेतः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके त्रयोविंशोऽनुवाकः ॥०॥

---

अग्नयेऽनीकवते रोहिताञ्जिरनड्वानधोरामौ सावित्रौ पौष्णौ रजतनाभी वैश्वदेवौ पिशङ्गौ तूपरौ मारुतः कल्माष आग्नेयः कृष्णोऽजः सारस्वती मेषी वारुणः कृष्ण एकशितिपात्पेत्वः ॥ १ ॥

अग्नयेऽनीकवते द्वाविंशतिः ॥ २४ ॥

यदेकेन। प्रजापतिः। यजुषा। आपः। विश्वकर्मा। अग्न आयाहि। सुवर्गाय,-वज्रः। गायत्रेण। अग्ने उदधे। समीची। इन्द्राय। मयुः। अपां। बलाय। पुरुषमृगः। सौरी। पृषतः। शकाः। रुरुः। अलजः। सुपर्णः। आग्नेयः। अश्वः। अग्नयेऽनीकवते। चतुर्विंशतिः ॥ २४ ॥

यदेकेन (१।१)। स पापीयान् (२।४)। एतद्वा अग्नेः

---

* एवमेव प्रायः सर्व्वत्र पाठः। 'लोमशसक्थौ बलूलोमशसक्थौ' इत्येवरूपः कश्चित् पाठो भवितु युक्तः।

शिरः (४।४)। धनुस्तद्। (७।३)। देवास्त्वेन्द्रज्येष्ठाः (८।५)। अपां नप्त्रे (१३।१)। अश्वस्तूपरः (२३।१)। द्विषष्टिः॥ ६२* ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके चतुर्विंशोऽनुवाकः ॥ ० ॥†

इति संहितापञ्चमाष्टके‡ पञ्चमः प्रश्नः समाप्तः ॥

॥ ० ॥ हरिः ओम्॥ ० ॥

तृतीय मन्त्रमाह,—

§"अग्नये अनीकवते रोहिताञ्जि अनड्वान् अधोरामौ सावित्रौ पौष्णौ रजतनाभी वैश्वदेवौ पिशङ्गौ तूपरौ मारुत कल्माष. आग्नेयः कृष्णोऽज. सारस्वती मेषी वारुणः कृष्ण एकशितिपात् पेत्वः" इति। 'रोहिताञ्जि.' लोहितलिङ्ग ‍। 'अधोरामौ' व्याख्यातौ। 'रजतनाभी' 'पिशङ्गौ' गोरोचनवर्णौ। 'तूपरौ' शृङ्गहीनौ। 'कल्माष.' उक्तः। 'एकशितिपात्' श्वेतैकपाद.। 'पेत्वो' गलितमुष्को मेष.।

---

* प्रथमे द्वितीये च अनुवाके प्रत्येक सप्तेति १४, तृतीये ३, चतुर्थे ४, पञ्चमे ४, षष्ठे ३, सप्तमे ५. अष्टमे ३, नवमे ५, दशमे ७, एवम् आ एकादशात्, यावत् चतुर्विंशम् एकैकमिति १४ इति मिलित्वा द्विषष्टि (६२) सम्पद्यते।

† अयमङ्क A पुस्तके नास्ति। अयमपि अङ्क "यदेकेन" इत्यस्मात् पूर्व्वं भवितुं युक्त।

‡ "इति तैत्तिरीयशाखाया पञ्चमाष्टके" इति A पुस्तके पाठः।

§ लोहितपिङ्गल इति का० क्री० पु० पाठ।

पेत:" इति। अश्वादयस्त्रयः 'प्राजापत्याः'। 'तूपरः' शृङ्गहीनः। 'गोमृगो' गोर्म्हिष्यामुत्पन्नः। सक्थ्योर्लोमयुक्तलोमवत्सक्थ्यौ"। 'पृषोदरः' श्वेतविन्दुमदुदरः। 'वलक्ष' श्वेतः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके चयोविंशोऽनुवाकः ॥०॥

---

अ॒ग्नयेऽनी॑कवते॒ रोहि॑ताञ्जिरन॒ड्वान॒धोरा॑मौ सावि॒त्रौ पौ॒ष्णौ र॑ज॒तना॑भी वैश्वदे॒वौ पि॒शङ्गौ॑ तू॒प॒रौ मा॑रु॒तः क॒ल्माषं॑ आ॒ग्ने॒यः कृ॒ष्णो [illegible]

कृष्ण एक॑शितिप [illegible]ता. 'प्राणाय'(४) इति चतुष्टयात्॥

[illegible]दान्मन्त्रभेदाः 'त्वा चतु'(५।५।४)-इत्यनुपद्यते।

अङ्कां रूपाणीष्टकाः स्युः 'अग्न आ याहि'(१)-पञ्चकात्॥

'लोक पृण'(६) इति मन्त्रस्य नान्तरोऽनुचरो भवेत्।

'इन्द्रं विश्वा' ऋगैन्द्री स्यात् 'यत्ते' पश्चोपतिष्ठते॥

येऽग्नयो(७) बहुभिर्मन्त्रैः प्रयास्वनुपतिष्ठते।

सामनामानि(८) गायत्रं बृहत्तद्रथन्तरम्॥

ऋतुस्था-यज्ञायज्ञीय वारवन्तीयकं तथा।

श्येतं प्रजापतेर्हृदय पृष्ठं स्तोत्रार्थसाम हि॥

पक्षाकारं चित वह्निं तैरङ्गैरुपतिष्ठते।

आत्मेष्टका उपादध्यात् 'प्राच्या त्वा' इत्यादि मन्त्रतः॥

'अग्ने',(९),होम पञ्चभिः स्याद्भागैर्मन्त्रभेदनम्।

शिरः (४।४)। धनुंस्तत्। (७।३)। देवास्त्वेन्द्रज्येष्ठाः (९।५)। अपां नप्त्रे (१३।१)। अश्वस्तूपरः (२३।१)। द्विपंष्टिः॥ ६२*॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके चतुर्विंशोऽनुवाकः॥ ०॥†

इति संहितापञ्चमाष्टके[1] पञ्चमः प्रश्नः समाप्तः॥

॥ ० ॥ हरिः ओम्॥ ०॥

तृतीयं सङ्गमाह,—

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायनाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामके तैत्तिरीययजुःसंहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके चतुर्विंशोऽनुवाकः॥ ०॥

समाप्तश्च प्रपाठकः॥

॥ ० ॥ ॐतत्सत्॥ ०॥

॥०॥ श्रीगणेशाय नमः ॥०॥

# तैत्तिरीयसंहिताभाष्ये ।

पञ्चमकाण्डे षष्ठप्रपाठके

प्रथमोऽनुवाकः ।

हरिः ओम् ॥

हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । अग्निं या गर्भन्दधिरे विरूपास्ता न आपः शꣳ स्योना भवन्तु[१] । यासाꣳ राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम् । मधुश्चुतः शुचयो याः पावकास्ता न आपः शꣳ स्योना भवन्तु[१] । यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति । याः पृथिवी पयसोन्दन्ति ॥ १ ॥

शुक्रास्ता न आपः शꣳ स्योना भवन्तु[१] । शिवेन मा चक्षुषा पश्यतापः शिवया तनुवोप स्पृशत त्वचं मे सर्वाꣳ अग्नीꣳ रप्सुषदो हुवे वो मयि वर्चो बलमोजो नि धत्त[४] । यददः सम्प्रयतीरहावनदता हते । तस्मादा

आ नद्यो नाम स्थ ता वो नामानि सिन्धवः[५]। यत् प्रेषिता वरुणेन ताः शीभं समवल्गत ॥ २ ॥

तदाप्नोदिन्द्रो वो यतीस्तस्मादापो अनु स्थन[६]। अपकामं स्यन्दमाना अवीवरत वो हिकम्। इन्द्रो वः शक्तिभिर्देवीस्तस्माद्वार्णाम वो हितम्[७]। एको देवो अप्यतिष्ठत् स्यन्दमाना यथावशम्। उदानिषुर्महीरिति तस्मादुदकमुच्यते[८]। आपो भद्रा घृतमिदाप आसुरग्नीषोमौ बिभ्रत्याप इत्ताः। तीव्रो रसो मधुपृचाम् ॥ ३ ॥

आरङ्गम आ मा प्राणेन सह वर्चसा गन्[९]। आदित् पश्याम्युत वा शृणोम्या मा घोषो गच्छति वाङ् न आसाम्। मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः[१०]। आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे[११]। यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः[१२]। तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः[१३]। दिवि श्रयस्वान्तरिक्षे यतस्व पृथिव्या सम्भव ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वा[१४] ॥ ४ ॥

उन्दन्ति। समवल्गत। मधुपृचाम्। मातरः। द्वाविंशतिश्च ॥ १ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ ० ॥

---

श्रीगणेशाय नमः।

हरिः ओम्।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥
उक्ता वायव्यपश्वाद्याः पञ्चमे हि प्रपाठके।
कुम्भेष्टकामन्त्रणादीन् षष्ठे मन्त्रानुदीरयेत्॥

यदुक्तं सूत्रकारेण,—'हिरण्यवर्णाः इति उपहिता अभिमन्त्रयते' इति।

तत्र कुम्भेष्टकाभिमन्त्रणार्थानां पञ्चोदशानाम् ऋचां मध्ये प्रथमामाह,—"हिरण्यवर्णाः शुचयः पावकाः यासु जातः कश्यपो यासु इन्द्रः। अग्निं याः गर्भं दधिरे विरूपाः ताः नः आपः शं स्योनाः भवन्तु[1]" इति। आपः तावन्निर्मलत्वेन भास्वरत्वात् हिरण्यसदृशवर्णोपेताः। तथा 'शुचयः' स्वयं शुद्धाः। 'पावकाः' स्नानादिना शरीरादिशुद्धिहेतवश्च। 'यासु' अप्सु कश्यपाख्यः प्रजापतिरुत्पन्नः। 'यासु' अप्सु 'इन्द्रः' अपि उत्पन्नः। 'अग्निं' च 'याः' आपो गर्भत्वेन 'दधिरे'। तदेतत्त्रयं शाखान्तरगतेभ्योऽर्थवादेभ्यो द्रष्टव्यम्। अत्रापि 'अग्ने गर्भो अपामसि' (४।२।३।२) इति चतुर्थकाण्डे

मन्त्रान्तरमाम्नातम् । ईदृश्यो या 'आप','ताः' 'स्योनाः' सुखकारिण्यः, अतोऽस्मान् 'शं' 'भवन्तु' सुखं प्रापयन्तु ।

अथ द्वितीयामाह,—"यासाꣳ राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम् । मधुश्चुतः शुचयो याः पावकास्ता न. आप. शꣳ स्योना भवन्तु[१]" इति । वरुणाख्यो 'राजा' अपाम् अधिपतिः 'यासाम्' अपां 'मध्ये' 'याति' गूढं सञ्चरति । किं कुर्वन् ? 'जनानां' 'सत्यानृते' 'अवपश्यन्' स्नानपानादौ यत् यथाशास्त्रमाचरति तत्सर्वम् अवपश्यन् । 'ताः' च 'आपः' मधुररसं श्चोतन्ति क्षारयन्ति इति 'मधुश्चुतः' । 'शुचयः' इत्यादि पूर्ववत् ।

अथ तृतीयामाह,—"यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति । या. पृथिवीं पयसा उन्दन्ति शुक्राः ता न. आप शꣳ स्योना. भवन्तु[२]" इति । 'दिवि' द्युलोके 'देवा.' 'यासाम्' अपां सम्बन्धि सारं 'भक्षं' 'कृण्वन्ति' स्वभोज्यं कुर्वन्ति । पीयूषं हि देवै. सेव्यते, तच्च अपां सारभूतम् । 'या.' च आपः 'अन्तरिक्षे' वृष्टिधारारूपेण बहुप्रकारा 'भवन्ति' । 'या.' च आपः 'पृथिवीं' सर्वां 'पयसा' स्वकीयेन द्रवेण 'उन्दन्ति' क्लेदयन्ति । 'शुक्राः' निर्मला.। 'ता न. आप.' इत्यादि पूर्ववत् ।

अथ चतुर्थीमाह,—"शिवेन मा चक्षुषा पश्यत आपः शिवया तनुवा उप स्पृशत त्वचं मे । सर्वाꣳ अग्नीꣳर् अप्सुषदो हुवे व. मयि वर्चो बलम् ओजो नि धत्त[३]" इति । हे 'आपः', यूयं 'शिवेन' 'चक्षुषा' शान्तया दृष्ट्या 'मा' 'पश्यत' माम् अवलोकयत । तथा 'शिवया तनुवा' शान्तेन त्वदीयेन शरीरेण 'मे' 'त्वचं' 'उप स्पृशत' ।

अहमपि 'अप्सुषद.' जलेषु स्थितान् 'सर्वान्' अपि अग्नीन् 'जुहे' जुहोमि, होमेन तर्पयामि। 'वः' युष्मदीयं यत् 'वर्च' कान्तिः, यच 'बलं', यदपि 'ओजः' बलहेतुरष्टमो धातुः, तत्सर्वं 'मयि' 'नि धत्त' स्थापयत।

अथ पञ्चमीमाह,—"यत् अदः सम्प्रयती. अहौ अनदता हते। तस्मात् आ नद्यो नाम स्थ ता वो नामानि सिन्धवः[४]" इति। 'यत्' यस्मात्कारणात् 'अदः' द्युलोकस्थानात् 'सम्प्रयती.' सम्यक् प्रकर्षेण गच्छन्त्यो हे आपः, यूय, अहिशब्दो मेघनामधेयं, यस्मिन् 'हते' युष्माभिस्ताडिते सति 'अनदत' नादं कृतवत्यः। प्रवाहगतपाषाणेष्विव मेघेषु जलाघातेन शब्दो जायते। यस्मान्नादं कृतवत्य, 'तस्मात्' 'आ' समन्तात् सर्वेष्वपि स्थानेषु 'नद्यो नाम स्थ' नदीति नामधेयं प्राप्ताः। हे 'सिन्धवः' स्यन्दनशीला आपः, 'व' युष्माकं 'ताः' तानि 'नामानि' तादृशानि निर्वचनसाध्यानि नामानि विद्यन्ते।

अथ षष्ठीमाह,—"यत् प्रेषिताः वरुणेन ताः शीभं समवल्गत। तद् आप्नोत् इन्द्रो व. यतीः तस्मात् आपो अनु स्थन[६]" इति। हे आपः, 'यत्' यस्मात्कारणात् 'वरुणेन' 'प्रेषिताः' 'ताः' यूयं 'शीभं समवल्गत' शुभं यथा भवति तथा सम्यक् वल्गनोपेतं नृत्तं हर्षेण कृतवत्यः। 'तत्' तदानीं 'यती.' प्रसरन्ती. 'व.' युष्मान् 'इन्द्रः' उत्सुकः सन् द्रष्टुम् 'आप्नोत्'। 'तस्मात्' कारणात् आप्यन्ते इति व्युत्पत्त्या 'आप.' इति नामधेयं प्राप्य 'अनु स्थन' सर्वेषामनुकूला स्थता.*।

---

* एवमेव सर्व्वत्र पाठः। 'स्थात' अथवा 'तिष्ठत' इति पाठो भवितुं युक्तः।

अथ सप्तमीमाह,—"अपकामꣳ स्यन्दमाना अवीवरत वो हिकम्। इन्द्रो वः शक्तिभिर्देवीः तस्माद्वार्-णाम वो हितम्[७]"—इति। 'देवीः' हे आपो देव्यः, 'अपकामं स्यन्दमानाः' प्रयोजनविशेषमनपेक्ष्य स्वभावत एव प्रवहन्तीः 'वः' युष्मान् 'इन्द्रः' परितोषात् 'अवीवरत' वृतवान्। स्यन्देऽपि युष्माकं न साधनान्तरापेक्षा किन्तु 'वः शक्तिभिः' युष्मदीयशक्तिवशादेव स्यन्दनम्। 'हिकम्' इत्यव्ययं प्रसिद्धिवाचकम्, उदकस्य स्वशक्त्यैव स्यन्दन सर्वलोकप्रसिद्धमित्यर्थः। यस्मादिन्द्रेण वृताः 'तस्मात्' युष्माकं 'वार्' इत्येतत् 'नाम' 'हितं' सम्पन्नम्।

अथाष्टमीमाह,—"एको देवो अप्यतिष्ठत् स्यन्दमाना यथावशम्। उदानिषुर्महीरिति तस्मादुदकमुच्यते[८]"—इति। 'यथावश' स्वेच्छयैव 'स्यन्दमानाः' अपः 'एको देव' इन्द्रः 'अपि'-'अतिष्ठत्' अध्यतिष्ठत् स्वाधीनाः कृतवान्। इन्द्रेणाधिष्ठितास्ता आपः 'मही' महत्यः प्रभूताः सत्यः 'उदानिषुः' उत्कर्षेण चेष्टितवत्यः। 'तस्मात्' 'उदकम्' इति नाम 'उच्यते'।

अथ नवमीमाह,—"आपो भद्राः घृतम् इत् आपः आसुः अग्नीषोमौ बिभ्रति आपः इत् ताः। तीव्रो रसो मधुपृचाम् अरङ्गम आ मा प्राणेन सह वर्चसा गन्[९]" इति। एताः 'आप' 'भद्राः' कल्याणरूपाः। 'आप' 'इत्' आप एव 'घृतम्' 'आसु' गोशरीर-द्वारा घृतरूपेण परिणताः। 'ताः' 'आपः इत्' तादृश्यः आपः एव 'अग्नीषोमौ' देवौ 'बिभ्रति' धारयन्ति। "अग्निं या गर्भम्" इत्यग्निधारणं पूर्वमेवोक्तम् (५।६।१।२)। सोमधारणमपि अमृत-कारणद्वारा द्रष्टव्यम्। 'मधुपृचां' माधुर्ययुक्तानाम् अपां 'रस'

सारांशः 'तीव्रः' अत्यन्तस्वादुः। 'अरङ्गमः' अलं संपूर्णं यथा भवति तथा गच्छति प्राप्नोति सर्वजनपुष्टिकारीत्यर्थः। तादृशो रसः 'प्राणेन' श्वासवायुना 'वर्चसा' बलेन 'सह' 'मा' मां प्रति 'आ'-'गन्' आगच्छतु। यावत् अपां रसः अन्नादिरूपेण शरीरे तिष्ठति। तावत् प्राणो न अतिगच्छति। बलञ्च न विनश्यति।

अथ दशमीमाह,—"आत् इत् पश्यामि उत वा शृणोमि आ मा घोषो गच्छति वाक् नः आसाम्। मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णाः अतृपं यदा वः[१०]" इति। 'आत् इत्' अनन्तरमेव 'पश्यामि'; अपां रसे मच्छरीरमागते सति तदानीमेव चक्षुषा द्रष्टुं शक्तोऽस्मि। 'उत वा शृणोमि' अपि च श्रोतुमपि शक्तोऽस्मि। 'आसाम्' अपां 'घोषः' नादः 'आ'-'गच्छति' मच्छरीरे वर्तते। स एव घोषः 'नः' अस्माकं 'वाक्'। हे 'हिरण्यवर्णाः' तेजस्विन्यः आपः, यदा 'वः' युष्माकं सेवया 'अतृपम्' अहं तृप्तोऽभवम्। 'तर्हि' तस्मिन् काले 'अमृतस्य' 'भेजानः' 'मन्ये' पीयूषं सेवितवानस्मीति तर्कये।

अथैकादशीमाह,—"आपो हि ष्ठा मयोभुवः ता नः ऊर्जे दधातन। महे रणाय चक्षसे[११]" इति। 'हि'-शब्दः एवकारार्थः प्रसिद्ध्यर्थो वा। 'आपः' यूयमेव 'मयोभुवः' 'स्थ' सुखयित्र्यो भवत, स्नानपानादि-हेतुत्वेन सुखोत्पादकत्वं प्रसिद्धम्। 'ताः' तादृश्यो यूयं 'नः' अस्मान् 'ऊर्जे' रसाय भवदीयरसानुभवार्थं 'दधातन' स्थापयत। किं च 'महे' महते 'रणाय' रमणीयाय 'चक्षसे' दर्शनाय 'दधातन' अस्मान् परतत्त्वसाक्षात्कारयोग्यान् कुरुत इत्यर्थः।

अथ द्वादशीमाह,—"यो वः शिवतमो रसः तस्य भाजयत इह नः उशतीः इव मातरः[११]" इति। 'वः' युष्माकं 'शिवतमः' शान्ततमः सुखैकहेतुः 'यः' 'रसः' अस्ति, 'इह' अस्मिन् कर्मणि 'नः' अस्मान् 'तस्य भाजयत' तं रसं प्रापयत। तत्र दृष्टान्तः,—'उशतीः इव मातरः' कामयमानाः प्रीतियुक्ताः मातरो यथा स्वकीयस्तन्यरसं शिशुं प्रापयति तद्वत्।

अथ त्रयोदशीमाह,—"तस्मै अरङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः[१२]" इति। 'यस्य' रसस्य 'क्षयाय' क्षयेण निवासेन 'जिन्वथ' यूयं प्रीता भवथ, 'तस्मै' रसाय 'वः' युष्मान् 'अरं' 'गमाम' अलं भृशं प्राप्नुम। किञ्च हे 'आपः', यूयं 'नः' अस्मान् 'जनयथ' प्रजोत्पादकान् कुरुत।

कल्पः,—'दिवि श्रयस्व' इति बार्हस्पत्यं नैवारं पयसि चरुं मध्ये कुम्भेष्टकानामुपदधाति'—इति। पाठस्तु,—"दिवि श्रयस्व अन्तरिक्षे यतस्व पृथिव्या सम् भव ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वा[१३]" इति। हे नैवार-चरो, 'दिवि श्रयस्व' द्युलोके आश्रितो भव। 'अन्तरिक्षे' अपि 'यतस्व' प्रयत्नवान् भव। 'पृथिव्या सम् भव' संयुक्तो भव। 'ब्रह्मवर्चसम् असि' तत्साधनत्वात् तद्रूपमसि*। अतो 'ब्रह्मवर्चसाय' त्वाम् अत्र उपदधामि॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः॥१॥

---

* एवमेव सर्व्वत्र पाठः। 'तद्रूपोऽसि' इति पाठो भवितुं युक्तः।

अपां ग्रहान् गृह्णात्येतद्वाव राजसूयं यदेते ग्रहाः सवोऽग्निर्वरुणसवो राजसूयमग्निसवश्चित्यस्ताभ्यामेव सूयतेऽथो उभावेव लोकावभि जयति यश्च राजसूयेनेजानस्य यश्चाग्निचितः[1] आपो भवन्त्यापो वा अग्नेर्भ्रातृव्या यदपोऽग्नेरधस्तादुपदधाति भ्रातृव्याभिभूत्यै भवत्यात्मना परास्य भ्रातृव्यो भवत्यमृतम् ॥ १ ॥

वा आपस्तस्मादद्भिरवतान्तमभि षिञ्चन्ति[2] नार्तिमार्छति सर्वमायुरेति यस्यैता उपधीयन्ते य उ चैना एवं वेद[3] अन्नं वा आपः पशव आपोऽन्नं पशवोऽन्नादः पशुमान् भवति यस्यैता उपधीयन्ते य उ चैना एवं वेद[4] द्वादश भवन्ति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मै ॥ २ ॥

अन्नमव रुन्धे[5] पात्राणि भवन्ति पात्रे वा अन्नमद्यते सयोन्येवान्नमव रुन्ध आ द्वादशात् पुरुषादन्नमत्त्यथो पात्रान्न छिद्यते यस्यैता उपधीयन्ते य उ चैना एवं वेद[6] कुम्भाश्च कुम्भीश्च मिथुनानि भवन्ति मिथुनस्य प्रजात्यै प्र प्रजया पशुभिर्मिथुनैर्जायते यस्यैता उपधीयन्ते य उ ॥ ३ ॥

चैना एवं वेद[९] शुग्वा अग्निः सोऽध्वर्युं यजमानं प्रजाः शुचार्पयति यदप उपदधाति शुचमेवास्य शमयति नार्तिमार्छत्यध्वर्युर्न यजमानः शाम्यन्ति प्रजा यत्रैता उपधीयन्ते[८] ऽपां वा एतानि हृदयानि यदेता आपो यदेता अप उपदधाति दिव्याभिरेवैनाः सꣳसृजति वर्षुकः पर्जन्यः ॥ ४ ॥

भवति[९] यो वा एतासामायतनं क्लृप्तिं वेदायतनवान् भवति कल्पतेऽस्मा अनुसीतमुप दधात्येतद्वा आसामायतनमेषा क्लृप्तिः[१०] य एवं वेदायतनवान् भवति कल्पतेऽस्मै[११] द्वन्द्वमन्या उपदधाति चतस्रो मध्ये धृत्या[१२] अन्नं वा इष्टका एतत् खलु वै साक्षादन्नं यदेष चरुर्यदेतं चरुमुपदधाति साक्षात् ॥ ५ ॥

एवास्मा अन्नमव रुन्धे[१३] मध्यत उप दधाति मध्यत एवास्मा अन्नं दधाति तस्मान्मध्यतोऽन्नमद्यते[१४] बार्हस्पत्यो भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मा अन्नमव रुन्धे ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वेत्याह तेजस्वी ब्रह्मवर्चसी भवति यस्यैष उपधीयते य उ चैनमेवं वेद[१५] ॥ ६ ॥

अमृतम्। अस्मै। जायते यस्यैता उपधीयन्ते य उ। पर्जन्यः। उपदधाति साक्षात्। सप्तचत्वारिꣳशच्च ॥ २ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ ० ॥

कुम्भेष्टकमन्त्रणार्था मन्त्राः प्रथम ईरिताः ।
अथ द्वितीये तदिष्टकोपधानं विधत्ते ।

यदुक्तं सूत्रकारेण,—'कुम्भं कुम्भी चाद्भिः पूरयित्वा शर्म च स्थ वर्म च स्थ देव' स्य व. सवितुः प्रसवे मधुमतीः सादयामीति पुरस्तादनुसीतमुपधाय ज्योतिषे वामिति हिरण्यशल्कौ प्रत्यस्येत्येवमुत्तरा उत्तरैर्मन्त्रैः प्रतिदिशमनुसीतं चतस्रो मध्ये' इति ।

तदिदमुपधानं विधत्ते,—"अपां ग्रहान् गृह्णाति एतद्वाव राजसूयं यदेते ग्रहाः सवः अग्निः वरुणसवो राजसूयम् अग्निसवः चित्यः ताभ्यामेव सूयते अथो उभौ एव लोकौ अभि जयति यश्च राजसूयेन ईजानस्य यश्च अग्निचितः(१)"—इति । गृह्यन्ते आपः एषु इति ग्रहा जलाधाराः कुम्भाः कुम्भ्यश्च । ते च अद्भिः पूरितत्वात् 'अपां' ग्रहाः। तान् कुम्भकुम्भीरूपान् 'गृह्णाति'। ग्रहणेनोपधानमुपलक्ष्यते, 'यस्यैता उपधीयन्ते' इत्युपसंहारात् । राजसूये ग्रहसद्भावात् तत्साम्यमापादयितुम् इह ग्रहि-धातुना व्यवहारः । ये 'एते' 'कुम्भकुम्भीरूपाः' अपां 'ग्रहाः', 'एतत्' एव राजसूयस्वरूपं, फलेन तत्सदृशत्वात् । योऽयं चीयमानः 'अग्निः', सोऽयं 'सवः',—सूयते अभिषिच्यते यजमानः अत्र इत्यभिषेकयुक्तो यज्ञः सवः, तत्सदृशोऽयम् अग्निः । यदेतत् राजसूयाख्यं कर्म, सोऽयं 'वरुणसवः' । वरुणो हि कदाचित् राजसूयं कृत्वा तत्राभिषिक्तः । यस्तु 'चित्यः', सोऽयम्

'अग्निमतः'। अस्मिन्नपि अग्नौ अभिषेको विद्यते। अतः कुम्भीष्टको-पधाने सति 'ताभ्यां' वरुणसवाग्निसवाभ्याम् उभाभ्यां 'सूयते' अयं यजमानः अनुष्ठितवान् भवति । अपि च 'राजसूयेन' इष्टवतो 'यः' लोकः, 'अग्निचितः' 'च' 'यः' लोकः, तौ 'उभौ' 'लोकौ' एतदिष्ट-कोपधानेन 'अभि'-'जयति' 'एव' ।

कुम्भेषु कुम्भीषु च जले स्थापनं* विधत्ते,—"आपो भवन्ति आपो वै अग्नेर्भ्रातृव्याः यद् अपः अग्नेः अधस्तात् उपदधाति भ्रातृव्याभिभूत्यै भवति आत्मना परा अस्य भ्रातृव्यो भवति अमृतं वै आपः तस्मात् अद्भिः अवतान्तम् अभि षिञ्चन्ति[१]" इति। जलेन अग्निशान्तेः अपाम् अग्निशत्रुत्वम्। अतश्चीयमानस्य 'अग्नेः' 'अधस्तात्' भूमौ कुम्भकुम्भीगतानाम् अपाम् उपधाने सति भ्रातृव्याभिभूति-र्भवति । उपधाता स्वयम् ऐश्वर्यवान् 'भवति'। 'भ्रातृव्यः' 'परा'-'भवति'। किञ्च एताः 'आपः' 'अमृतम्' एव, अन्न तस्योदकजन्यत्वात्। यस्मात् अमृतं, 'तस्मात्' 'अवतान्तम्' अत्यन्तग्लानिमापन्नं मूर्च्छितं मूर्च्छानिवारणाय शीतलाभिः 'अद्भिः' 'अभि'-'षिञ्चति' ।

एतदुपधानं तद्वेदनञ्च प्रशंसति,—"न आर्तिम् आर्च्छति सर्वम् आयुः एति यस्य एताः उपधीयन्ते यः उ च एनाः एवं वेद[२]" इति।

प्रकारान्तरेण अपः प्रशंसति,—"अन्नं वै आपः पशवः आपः अन्नं पशवः अन्नादः पशुमान् भवति यस्यैता उपधीयन्ते यः उ च एनाः एवं वेद[३]" इति। अन्नस्य उदकजन्यत्वात्, पशूनां च उदकपोष्यत्वात्

---

* एवमेव सर्वत्र पाठः। 'जलस्थापनं' 'ष्टकोपधानं' इति वा पाठो भवितुं युक्तः ।

अम्-रूपत्वञ्च। चीराद्यन्नहेतुत्वात् पशूनामपि अन्नत्वम्। अतः अपाम् उपधाता वेदिता च अन्नवान् 'पशुमान्' च 'भवति'।

जलपात्राणां संख्यां विधत्ते,—"द्वादश भवन्ति द्वादश मासाः संवत्सरः संवत्सरेणैव अस्मै अन्नम् अव रुन्धे[५]" इति।

उपधेयानाम् अपाम् आधारान् विधत्ते,—"पात्राणि भवन्ति पात्रे वै अन्नम् अद्यते सयोनि एव अन्नम् अव रुन्धे आ द्वादशात् पुरुषात् अन्नम् अत्ति अथो पात्रात् न छिद्यते यस्यैता उपधीयन्ते य. उ च एनाः एव वेद[६]" इति। 'पात्राणि' कुम्भकुम्भीरूपाणि। 'पात्रे' कांस्यादिमये, जनैः 'अन्नं' भक्ष्यते पच्यते च। अत. पात्रस्य अन्नयोनित्वात्, तत्सहितमेव 'अन्न' प्राप्नोति। किञ्च उपधाता वेदिता च पात्रसंख्यया स्वात्मपुत्रपौत्रादेर्द्वादशपुरुष-पर्यन्तात् अन्नसम्बन्धी भवति। अपि च 'पात्रात्' गृहोपकरणसङ्घातात् कदाचिदपि 'न' विच्छिद्यते।

पात्राणां परिमाणविशेषं विधत्ते,—"कुम्भाश्च कुम्भीश्च मिथुनानि भवन्ति मिथुनस्य प्रजात्यै प्र प्रजया पशुभिः मिथुनैर्जायते यस्यैता उपधीयन्ते य उ च एना एवं वेद[७]" इति। 'कुम्भा.' पुरुषसदृशाः प्रौढा घटा.। 'कुम्भ्य.' योषित्समाना अल्पाः। अतो मिथुनसम्पत्त्या प्रजोत्पादनाय 'भवन्ति'। उपधातृवेदितारौ मिथुन-रूपाः प्रजाः उत्पादयतः।

प्रकारान्तरेण तदुपधानं प्रशंसति,—"शुक् वै अग्निः सः अध्वर्युं यजमानं प्रजाः शुचा अर्पयति यत् अप. उपदधाति शुचमेव अस्य शमयति न आर्तिम् आर्च्छति अध्वर्युर्न यजमान. शाम्यन्ति प्रजाः यत्र

एताः उपधीयन्ते[८]" इति। अयम् 'अग्निः' 'शुक् वै' सन्तापहेतुरेव। अतः 'सः' अग्निः अध्वर्युप्रभृतीन् सन्तापेन योजयति। अपामुपधानेन अग्नेः सन्तापहेतुत्वं 'शमयति'। यस्मिन् कर्मणि 'एताः' इष्टकाः 'उपधीयन्ते', 'न' तत्र 'अध्वर्युः' 'म्रियते' नापि 'यजमानः'। 'प्रजाः' च सर्वबाधोपशमयुक्ताः भवन्ति।

पुनः प्रकारान्तरेण प्रशंसति,—"अपां वै एतानि हृदयानि यदेता आपः यदेता अपः उपदधाति दिव्याभिः एव एनाः सꣳ सृजति वर्षुकः पर्जन्यो भवति[९]" इति। 'एताः' पात्रगताः याः 'आपः', 'एतानि' देवतानां हृदयस्थानानि। अत एव आसाम् उपधानेष्टकारूपोपेताः 'अपः' 'दिव्याभिः' अद्भिः संयोजयति। ततः 'पर्जन्यः' वर्षणशीलो 'भवति'।

अथ उपधानस्थानं विधत्ते,—"यो वै एतासाम् आयतनं क्लृप्तिं वेद आयतनवान् भवति कल्पते अस्मै अनुसीतम् उपदधाति एतत् आसाम् आयतनम् एषा क्लृप्तिः[१०]" इति। आयतनं स्थानम्। क्लृप्तिः सामर्थ्यम्। तदुभयं यो 'वेद', स प्रौढगृहाद्यायतनवान् 'भवति'। एतदर्थं च सर्वभोग्यजातं समृद्धं भवति। अतः अभिज्ञः 'अनुसीतम्' उपदध्यात्, एकैकस्यां दिशि याः लाङ्गलपद्धतयः ताः अनुसृत्य उपदध्यात्। एतत्सीतासमीपमेव एतासां कुम्भेष्टकानां स्थानम्, तत्रावस्थितिरेव एतासां सामर्थ्यमुक्तम्।

वेदनफलमुपसंहरति,—"यः एवं वेद आयतनवान् भवति कल्पते अस्मै[११]" इति।

उपधाने प्रकारविशेषं विधत्ते,—"द्वन्द्वमन्याः उपदधाति चतस्रो

मध्ये धृत्यै[१२]" इति। पूर्वदिग्वर्तिनीषु तिसृषु मीनास्र कुम्भे कुर्मी चेति द्वन्द्वम्। एवं दिगन्तरेष्वपि। तदिदमुच्यते,-'द्वन्द्वम् अन्याः' इति। द्वादशानां मध्ये दिक्चतुष्टये अष्टौ गताः, अवशिष्टाः 'चतस्रः' 'मध्ये' स्थापयेत्। तच्च 'धृत्यै' दार्ढ्याय भवति।

अथ "दिवि अयस्य" (५।६।१।१४) इति मन्त्रेणाथं चरूपधानं विधत्ते,—"अन्नं वै इष्टका एतत् खलु वै साक्षात् अन्नं यत् एषः चरुः यत् एतं चरुम् उपदधाति साक्षादेव अस्मै अन्नम् अव रुन्धे[१३]" इति। 'इष्टका' अन्नहेतुत्वात् 'अन्नम्'। 'चरुः' 'साक्षात्' एव 'अन्नम्'। अतः चरूपधानेन व्यवधानं विनैव मुख्यम् 'अन्नं' प्राप्नोति।

उपधानस्थानं विधत्ते,—"मध्यतः उप दधाति मध्यतः एव अस्मै अन्नं दधाति तस्मात् मध्यतः अन्नम् अद्यते[१४]" इति। इष्टकानां मध्ये चरुस्थापन यत् यजमानस्य मध्ये उदरे 'अन्नं' स्थापितं भवति। मध्यमे वयसि भूयिष्ठम् 'अन्नम्' 'अद्यते'।

चरोर्देवतां विधत्ते,—"बार्हस्पत्यो भवति ब्रह्म वै देवानां बृहस्पतिः ब्रह्मणा एव अस्मै अन्नम् अव रुन्धे[१५]" इति। 'ब्रह्मणा एव' ब्राह्मणलब्धा एव, याजनादिना न तु सेवादिना इत्यर्थः।

मन्त्रे ब्रह्मवर्चसशब्दद्वयस्य तात्पर्यं दर्शयति,—"ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वा इति आह तेजस्वी ब्रह्मवर्चसी भवति यस्य एष उपधीयते यः उ च एनम् एवं वेद[१६]" इति। तेजः कान्तिः। ब्रह्मवर्चसम् अध्ययनादिसम्पत्तिः।

अथ मीमांसा।

द्वितीयाध्यायस्य तृतीयपादे (७अ०) चिन्तितम्।

चरुर्भवति नैवारः उपधत्ते चरुन्त्विति ।
यागः स्यादुपधानं वा ? याग शेषोक्तदेवतः ॥
यागस्यानिश्चये शेषो नापेच्योऽतो यजिः कुतः ।
किं तूपधानमात्रं स्याद्यावदुक्तं चरोः स्थितम् ॥

अग्नौ श्रूयते,—"नैवारश्चरुर्भवति" "चरुमुपदधाति" इति च। तत्र नीवारचरुद्रव्यको यागो विधीयते। न चात्र देवताया अभावः। "बृहस्पतेर्वा एतदन्नं यन्नीवाराः" इति वाक्यशेषेण देवतासिद्धेः। उपधानं तु यागोपयुक्तस्य प्रतिपत्तिः स्विष्टकृतिवदिति प्राप्ते ब्रूमः,—यागविधौ निश्चिते सति पश्चाद्देवतायामपेक्षितायां वाक्यशेषबलात् देवताक्लृप्तिः; इह तु देवताकल्पनेन यागविधिनिश्चयः इत्यन्योन्याश्रयः। तस्मादिहोपधानमात्रं विधीयते ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥२॥

---

भूतेष्टका उप दधात्यत्रात्र वै मृत्युर्जायते यत्र यत्रैव मृत्युर्जायते तत एवैनमव यजते तस्मादग्निचित् सर्वमायुरेति सर्वे ह्यस्य मृत्यवो वेष्टास्तस्मादग्निचिन्नाभिचरितवै प्रत्यगेनमभिचारः स्तृणुते[1] सूयते वा एष योऽग्निञ्चिनुते देवसुवामेतानि हवींषि भवन्त्येतावन्तो वै देवानाꣳ सवास्त एव ॥ १ ॥

असु सवान् प्र यच्छन्ति त एनं॰ सुवन्ते[१] सवोऽग्नि-र्वरुणसवो राजसूयं ब्रह्मसवश्चित्यो[१] देवस्य त्वा सवितुः प्रसव इत्याह सवितृप्रसूत एवैनं ब्रह्मणा देवताभिरभि षिञ्चत्य[४]-न्नस्यान्नस्याभि षिञ्चत्यन्नस्यान्नस्यावरुद्ध्यै[५] पुरस्तात् प्रत्यञ्चमभि षिञ्चति पुरस्ताद्धि प्रतीचीनमन्न-मद्यते शीर्षतोऽभि षिञ्चति शीर्षतो ह्यन्नमद्यत[६]-आ मुखादन्ववस्रावयति ॥ २ ॥

मुखत एवास्मा अन्नाद्यं दधात्य[७]-ग्नेस्त्वा साम्राज्ये-नाभि षिञ्चामीत्याहैष वा अग्नेः सवस्तेनैवैनमभि षिञ्चति बृहस्पतेस्त्वा साम्राज्येनाभि षिञ्चामीत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवैनमभि षिञ्चतीन्द्रस्य त्वा साम्राज्येनाभि षिञ्चामीत्याहेन्द्रियमेवास्मिन्नुप-रिष्टाद्दधात्ये[८]-तत् ॥ ३ ॥

वै राजसूयस्य रूपं य एवं विद्वानग्निं चिनुत उभा-वेव लोकावभि जयति यश्च राजसूयेनेजानस्य यश्चाग्नि-चित[९]-इन्द्रस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं पराऽपत-त्तद्देवाः सौत्रामण्या समभरन्त्सूयते वा एष योऽग्निं चिनुतेऽग्निं चित्वा सौत्रामण्या यजेतेन्द्रियमेव वीर्यं॰ सम्भृत्यात्मन्धत्ते[१०] ॥ ४ ॥

त एव । अन्ववस्रावयति । एतत् । अष्टाचत्वारिंश-
च्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके
तृतीयोऽनुवाकः ॥ ० ॥

---

कुम्भेष्टकाद्वयस्येति द्वितीये द्वयमीरितम् ।

अथ तृतीये भूतेष्टकादिकमुच्यते* । यदुक्तं सूत्रकारेण,— 'प्रसवाय त्वा उपयामाय त्वा काटाय त्वा अर्णवाय त्वा धर्णसाय त्वा द्रविणाय त्वा सिन्धवे त्वा समुद्राय त्वा सरस्वते त्वा विश्वव्यचसे त्वा सुभूताय त्वा अन्तरिक्षाय त्वेति द्वादश भूतेष्टकाः' इति । एते मन्त्राः शाखान्तरगताः ।

तत्साध्यमुपधानं विधत्ते,—"भूतेष्टका उप दधाति अत्रात्र वै मृत्यु-र्जायते यत्रयत्रैव मृत्युर्जायते तत एव एनम् अव यजते तस्मात् अग्नि-चित् सर्व्वम् आयुः एति सर्वे हि अस्य मृत्यवः अवेष्टाः तस्मात् अग्नि-चित् न अभिचरितवै प्रत्यक् एनम् अभिचारः स्तृणुते(१)" इति । देश-काल-निमित्तविशेषान् अपेक्ष्य 'अत्रात्र' इति वीप्सा । सर्प-व्याघ्रचोराकुलाः देशाः मृत्युहेतवः । सन्ध्यामध्यरात्रादिः यद्व-राहवादिमदुक्तमृत्युकालः । दुराहारभोजनादीनि मृत्युनिमित्तानि । भूतेष्टकोपधानेन 'तत एव' देशप्रयुक्तात् कालप्रयुक्तात् निमित्त-

---

* "भूतेष्टकादिकं सर्व्वमुच्यते" इति का० क्षौ० पु० पाठः ।

प्रयुक्तात् सर्वस्मादपि मृत्योः 'एनं' यजमानम् अपनयति। 'तस्मात्' अयम् 'अग्निचित्' स्वस्य प्राप्तम् 'आयुः' 'सर्वम्' एव प्राप्नोति। यस्माद् 'अस्य' 'सर्वे' अपि अपमृत्यवो विनाशिताः, किञ्च अयम् अग्निचित् अभिचारविषयोऽपि न भवति, एवं सति यो मूर्खः अभिचरति, 'एनं' मूर्खं सः 'अभिचारः' प्रत्यङ्मुखो भूत्वा हिनस्ति।

यदुक्तं सूत्रकारेण,—'अग्नीषोमीयस्य पशुपुरोडाशमष्टौ देवसुवां हवींष्यनुनिर्वपति समानं स्विष्टकृदिडम्' इति।

तदिदं विधत्ते,—"सुवते वै एष य अग्निं चिनुते देवसुवाम् एतानि हवीꣳषि भवन्ति एतावन्तो वै देवानाꣳ सवा ते एव अस्मै सवान् प्र यच्छन्ति ते एनꣳ सुवन्ते[१]" इति। 'यः' यजमानः 'अग्निं' 'चिनुते,' सः 'एषः' देवैः 'सुवते' प्रेर्यते। अतः प्रेरणाय हवींषि निर्वपेत्। "अग्नये गृहपतये पुरोडाशम्"—इत्यादिराजसूयाम्नातानि 'देवसुवां' 'हवींषि', तत्र श्रुताः ये अग्न्यादयो देवाः 'एतावन्तः' एव 'देवानां' मध्ये प्रेरकाः। 'ते' 'एव' देवाः 'अस्मै' यजमानाय स्वकीयाः सर्वाः अनुज्ञाः प्रयच्छन्ति। तेन च अनुज्ञाप्रदानेन 'एनं' यजमानं प्रेरयन्ति।

यदुक्तं सूत्रकारेण,—'दक्षिणं प्रत्यपि पक्षमौदुम्बरीमासन्दीं प्रतिष्ठाप्य तस्यां कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य तस्मिन्नासीनं यजमानम् अग्निम् अन्वारब्धं सम्पातैरभिषिञ्चति' इति।

तदिदं विधातुं प्रस्तौति,—"सवः अग्नि' वरुणसवः राजसूयं ब्रह्मसव चित्यः[२]" इति। अभिषेकयुक्तो यागः सव इति हि उक्तम्। स च द्विविधः, वरुणसवः ब्रह्मसवश्च। राजकर्तृत्वात् राजसूयं वरुण-

सव', वरुणो हि राजाभिमानी देव । चित्यग्निस्तु ब्राह्मणैरप्यनुष्ठेयत्वात् ब्रह्मसव', अग्नि ब्राह्मणाभिमानी देव. । अत' सवत्वात् अयम् अभिषेकयोग्य. इत्यर्थ ।

मन्त्रपूर्वकमभिषेकं विधत्ते,—"देवस्य त्वा सवितुः प्रसव इति आह सवितृप्रसूत एव एन ब्रह्मणा देवताभि. अभि षिञ्चति[३]"इति । 'ब्रह्मणा' मन्त्रेण, प्रतिपाद्याभिरिति शेष ।

सर्वौषधीरसम् अभिषेकद्रव्यत्वेन विधत्ते,—"अन्नस्यान्नस्य अभि षिञ्चति अन्नस्यान्नस्य अवरुध्यै[४]"इति ।

प्रकारविशेष विधत्ते,—"पुरस्तात प्रत्यञ्चम् अभि षिञ्चति पुरस्तात् हि प्रतीचीनम् अन्नम् अद्यते शीर्षत अभि षिञ्चति शीर्षतः हि अन्नम् अद्यते[५]" इति ।

पूर्वस्यां दिशि पश्चिमाभिमुख. अवस्थाय 'प्रत्यञ्च' स्वाभिमुख यजमानम् अभिषिञ्चेत्। लोके 'हि' 'पुरस्तात्' पार्श्वे अवस्थितम् 'अन्नं' स्वाभिमुखत्वेन 'अद्यते'* ।

शिर आरभ्य अभिषिञ्चेत् । 'अन्नम्' अपि शिरोदेशावस्थिते मुखे भुज्यते† ।

गुणान्तर विधत्ते,—"आ मुखात् अन्ववस्रावयति मुखत. एव

---

* एवमेव का० क्री० पु० पाठ । आदर्शपुस्तके ६ ष्ठ पङ्क्तिस्थ—'प्रतिपाद्याभि' इत्यनन्तरमेव 'पूर्व्वस्यां दिशि' इत्यादिरय सन्दर्भो दृश्यते, प्रकारविशेषप्रदर्शनात् पूर्व्वं तद्व्याख्यानं न युक्तमिति नाय साधुपाठ ।

† का० क्री० पुस्तके अय सन्दर्भो नास्ति ।

अस्मै अन्नाद्य दधाति(७)" इति। शिर आरभ्य आनुलोम्येन मुख-पर्यन्तमेव स्रावयेत्, न अध।

मन्त्रेषु अग्निबृहस्पतीन्द्रशब्दतात्पर्यं व्याचष्टे,—"अग्नेः त्वा साम्राज्येन अभि षिञ्चामि इति आह एषः वै अग्नेः सवः तेन एव एनम् अभि षिञ्चति बृहस्पते त्वा साम्राज्येन अभि षिञ्चामि इति आह ब्रह्म वै देवानां बृहस्पतिः ब्रह्मणा एव एनम् अभि षिञ्चति इन्द्रस्य त्वा साम्राज्येन अभि षिञ्चामि इति आह इन्द्रियम् एव अस्मिन् उपरिष्टात् दधाति(८)" इति। 'एष.' ओषधिरस. 'अग्ने' 'सव.' अग्निना प्रेरित.। अत. अग्निशब्दम् उच्चारयन् अग्निसम्बन्धेन तेन-'तेन' 'एव' रसेन 'अभिषिञ्चति'। 'एष वै बृहस्पतेः सव', एष वै इन्द्रस्य सव.'—इत्यपि अनुसन्धेयम्। एते अभिषेकमन्त्राः शाखान्तरे आम्नाता'। इह ब्राह्मणेन व्याख्याता'।

राजसूयसाम्येन अभिषेक प्रशंसति,—"एतत् वै राजसूयस्य रूप यः एव विद्वान् अग्निं चिनुते उभौ एव लोकौ अभि जयति यश्च राजसूयेन ईजानस्य यश्च अग्निचितः(९)" इति। 'एतत्' अभिषेचनम् एव अग्ने. चित्यस्य 'राजसूयस्य' स्वरूपम्। एवंविद. चिन्वानस्य उभयफल भवति।

अत चयनाङ्गत्वेन सौत्रामणी विधत्ते,—"इन्द्रस्य सुषुवाणस्य दशधा इन्द्रिय वीर्यं परा अपतत् तत् देवाः सौत्रामण्या समम् अभरन् सूयते वै एष' य. अग्निं चिनुते अग्निं चित्वा सौत्रामण्या यजेत इन्द्रियम् एव वीर्यं सम्भृत्य आत्मन् धत्ते(१०)" इति। सोमम् अभिषुतवत. 'इन्द्रस्य' 'इन्द्रिय' सोमोपद्रवणेन 'दशधा' भूत्वा

पतितम् अभूत्। 'तत्' एतत् इन्द्रियं 'देवाः' 'सौत्रामण्या' "स्वाद्वीं त्वा" इत्यादिग्रन्थप्रतिपाद्येन यागेन सम्यक् सम्पादितवन्तः। एवं सति अत्रापि 'यः' 'अग्निं' 'चिनुते', 'एषः' अपि सोमाभिषवे प्रेर्यते। तस्मात् अयम् अपि इन्द्रियसामर्थ्यसम्पादनाय सौत्रामण्याख्यं यागम् अनुतिष्ठेत्। सौत्रामण्याः चयनाङ्गत्वं न बोध्यते, किन्तु कालविधिरयम्* ; तस्मादिदं वाक्यं प्रकरणात् उत्कर्ष्टव्यम्† ॥

अथ मीमांसा।

चतुर्थाध्यायस्य तृतीयपादे (१८अ०) चिन्तितम्,—

अग्निं चित्वा यजेत् सौत्रामण्यङ्गेष्टिरुतेदृशी।
अङ्गिकाले स्वकाले वा स्याद् आद्यो ऽन्याङ्गवत् मतः॥
निर्वृत्ते चयनादौ तु कर्मान्तरविधानतः।
स्वकाले चोदकप्राप्ते तदनुष्ठानमाश्रितम् ॥

"अग्निं चित्वा सौत्रामण्या यजेत", "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इत्यत्र सौत्रामणीबृहस्पतिसवयोरङ्गत्वं पूर्वमुक्तम्। तच्चाङ्गम् अङ्गिकाले अङ्गिना सह प्रयोक्तव्यम्, इतरेषाम् अङ्गानां तथा प्रयुज्यमानत्वादिति चेत्। मैवं, त्वा-प्रत्ययेन पूर्वकालवाचिना साङ्गे चयनादौ निर्वृत्ते सति, पश्चात् कर्मान्तरत्वेन सौत्रामण्यादेर्विहितत्वात्, यदि अङ्गिना सह एकप्रयोगः स्यात्, तदा प्रत्ययप्रापितः पूर्वोत्तरकालविभागो‡ बाध्येत। न हि अङ्गिना सह प्रयोक्तव्यानाम्

* "काले विधिरयम्" इति का० क्षी० पु० पाठ।
† आदर्शपुस्तके 'उत्कृष्टम्' इति पाठ। उत्कृष्टव्यं,—इति का० क्षी० पु० पाठः।
‡ "पूर्व्वोत्तरकाल" इति आदर्शपुस्तके पाठः।

उखासम्भरणादीनां चयने निर्दिष्टे पश्चादिधानं श्रुतम्। तत. पृथक्-प्रयोगे सर्वत्राविनि सति स्वस्वचोदकप्रापिते काले तदनुष्ठानं युक्तम्। सौत्रामण्याः इष्टिप्रकृतिकत्वात् पर्वकालस्योदकप्राप्तः। चयनेन सह प्रयोगे तु पर्वणि उखासम्भरणादिविधानात् अन्यस्मिन् दिने सौत्रामणी प्रसज्येत। तथा बृहस्पतिसवस्य ज्योतिष्टोमविकृतत्वात् वसन्तकालस्योदकप्राप्त'। वाजपेयेन सह प्रयोगेऽपि शरदि वाजपेयस्य विहितत्वात् बृहस्पतिसवोऽपि शरदि प्रसज्येत। तस्मात् अतिदिष्टे पर्वणि, वसन्ते तदनुष्ठानम्। ननु सर्वत्र अङ्गापूर्वैः प्रधानापूर्वं जनयितव्यम्। इह तु पूर्वकालीनेन साङ्गप्रधानानुष्ठानेन फलापूर्वस्य निष्पन्नत्वात् तदुत्तरकालीनम् अङ्गं निरर्थकमिति चेत्। न, तस्यैव अपूर्वस्य अनेन अङ्गेन प्राबल्यदशायाः कल्पनीयत्वात्। तस्मात् न अङ्गिनः काले अनुष्ठानम्। किन्तु स्वकाले इति स्थितम्।

पूर्वानुवाकोक्तकुम्भीष्टकाचरूपधानस्य प्राणभृद्भ्यः अपानभृद्भ्यश्च ऊर्द्ध्वभावित्वात् इदं ब्राह्मणम् अभिमन्त्रणमन्त्रसहितं "पशुर्वा एष यदग्निः" (५।२।१०) इत्यनुवाकान्ते द्रष्टव्यम्। भूतेष्टकोपधानं तु सामसिद्ध्योपधानादूर्द्ध्वं भवति। अभिषेकस्तु "अग्निर्वै देवाना-मभिषिक्तः" (५।४।८) इत्यस्मात् पूर्वं द्रष्टव्य। सौत्रामणीब्राह्मणं तु इत्स्मात् ब्राह्मणात् ऊर्द्ध्वं द्रष्टव्यम्॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके तृतीयोऽनुवाकः॥ ० ॥

सजूरब्दोऽयावभिः सजूरुषा अरुणीभिः सजूः सूर्य्य एतशेन सजोषावश्विना दꣳसोभिः सजूरग्निर्वैश्वानर इडाभिर्घृतेन स्वाहा[१] संवत्सरो वा अब्दो मासा अयावा उषा अरुणी सूर्य एतश इमे अश्विना संवत्सरोऽग्निर्वैश्वानरः पशव इडा पशवो घृतꣳ संवत्सरं पशवोऽनु प्र जायन्ते संवत्सरेणैवास्मै पशून् प्र जनयति[२] दर्भस्तम्बे जुहोति यत् ॥ १ ॥

वा अस्या अमृतं यद्वीर्यं तद्दर्भास्तस्मिन् जुहोति प्रैव जायतेऽन्नादो भवति यस्यैवं जुह्वत्येता वै देवता अग्नेः पुरस्ताद्भागास्ता एव प्रीणात्यथो चक्षुरेवाग्नेः पुरस्तात् प्रति दधात्य[३]-नन्धो भवति य एवं वेदा-[४]पो वा इदमग्रे सलिलमासीत् स प्रजापतिः पुष्करपर्णे वातो भूतोऽलेलायत्सः ॥ २ ॥

प्रतिष्ठान्नाविन्दत स एतदपां कुलायमपश्यत् तस्मिन्नग्निमचिनुत तदियमभवत्ततो वै स प्रत्यतिष्ठद्[५] यां पुरस्तादुपादधात् तच्छिरोऽभवत्सा प्राची दिग्यां दक्षिणत उपादधात् स दक्षिणः पक्षोऽभवत्सा दक्षिणा दिग्यां पश्चादुपादधात् तत्पुच्छमभवत्सा प्रतीची दिग्यामुत्तरत उपादधात् ॥ ३ ॥

स उत्तरः पक्षोऽभवत्सोदीची दिग्यामुपरिष्टादुपा-

दधात्तत्पृष्ठमभवत्सोर्द्ध्वा दिग्[६] इयं वा अग्निः पञ्चे-ष्टकस्तस्माद् यदस्यां खनन्त्यभीष्टकान्तृन्दन्त्यभि शर्कराः सर्वा वा इयं वयोभ्यो नक्तं दृशे दीप्यते तस्मादिमां वयांसि नक्तं नाध्यासते[७] य एवं विद्वानग्निं चिनुते प्रत्येव ॥ ४ ॥

तिष्ठत्यभि दिशो जयति[८] आग्नेयो वै ब्राह्मणस्तस्माद् ब्राह्मणाय सर्वासु दिक्ष्वर्धुकः स्वामेव तद्दिशमन्वेति[९] अपां वा अग्निः कुलायं तस्मादापोऽग्निं हारुकाः स्वामेव तद्योनिं प्र विशन्ति[१०] ॥ ५ ॥

यत्। अङ्खेलायत्सः। उत्तरत उपादधात्। एव। द्वात्रिंशच्च ॥ ४ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ० ॥

---

भूतेष्टकाभिषेकादि तृतीये समुदीरितम्।

अथ चतुर्थे होमो विधीयते। यदुक्तं सूत्रकारेण,—'मङ्क्षूरन्दो-ऽयावभिरिति दर्भस्तम्बे पञ्चाहुतीर्जुहोति' इति। तमिमं विधातुं मन्त्रान् उत्पादयति,—"मङ्क्षू चन्द्रः अयावभिः मङ्क्षू उषाः अरुणीभिः मङ्क्षू सूर्यं एतशेन मरीचौ अग्निना दक्षोभिः मङ्क्षु अग्निः वैश्वानर

इडाभिः घृतेन स्वाहा[१]" इति। 'अब्दः' संवत्सरः। 'अयावाः' मासाः। स च संवत्सरः तैर्मासैः सह समानप्रीतिः। अत्र सर्वेषु मन्त्रेषु 'घृतेन स्वाहा' इत्यनुषज्यते। तस्मै मासमहिताय संवत्सराय 'घृतेन' द्रव्येण 'स्वाहा' जुहोमि। 'उषाः' या इयम् उषःकालदेवता, सा इयम् 'अरुणीभिः' रक्तवर्णाभिः 'सजूः' समानप्रीतिः। ताम् उद्दिश्य 'घृतेन स्वाहा' जुहोमि। 'सूर्य्यः' देवः 'एतशेन' स्वकीयाश्वेन 'सजूः'समानप्रीतिः। तम् उद्दिश्य 'घृतेन स्वाहा' जुहोमि। 'अश्विना' यौ एतौ अश्विनौ, तौ 'दंसोभिः' दंसनैः व्याधिनिराकरणव्यापारैः 'सजोषौ' परस्परसमानप्रीती। तौ उद्दिश्य घृतेन जुहोमि। 'वैश्वानरः' सर्वमनुष्यप्रियः यः 'अग्निः,' सः 'इडाभिः' पशुभिः 'सजूः' समानप्रीतिः। तमुद्दिश्य घृतेन जुहोमि।

मन्त्रान् व्याचष्टे,—"संवत्सरो वै अब्दो मासाः अयावाः उषाः अरुणी सूर्यः एतशः इमे अश्विना संवत्सरः अग्निः वैश्वानरः पशवः इडा पशवः घृतं संवत्सरं पशवः अनु प्र जायन्ते संवत्सरेण एव अस्मै पशून् प्र जनयति[१]" इति। मन्त्रगतस्य अब्दशब्दस्य 'संवत्सरः' एव अर्थः। अयावशब्देन 'मासाः' अभिधीयन्ते। उषःशब्दादयश्चत्वारः प्रसिद्धाः। 'इमे' द्यावापृथिव्यौ अश्विशब्देन विवक्षिते। 'अग्निः वैश्वानरः' इत्यनेन 'संवत्सरः' विवक्षितः। इडा-शब्देन 'पशवः' विवक्षिताः। घृत-शब्देनापि तत्कारणत्वात् 'पशवः' एव विवक्षिताः। तात्पर्यार्थस्तु,—गर्भभूताः* 'पशवः' 'संवत्सरम्' अनुसृत्य 'प्र'-'जायन्ते'।

---

* च्यादर्शपुस्तके तु "तात्पर्यार्थस्तु गर्भिभूताः" इत्येवं पाठः।

अत एतन्मन्त्रपाठेन 'अग्नौ' यजमानाय संवत्सरकालेन 'पशून्' उत्पादयति।

अथ होमं विधत्ते,—"दर्भस्तम्बे जुहोति यत् वै अस्या अमृतं यत् वीर्यं तत् दर्भाः तस्मिन् जुहोति प्र एव जायते अन्नादः भवति यस्य एव जुह्वति एताः वै देवताः अग्रे पुरस्तात् भागाः ताः एव प्रीणाति अथो चक्षुः एव अग्रे पुरस्तात् प्रति दधाति[१]" इति। 'अस्याः' पृथिव्याः सम्बन्धि 'यत्' 'अमृतं' स्वादुद्रव्यं, 'यत्' च तत्सम्बन्धि 'वीर्यं' सामर्थ्यं, 'तत्' उभयमेव एते 'दर्भाः'। अतः 'तस्मिन्' अमृते वीर्ये दर्भरूपे हुतवान् भवति। तेन होमेन प्रजाः उत्पादयति 'एव'। "यस्य' यजमानस्य कर्मणि 'एवं' 'जुह्वति', स यजमानो न केवलं प्रजोत्पादकः किन्तु 'अन्नादः' च 'भवति'। 'एताः' एव मन्त्रोक्ताः संवत्सरमासादयः सर्वाः 'देवताः' 'अग्रे' अपि पूर्वभागिनः। अतः 'ताः' प्रीणयति 'एव'। किञ्च पूर्वकालीनेन होमेन 'अग्रे' 'चक्षुः' 'एव' सम्पादयति। तदेवं* दर्भस्तम्बहोमो देवताकामस्य प्रशस्तः।

अथ वेदनं प्रशंसति,—"अनन्धो भवति य एवं वेद[२]" इति।

अथ चितियोग्यां भूमिं बहुधा स्तूयते, तत्र तावत् आदौ भूमिनिष्पत्तिप्रकारं दर्शयति,—"आपो वै इदम् अग्रे सलिलम् आसीत् सः प्रजापतिः पुष्करपर्णे वातः भूतः अलेलायत् सः प्रतिष्ठां न अविन्दत सः एतत् अपां कुलायम् अपश्यत् तस्मिन् अग्निम् अचिनुत तत् इयम् अभवत् ततो वै सः प्रति अतिष्ठत्[३]" इति। यत् 'इदं' जगत् इदानीं दृश्यते, तच्च सर्वम् उत्पत्तेः पूर्वम् 'आपः' एव 'आसीत्,' न तु देव-

* एवमेव सर्वत्र पाठः। 'तदेवं दर्भस्तम्ब' इत्यादिपाठो भवितुं युक्तः।

मनुष्यादिकम् । तस्मिन् अप्सु* पृथिव्यादिभूतान्तरमेलनं वारयितुं सलिलमिति विशेष्यते । शुद्धजलमेव आसीत् इत्यर्थः । इदानीं 'प्रजापति.' स्वशरीरमवस्थापयितुं मूर्त्तस्य कस्यचित् आधारस्य अभावात् स्वयं वायुरूपः अभूत् । तदुदकमध्यवर्त्तिनि कस्मिंश्चित् पद्मपत्रे समाश्रित. । तस्य चलत्वात्, स्वय च वायुरूपत्वात्, 'अले-लायत्' इतस्ततो डोलायमान. अभूत् । तादृशः कुत्रापि स्थिरां स्थितिं न अलभत । 'स.' पुनः आधारं पर्यालोचयन् 'अपां' मध्ये कुलाय-शैवालम् 'अपश्यत्'। 'तस्मिन्' शैवाले 'अग्निम्' इष्टकाभि. चितवान् । सोऽयम् इष्टकाचितः अग्निः 'इयं' दृश्यमाना भूमिः 'अभवत्'। 'तत.' ऊर्द्ध्व 'स.' प्रजापति. तस्यां भूमौ प्रतिष्ठित अभूत् ।

चयनेन भूम्युत्पत्तिप्रकारं† प्रपञ्चयति,—"यां पुरस्तात् उपादधात् तत् शिरः अभवत् सा प्राची दिक् यां दक्षिणत. उपादधात् स दक्षिण. पक्षः अभवत् सा दक्षिणा दिक् यां पश्चात् उपादधात् तत् पुच्छम् अभवत् सा प्रतीची दिक् याम् उत्तरतः उपादधात् स उत्तरः पक्ष' अभवत् सा उदीची दिक याम् उपरिष्टात् उपादधात् तत् पृष्ठम् अभवत् सा ऊर्द्ध्वा दिक्(१)" इति । स प्रजापतिः 'यां' प्रौढाम् इष्टकां स्वस्य पुरत.§ 'उपादधात्,' 'तत्' इष्टकारूपं चीय-मानस्य अग्नेः शिरस्थानम् 'अभवत्'। लोके तु भूम्येकदेशरूपा 'पूर्वा दिक्' सम्पन्ना । एव दक्षिणाद्यूर्द्ध्वान्तेषु योजयितव्यम् ।

---

* एवमेव सर्व्वत्र पाठ । 'तास्वप्सु' इत्येवं पाठो भवितु युक्तः ।

† 'प्रकारान्तर' इति का० सौ० पु० पाठ. ।

§ 'पुरस्तात्' इति का० सौ० पु० पाठ ।

भूमेस्त्वाग्निरूपत्वं शास्त्रीयलौकिकदृष्टिभ्यां दृढीकरोति,— "इयं वै अग्निः पञ्चेष्टकः तस्मात् यत् अस्यां खनन्ति अभि इष्टकां तृन्दन्ति अभि शर्करां सर्वा वै इयं वयोभ्यः नक्तं दृशे दीप्यते तस्मात् इमां वयांसि नक्तं न अधि आसते[७]" इति। या इयं भूमिः अस्ति, सा 'इयं' पञ्चभिः इष्टकाभिश्चितः 'अग्निः'। 'तस्मात्' अग्नित्वात् यदि अनभिज्ञाः प्राणिनः 'अस्यां' भूमौ क्वचित् 'खनन्ति', तदानीं ते मूर्खाः प्रजापतिना उपहिताम् 'इष्टकाम्' अभितो हिंसन्ति चूर्णीकुर्वन्ति। तथा या इयं शर्करा तेन उपहिता, ताम् अपि 'अभि' 'तृन्दन्ति' सर्वतश्चूर्णयन्ति ; तथाविधः प्रत्यवायः तेषां भवति इत्यर्थः,—सा इयं शास्त्रीयदृष्टिः। अथ लौकिकदृष्टिः उच्यते,— 'वयोभ्यः' 'दृशे' पक्षिणां दृष्टौ भूमिः 'सर्वा' अपि रात्रौ अग्निवत् दीप्ता भवति। यस्मात् एवं, 'तस्मात्' रात्रौ पक्षिणः भूमिं 'न' आश्रयन्ति, किन्तु वृक्षाग्राणि आश्रयन्ति। तस्मात् शास्त्रीयलौकिकदृष्टिभ्याम् इयं भूमिः अग्निरेव।

एतत् वेदनं प्रशंसति,—"यः एवं विद्वान् अग्निं चिनुते प्रति एव तिष्ठति अभि दिशः जयति[८]" इति।

अथ ब्राह्मणद्वारा सर्वदिगुपेतायाः भूमेः अग्नित्वं द्रढयति,— "आग्नेयो वै ब्राह्मणः तस्मात् ब्राह्मणाय सर्वासु दिक्षु अर्धुकं स्वाम् एव तत् दिशम् अनु एति[९]" इति। अग्निब्राह्मणयोः प्रजापतिमुखजत्वसम्बन्धेन 'ब्राह्मणः' 'आग्नेयः'। यस्मात् अयम् अग्निसम्बन्धः 'तस्मात्' अग्निरूपभूम्यवयवरूपासु 'सर्वासु' अपि 'दिक्षु' ब्राह्मणस्य समृद्धिशील जीवनं भवति। स्वदेशे इव परदेशेषु अपि देवदत्तः शास्त्राभिज्ञः

पूज्यते । अयं हि स्वकीयां 'दिशम्' 'अनु' गच्छति । तस्मात् युक्तम् एतत् ।

इदानीं लौकिकजलद्वारा पुनरपि अग्नित्वं द्रढयति,—"अपां वै अग्निः कुलायं तस्मात् आप. अग्निं हारुकाः स्वाम् एव तत् योनिं प्र विशन्ति[१०]" इति । योऽय भूमिरूप. 'अग्निः', सोऽयं नदीकूपादिगतानाम् 'अपां' 'कुलाय' स्थानम् । भूमौ अवस्थितत्वात् योनिश्च अपां, भूमिरूपः अग्निरेव । यस्मात् अग्निकार्याः आपः, 'तस्मात्' मथतो यद्वादिदाहिनः अग्नेः अपहरणाय मनुष्यै. सेचिताः* 'आपः' अग्निम् अपहरन्† स्वयमपि शुष्यन्ति । यस्मात् एव अग्निरूपां स्वयोनिं 'प्र'-'विशन्ति', तस्मात् अवगम्यते जलकारणाग्निरूपा इयं भूमिः इति । अस्तोकस्य होमस्य वेदिविमानात् पूर्वभावित्वात् "पुरुषमात्रेण" (५।२।५।१) इत्यनुवाकात् पूर्वमिदं ब्राह्मणं द्रष्टव्यम् ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे षष्ठमपाठके चतुर्थोऽनुवाकः ॥०॥

---

संवत्सरमुख्यं भृत्वा द्वितीये संवत्सर आग्नेयमष्टाकपालं निर्वपेदैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं बार्हस्पत्यं चरुं वैष्णवं त्रिकपालं[१] तृतीये संवत्सरेऽभिजिता यजेत[२] यदष्टाकपालो भवत्यष्टाक्षरा

---

* 'सेविता' इति का० क्षो० पु० पाठ ।
† एवमेव सर्वत्र पाठः । 'अपहरन्त्यः' इत्येवं पाठो भवितुं युक्तः ।

गायत्र्यामेयं गायत्रं प्रातःसवनं प्रातःसवनमेव तेन दाधार गायत्री छन्दो[१] यदेकादशकपालो भवत्येकादशाक्षरा त्रिष्टुगैन्द्रं त्रैष्टुभं माध्यन्दिनः सवनः माध्यन्दिनमेव सवनं तेन दाधार त्रिष्टुभं ॥ १ ॥

छन्दो यद्द्वादशकपालो भवति द्वादशाक्षरा जगती वैश्वदेवं जागतं तृतीयसवनं तृतीयसवनमेव तेन दाधार जगतीं छन्दो यद्बार्हस्पत्यश्चरुर्भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मैव तेन दाधार यद्वैष्णवस्त्रिकपालो भवति यज्ञो वै विष्णुर्यज्ञमेव तेन दाधार यत्तृतीये संवत्सरेऽभिजिता यजतेऽभिजित्यै[२] यत् संवत्सरमुख्यं बिभर्तीममेव ॥ २ ॥

तेन लोकः स्पृणोति यद्द्वितीये संवत्सरेऽग्निं चिनुतेऽन्तरिक्षमेव तेन स्पृणोति यत्तृतीये संवत्सरे यजतेऽसुमेव तेन लोकं स्पृणोति[४] एतं वै परं आट्णारः कक्षीवाः औशिजो वीतहव्यः श्रायसस्त्रसदस्युः पौरुकुत्स्यः प्रजाकामा अचिन्वत ततो वै ते सहस्रः सहस्रं पुत्रानविन्दन्त[५] प्रथते प्रजया पशुभिस्तां मात्रामाप्नोति यान्तेऽगच्छन् य एवं विद्वानेतमग्निं चिनुते[६] ॥ ३ ॥

दाधार त्रिष्टुभम्। इममेव। एवं। चत्वारि च ॥५॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे पञ्चमप्रपाठके

येनं मातुं* पुरा होमश्चतुर्थे समुदीरितः।

अथ पञ्चमे कानिचित् हवींषि विधीयन्ते।

पूर्वस्मिन् प्रपाठके संवत्सर-त्र्यह-षडह-द्वादशाहाग्निधारणपक्षाश्चत्वारोऽभिहिताः। तत्र तापश्चिताम् अयनाख्यस्य संवत्सरसत्त्र्स्य† अङ्गभूते चयने संवत्सरम् उख्यधारणं नियतम्। अत एव सूत्रकार आह,—'तापश्चितेऽग्नौ संवत्सरं दीक्षाः संवत्सरमुपसदः पुरस्तादुपसदामाग्नेयमष्टाकपालमिति पञ्च' इति।

तदिदं सूत्रोक्तं हविःपञ्चकं विधत्ते,—"संवत्सरम् उख्यं भृत्वा द्वितीये संवत्सरे आग्नेयम् अष्टाकपालं निर्वपेत् ऐन्द्रम् एकादशकपालं वैश्वदेवं द्वादशकपालं बार्हस्पत्यं चरुं वैष्णवं त्रिकपालम्(१)" इति।

यदपि उक्तं सूत्रकारेण,—'तृतीये संवत्सरेऽभिजिता विश्वजिता वा यजेत सर्ववेदसं ददाति' इति।

तत्र आद्यं पक्षं विधत्ते,—"तृतीये संवत्सरे अभिजिता यजेत(२)" इति। 'अभिजित्' इति सोमयागविशेषः।

तत्र पञ्चसु हविःषु प्रथमहविः प्रशंसति,—"यत् अष्टाकपालः भवति अष्टाक्षरा गायत्री आग्नेयं गायत्रं प्रातःसवनं प्रातःसवनम् एव तेन दाधार गायत्रीं छन्दः(३)" इति। गायत्रीपादस्य अष्टाक्षरत्वं प्रसिद्धम्। 'प्रातःसवनं' च गायत्रीच्छन्दसा निष्पाद्यत्वात् 'गायत्रं'। गायत्र्या सह अग्नेः उत्पन्नत्वात् तत् 'आग्नेयम्' अपि। अतः 'तेन' हविषा प्रातःसवनफलं 'गायत्रीं' 'छन्दः' देवतां च प्राप्नोति।

---

* 'येनमातुः' इति च पाठान्तरम्।

† 'संवत्सरचयस्य' इति का॰ को॰ पु॰ पाठः।

इतराणि चत्वारि हवींषि, अभिजिदाख्यं सोमयागं च क्रमेण प्रशंसति,—"यत् एकादशकपालः भवति एकादशाक्षरा त्रिष्टुक् ऐन्द्रं त्रैष्टुभं माध्यं दिनम् सवनं माध्यं दिनम् एव सवनं तेन दाधार त्रिष्टुभं छन्दः यत् द्वादशकपालो भवति द्वादशाक्षरा जगती वैश्वदेवं जागत तृतीयसवनं तृतीयसवनम् एव तेन दाधार जगती छन्दः यत् बार्हस्पत्यः चरुः भवति ब्रह्म वै देवानां बृहस्पतिः ब्रह्म एव तेन दाधार यत् वैष्णवः त्रिकपालो भवति यज्ञो वै विष्णुः यज्ञम् एव तेन दाधार यत् तृतीये संवत्सरे अभिजिता यजते अभिजित्यै(३)" इति। अत्र सर्वत्र हविःप्रशंसा देवताप्रशंसा अभिजिद्यागप्रशंसा च विस्पष्टा।

अथ उख्यधारणं, पशुहविर्युक्तचयनम्, अभिजिदाख्यम् एकाहञ्च क्रमेण प्रशंसति,—"यत् संवत्सरम् उख्यं बिभर्ति इमम् एव तेन लोकम् स्पृणोति यत् द्वितीये संवत्सरे अग्निं चिनुते अन्तरिक्षम् एव तेन स्पृणोति यत् तृतीये संवत्सरे यजते अमुम् एव तेन लोकम् स्पृणोति(४)" इति। यद्यपि अयम् अभिजित् एकाहः, न तु संवत्सरसाध्यम् अयनं, तथापि तापश्चिताम् अयने अङ्गभूतो यः अग्निः, तद्धर्मः संवत्सरोख्यधारणं संवत्सरोपसदश्च; सः अभिजिदङ्गेऽपि अतिदिश्यते। तस्मात् अयम् अङ्गभूतः अग्निः धर्मातिदेशार्थे 'तापश्चितः' इत्युच्यते। पशु हवींषि अभिजिदङ्गभूते अग्नौ विधियन्ते।

तदिदं पशुहविर्युतं चयनं प्रकारान्तरेण प्रशंसति,—"एतं वै परः आट्णारः कक्षीवान् औशिजः वीतहव्यः श्रायसः त्रसदस्युः

पौरुकुत्स्यः प्रजाकामा. अचिन्वन्त ततो वै ते सहस्रꣳ सहस्रं पुत्रान् अविन्दन्त[१]"—इति । परशब्दाभिधेयः कश्चित् ऋषिः, सोऽयम् अट्णारस्य पुत्रः । 'कक्षीवान्' अन्यः ऋषिः, स च उशिजः पुत्र. । 'वीतहव्यः' अन्यः ऋषि., स च श्रयसः पुत्रः । 'त्रसदस्युः' अन्यः, स च पुरुकुत्सस्य पुत्रः । 'ते' एते 'प्रजाकामा.' सन्तः तम् 'एतं' संवत्सरधारणेन पशुहविर्भिश्च उपेतम् अग्निं चित्वा प्रत्येकं 'सहस्रं' 'पुत्रान्' अलभन्त ।

अथ एतस्य चयनस्य फलं दर्शयति,—"प्रथते प्रजया पशुभिः तां मात्राम् आप्नोति यां ते अगच्छन् यः एवं विद्वान् एतम् अग्निं चिनुते[२]" इति । पूर्वोक्ताः महर्षय 'यां' मात्रां सहस्रपुत्ररूपम् ऐश्वर्यप्रमाणम् 'अगच्छन्', 'तां' 'मात्राम' अयमपि 'एतम्' 'अग्निं' चिन्वान. प्राप्नोति ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥०॥

---

प्रजापतिरग्निमचिनुत स क्षुरपविर्भूत्वाऽतिष्ठत् तं देवा बिभ्यतो नोपायन्ते छन्दोभिरात्मानं छादयित्वोपायन् तच्छन्दसां छन्दस्त्वं ब्रह्म वै छन्दांसि ब्रह्मण एतद्रूपं यत् कृष्णाजिनं कार्ष्णी उपानहावुप मुञ्चते

छन्दोभिरेवात्मानं छादयित्वाग्निमुप चरत्यात्मनो-ऽहिंसायै(१) देवनिधिर्वा एष नि धीयते यदग्निः ॥ १ ॥

अन्ये वा वै निधिमगुप्तं विन्दन्ति न वा प्रति प्र जानात्युखामा क्रामत्यात्मानमेवाधिपां कुरुते गुप्त्यै(२) अथो खल्वाहुर्नाक्रम्येति नैर्ऋत्युखा यदाक्रामेन्निर्ऋत्या आत्मानमपि दध्यात् तस्मान्नाक्रम्या पुरुषशीर्षमुप दधाति गुप्त्या अथो यथा ब्रूयादेतन्मे गोपायेति तादृगेव तत्(३) ॥ २ ॥

प्रजापतिर्वा अथर्वाग्निरेव दध्यङ्ङाथर्वणस्तस्येष्टका अस्थान्येतꣳ ह वाव तदृषिरभ्यनूवाचेन्द्रो दधीचो अस्थभिरिति यदिष्टकाभिरग्निं चिनोति सात्मानमेवाग्निं चिनुते(४) सात्मामुष्मिं लोके भवति य एवं वेद(५) शरीरं वा एतदग्नेर्यच्चित्य आत्मा वैश्वानरो यच्चिते वैश्वानरं जुहोति शरीरमेव संस्कृत्य ॥ ३ ॥

अभ्यारोहति(६) शरीरं वा एतत् यजमानः सꣳस्कुरुते यदग्निं चिनुते यच्चिते वैश्वानरं जुहोति शरीरमेव संस्कृत्यात्मनाभ्यारोहति तस्मात्तस्य नाव द्यन्ति जीवन्नेव देवानप्येति(७) वैश्वानर्यर्चा पुरीषमुप दधातीयं वा अग्निर्वैश्वानरस्तस्यैषा चितिर्यत्पुरीषमग्निमेव वैश्वा-

नरं चिनुत एषा वा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रियामेवास्य तनुवमव रुन्धे(८) ॥ ४ ॥

अग्निः । तत् । सꣳस्तृत्य अग्नेः । दर्श च ॥ ६ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

---

पञ्चमेऽभिजितोऽङ्गं यत् चयने तत् विशेषितम् ।

अस्य च ब्राह्मणस्य पूर्वशेषत्वाभावान्न तत्रान्तर्भावः । किन्त्वन्ते निवेशः ।

अथ षष्ठे पूर्वप्रकरणोक्तानेव विधीन् कानिचित् अनूद्य प्रशंसति । तत्र "अग्नभूर्जमिति परि षिञ्चति"(५।४।४।१) इत्यनुवाके "कार्ष्णी उपानहावुप मुञ्चते" इति यद्विहितं, तस्य प्रशंसां दर्शयति,— "प्रजापतिः अग्निम् अचिनुत सः क्षुरपविः भूत्वा अतिष्ठत् तं देवा बिभ्यतः न उपायन् ते छन्दोभिः आत्मान छादयित्वा उप आयन तत् छन्दसां छन्दस्त्वं ब्रह्म वै छन्दाꣳसि ब्रह्मणः एतत् रूप यत् कृष्णाजिनं कार्ष्णी उपानहौ उप मुञ्चते छन्दोभिः एव आत्मानं छादयित्वा अग्निम् उप चरति आत्मनः अहिꣳसायै(१)" इति । यदा 'प्रजापति.' 'अग्निं' चितवान्, तदा 'सः' अग्निः 'क्षुरपवि.' 'भूत्वा' केनापि अगम्य. 'अतिष्ठत्' । क्षुरधारासमाना धारा यस्य वज्रस्य सोऽयं क्षुरपवि. ; तथाविधवज्रवत् अत्युग्रः

इत्यर्थ । 'तं' तादृशम् अग्निं दृष्ट्वा 'देवाः' भीताः सन्त तत्-समीपं 'न' प्राप्ताः। तत प्रतीकारं विचार्य छन्दोयुक्तैर्मन्त्रैः स्वशरीरम् आच्छाद्य मन्त्रजपेन रक्षां कृत्वा वह्निसमीपमागताः। छादयन्ति एभिः—इति व्युत्पत्त्या 'छन्दस्त्व' सम्पन्नम्। तेषां च छन्दसां वेदे अन्तर्भूतत्वात् वेद एव तद्रूपम्। 'कृष्णाजिनं' च वेदस्य स्वरूपम्। "ऋक्सामे वै-देवेभ्यो यज्ञायातिष्ठमाने कृष्णो रूपं कृत्वा" (६।१।३।१) इत्युक्तत्वात् तस्मात् कृष्णाजिननिर्मिते 'उपानहौ' 'उप'—'मुञ्चते'। तथा सति 'छन्दोभि एव' स्वशरीरमाच्छाद्य अग्नेः उपचरणात् स्वस्य हिंसा न भवति। यद्यपि "मृत्युर्वा एष यदग्निर्ब्रह्मण एतद्रूप यत् कृष्णाजिनम्" (५।४।४।४) इति प्रशंसापि तत्रैव कृता, तथापि तस्या एवायं प्रपञ्च इत्यविरोध.।

"एषां वा एतल्लोकानाम्" (५।२।८।१) इत्यस्मिन् अनुवाके यदिदित "मध्ये पुरुषशीर्षमुप दधाति सर्वीर्यत्वायोखायामपि दधाति" इति, तदेतत् पूर्वोत्तरपक्षाभ्यां प्रशंसितु पूर्वपक्ष तावद्दर्शयति,—"देवनिधि. वै एष. नि धीयते यत् अग्नि' अन्ये वा वै निधिम् अगुप्तं विन्दन्ति न वा प्रति प्र जानाति उखाम् आक्रामति आत्मानम् एव अधिपां कुरुते गुप्त्यै[१]" इति। योऽयं चीयमानोऽग्नि सोऽयं देवानां निधिस्थानीय.। एव सति लोके यो निधिः अगुप्तो भवति, त 'निधिम्' 'अन्ये' 'वा' विरोधिनो लभन्ते, स्वयं वा कदाचित् तदीयस्थानविस्मरणेन तं निधिं 'न' 'प्र'-'जानाति'। अतो दोषद्वयपरिहाराय पूर्वम् उपहिताम् 'उखां' स्वपादेन आक्रामेत। तथा सति यजमान स्वात्मानम् 'एव' निधेः 'अधिपां'

पालकं करोति । तच्च रक्षणाय भवति । आक्रमणेन खबुद्धौ दृढीकृतत्वात् न कदाचित् विस्मरति, स्वेन रक्षितत्वादेव वैरिणोऽपि तं निधिं न लभन्ते ।

अथ सिद्धान्तं दर्शयति,—"अथो खलु आहुः न आक्रम्या इति नैर्ऋती उखा यत् आक्रामेत् निर्ऋत्यै आत्मानम् अपि दध्यात् तस्मात् न आक्रम्या पुरुषशीर्षम् उप दधाति गुप्त्यै अथो यथा ब्रूयात् एतत् मे गोपाय इति तादृक् एव तत्[१]" इति। अभिज्ञाः खलु न पक्षम् अनादृत्य एवम् 'आहु',* पादेन सा इयम् उखा 'न आक्रम्या इति' । तत्रायं हेतु,-इयम् 'उखा' राक्षसदेवताया निर्ऋतेः सम्बन्धिनी । अत उखायाः आक्रमणे 'निर्ऋत्यै' स्वशरीरं समर्पयेत् । 'तस्मात्' सर्वथा 'न' आक्रमणीया । यदि निधेर्गुप्तिः अपेक्षिता, तर्हि 'पुरुषशीर्षम्' उखायाम् उपरि स्थापयेत् । तथा सति, 'यथा' लोके कश्चित् पुरुषं रक्षकं निधिसमीपे अवस्थाप्य मदीयम् 'एतत्' द्रव्यं 'गोपाय' 'इति' स्वामी 'ब्रूयात्', 'तादृक् एव' 'तत्' पुरुषशीर्षस्थापनं द्रष्टव्यम् ।

पञ्चमप्रपाठके "य एवं विद्वानग्निं चिनुते स्वर्गोलोकेऽ"(५।५।२।१) इति यशुयनविधिः उक्त, तं पुन. प्रशंसति,—"प्रजापतिः वै अथर्वा अग्निः एव दध्यङ् आथर्वणः तस्य इष्टकाः अस्थानि एतम् ह वाव तत् ऋषिः अभ्यनूवाच इन्द्रः दधीचः अस्थभिः इति यत् इष्टकाभिः अग्निं चिनोति सात्मानम् एव अग्निं चिनुते[२]" इति । अत्र कश्चित्

---

* 'अनादृत्यैव प्राह' इति आदर्शपुस्तके पाठ ।

रूपकं* परिकल्प्यते,—अस्ति कश्चित् अथर्वाख्यः ऋषिः। तस्य च पुत्रो दध्यङ्नामा। दधीचः अस्थीनि कश्चित् शत्रुहनि आयुधत्वं† प्राप्तानि। तत् सर्वम् अत्र समाधीयते। योऽयम् अग्नेश्चेता 'प्रजापतिः', स एव 'अथर्वा'। चीयमानश्च 'अग्नि' तत्पुत्रो 'दध्यङ्'। 'इष्टकाः' अस्थीनि। तम् 'एतम्' एव अर्थम् अभिप्रेत्य कश्चित् 'ऋषिः' मन्त्रः 'तत्' सर्वम् अनुवदति। मन्त्रस्य च प्रतीकमिदम्,—'इन्द्रो दधीचो अस्थभिः' इति। स च मन्त्रोऽन्यत्र एवम् आम्नातः,—"इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः जघान नवतीर्नव" (१।५।१८। १ ब्रा०) इति। तदेवम् इष्टकानाम् अस्थित्वात् ताभिश्चयने सति सशरीरोऽग्निः चितो भवति।

वेदनं प्रशंसति,—"सात्मा अमुष्मिन् लोके भवति य एवं वेद(५)" इति।

"प्राचीमनु प्रदिशं प्रेहि विद्वानित्याह" (५।४।७।१) इत्यनुवाके यद्विहितं "द्वादशकपालो वैश्वानरो भवति" इति, तत्प्रशंसति,—"शरीरं वै एतत् अग्नेः यत् चित्यः आत्मा वैश्वानरो यत् चिते वैश्वानरं जुहोति शरीरम् एव संस्कृत्य अभ्यारोहति(६)" इति। यः चितिनिष्पाद्यः अग्निः, तत् इदम् अग्निदेवतायाः 'शरीरम्'। 'वैश्वानरः' च शरीरावस्थितो जीवात्मा। तथा सति, 'चिते'

---

* एवमेव सर्व्वत्र पाठः। 'किञ्चिद्रूपकम्' इत्येवं पाठो भवितुं युक्तः।

† का० की० पुस्तके तु 'कश्चित् शत्रुहन् अनानयायुधत्वं' इति पाठः, एव आदर्शपुस्तके 'अनायुधत्व' इति पाठश्च न सङ्गतः।

अग्नौ वैश्वानरपुरोडाशं 'जुहोति' इति 'यत्', तेन अग्निदेवताया 'शरीरम् एव' 'सस्कृत्य' पश्चात् आरूढो भवति।

तस्य एतस्य वैश्वानरपुरोडाशस्य चोदकप्राप्तम् अवदान निषेधति,— "शरीर वै एतत् यजमान सस्कुरुते यत् अग्नि चिनुते यत् चिते वैश्वानरं जुहोति शरीरम् एव सस्कृत्य आत्मना अभ्यारोहति तस्मात् तस्य न अव द्यन्ति जीवन् एव देवान् अपि एति[७]" इति। 'यजमान.' 'अग्नि' 'चिनुते' इति 'यत', तेन असौ स्वशरीरमेव संस्करोति। एव सति, 'चिते' अग्नौ वैश्वानरपुरोडाशं 'जुहोति' इति 'यत्', तेन स्वशरीरमेव 'संस्कृत्य' तस्मिन शरीरे जीवरूपेण आरूढो भवति। 'तस्मात्' 'तस्य' जीवात्मस्थानीयस्य पुरोडाशस्य अवदानं 'न' कुर्यात्। तदकरणे च स्वय 'जीवन् एव' 'देवान्' प्राप्नोतीति।

"यावती वै पृथिवी"(५।२।३।१) इत्यनुवाके "पुरीषेणाभ्यूहति" इति यत् विहित, तत्र* "पृष्टो दिवि (१।५।११।१) इत्येताम् ऋचम् अन्यत्राम्नातां विनियुङ्क्ते,—"वैश्वानर्या ऋचा पुरीषम् उप दधाति इय वै अग्निः वैश्वानरः तस्य एषा चिति यत् पुरीषम् अग्निम् एव वैश्वानर चिनुते एषा वै अग्नेः प्रिया तनू. यत् वैश्वानर. प्रियाम् एव अस्य तनुवम् अव रुन्धे[८]" इति। "पृष्टो दिवि" इति मन्त्रप्रतिपाद्यो य 'वैश्वानरः' 'अग्नि', स भूमिस्वरूप एव। 'पुरीष' च चितिस्वरूपम्। अत पुरीषोपधानेन भूमिरूपं वैश्वानराग्निमेव चितवान् भवति। किञ्च वैश्वानरशब्दोदित सर्वपुरुष-

* 'यत्र' इति आदर्शपुस्तके, का० मो० पुस्तके च पाठो न समीचीन।

हितकारी यो विग्रह, 'एषा' एव 'अग्नेः' 'प्रिया' 'तनूः'। ततो वैश्वानरमन्त्रेण उपधाने सति अग्नेः 'प्रियाम्' 'एव' 'तनुवं' प्राप्नोति। एतानि च ब्राह्मणवाक्यानि विधिशेषत्वात् तद्विधिसमीपे एव द्रष्टव्यानि।

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

---

अग्नेर्वै दीक्षया देवा विराजमाप्नुवन्[1] तिस्रो रात्रीर्दीक्षितः स्यात्त्रिपदा विराड्विराजमाप्नोति पञ्च रात्रीर्दीक्षितः स्यात् पञ्च ऋतवः संवत्सरः संवत्सरो विराड्विराजमाप्नोति दश रात्रीर्दीक्षितः स्यात् दशाक्षरा विराड्विराजमाप्नोति द्वादश रात्रीर्दीक्षितः स्यात् द्वादश मासाः संवत्सरः संवत्सरो विराड्विराजमाप्नोति त्रयोदश रात्रीर्दीक्षितः स्यात्त्रयोदश ॥ १ ॥

मासाः संवत्सरः संवत्सरो विराड्विराजमाप्नोति पञ्चदश रात्रीर्दीक्षितः स्यात् पञ्चदश वा अर्धमासस्य रात्रयोऽर्धमासशः संवत्सर आप्यते संवत्सरो विराड्विराजमाप्नोति सप्तदश रात्रीर्दीक्षितः स्यात् द्वादश मासाः पञ्चर्तवः स संवत्सरः संवत्सरो विराड्विराजमाप्नोति चतुर्विंशतिं रात्रीर्दीक्षितः स्याच्चतुर्विंशति-

रर्धमासाः संवत्सरः संवत्सरो विराड्विराजमाप्नोति त्रिꣳशतꣳ रात्रीर्दीक्षितः स्यात् ॥ २ ॥

त्रिꣳशदक्षरा विराड्विराजमाप्नोति मासं दीक्षितः स्यात् यो मासः स संवत्सरः संवत्सरो विराड्विराजमाप्नोति चतुरो मासो दीक्षितः स्याच्चतुरो वा एतं मासो वसवोऽबिभरुस्ते पृथिवीमाजयन् गायत्रीं छन्दोऽष्टौ रुद्रास्तेऽन्तरिक्षमाजयन् त्रिष्टुभं छन्दो द्वादशादित्यास्ते दिवमाजयन् जगतीं छन्दस्ततो वै ते, व्यावृतमगच्छन् श्रैष्ठ्यं देवानां[१] तस्माद्द्वादश मासो भृत्वाऽग्निं चिन्वीत द्वादश मासाः संवत्सरः संवत्सरोऽग्निश्चित्यस्तस्याहोरात्राणीष्टका आप्तेष्टकमेनं चिनुतेऽथो व्यावृतमेव गच्छति श्रैष्ठ्यꣳ समानानाम्[२] ॥ ३ ॥

स्यात्त्रयोदश। त्रिꣳशतꣳ रात्रीर्दीक्षितः स्यात्। वै ते। अष्टाविꣳशतिश्च ॥ ७ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

षष्ठे प्रशंसाः कथितास्तत्तद्दिष्ट्यनुवादतः।

अथ सप्तमे दीक्षाविकल्पान् विधातुं प्रस्तौति,—"अग्ने वै दीक्षया देवाः विराजम् आप्नुवन्[1]" इति। मौञ्ज्यमौनादिनियमस्वीकाररूपा दीक्षा। चीयमानस्य 'अग्नेः' सम्बन्धिन्या तादृश्या 'दीक्षया' 'देवाः' 'विराजं' प्राप्ताः। विराट्छन्दः-शब्दः प्रशस्तच्छन्दोविशेषं ब्रूते। तेन च विशिष्टं राज्यम् उपलक्ष्यते। तत् राज्यं प्राप्ताः इत्यर्थः। अतो विधास्यमानेषु दीक्षाकालविकल्पेषु सर्वत्र विराट्प्राप्तिः उपन्यस्यते।

तानेतान् विकल्पितपक्षान् विधत्ते,—"तिस्रो रात्री. दीक्षित. स्यात् त्रिपदा विराट् विराजम् आप्नोति षट् रात्रीः दीक्षित, स्यात् षट् वै ऋतव संवत्सरः संवत्सरो विराट् विराजम् आप्नोति दश रात्रीः दीक्षित. स्यात् दशाक्षरा विराट् विराजम् आप्नोति द्वादश रात्रीः दीक्षितः स्यात् द्वादश मासाः संवत्सरः संवत्सरो विराट् विराजम् आप्नोति त्रयोदश रात्रीः दीक्षितः स्यात् त्रयोदश मासा. संवत्सरः संवत्सरो विराट विराजम् आप्नोति पञ्चदश रात्रीः दीक्षितः स्यात् पञ्चदश वै अर्धमासस्य रात्रय अर्धमासशः संवत्सरः आप्यते संवत्सरो विराट् विराजम् आप्नोति सप्तदश रात्री. दीक्षित. स्यात् द्वादश मासा पञ्च ऋतव सः संवत्सर संवत्सरो विराट् विराजम् आप्नोति चतुर्विंशतिं रात्रीः दीक्षित स्यात् चतुर्विंशति. अर्धमासा. संवत्सरः संवत्सरो विराट् विराजम् आप्नोति त्रिंशतं रात्री. दीक्षितः स्यात् त्रिंशदक्षरा विराट विराजम् आप्नोति मास दीक्षितः स्यात् यः मास स. संवत्सरः संवत्सरो विराट् विराजम् आप्नोति चतुरः मासः

दीक्षितः स्यात् चतुरो वै एतं मासः वसवः अबिभरु., ते पृथिवीम् आ अजयन् गायत्री छन्दः अष्टौ रुद्राः ते अन्तरिक्षम् आ अजयन् त्रिष्टुभं छन्दः द्वादश आदित्याः ते दिवम् आ अजयन् जगतीं छन्दः ततो वै ते व्यावृतम् अगच्छन् श्रैष्ठ्यं देवानाम्(१)" इति। त्रिरात्र-षड्-रात्र-दशरात्र-द्वादशरात्र-त्रयोदशरात्र-पञ्चदशरात्र-सप्तदशरात्र-चतु-र्विंशतिरात्र-त्रिंशद्रात्र-मास-चतुर्मासाष्टमास-द्वादशमासरूपास्त्रयोदश पक्षा विकल्पिताः। दशाक्षरैस्त्रिभि. पादैरुपेतं विराडाख्यं छन्दः। अतः त्रित्व-सङ्ख्यया तत्प्राप्तिः। षट्सङ्ख्यानाम् ऋतूनां संवत्सरावयवत्वेन संवत्सरस्वरूपत्वात्, संवत्सरस्य च षट्त्रिंशद्भिर्दिनदशकैः निष्पाद्यत्वात्, दशसङ्ख्यायाश्च विराटपदाक्षरगतत्वात् संवत्सरद्वारा तत्प्राप्तिः। एवं सर्वत्र योज्यम्। अधिकमासेन* सह 'त्रयोदश मासा.'। सावनमासस्य त्रिंशद्रात्रनियमेऽपि चान्द्रमासस्य तन्नियमाभावात् तदपेक्षया पृथग्-मासोपन्यासः। 'वसवः' मासचतुष्टयम् उख्याग्निं भृत्वा 'पृथिवी' गायत्री-छन्दोदेवताश्च वशीकृतवन्तः। 'रुद्रा.' तु मासाष्टकं भृत्वा 'अन्तरिक्षं' त्रिष्टुप्छन्दो देवताश्च वशीकृतवन्तः। 'आदित्याः' तु मासद्वादशकं धृत्वा† द्युलोकं जगतीच्छन्दो देवताश्च वशीकृतवन्तः। एतेषु पक्षेषु संवत्सरपक्षस्य अत्यन्तं प्रशस्तत्वात् आदित्याः इतरेभ्यो व्यावृत्तिं प्राप्य 'देवानां' मध्ये 'श्रैष्ठ्यं' प्राप्ताः।

अतः एतमेव पक्षम् आदरेण पुनः प्रशंसति,—"तस्मात् द्वादश मासः भृत्वा अग्निं चिन्वीत द्वादश मासाः संवत्सरः

---

* एवमेव सर्वत्र पाठ। 'अधिमासेन' इति पाठो भवितुं युक्तः।

† एवमेव सर्वत्र पाठ। 'भृत्वा' इति पाठो भवितुं युक्त।

संवत्सरः अग्निः चित्यः तस्य अहोरात्राणि इष्टकाः आप्तेष्टकम् एनं चिनुते अथो व्यावृत्तम् एव गच्छति श्रैष्ठ्य९ समानानाम्[१]" इति। द्वादशमासानुपस्थानकाले नैरन्तर्येण उख्याग्निं 'भृत्वा' 'अग्नि' चिनुयात्। मासद्वादशकस्य संवत्सररूपत्वात् चित्याग्निरपि धारणद्वारा संवत्सरात्मकः। 'तस्य' संवत्सरात्मनः अग्नेः 'इष्टकाः' एव 'अहोरात्राणि'। ततः संवत्सरधारणेन सम्पूर्णत्वेन प्राप्तेष्टकम् इमम् अग्निं चितवान् भवति। अपिच इतरेभ्यः अग्निचिद्भ्यो व्यावृत्तः 'समानानां' मध्ये 'श्रैष्ठ्य' प्राप्नोति। यद्यपि "तस्मात् संवत्सरं भार्य्यं." (५।५।२।५) इत्यादौ सवत्सर-त्रिरात्र-षड्रात्र-द्वादशरात्रपक्षाः विहिताः, तथापि अर्थवादसमन्वयार्थम् अत्र पुनरुपन्यासः।

एतच्च ब्राह्मणं अग्नाविष्णवविधिवत् "षड्भिर्दीक्षयति"(५।१।८ अ०) इत्यनुवाकसमीपे द्रष्टव्यम्।

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाकः ॥७॥



सुवर्गाय वा एष लोकाय चीयते यदग्निस्तं यन्नान्वारोहेत् सुवर्गाल्लोकाद् यजमानो हीयेत पृथिवीमाऽक्रमिषं प्राणो मा मा हासीदन्तरिक्षमाऽक्रमिषं प्रजा मा मा हासीद्दिवमाऽक्रमिष९ सुवरगन्मेत्याहैष वा अग्नेरन्वारोहस्तेनैवैनमन्वारोहति सुवर्गस्य लोकस्य समष्ट्यै[१] यत्पक्षसम्मितां मिनुयात् ॥ १ ॥

कनीयांसं यज्ञक्रतुमुपेयात्पापीयस्यस्यात्मनः प्रजा स्याद्वेदिसंमितां मिनोति ज्यायांसमेव यज्ञक्रतुमुपैति नास्यात्मनः पापीयसी प्रजा भवति[१] साहस्रं चिन्वीत प्रथमं चिन्वानः सहस्रसंमितो वा अयं लोक इममेव लोकमभि जयति द्विषाहस्रं चिन्वीत द्वितीयं चिन्वानो द्विषाहस्रं वा अन्तरिक्षमन्तरिक्षमेवाभि जयति त्रिषाहस्रं चिन्वीत तृतीयं चिन्वानः ॥ २ ॥

त्रिषाहस्रो वा असौ लोकोऽमुमेव लोकमभि जयति[१] जानुदघ्नं चिन्वीत प्रथमं चिन्वानो गायत्रियैवेमं लोकमभ्यारोहति नाभिदघ्नं चिन्वीत द्वितीयं चिन्वानस्त्रिष्टुभैवान्तरिक्षमभ्यारोहति ग्रीवदघ्नं चिन्वीत तृतीयं चिन्वानो जगत्यैवामुं लोकमभ्यारोहति[२] नाग्निं चित्वा रामामुपेयादयोनौ रेतो धास्यामीति न द्वितीयं चित्वान्यस्य स्त्रियम् ॥ ३ ॥

उपेयान्न तृतीयं चित्वा काञ्चनोपेयाद्रेतो वा एतन्नि धत्ते यदग्निं चिनुते यदुपेयाद्रेतसा व्यृध्येत[१] अथो खल्वाहुरप्रजस्यन्तयन्नोपेयादिति यद्रेतःसिचावुपदधाति ते एव यजमानस्य रेतो बिभृतस्तस्मादुपेयाद्रेतसोऽस्कन्दाय[१] त्रीणि वाव रेतांसि पिता पुत्रः पौत्रः ॥ ४ ॥

यद्वै रेतःसिचावुपदध्याद्रेतोऽस्य वि च्छिन्द्यात् तिस्र उप दधाति रेतसः सन्तत्यै[७] इयं वाव प्रथमा रेतःसिग्वाग्वा इयं तस्मात्पश्यन्तीमां पश्यन्ति वाचं वदन्तीमन्तरिक्षं द्वितीया प्राणो वा अन्तरिक्षं तस्मान्नान्तरिक्षं पश्यन्ति न प्राणमसौ तृतीया चक्षुर्वा असौ तस्मात्पश्यन्त्यमूं पश्यन्ति चक्षुः[८] यजुषेमाञ्च ॥५॥

अमूञ्चोप दधाति मनसा मध्यमामेषां लोकानां कॢप्त्या अथो प्राणानाम्[९] इष्टो यज्ञो भृगुभिराशीर्दा वसुभिस्तस्य त इष्टस्य वीतस्य द्रविणेह भक्षीय[१०] इत्याह स्तुतशस्त्रे एवैतेन दुहे[११] पिता मातरिश्वाऽच्छिद्रा पदा धा अच्छिद्रा उशिजः पदाऽनु तक्षुः सोमो विश्वविन्नेता नेषद्बृहस्पतिरुक्थामदानि शंसिषदित्याहैतद्वै, अग्ने-रुक्थन्तेनैवैनमनु शंसति[१२] ॥ ६ ॥

मिनुयात् । तृतीय चिन्वानः । स्त्रियम् । पौत्रः । च । वै । सप्त च ॥ ८ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठमपाठके अष्टमोऽनुवाकः ॥ ० ॥

---

* दीक्षाकालविकल्पा ये ते सप्तम उदीरिता ।

अथ अष्टमे अन्वारोहणादिकमुच्यते । यदुक्तं सूत्रकारेण 'नमस्ते

इत्येषे शोचिष इति द्वाभ्यामग्निमधिरोहति पृथिवीमाक्रमिषमित्येते- र्यजमानः' इति। तद्विधिमिद्दोन्नयति,—"सुवर्गाय वै एष लोकाय चीयते यत् अग्निः तं यत् न अन्वारोहेत् सुवर्गात् लोकात् यजमानः हीयेत पृथिवीम् आ अक्रमिषं प्राणः मा मा हासीत् अन्तरिक्षम् आ अक्रमिषं प्रजा मा मा हासीत् दिवम् आ अक्रमिषं सुवः अगन्म इति आह एषः वै अग्नेः अन्वारोहः तेन एव एनम् अन्वारोहति सुवर्गस्य लोकस्य समष्ट्यै[1]" इति। योऽयं चीयमानः 'अग्निः', 'एषः' सुवर्ग- लोकार्थं 'चीयते'; अतः तस्य अन्वारोहाभावे 'सुवर्गात्' 'हीयेत', तस्मा भूदिति पृथिवीमित्यादिभिरन्वारोहविधुर्न्नेयः *। मन्त्रार्थस्तु,— यजमानोऽहं 'पृथिवीं' पादेन 'आ'-'अक्रमिषम्', अतः 'प्राणः' 'मा' माम् परित्यजतु। अन्तरिक्षातिक्रमणेन पुत्रादिप्रजा 'मा' परित्यजतु। दिवः आक्रमणेन स्वर्गं प्राप्नुमः। एतन्मन्त्रपाठ एव अग्नेरन्वारोहण- हेतुः। अतः 'तेनैव' 'अन्वारोहति', तच्च स्वर्गप्राप्त्यै भवति।

अथ यूपैकादशिन्यां कश्चिद्विशेषं विधत्ते,—"यत् पक्षसम्मितां मिनुयात् कनीयांसं यज्ञक्रतुम् उपेयात् पापीयसी अस्य आत्मनः प्रजा स्यात् वेदिसम्मितां मिनोति ज्यायांसम् एव यज्ञक्रतुम् उपैति न अस्य आत्मनः पापीयसी प्रजा भवति[2]" इति। पक्षदैर्घ्यपरिमिते एव देशे यदि एकादशिनीम् अवस्थापयेत्, तदानीम् अत्यल्पं 'यज्ञक्रतुं' प्राप्नुयात्। 'अस्य' यजमानस्य स्वकीया 'प्रजा' 'पापीयसी' च भवेत्। अतः पक्षपरिमाणादधिके वेदिप्रमाणदुक्तदेशे

* 'एवमेव सर्व्वत्र पाठः। 'विधिदन्नेयः' इति पाठो भवितुं युक्तः'।

यूपान्तरालानि विलिख्य एकादशिनीं मिनुयात्। तथा सति प्रभूतम 'एव' 'यज्ञक्रतुं' प्राप्नोति। 'अस्य' 'प्रजा' च 'पापीयसी' 'न' 'भवति'। पूर्वस्मिन् प्रपाठके "वज्र एकादशिनी"(५।५।७) इत्यत्र प्रकृतिभूते चयने पश्वेकादशिनीपक्षेऽपि एक एव यूपः न तु यूपैकादशिनीति उक्तम्; इह तु चयनविकृतिषु यूपैकादशिनी अभ्युपगम्यते इत्यविरोधः।

अथ पञ्चसु अपि चितिषु सम्भूय इष्टकासङ्ख्यां विधत्ते,—"साहस्रं चिन्वीत प्रथमं चिन्वानः सहस्रसम्मितो वै अयं लोकः इमम् एव लोकम् अभि जयति द्विसाहस्रं चिन्वीत द्वितीयं चिन्वानो द्विसाहस्रं वै अन्तरिक्षम् अन्तरिक्षम् एव अभि जयति त्रिसाहस्रं चिन्वीत तृतीयं चिन्वानः त्रिसाहस्रो वै असौ लोकः असुम् एव लोकम् अभि जयति[१]"—इति। सहस्रसङ्ख्याकानाम् इष्टकानां समूहः साहस्रम्। अथ वा सहस्रसङ्ख्याकाभिः इष्टकाभिः निष्पाद्य अग्निः साहस्रः। यः प्राथमिकम् अग्निं 'चिन्वीत', स तु 'साहस्रं' कुर्यात्। द्वितीयवारं 'चिन्वानो' द्विगुणम्। तृतीयवारं 'चिन्वानः' त्रिगुणम्। पृथिव्यन्तरिक्षद्युलोकाश्च उत्तरोत्तरभूयस्त्वात् तत्तच्चितिसम्मिताः। अतः तैः चयनैः तत्प्राप्तिः।

पक्षत्रयेऽपि क्रमेणोर्द्ध्वपरिमाणं विधत्ते,—"जानुदघ्नं चिन्वीत प्रथमं चिन्वानो गायत्रिया एव इमं लोकम् अभ्यारोहति नाभिदघ्नं चिन्वीत द्वितीयं चिन्वानः त्रिष्टुभा एव अन्तरिक्षम् अभ्यारोहति ग्रीवदघ्नं चिन्वीत तृतीयं चिन्वानो जगत्या एव अमुं लोकम् अभ्यारोहति[२]" इति। यथा प्रथम-द्वितीय-तृतीय-चितीनाम्

उत्तरोत्तरम् श्रौत्यम्, अत एव गायत्री-त्रिष्टुब्-जगतीनाम् उत्तरोत्तरम् अक्षराधिक्यम् । अत क्रमेण गायत्र्यादिद्वारा लोकत्रयम् अधिरोहति ।

त्रिविधचयने क्रमेण नियमविशेषान् विधत्ते,—"न अग्निं चित्वा रामाम् उपेयात् अयोनौ रेतो धास्यामि इति न द्वितीय चित्वा अन्यस्य स्त्रियम् उपेयात् न तृतीय चित्वा काञ्चन उपेयात् रेतो वै एतत् नि धत्ते यत् अग्नि चिनुते यत उपेयात् रेतसा व्यृध्येत[१]" इति । य प्राथमिकम् अग्निचयन करोति, स. 'रामां' 'न' 'उपेयात्,—स्वकीयासु भार्यासु मध्ये रमणीया इयम् इति मत्वा कामुकों न प्रवर्त्तेत, पुत्रार्थं तस्याम् ईप्सिता अनुज्ञा । रामोपगमनाभावे अय हेतु,—'अयोनौ' पुत्रोत्पत्त्यनुपयुक्तायां वृथैव 'रेत.' स्थापयिष्यामीति तस्मा भ्रदित्यनुपगमनम् । द्वितीयचयनानुष्ठायी सार्ववर्णिकविवाहोपेत 'अन्यस्य' वर्णान्तरस्य दुहितर 'न' 'उपेयात्' सवर्णायाम् ईप्सितस्यानुज्ञा* । तृतीयचयनानुष्ठायी सवर्णाम् असवर्णां रमणीया पुत्रार्थिनी वा कामपि 'न' 'उपेयात्' । तत्राय हेतु,—'अग्नि चिनुते' इति 'यत्', तद्रेतसो गुप्तत्वेन स्थापनम्, तथा सति उपगमने 'रेतसा' वियुक्तो भवति ।

तमिमम् अगमनपक्ष-दूषयित्वा सर्वत्र गमनमभ्यनुजानाति,—"अथो खलु आऊ अप्रजस्य तत् यत् न उपेयात् इति यत् रेत सिचौ उपदधाति ते एव यजमानस्य रेतो बिभृत. तस्मात्

* पूर्व्वत्र 'ईप्सितानुज्ञा' अत्र च ईप्सितस्यानुज्ञा' इति विभिन्नपाठो न समीचीन इव प्रतिभाति ।

उपेयात् रेतस अस्कन्दाय(१)" इति। अभिप्रा 'खलु' एवम् 'आहु'। अनुपगमनम् 'अप्रजस्य' प्रजोत्पादनहेतुर्न भवति। न च उपगमने रेतोहानि शङ्कनीया। "विराट् ज्योति"(४।२।८।४) इत्यादिमन्त्राभ्यां 'रेत सिचौ' इष्टके अनेन उपहिते। तस्मात् 'ते एव' अस्य 'यजमानस्य' 'रेत' पालयत। 'अतो' 'रेतस' विनाशाभावाय प्रजोत्पत्त्यर्थम् 'उपेयात्'। माहात्म्यादिविधीनाम् आम्नातब्राह्मणोक्तावपि(?) अवकाशाभावात् मन्त्रान्ते निवेश *। पूर्वस्य तु अन्वारोहणविधे "नमस्ते हरसे" इत्याद्यधिरोहणादूर्ध्वभावित्वात् 'अग्नावूर्जमिति परिषिञ्चति"(५।४।४।१) इत्यनुवाकान्ते निवेश।

पूर्वस्मिन् प्रपाठके "यद्विराजावुपदधाति"(५।५।४।१) इत्यादिना रेत सिचौ विधानमुक्त, तत्रैव कश्चिद्विशेष विधत्ते,—"त्रीणि वाव रेताꣳसि पिता पुत्र पौत्र यत् द्वे रेत सिचौ उपदध्यात् रेत अस्य वि च्छिन्द्यात् तिस्र उप दधाति रेतस सन्तत्यै(२)" इति। योऽयं 'पिता' इदानीं वर्त्तते, स अतीतस्य कस्यचित् रेत। अस्य पितु 'पुत्र' रेत। 'पौत्र' तु पुत्रस्य रेत। एवं पितृपुत्रपौत्राणां 'त्रीणि' 'रेतासि'। तथा सति द्वयोरेव रेत सिचो उपधाने सति अवशिष्ट 'रेत' 'वि'-'च्छिन्द्यात्' तस्मात् 'तिस्र' रेत,सिच उपदध्यात्। तच्च रेत 'सन्तत्यै' सम्पद्यते।

तिस्रोऽपि रेत सिच क्रमेण प्रशंसति,—"इय वाव प्रथमा रेत सिक् वाक् वै इय तस्मात् पश्यन्ति इमां पश्यन्ति वाच वदन्तीम् अन्तरिक्ष द्वितीया प्राणो वै अन्तरिक्षं तस्मात् न अन्तरिक्ष

* 'आम्नात ब्राह्मणोक्तावपि' इत्येव सर्व्वत्र पाठ न समीचीन।

पश्यन्ति न प्राणम् असौ तृतीया चक्षुः वै असौ तस्मात् पश्यन्ति अमूं पश्यन्ति चक्षु.(८)" इति । या 'प्रथमा' 'रेत.सिक्' सा भूमिरेव प्राथम्यसाम्यात् । भूमिश्च वाग्रूपैव अधोवर्त्तित्वसाम्यात् । आस्ये हि वाग्वर्त्तित्वम्, नासिकायां प्राण, तत उपरि चक्षुः; ततो वाचः अधोवर्त्तित्वम् । यस्मात् भूमिवाचौ अधोवर्त्तित्वेन समानरूपे, 'तस्मात्' न केऽपि नानाविधशस्यादिपूर्णाम् 'इमां' भूमिं मातृरूपेण 'पश्यन्ति' । तथा विद्वत्सभायां सम्यक् 'वदन्ती' 'वाच' 'पश्यन्ति' आद्रियन्ते । येयं 'द्वितीया' रेत.सिक्, सा च अन्तरिक्षरूपा मध्यमत्वसाम्यात् । तच्च 'अन्तरिक्ष' प्राणस्वरूपम् प्राणस्यापि वाक्चक्षुषोः मध्यवर्तित्वात् । यस्मात् अन्तरिक्षप्राणयो. साम्य, 'तस्मात्' अमूर्त्तम् 'अन्तरिक्षं' चक्षुषा न 'पश्यन्ति' । 'प्राण' च नासिकासञ्चारिणं चक्षुषा न पश्यन्ति । येयं 'तृतीया' रेत.सिक् इष्टका, सा द्युलोकस्वरूपा उपरिवर्तित्वसाम्यात् । सा च द्यौः चक्षुःस्वरूपा, चक्षुरपि हि वाक्प्राणाभ्यामूर्ध्वं वर्त्तते । यस्माद्धि चक्षुषा साम्यं, 'तस्मात्' लोके जनाः सूर्यचन्द्रनक्षत्राद्यङ्किताम् 'अमूं' दिवं प्रत्यक्षेण 'पश्यन्ति' । 'चक्षुः' अपि शुक्लकृष्णकनीनिकोपेतं परकीयमुखस्थं न प्रत्यक्षत 'पश्यन्ति' ।

तदेवं तिस्र. प्रशस्य तासु कञ्चिद्विशेषं विधत्ते,—"यजुषा इमां च अमूं च उपदधाति मनसा मध्यमाम् एषां लोकानां क्लृप्त्यै अथो प्राणानाम्(९)" इति । "विराड् ज्योतिरधारयत्"(४।१४।१४) इति 'यजुषा' उच्चारितेन 'इमां' प्रथमा रेत सिचम् उपदध्यात् । तथा "सम्राड् ज्योतिरधारयत्"(४।१८।१५) इति यजुषा उच्चारितेन

पुरुष आत्मा च शिरश्च चत्वार्यङ्गान्यात्मन्नेवैनं बिभर्ति[१] प्रजापतिर्वा एष यदग्निस्तस्योखा चोलूखलञ्च स्तनौ तावस्य प्रजा उप जीवन्ति यदुखाञ्चोलूखलञ्चोपदधाति ताभ्यामेव यजमानोऽमुष्मिंल्लोकेऽग्निं दुहे[२] संवत्सरो वा एष यदग्निस्तस्य त्रेधाविहिता इष्टकाः प्राजापत्या वैष्णवीः ॥ २ ॥

वैश्वकर्मणीरहोरात्राण्येवास्य प्राजापत्या यदुखं बिभर्ति प्राजापत्या एव तदुप धत्ते यत् समिध आदधाति वैष्णवा वै वनस्पतयो वैष्णवीरेव तदुप धत्ते यदिष्टकाभिरग्निं चिनोतीयं वै विश्वकर्मा वैश्वकर्मणीरेव तदुप धत्ते तस्मादाहुस्त्रिवृदग्निरिति[३] तं वा एतं यजमान एव चिन्वीत यदस्यान्यः, चिनुयाद्यत्तं दक्षिणाभिर्न राधयेदग्निमस्य वृञ्जीत योऽस्याग्निं चिनुयात्तं दक्षिणाभीराधयेदग्निमेव तत् स्पृणोति ॥ ३ ॥

षोढाविहितो वै। वैष्णवीः। अन्यः। विंशतिश्च ॥ ९ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः ॥ ० ॥

अन्वारोहादिविधयो ह्यष्टमे समुदीरिताः।

अथ नवमे आसन्द्यादिकमभिधीयते । "विष्णुमुखा वै देवाः" (५।२।१) इत्यस्मिन् अनुवाके 'चतसृभिः सादयति' इति यदिहितं, तत्र सादनाधारं विधत्ते,—"सूयते वै एषः अग्नीनां यः उखायां भ्रियते॰ यत् अधः सादयेत् गर्भाः प्रपादुकाः स्युः अथो यथा सवात् प्रत्यवरोहति तादृक् एव तत् आसन्दी सादयति गर्भाणां धृत्यै अप्रपादाय अथो सत्रम् एव एनं करोति[१]" इति। 'यः' अयम् अग्निः 'उखायां' धार्यते', 'एषः' अग्निः अन्येषाम् 'अग्नीनां' मध्ये 'सूयते' अभिषिच्यते, ईश्वरत्वं प्राप्नोतीत्यर्थः। यदि एतादृशम् अग्निम्॰'अधः' भूमौ 'सादयेत्', तदानीं प्राणिनां 'गर्भाः' भूमौ 'प्रपादुकाः' पतिताः 'स्युः'। अपि च 'यथा' लोके 'सवात्' ऐश्वर्यपदात् 'प्रत्यवरोहति' भ्रश्यति । 'तादृक् एव' 'तत्' अधः-सादनम्। तस्मात् आसन्दीम् आसादयति, मदृयाम् आसन्द्याम् उख्यं स्थापयेत् । तच्च स्थापनं प्राणिगर्भधारणाय पतनराहित्याय च भवति । अपि च 'एनं' 'सत्रम्' अभिषिक्तम् ईश्वरमेव 'करोति' । एतच्च सादनविधिसमीपे एव द्रष्टव्यम्।

"न ह स्म वै पुराग्निः" (५।१।१०) इत्यनुवाके यदिहितं 'षड्द्यामं शिक्यं भवति इति', तदेतदनूद्य प्रशंसति,—"गर्भो वै एषः यत् उख्यो योनिः शिक्यं यत् शिक्यात् उखां निरूहेत् योनेः गर्भं निर्हण्यात् षड्द्यामम्॰ शिक्यं भवति षोढाविहितो वै पुरुषः आत्मा च शिरश्च चत्वारि अङ्गानि आत्मन् एव एनं बिभर्त्ति[२]" इति। योऽयम् 'उख्यः' अग्निः, स गर्भस्थानीयः । 'शिक्यं' च योनिस्थानीयम्।

यदि 'शिक्यात्' 'उखा' 'निर्ऋहेत्' निर्गमयेत् विसृतेन उद्यामराहित्येन अध पातयेत् इत्यर्थ, तदा 'योने' सकाशात् 'गर्भं' नि शेषेण हतवान भवति। अतस्तत्परिहाराय 'शिक्य' षड्भि उद्यामै ऊर्ध्वप्रसृतरज्जुविशेषैर्युक्तं कर्त्तव्यम्। लोके 'पुरुष' 'योढाविहित षड्भि अवयवैरुपेत। 'आत्मा' मध्यशरीरम् एकोऽवयव, 'शिर' द्वितीयावयव, द्वौ हस्तौ, द्वौ पादौ इति 'चत्वारि' 'अङ्गानि'। अत षडुद्यामे सति षडवयवयुक्तस्वशरीरे 'एव' 'एनम्' अग्नि धारयति। एतच्च वाक्य षडुद्यामविधिसमीपे द्रष्टव्यम्।

"एषा वा एतल्लोकानाम्" (५।१।८) इत्यनुवाके यत् 'उखामुपदधाति' इति विहित यच्च "स्वयमातृण्णाम्" (५।२।८) इत्यनुवाके 'उलूखलमुपदधाति' इति विहित, तदुभयमत्र सह प्रशंसति,—"प्रजापति वै एष यत् अग्नि तस्य उखा च उलूखल स्तनौ तौ अस्य प्रजा उप जीवन्ति यत् उखा च उलूखल च उपदधाति ताभ्याम् एव यजमान अमुष्मिन् लोके अग्नि दुहे[१]' इति। चयीयमान 'अग्नि', 'एष' प्रजापतिस्वरूप। तेन चितत्वात् उखालूखलयो फलसाधनत्वात् स्तनसादृश्यम्। एतदनुष्ठानजन्य फल 'प्रजा' 'उप–जीवन्ति'। एतदुपधानेन 'यजमान' अपि स्वर्गे तत् फल 'दुहे'। एतच्च उदाहृतयो अनुवाकयो एकत्र द्रष्टव्यम्।

अथ उख्यधारण-समिदाधानेष्टकोपधानानि प्रशंसति,—'संवत्सरो वै एष यत् अग्नि तस्य त्रेधाविहिता इष्टका प्राजापत्या वैष्णवी वैश्वकर्मणी अहोरात्राणि एव अस्य प्राजापत्या यत् उख्य बिभर्ति प्राजापत्या एव तत् उप धत्ते यत् समिध आदधाति

वैष्णवाः वै वनस्पतयः वैष्णवीः एव तत् उप धत्ते यत् इष्टकाभिः अग्निं चिनोति इयं वै विश्वकर्मा वैश्वकर्मणीः एव तत् उप धत्ते तस्मात् आहुः त्रिवृत् अग्निः इति[४]" इति। योऽयं चीयमानः 'अग्निः' स एव संवत्सरधारणात् संवत्सरात्मकः। 'तस्य' च संवत्सररूपस्य अग्नेः सम्बन्धिन्यः 'इष्टकाः' 'त्रेधा विहिताः' त्रिप्रकाराः सम्पादिताः। कास्ताः? इति, ताः उच्यन्ते—'प्राजापत्याः' वैष्णव्यो वैश्वकर्मण्यश्च। यानि एतानि 'अहोरात्राणि,' तानि 'एव' 'अस्य' संवत्सररूपस्य अग्नेः प्रजापतिनिर्मितत्वात् 'प्राजापत्याः' द्रष्टव्याः। अत्र उत्पधारणेन प्राजापत्याः उपहिता भवन्ति। तदेवं प्राजापत्यादिभिः तिसृभिः निष्पादितत्वात् 'अग्निः' त्रिगुणः इति अभिज्ञाः 'आहुः'।

अथ उपधानकर्त्तारं विधत्ते,—"तं वै एतं यजमानः एव चिन्वीत यत् अस्य अन्यः चिनुयात् तं दक्षिणाभिः न राधयेत् अग्निम् अस्य वृञ्जीत यः अस्य अग्निं चिनुयात् तं दक्षिणाभिः राधयेत् अग्निम् एव तत् स्पृणोति[५]" इति। यजमान एव चयनस्य कर्त्ता, न अध्वर्युः। यदि अध्वर्युः कुर्यात्, तदानीम् अध्वर्य्योः दक्षिणाभिः परितोषाभावे सति अग्निं नाशयेत्। अथ स्वयमशक्तः अध्वर्युणा कारयेत्, तदा 'तं' 'दक्षिणाभिः' तोषयेत्। तेन 'अग्निम्' 'एव' तोषयति। तदिदं ब्राह्मणद्वयं मन्त्रव्याख्यानमध्ये अवकाशाभावेन निवेशनीयम्।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः- संहिताभाष्ये पञ्चमकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥०॥

---

प्रजापतिरग्निमचिनुतर्तुभिः संवत्सरं वसन्तेनैवास्य पूर्वार्धमचिनुत ग्रीष्मेण दक्षिणं पक्षं वर्षाभिः पुच्छꣳ शरदोत्तरं पक्षꣳ हेमन्तेन मध्यं[१] ब्रह्मणा वा अस्य तत् पूर्वार्द्धमचिनुत क्षत्रेण दक्षिणं पक्षं पशुभिः पुच्छं विशोत्तरं पक्षमाशया मध्यं[२] य एवं विद्वानग्निं चिनुत ऋतुभिरेवैनं चिनुतेऽथो एतदेव सर्वमव ॥ १ ॥

शृण्वे शृण्वन्त्येनमग्निं चिक्यानमत्त्यन्नꣳ रोचते[३] इयं वाव प्रथमा चितिरोषधयो वनस्पतयः पुरीषमन्तरिक्षं द्वितीया वयाꣳसि पुरीषमसौ तृतीया नक्षत्राणि पुरीषं यज्ञश्चतुर्थी दक्षिणा पुरीषं यजमानः पञ्चमी प्रजा पुरीषं[४] यत्त्रिचितीकं चिन्वीत यज्ञं दक्षिणामात्मानं प्रजामन्तरियात्तस्मात्पञ्चचितीकश्चेतव्य एतदेव सर्वꣳ स्पृणोति[५] यत्तिस्रश्चितयः ॥ २ ॥

चिद्द्व्यग्निर्यद्धे द्विपाद्यजमानः प्रतिष्ठित्यै[६] पञ्च चितयो भवन्ति पाङ्क्तः पुरुष आत्मानमेव स्पृणोति पञ्च चितयो भवन्ति पञ्चभिः पुरीषैरभ्यूहति दश सम्पद्यन्ते दशाक्षरो वै पुरुषो यावानेव पुरुषस्तꣳ स्पृणोत्यथो दशाक्षरा विराडन्नं विराड् विराज्येवान्नाद्ये प्रति तिष्ठति[७] संवत्सरो वै षष्ठी चितिः ऋतवः पुरीषꣳ[८] षट् चितयो भवन्ति षट् पुरीषाणि द्वादश

सम्पद्यन्ते द्वादश मासाः संवत्सरः संवत्सर एव प्रति तिष्ठति[१] ॥ ३ ॥

अव । चितयः । पुरीषम् । पञ्चदश च ॥ १० ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके दशमोऽनुवाकः ॥०॥

आमन्त्र्यामसुख्यानि नवमे वर्णितानि हि ।

अथ दशमे चयनं बहुधा प्रशस्यते । तत्र वसन्ताद्यृतुद्वारा प्रशंसामाह,—"प्रजापतिः अग्निम् अचिनुत ऋतुभिः संवत्सरं वसन्तेनैवास्य पूर्वार्धम् अचिनुत ग्रीष्मेण दक्षिणं पक्षं वर्षाभिः पुच्छꣳ शरदा उत्तरं पक्षꣳ हेमन्तेन मध्यम्[1]" इति । अथ संवत्सरो दृष्टान्तः । ऋतुभिर्यथा संवत्सरो निष्पाद्यते, तथा 'अग्निम्' अपि 'ऋतुभिः' 'प्रजापतिः' 'अचिनुत' । ऋतुमयोऽयं यज्ञः इति मत्वा एव चयनं, तत्र वसन्तः शिरोभागः । एवं दक्षिणपक्षादयो योज्याः ।

अथ ब्राह्मणादिरूपत्वं महत्त्वेन प्रशंसति,—"ब्रह्मणा वै अस्य तत् पूर्वार्धम् अचिनुत क्षत्रेण दक्षिणं पक्षं पशुभिः पुच्छं विशा उत्तरं पक्षम् आशया मध्यम्[2]" इति । आशा मानसी इच्छादिः ।

अथ वेदनं प्रशंसति,—"य एवं विद्वान् अग्निं चिनुते ऋतुभिः एव एनं चिनुते अथो एतत् एव सर्वम् अव रुन्धे ऋध्नोति एनम् अग्निं चिक्यानम् अस्ति अस्यꣳ शेयते[3]" इति । 'यः' यजमानः 'एवं' वसन्ताद्यात्मकं ब्राह्मणाद्यात्मकं च 'विद्वान्' सन्नेव संचरा

भावयन् 'अग्निं' 'चिनुते', सः प्रजापतिवत् 'ऋतुभिः' ब्राह्मणादिभिश्च चितवान् भवति। अपि च 'एतत्' ऋतूनां ब्राह्मणादीनां च स्वरूपं 'सर्वम्' अधीनं करोति। किञ्च 'अग्निं' चितवन्तम् 'एनं' यजमानं सर्वे जनाः 'प्रशंसन्ति', "अग्निचित् कपिला सत्री" इत्यादिस्मृतिविषयत्वेन सर्वत्र प्रसिद्धो भवतीत्यर्थः। किञ्च 'अन्नं' मृष्टञ्च स्वादु च सर्वदा 'अत्ति'। अपि च सर्वेभ्यः 'रोचते' प्रीतिविषयो भवति।

अथ चितिपञ्चकं पुरीषपञ्चकं च भूम्यादिरूपेण प्रशंसति,— "इयं वाव प्रथमा चितिः ओषधयो वनस्पतयः पुरीषम् अन्तरिक्षं द्वितीया वयाꣳसि पुरीषम् असौ तृतीया नक्षत्राणि पुरीषं यज्ञ-श्चतुर्थी दक्षिणा पुरीषं यजमानः पञ्चमी प्रजा पुरीषम्(४)" इति। या 'इयं' 'प्रथमा चितिः', सा भूमिरेव। यच्च तस्या उपरि प्रसारितं 'पुरीषं', तत् ओषधि-वनस्पतिस्वरूपम्। एवमुत्तरत्रापि द्रष्टव्यम्।

अथ शाखान्तरगतं त्रिचितिचयपक्षं निराकृत्य स्वकीयं चितिपञ्चकपक्षं स्थापयति,—"यत् त्रिचितीकं चिन्वीत यज्ञं दक्षिणाम् आत्मानं प्रजाम् अन्तः इयात् तस्मात् पञ्चचितीकः चेतव्यः एतदेव सर्वꣳ स्पृणोति(५)" इति। चतुर्थचिति-तत्पुरीषयोर्यज्ञ-दक्षिणारूपत्वमुक्तम्, पञ्चमचिति-तत्पुरीषयोर्यजमान-प्रजारूपत्वम्। एवं सति त्रिचितिपक्षे यज्ञादीनाम् अन्तरायः स्यात्। 'तस्मात्' पञ्चचितियुक्त एव अग्निः 'चेतव्यः'। तथा सति 'एतत्' भूम्यादिकं 'सर्वम्' अपि प्रीणयत्येव।

आद्यं चितित्रयम् उत्तरद्वयञ्च विभज्य प्रशंसति,—"यत् तिस्रः चितयः त्रिवृत् हि अग्निः यद् द्वे द्विपाद् यजमानः प्रतिष्ठित्यै[६]" इति। या एता आद्याः 'तिस्रः' 'चितयः', ताभिः अग्नेस्त्रैगुण्यं सम्पादितं भवति। त्रैगुण्यञ्च प्राजापत्यादिभिरिष्टकाभिः पूर्वमुक्तम्। ये च उत्तरे 'द्वे' चिती, ताभ्यां 'द्विपाद् यजमानः' प्रतिष्ठितो भवति।

अथ समूहरूपेण प्रशंसति,—"पञ्च चितयो भवन्ति पाङ्क्तः पुरुषः आत्मानम् एव स्पृणोति पञ्च चितयो भवन्ति पञ्चभिः पुरीषैः अभ्यूहति दश सम्पद्यन्ते दशाक्षरो वै पुरुषः यावान् एव पुरुषः तं स्पृणोति अथो दशाक्षरा विराट् अन्नं विराड् विराजि एव अन्नाद्ये प्रति तिष्ठति[७]" इति। पुरुषस्य दशाक्षरत्वं छिद्राभिप्रायेण द्रष्टव्यम्। यानि शिरसि सप्त छिद्राणि, ये च अधो द्वे छिद्रे, या च नाभिः, तानि सर्वाणि यावज्जीवम् अविनाशात् अक्षराणीत्युच्यन्ते। एतदेवाभिप्रेत्य तत्र तत्र आम्नायते,—"सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ। नव वै पुरुषे प्राणा नाभिर्दशमी" इति। अतो दशसङ्ख्या पुरुषं साकल्येन प्रीणयति। किं च विराड्द्वारा अन्ने 'प्रति'-'तिष्ठति'।

अथ षष्ठचितिं तत्पुरीषञ्च प्रशंसति,—"संवत्सरो वै षष्ठी चितिः ऋतवः पुरीषम्[८]" इति। अत्र सर्वत्र प्रशंसारूपत्वात् संवत्सरादि-रूपतायां न विशेषतव्यम्।

अथ सर्वं मिलित्वा(?) प्रशंसति,—"षट् चितयो भवन्ति षट् पुरीषाणि द्वादश सम्पद्यन्ते द्वादश मासाः संवत्सरः संवत्सरे एव प्रति तिष्ठति[९]" इति। तदेतद् ब्राह्मणं सर्वान्ते द्रष्टव्यम्।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके दशमोऽनुवाकः ॥ ० ॥

---

रोहि॑तो धू॒म्ररो॑हितः क॒र्कन्धु॑रोहित॒स्ते प्रा॑जाप॒त्या ब॒भ्रुर॑रु॒णब॑भ्रुः शु॒कब॑भ्रु॒स्ते रौ॒द्राः श्येतः॑ श्ये॒ता॒क्षः श्येत॑ग्रीव॒स्ते पि॑तृदेव॒त्या॑स्ति॒स्रः कृ॒ष्णा व॒शा वा॑रु॒ण्य॑स्ति॒स्रः श्वे॒ता व॒शाः सौ॒र्यो मै॑त्राबार्हस्प॒त्या धू॒म्रल॑लामास्तूप॒राः ॥ ११ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके एकादशोऽनुवाकः ॥ ० ॥

चयनस्य प्रसङ्गात्र दशमे बहुधेरिता ।
अथाष्टादशसंख्यामान पशवो ह्यश्वमेधिका ॥

अष्टादशसङ्ख्याकाना पशूनाम् एकैक मन्त्रात । तत्र अस्मिन एकादशे अनुवाके प्रथम मन्त्रमाह,—"रोहितो धूम्ररोहित कर्कन्धु रोहित ते प्राजापत्या बभ्रु अरुणबभ्रु शुकबभ्रु ते रौद्रा श्येत श्येताक्ष श्येतग्रीव ते पितृदेवत्या तिस्र कृष्णा वशा वारुण्य तिस्र श्वेता वशा सौर्य मैत्राबार्हस्पत्या॰ धूम्रललामा तूपरा॰(१)' इति। पूर्वप्रपाठके "इन्द्राय राज्ञे सूकर"(५।५।२२) इत्यादौ जातिभेदा उक्ता', इह तु वर्णभेदा उच्यन्ते। 'रोहित लोहितवर्ण' 'धूम्ररोहित' अस्पष्टलोहित। 'कर्कन्धुरोहित' सौवीर-

वर्णः । 'ते' एते चयः 'प्राजापत्याः' प्रजापतिदेवताकाः । एवमुत्तरत्रापि एकैकस्य देवस्य चयस्त्रयो विज्ञेयाः । 'बभ्रुः' पाण्डुरकपिलः। 'अरुणबभ्रुः' रक्तकपिलः। 'शुकबभ्रुः' हरितशुकसमानवर्णः । 'श्येतः' अरक्तकवर्णः, शुक्लरक्त इत्येके । 'श्येताक्षः' रक्तदृष्टिः । 'श्येतग्रीवः' प्रसिद्धः । 'तिस्रः' इत्यादिकं स्पष्टम् । 'धूम्रललामाः' धूम्रवर्णपुण्ड्राः । 'तूपराः' शृङ्गहीनाः ।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके एकादशोऽनुवाकः ॥०॥

---

पृश्निस्तिरश्चीनपृश्निरूर्ध्वपृश्निस्ते मारुताः फल्गूर्लोहितोर्णी बलक्षी ताः सारस्वत्यः पृषती स्थूलपृषती क्षुद्रपृषती ता वैश्वदेव्यस्तिस्रः श्यामा वशाः पौष्णियस्तिस्रो रोहिणीर्वशा मैत्रिय ऐन्द्राबार्हस्पत्या अरुणललामास्तूपराः ॥ १ ॥

रोहितः पृश्निः षड्विंशतिः षड्विंशतिः ॥ १२ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः ॥ ० ॥

अथ द्वितीयं सद्दमाह,—

"पृश्निः तिरश्चीनपृश्निः ऊर्ध्वपृश्निः ते मारुताः फल्गूः लोहितोर्णी बलक्षी ताः सारस्वत्यः पृषती स्थूलपृषती क्षुद्रपृषती ताः वैश्वदेव्यः

तिस्रः श्यामा. वशाः पौष्णिय. तिस्रो रोहिणीः वशा मैत्रिय. ऐन्द्राबार्हस्पत्या अरुणललामा तूपराः" इति । 'पृश्नि' शुक्लबिन्दुचितश्वित्रवर्णः । तिर्य्यक्प्रवृत्तपृश्निवर्णः * । एतेन 'ऊर्द्ध्वपृश्नि' व्याख्यात । 'फल्गूः' लवणवर्णः । 'लोहितोर्णी' लोहितलोमा । 'वलची' शुक्लावयवा । 'पृषती' शुक्लबिन्दुभिश्चिता । 'स्थूलपृषती' स्थूलशुक्लबिन्दुभिश्चिता । 'क्षुद्रपृषती' सूक्ष्मशुक्लबिन्दुभिरुपेता । 'श्यामाः' श्यामवर्णाः । 'रोहिणी.' रोहितवर्णा. । 'अरुणललामा' सन्ध्यावर्णपुण्ड्राः ।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये षष्ठप्रपाठके द्वादशोऽनुवाक. ॥०॥

---

शितिबाहुरन्यतःशितिबाहुः समन्तशितिबाहुस्त ऐन्द्रवायवाः शितिरन्ध्रोऽन्यतःशितिरन्ध्रः समन्तशितिरन्ध्रस्ते मैत्रावरुणाः शुद्धवालः सर्वशुद्धवालो मणिवालस्त आश्विनास्तिस्रः शिल्पा वशा वैश्वदेव्यस्तिस्रः श्येनीः परमेष्ठिने सोमापौष्णाः श्यामललामास्तूपराः ॥ १३ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके त्रयदशोऽनुवाकः ॥०॥

---

* एवमेव सर्व्वत्र पाठ।'तिरश्चीनपृश्नि' तिर्य्यक्प्रवृत्तपृश्निवर्णः—इत्येव पाठो भवितु युक्त ।

तृतीयं मन्त्रमाह,—

"शितिबाहुः अन्यतःशितिबाहुः समन्तशितिबाहुः ते ऐन्द्रवायवाः शितिरन्ध्रः अन्यतःशितिरन्ध्रः समन्तशितिरन्ध्रः ते मैत्रावरुणाः शुद्धवालः सर्वशुद्धवालः मणिवालः ते आश्विनाः तिस्रः शिल्पाः वशाः वैश्वदेव्यः तिस्रः श्येनीः परमेष्ठिने सोमापौष्णाः श्यामललामा-स्तूपराः" इति। शितिः शुक्लो बाह्वेकदेशो यस्य असौ 'शितिबाहुः'। 'अन्यतःशितिबाहुः' यत् प्रथमस्य शितित्वं, ततोऽन्यत्रैकदेशे शितित्वं यस्य सः अन्यतःशितिः, तादृशो बाहुर्यस्य स तथोक्तः। 'समन्तशिति-बाहुः' सर्वशुक्लबाहुः। 'शितिरन्ध्रः' शुक्लच्छिद्रः। अन्यतःशितिरन्ध्र-समन्तशितिरन्ध्रौ च पूर्ववत्। 'शुद्धवालः' शुक्लपुच्छावयवः। 'सर्वशुद्ध-वालः' शुक्लसर्वपुच्छः। 'मणिवालः' शुक्लाशुक्लचितवालः। 'शिल्पाः' नानावर्णाः। श्येन्यः शुक्लवर्णाः। 'श्यामललामाः' श्यामवर्णपुण्ड्राः।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके चयोदशोऽनुवाकः ॥ ० ॥

---

उन्नत ऋषभो वामनस्त ऐन्द्रावरुणाः शिति-ककुच्छितिपृष्ठः शितिभसत्त ऐन्द्रा बार्हस्पत्याः शिति-पाच्छित्योष्ठः शितिभ्रुस्त ऐन्द्रावैष्णवास्तिस्रः सिध्मा वशा वैश्वकर्मण्यस्तिस्रो धात्रे पृषोदरा ऐन्द्रापौष्णाः

श्येतललामास्तूपराः । १ । २ । शितिबाहुरुन्नतः पञ्चविंशतिः पञ्चविंशतिः ॥ १४ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके चतुर्दशोऽनुवाकः ॥ ० ॥

---

अथ चतुर्थं मह्माह,—

"उन्नत ऋषभो वामन ते ऐन्द्रावरुणा शितिकरुत् शितिपृष्ठ शितिभसत् ते ऐन्द्राबार्हस्पत्या शितिपात् शित्योष्ठ. शितिभ्रु ते ऐन्द्रावैष्णवा' तिस्र. सिध्मा' वशा' वैश्वकर्मण्य तिस्रो धात्रे पृषोदरा ऐन्द्रापौष्णाः' श्येतललामास्तूपरा" इति । 'उन्नतः' उन्नतपृष्ठ 'ऋषभ' युवा । 'वामन' ह्रस्वाङ्ग. । शिति शुक्ल' ककुत् यस्य स तथोक्त' । 'शितिपृष्ठ.' श्वेतपृष्ठः । 'शितिभसत्' शुक्लजघन । 'शितिपात्' स्पष्टम् । 'शित्योष्ठ' श्वेतोष्ठः । 'शितिभ्रु.' श्वेतभ्रु । 'सिध्माः' सिध्मलाङ्गा, पादे शिता श्वैत्याङ्कितदेहा । 'पृषोदरा' पृषन्ति उदरे यासां ता पृषोदरा । 'श्येतललामा' स्पष्टा ।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके चतुर्दशोऽनुवाक ॥ ० ॥

कर्णास्त्रयो यामाः सौम्यास्त्रयः श्वितिङ्गा अग्नये यविष्ठाय त्रयो नकुलास्तिस्रो रोहिणीस्त्र्यव्यस्ता वसूनां तिस्रोऽरुणा दित्यौह्यस्ता रुद्राणाꣳ सोमैन्द्रा बभ्रुललामास्तूपराः। १। कर्णाः त्रयोविꣳशतिः॥१५॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके पञ्चदशोऽनुवाकः॥०॥

पञ्चमं मन्त्रमाह,—

"कर्णाः त्रयो यामाः सौम्याः त्रयः श्वितिङ्गाः अग्नये यविष्ठाय त्रयो नकुलाः तिस्रः रोहिणीः त्र्यव्यः वसूनां तिस्रः अरुणाः दित्यौह्यः ताः रुद्राणाꣳ सोमैन्द्राः बभ्रुललामाः तूपराः" इति। 'कर्णाः' छिन्नकर्णाः। 'यामाः' यमदेवत्याः। 'श्वितिङ्गाः' श्वेतपादाः। 'यविष्ठाय' युवतमाय। 'नकुलाः' नकुलवर्णाः। 'अव्यः' मार्जारवर्णाः। 'रोहिणीः' लोहितवर्णाः। 'दित्यौह्यः' द्विवर्षाः। 'अरुणाः' अरुणवर्णाः। 'बभ्रुललामाः' पिङ्गलपुण्ड्राः।

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके पञ्चदशोऽनुवाकः॥०॥

---

शण्ठास्त्रयो वैष्णवा अधीलोधकर्णास्त्रयो विष्णव उरुक्रमाय लप्सुदिनस्त्रयो विष्णव उरुगायाय पञ्चावी-

स्तिस्र आदित्यानां चिवत्मास्तिस्रोऽङ्गिरसामैन्द्रावैष्णवा गौरललामास्तूपराः । १ ।

शुण्ठाः विंशतिः ॥ १६ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके षोडशोऽनुवाकः ॥ ० ॥

षष्ठं मन्त्रमाह,—

"शुण्ठाः चयो वैष्णवा, अधीलोधकर्णाः चयो विष्णवे उरुक्रमाय लम्बुदिनः चयो विष्णवे उरुगायाय पञ्चावीः तिस्रः आदित्यानां चिवत्माः तिस्रः अङ्गिरसाम् ऐन्द्रावैष्णवाः गौरललामाः तूपराः" इति । 'शुण्ठाः' अवेष्टितकर्णाः, अल्पकायाः इत्येके । 'अधीलोधकर्णाः' कर्णोपरिप्रच्छ्ढकर्णाः । 'उरुक्रमाय' विस्तीर्णपादाय । 'लम्बुदिनः' लम्बमानपुच्छः । 'उरुगायाय' उरुभिर्महर्षिभिर्गीतव्याय । पञ्चाव्यः अर्धतृतीयवर्षाः चिवत्सराः । 'गौरललामाः' स्पष्टाः ।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके षोडशोऽनुवाकः ॥ ० ॥

---

इन्द्राय राज्ञे चयः शितिपृष्ठा इन्द्रायाधिराजाय चयः शितिककुद इन्द्राय स्वराज्ञे चयः शितिभसदस्तिस्रस्तुर्याह्यः साध्यानान्तिस्रः पष्ठौह्यो विश्वेषां देवानां-

माग्नेन्द्राः कृष्णललामास्तूपराः । १ । इन्द्राय द्वाविंशतिः ॥ १७ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके सप्तदशोऽनुवाकः ॥ ० ॥

सप्तमं सप्तमाह,—

"इन्द्राय राज्ञे त्रयः शितिपृष्ठाः इन्द्राय अधिराजाय त्रयः शितिककुदः इन्द्राय स्वराज्ञे त्रयः शितिभसदः तिस्रः तुर्यौह्यः साध्यानाम् तिस्रः पष्ठौह्यः विश्वेषां देवानाम् आग्नेन्द्राः कृष्णललामाः तूपराः" इति । शितिपृष्ठशितिककुच्छितिभसच्छब्दा व्याख्याताः । 'तुर्यौह्यः' सार्धचतुर्वर्षाः । 'साध्यानां' देवविशेषाणाम् । 'पष्ठौह्यः' चतुर्वर्षाः ।

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके सप्तदशोऽनुवाकः ॥ ० ॥

---

अदित्यै त्रयो रोहिणैता इन्द्राण्यै त्रयः कृष्णैताः कुह्वै त्रयोऽरुणैतास्तिस्रो धेनवो राकायै त्रयोऽनड्वाहः सिनीवाल्या आग्नावैष्णवा रोहितललामास्तूपराः । १ । अदित्यै अष्टादश ॥ १८ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके अष्टादशोऽनुवाकः ॥ ० ॥

अष्टमं मन्त्रमाह,—

"अदित्यै त्रय' रोहितैता इन्द्राण्यै त्रय' कृष्णैताः कुह्वै त्रय' अरुणैता तिस्रो धेनव. राकायै त्रयः अनड्वाह सिनीवाल्यै आग्नावैष्णवाः रोहितललामा. तूपरा." इति । 'एता' हरिता हरितवर्णा.; ते च रोहितेन अत्यन्तरक्तेन युक्ताः 'रोहितैता.'। कृष्णेन युक्ता. 'कृष्णैता.' । ईषद्रक्तेन युक्ताः 'अरुणैताः'। धेन्वादय. प्रसिद्धाः* ।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजु-संहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके अष्टादशोऽनुवाकः ॥ ० ॥

---

सौम्यास्त्रयः पिशङ्गाः सोमाय राज्ञे त्रयः सारङ्गाः पार्जन्या नभोरूपास्तिस्रोऽजा मल्हा इन्द्राण्यै तिस्रो मेष्य आदित्या द्यावापृथिव्या मालङ्गास्तूपराः । १ । सौम्याः एकान्नविंशतिः ॥ १९ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके ऊनविंशोऽनुवाकः ॥ ० ॥

नवमं मन्त्रमाह,—

"सौम्यास्त्रय पिशङ्गा सोमाय राज्ञे त्रय. सारङ्गा' पार्जन्या

---

* अत्र 'ते च' इत्यत्र 'ता च' इति, एवं 'कृष्णेन युक्ता' इत्यत्र 'कृष्णेन युक्ता' इति सर्व्वत्र पाठ प्रामादिक इव प्रतिभाति।

नभोरूपाः तिस्रः अजाः मल्हाः इन्द्राण्यै तिस्रो मेष्य आदित्याः द्यावापृथिव्याः मालङ्गाः तूपराः” इति। 'पिशङ्गाः' गोरोचनवर्णाः। 'सारङ्गाः' सारङ्गवर्णाः। 'पार्जन्याः' पर्जन्यदेवत्याः। 'नभोरूपाः' अभ्रवर्णाः। 'मल्हाः' गलस्तनाः। 'मालङ्गाः' महाकायाः।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके ऊनविंशोऽनुवाकः॥ ० ॥

---

वा॒रु॒णास्त्रयः॑ कृ॒ष्णल॑लामा॒ वरु॑णाय॒ राज्ञे॒ त्रयो॑ रोहि॑तलला॒मा॒ वरु॑णाय रि॒शाद॑से॒ त्रयो॑ऽरु॒णल॑लामाः शि॒ल्पास्त्रयो॑ वैश्वदे॒वास्त्रयः॑ पृश्न॑यः सर्व॑देव॒त्या॑ ऐन्द्रा-सू॒राः श्येत॑ललामास्तूप॒राः ॥ १ ॥ वा॒रु॒णा विं॑शतिः ॥ २० ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके विंशोऽनुवाकः॥ ० ॥

दशमं पशुमाह,—

"वारुणास्त्रयः कृष्णललामाः वरुणाय राज्ञे त्रयो रोहितललामाः वरुणाय रिशादसे त्रयः अरुणललामाः शिल्पाः त्रयः वैश्वदेवाः त्रयः पृश्नयः सर्वदेवत्याः ऐन्द्रासूराः श्येतललामाः तूपराः” इति। रिशानां लोकहिंसकानां नाशयित्रे।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके विंशोऽनुवाकः॥ ० ॥

सोमा॑य स्व॒रा॒ज्ञे॑ऽनोवा॒हाव॑न॒ड्वाहा॒विन्द्रा॒ग्निभ्या॑मोजो॒दाभ्या॑मु॒ष्टारा॒विन्द्रा॒ग्निभ्यां॑ बल॒दाभ्यां॑ सीरवा॒हावव्री॒ द्वे धे॒नू भौ॒मी दि॒ग्भ्यो वड॑बे॒ द्वे धे॒नू भौ॒मी वै॑रा॒जी पु॑रु॒षी द्वे धे॒नू भौ॒मी वा॒यव॑ आरोहणवा॒हाव॑न॒ड्वाहौ॑ वारु॒णी कृ॒ष्णे व॒शे अ॑रा॒ड्यौ॑ दि॒व्या॑वृष॒भौ प॑रिम॒रौ ।१। सोमा॑य॒ चतु॑स्त्रिꣳशत् ॥ २१ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके एकविंशोऽनुवाकः ॥ ० ॥

एवमेतैर्दशभिरनुवाकैः अष्टादशिनः पशवः आम्नाताः। अथैकेनानुवाकेन द्विनः पशूनाह,—

"सोमाय स्वराज्ञे अनोवाहौ अनड्वाहौ इन्द्राग्निभ्याम् ओजोदाभ्याम् उष्टारौ इन्द्राग्निभ्यां बलदाभ्याꣳ सीरवाहौ अव्री द्वे धेनू भौमी दिग्भ्यो वडबे द्वे धेनू भौमी वैराजी पुरुषी द्वे धेनू भौमी वायवे आरोहणवाहौ अनड्वाहौ वारुणी कृष्णे वशे अराड्यौ दिव्यौ ऋषभौ परिमरौ" इति। 'अनोवाहौ' शकटवहनसमर्थौ। 'अनड्वाहौ' बलीवर्दौ। 'ओजोदाभ्याम्' अष्टमधातुप्रदाभ्यां*। 'उष्टारौ' शकटवाहिनोः सहकारित्वेन पुरोगामियुगवोढारौ। 'सीरवाहौ' लाङ्गलवाहिनौ। 'अव्री' अविसदृशौ ह्रस्वौ अनड्वाहौ इत्यर्थः। भूमेर्धेनुद्वयम्। दिशां वडवाद्वयम्। पुन-

* 'प्रदातारौ' इति सर्व्वत्र पाठः।

भूमेर्धेनुद्वयम् । विराट्-देवतायाः 'पुरुषी' मनुष्यस्त्रियौ । पुनर्भूमेर्धेनुद्वयम् । 'आरोहणवाहौ' मनुष्यारोहणार्थं निर्मितं शकटं वहन्तौ बलीवर्दौ । पूर्वन्तु धान्यादिवाहिकशकटार्थावुक्तौ ; अत्र तु राजकुमारादिविनोदार्थं शकटवाहिनावित्यर्थः । वरुणस्य तु कृष्णाम्मृगजातीये स्त्रियौ वन्ध्ये । द्युदेवतायास्तु 'अराडौ' उच्छ्रितशृङ्गौ ; 'ऋषभौ' सेचकौ ; 'परिमरौ' उभयतो मरणयुक्तौ, यस्य पशोः अग्रजोऽपि मृतः अनुजोऽपि मृतः तादृशौ ।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके एकविंशोऽनुवाकः ॥०॥

---

एका॑दश प्रा॒तर्ग॒व्याः प॒शव॒ आ ल॑भ्यन्ते छग॒लः क॒ल्माषः॑ किकिदी॒विर्वि॑दी॒गय॒स्ते त्वा॒ष्ट्राः सौ॒रीर्नव॑ श्वे॒ता व॒शा अ॑नूब॒न्ध्या॑ भवन्त्याग्ने॒य ऐ॑न्द्रा॒ग्न आ॑श्वि॒नस्ते वि॑शाल॒यूप॒ आ ल॑भ्यन्ते ॥ १ ॥

एका॑दश॒ पञ्च॑विꣳशतिः ॥ २२ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके द्वाविंशोऽनुवाकः ॥०॥

अथ उत्तमेऽह्न्यतिरात्रेऽनुष्ठेयान् कांश्चित्पशूनाह,—

"एकादश प्रातर्गव्याः पशवः आ लभ्यन्ते छगलः कल्माषः किकिदीविः विदीगयः ते त्वाष्ट्राः सौरीः नव श्वेताः वशाः अनूबन्ध्याः

भवन्ति आग्नेय, ऐन्द्राग्न आश्विनस्ते विशालयूपे आ-लभ्यन्ते" इति। तृतीयेऽह्नि प्रातःकाले गोजातीया एकादश पशवः। ते च देवताविशेषस्य अनुक्तत्वात् प्राजापत्याः। छगलादयस्त्रयः 'त्वाष्ट्राः'। 'छगल' छागार्भकः, स च 'कल्माषः' कृष्णवर्णमिश्रः। 'किकिदीविः' तित्तिरिः। 'विदीगयः' कुक्कुटविशेषः। एते च तस्मिन्नेवाहनि आलभ्याः। 'सौरीः' सूर्यदेवताकाः। 'अनूबन्ध्याः' चरमकालीनाः पशवः। ताश्च 'वशाः' बन्ध्याः, 'श्वेता' श्वेतवर्णाः, त्र्यवसङ्ख्याकाश्च 'भवन्ति'। पुनरपि आग्नेयादयस्त्रयः पशव, आलभ्यन्ते। 'ते' च त्रयो मध्यमे यूपे अतिविस्तृताग्निष्ठाख्ये यूपे 'आ'-'लभ्यन्ते'।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके द्वाविंशोऽनुवाकः ॥०॥

---

पि॒शङ्गा॒स्त्रयो॑ वास॒न्ताः सा॒रङ्गा॒स्त्रयो॒ ग्रैष्माः॒ पृष॑न्त॒स्त्रयो॒ वार्षि॑काः पृश्न॑य॒स्त्रयः॑ शा॒र॒दाः पृश्नि॑स॒क्थास्त्रयो॒ हैम॑न्तिका अवलि॒प्तास्त्रयः॑ शैशि॒राः सं॑वत्स॒राय॒ निव॑क्षसः ॥ १ ॥

पि॒शङ्गाः॑ विꣳश॒तिः ॥ २३ ॥

हिर॑ण्यवर्णाः। अ॒पां ग्रहा॑न्। भू॒तेष्ट॑काः। स॒जूः। सं॒वत्स॒रमु॒ख्यं॑। प्र॒जाप॑तिः,-स सु॒वर्ग॑विः। अ॒ग्निं दी॒क्षया॑। सु॒व॒र्गाय॒,-नं य॒त्। सू॒यन्ते॑। प्र॒जाप॑तिः,-क्र॒तुभिः॑

रोहि॑तः। पृश्नि॑ः। शिति॒बा॒हुः। उन्न॑तः। क॒र्णाः। शु॒ण्ठाः। इन्द्रा॑य। अदि॑त्यै। सौ॒म्याः। वा॒रु॒णाः। सोमा॑य। एका॑दश। पि॒शङ्गाः॑। त्रयो॑विꣳशतिः॥ २३॥

हिर॑ण्यवर्णाः (१।१)। भूतेष्टकाः (३।१)। छन्दो॑ यत् (५।२)। कनी॑यांसम् (८।२)। चितर्ज्ञाग्निः (१०।३)। वा॒रु॒णाः (२०।१)। चतुः॑पञ्चाशत्॥ ५४॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे षष्ठप्रपाठके त्रयोविंशोऽनुवाकः॥०॥

इति संहितापञ्चमाष्टके षष्ठप्रपाठकप्रश्नः समाप्तः॥

॥०॥ हरिः ओम्॥०॥

अथ ऋतुपशूनाह,—

"पिशङ्गास्त्रयो वासन्ता सारङ्गास्त्रयो ग्रैष्माः पृषन्तस्त्रयो वार्षिकाः पृश्नयस्त्रय, शारदाः पृश्निसक्थास्त्रयो हैमन्तिकाः अवलिप्तास्त्रयः शैशिराः संवत्सराय निवक्षसः" इति। 'पिशङ्गाः' गोरोचनवर्णाः। 'सारङ्गाः' सारङ्गवर्णा.। 'पृषन्तः' विजातीयविन्दुयुक्ताः। 'पृश्नयः' श्वेताः। 'पृश्निसक्थाः' कटिभागे श्वेतवर्णाः। 'अवलिप्ताः' मल्लोर्णवर्णाः। वसन्ताद्यृतवः तेषाम्। संवत्सरदेवतायास्तु 'निवक्षसः' निश्चेन वक्षसा युक्तः।

अत्रास्य प्रपाठकस्य विनियोगसङ्ग्रहः,—

कुम्भेष्टकामन्त्रपाद्या 'हिरण्य' (१) इति पञ्चदश।

'दिवि' (२।४) इति षड्भाद्ध्याद् देवस्य' (३।२) इत्यभिषेचनम्।
'सजूः' (४।१) आज्ञतयः पञ्च 'घृतेन' (४।१) इत्यनुपठ्यते॥
'पृष्टो' (६।४) वैश्वानरी याज्ये पुरीषं व्यापयेत्तया।
अन्वारोहेच्चितिं स्वामी 'पृथिवीमाक्रमि'(८।१) इत्यतः॥
'इष्टो यज्ञ.' 'तस्य ते' (८।६) द्वे समिष्टयजुषी मते।
'पिता मात' (८।६) इति मन्त्रेण चित्यग्निमनुशंसति॥
अश्वमेधस्य पशवो रोहिताद्या (११-२३) उदीरिताः॥
वेदार्थस्य प्रकाशेन तमो हार्दं विनाशयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठके त्रयोविंशोऽनुवाकः॥०॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरेण सायनाचार्येण विरचिते माधवीये वेदार्थ-प्रकाशनामके तैत्तिरीययजुःसंहिताभाष्ये पञ्चमकाण्डे षष्ठप्रपाठकः सम्पूर्णः॥०॥

समाप्तश्च षष्ठः प्रपाठकः॥

॥०॥ ॐतत्सत्॥०॥

॥०॥ श्रीगणेशाय नमः ॥०॥



# तैत्तिरीयसंहिताभाष्ये।

पञ्चमकाण्डे सप्तमप्रपाठके

प्रथमोऽनुवाकः।

हरिः ओम्॥

यो वा अयथादेवतमग्निं चिनुत आ देवताभ्यो वृश्च्यते पापीयान् भवति यो यथादेवतं न देवताभ्य आ वृश्च्यते वसीयान् भवत्याग्नेय्या गायत्रिया प्रथमाञ्चितिमभि मृशेत् त्रिष्टुभा द्वितीयां जगत्या तृतीयामनुष्टुभा चतुर्थीं पङ्क्त्या पञ्चमीं यथादेवतमेवाग्निं चिनुते न देवताभ्य आ वृश्च्यते वसीयान् भवति(१) इडायै वा एषा विभक्तिः पशव इडा पशुभिरेनम्॥ १॥

चिनुते(१) यो वै प्रजापतये प्रतिप्रोच्याग्निं चिनोति

नार्तिमार्च्छेत्यश्वावभितस्तिष्ठेतां कृष्ण उत्तरतः श्वेतो दक्षिणस्तावालभ्येष्टका उप दध्यादेतद्वै प्रजापते रूपं प्राजापत्योऽश्वः साक्षादेव प्रजापतये प्रतिप्रोच्याग्निं चिनोति नार्तिमार्च्छति[१] एतद्वा अह्नो रूपं यच्छ्वेतोऽश्वो रात्रियै कृष्ण एतदह्नः ॥ २ ॥

रूपं यदिष्टका रात्रियै पुरीषमिष्टका उपधास्यन् श्वेतमश्वमभि मृशेत् पुरीषमुपधास्यन् कृष्णमहोरात्राभ्यामेवैनं चिनुते[३] हिरण्यपात्रं मधोः पूर्णं ददाति मधव्योऽसानीति[४] सौर्या चित्रवत्यावेक्षते चित्रमेव भवति मध्यन्दिनेऽश्वमव घ्रापयत्यसौ वा आदित्य इन्द्र एष प्रजापतिः प्राजापत्योऽश्वस्तमेव साक्षादृध्नोति[६] ॥ ३ ॥

एनम । एतदह्नः । अष्टाचत्वारिंशच्च ॥ १ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके प्रथमोऽनुवाकः ॥०॥

---

## श्रीगणेशाय नमः ।

हरिः ओम् ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
उपानुवाक्यं यत्प्रोक्तं द्वयोः पञ्चमषष्ठयोः ।
ततोऽवशिष्टं तत्सर्वं सप्तमेऽत्राभिधीयते ॥

तत्रादौ तावत् मन्त्रविशेषैश्चितीनामभिमर्शनं विधत्ते,—"यो वै अयथादेवतम् अग्निं चिनुते आ देवताभ्यो वृश्च्यते पापीयान् भवति यो यथादेवतं न देवताभ्यः आ वृश्च्यते वसीयान् भवति आग्नेय्या गायत्रिया प्रथमां चितिम् अभि मृशेत् त्रिष्टुभा द्वितीयां जगत्या तृतीयाम् अनुष्टुभा चतुर्थीं पङ्क्त्या पञ्चमीं यथादेवतमेवाग्निं चिनुते न देवताभ्य आ वृश्च्यते वसीयान् भवति(१)" इति। यस्याश्चितेर्या देवता, तामतिक्रम्य चयनम् 'अयथादेवत'; अनतिक्रमेण यथादेवतं। अतो यथादेवतम् अनुष्ठानाय आग्नेयगायत्र्यादिभिस्तां तां 'चितिम्' 'अभि'-'मृशेत्'। "अग्ने देवाँ इहावह" (ब्रा० ३।११।६।१) इत्याग्नेयी गायत्री। "अगन्म महा मनसा यविष्ठम्" (ब्रा० ३।११।६।३) इति त्रिष्टुप्। "मेधाकारम्" (ब्रा० ३।११।६।२) इति जगती। "मनुष्वत्त्वानि धीमहि"(ब्रा० ३।११।६।२) इति अनुष्टुप्। "अग्निर्हि वाजिनम्"(ब्रा० ३।११।६।४) इति पङ्क्तिः। ता एताः नाचिकेतचयनप्रकरणे "यत्ते चितम्" (ब्रा० ३।११।६।१) इत्यनुवाके समा-

भाष्यमानत्वात् तत्रैव व्याख्यास्यन्ते। एवमभिमर्शने सति न उक्तदोषः कश्चिदप्यस्ति।

एकैकचितिस्पर्शने योऽयं मन्त्रविभाग', तमिमं प्रशंसति,—

"इडायै वै एषा विभक्तिः पशवः इडा पशुभिः एन चिनुते[१]" इति। 'विभक्ति.' गायत्र्यादिमन्त्रविभाग', स च अत्र इडार्थं क्रियते। 'इडा' हि नाम 'पशवः', "पशवो वा इडा" इति श्रुत्यन्तरात्। गायत्र्यादिच्छन्दांसि च पशुस्वरूपाणि "पशवो वै छन्दांसि" इति श्रुत्यन्तरात्। अतो गायत्र्यादिरूपै. 'पशुभि.' 'एनम्' अग्निं चितवान् भवति। एतच्च ब्राह्मणं "पशुर्वा एष यदग्नि."(५।२।१०।१) इत्यनुवाके प्रथमचित्यवसाने द्रष्टव्यम्।

अथोपधाने अश्वस्पर्शनं विधत्ते,—"यो वै प्रजापतये प्रतिप्रोच्य अग्निं चिनोति न आर्त्तिमार्च्छति अश्वौ अभितः तिष्ठेतां कृष्ण' उत्तरत. श्वेतो दक्षिण. तौ आलभ्य इष्टकाः उप दध्यात् एतत् वै प्रजापतेः रूप प्राजापत्य. अश्व. साक्षादेव प्रजापतये प्रतिप्रोच्य अग्निं चिनोति नार्त्तिमार्च्छति[२]" इति। प्रजापति, अग्नि प्रति स्रष्टृत्वात् प्रथम चेतृत्वाच्च अग्ने. स्वामी, अतस्तस्मै कथयित्वा तदनुज्ञया चयने कृते सति न विनाश प्राप्नोति, अत: कथनीयं। पार्श्वयोर्द्वौ अश्वौ अवस्थाप्य तौ स्पृष्ट्वा पश्चात् 'उप'-'दध्यात्'। 'एतत्' अश्वाख्यं शरीरं 'प्रजापतेः' स्वरूपं, प्रजापत्यचिजन्यत्वेन तस्य प्राजापत्यत्वात्। अत. अश्वस्य स्पर्शनमेव प्रजापतये कथनं। तेनासौ न विनश्यति।

तत्र स्पर्शने विषयव्यवस्थां विधत्ते,—"एतद्वै अह्नो रूपं यत् श्वेतः अश्वः रात्रियै कृष्णः एतत् अह्नो रूपं यत् इष्टकाः रात्रियै पुरीषम् इष्टकाः उपधास्यन् श्वेतम् अश्वम् अभि मृशेत् पुरीषम् उपधास्यन् कृष्णम् अहोरात्राभ्याम् एव एनं चिनुते[४]" इति। 'श्वेतः' 'अश्वः' 'इष्टकाः' च इत्युभयम् 'अह्नो रूपम्'। अतः 'इष्टकाः' 'उपधास्यन्' 'श्वेतम्' 'अभि-मृशेत्'। 'कृष्णः' अश्वः 'पुरीषं' चेत्युभयं रात्रेः स्वरूपम्। तत्स्वरूपे वर्णसाम्यं हेतुः। 'यदा 'पुरीषम्' उपधास्यति, तदा 'कृष्णम्' अभिमृशेत्। एवं सति 'अहोरात्राभ्यामेव' 'एनम्' अग्निं चितवान् भवति। एतच्च ब्राह्मणम् "अग्ने तव श्रवो वयः (५।२।६।१)" इत्यनुवाके द्रष्टव्यम्।

यदुक्तं सूत्रकारेण 'दक्षिणाकाले हिरण्मयपात्रं मधोः पूर्णं शतमानस्य कृतं चित्रं देवानामित्यवेक्ष्याग्नेनावघ्राप्य ब्रह्मणे ददाति' इति।

तत्र दानं विधत्ते,—"हिरण्मयपात्रं मधोः पूर्णं ददाति मधव्यः असानि[५] इति। परलोके मधुभोग्यद्रव्ययुक्तो भविष्यामीत्यभिप्रेत्य मधुना 'पूर्णं' सुवर्णपात्रं दद्यात्।

दाता च दानात् पूर्वकालीनमवेक्षणं विधत्ते,—"सौर्या चित्रवत्या अवेक्षते चित्रमेव भवति मध्यन्दिने[६]" इति। मध्याह्नस्य दक्षिणाकालत्वात् तदानीं दातुम् आदौ मधुपूर्णं पात्रं मन्त्रेण 'अवेक्षते'। "चित्रं देवानाम् (२।४।१४।४)" इत्येषा सौरी चित्रशब्दयुक्ता च; तया अवेक्षणे सति 'चित्रमेव' ऐश्वर्यं प्राप्नोति।

अवेक्षणादूर्ध्वं घ्रापणं विधत्ते,—"अश्वमव घ्रापयति असौ वै आदित्यः इन्द्रः एषः प्रजापतिः प्राजापत्यः अश्वः तमेव साक्षात्

च्छ्रीति(७)" इति। योऽयं चित्तत्वया प्रतिपाद्य 'आदित्य', स एव परमैश्वर्योपेतत्वात् 'इन्द्र'; प्रजानां परिपालकत्वात् 'प्रजापति'। अवघ्राताय 'प्राजापत्य'। अत अश्वावघ्राणेन त प्रजापतिम् इन्द्रम आदित्यमेव 'साक्षात्' सम्बद्धं करोति। तदिदं ब्राह्मणम् अग्रे द्रष्टव्यम् ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजु-संहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके प्रथमोऽनुवाक ॥१॥

---

त्वाम॑ग्ने वृष॒भं चेकि॑तान॒ं पुन॒र्युवा॑नं ज॒नय॑न्नु॒पागा॑म्। अ॒स्थूरि॑ णो॒ गार्ह॑पत्यानि सन्तु ति॒ग्मेन॑ नो॒ ब्रह्म॑णा॒ सꣳ शि॑शाधि(१)। प॒शवो॒ वा ए॒ते यदिष्ट॑का॒श्चित्यां॑चित्यामृष॒भ-मु॒प द॑धाति मिथु॒नमे॒वास्य॒ तद्य॒ज्ञे क॑रोति प्र॒जन॑नाय॒ तस्मा॑द्यू॒थेयू॑थ ऋष॒भः(२)। सं॒व॒त्स॒रस्य॑ प्रति॒मां यां त्वा॑ रात्र्यु॒पास॑ते। प्र॒जाꣳ सु॒वीरां॑ कृ॒त्वा विश्व॒मायु॒र्व्य॑श्न-वत्(३)। प्रा॒जा॒प॒त्यां ॥ १ ॥

ए॒तामु॒प द॑धाती॒यं वा॒वैषैका॑ष्टका यदे॒वैका॑ष्टकाया॒-मन्नं॑ क्रि॒यते॒ तदे॒वैतया॑वरु॒न्ध ए॒षा वै प्र॒जाप॑तेः काम॒-दु॒घा तयै॒व यज॑मानो॒मुष्मि॑न् लो॒केमि॒न्दु॒हे(४) येन॑ दे॒वा ज्योति॑षो॒र्ध्वा उ॒दाय॑न् येना॑दि॒त्या वस॑वो॒ येन॑ रु॒द्राः। येनाङ्गि॑रसो महि॒मान॑मान॒शुस्तेनै॑तु॒ यज॑मानः स्व॒-स्ति(५)। सु॒व॒र्गाय॒ वा ए॒ष लो॒काय॑ ॥ २ ॥

चीयते यदग्निर्येन देवा ज्योतिषोर्ध्वा उदायन्नि-त्युख्यꣳ समिन्धु इष्टका एवैता उप धत्ते वानस्पत्याः सुवर्गस्य लोकस्य समष्ट्यै(१) शतायुधाय शतवीर्याय शतो-तयेभिमातिषाहे। शतं यो नः शरदो अजीतानिन्द्रो नेषदति दुरितानि विश्वा(७)। ये चत्वारः पथयो देव-याना अन्तरा द्यावापृथिवी वियन्ति। तेषां यो अज्यानिमजीतिमावहात्तस्मै नो देवाः ॥ ३ ॥

परिदत्तेह सर्वे(८)। ग्रीष्मो हेमन्त उत नो वसन्तः शरद्वर्षाः सुवितन्नो अस्तु। तेषामृतूनाꣳ शतशारदानां निवात एषामभये स्याम(९)। इदुवत्सराय परिवत्सराय संवत्सराय कृणुता बृहन्नमः। तेषां वयꣳ सुमतौ यज्ञि-यानां ज्योगजीता अहताः स्याम(१०)। भद्रान्नः श्रेयः समनैष्ट देवास्त्वया वसेन समशीमहि त्वा। स नो मयोभूः पितो ॥ ४ ॥

आ विशस्व शन्तोकाय तनुवे स्योनः(११)। अज्या-नीरेता उप दधात्येता वै देवता अपराजितास्ता एव प्रविशति नैव जीयते(१२) ब्रह्मवादिनो वदन्ति यदर्ध-मासा मासा ऋतवः संवत्सर ओषधीः पच्त्यथ कस्माद-न्याभ्यो देवताभ्य आग्रयणं निरुप्यत इत्येता हि तद्देवता उदजयन् यदृतुभ्यो निर्वपेद्देवताभ्यः समदन्दध्यादाग्र-

यणं, निरुप्यैता आहुतीर्जुहोत्यर्धमासानेव मासानृतून्त् संवत्सरं प्रीणाति न देवताभ्य समदन्दधाति[१३] भद्रान्नः श्रेयः समनैष्ट देवा इत्याह हुतायाय यजमानस्यापराभावाय[१४] ॥ ५ ॥

प्राजापत्यां । लोकाय । देवाः । पिता । इत्यादाग्रयणं । पञ्चविंशतिश्च ॥ २ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके द्वितीयोऽनुवाक ॥०॥

चितिस्पर्शादिकन्त्वाद्येऽनुवाकेऽत्र समीरितम् ।

अथ द्वितीये ऋषभेष्टकादिकमभिधीयते । यदुक्तं सूत्रकारेण,— 'त्वामग्ने वृषभमित्यृषभमुपधाय' इति । तदिद विधातु मन्त्रमुत्पादयति,—"त्वामग्ने वृषभ चेकितान पुनर्युवान जनयन् उपागां अभ्यूरि णो गार्हपत्यानि सन्तु तिग्मेन नो ब्रह्मणा सं शिशाधि[१] इति। हे 'अग्ने', 'वृषभ' कामाना वर्षितार, 'चेकितान' सर्वज्ञ, 'युवान' नित्यतरुण 'त्वां' 'जनयन्' प्रजोत्पादक कुर्वन अह 'पुन' 'उपागा' भूयोभूय प्राप्नोति* । 'न' अस्माक 'गार्हपत्यानि' गृहपतिकर्माणि 'अभ्यूरि' 'सन्तु'। स्यूरिशब्द सारवाची अभ्यूरिण साररहिता† सन्तु । 'तिग्मेन' 'उज्ज्वलेन' 'ब्रह्मणा' ब्रह्मवर्चसेन 'न' अस्मान् 'स शिशाधि' सम्यगनुशिष्टान कुरु ।

---

* एवमेव सर्वत्र पाठ । 'भूय प्राप्नोमि' इति पाठो भवितु युक्त ।

† 'अस्पूरि' (अस्पूरीणि) साररहितानि इत्येवविध कश्चित् पाठो भवितु युक्त ।

एतन्मन्त्रसाध्यमुपधानं विधत्ते,—"पशवो वै एते यत् इष्टकाः चित्यां-चित्याम् ऋषभम् उप दधाति मिथुनमेव अस्य तत् यज्ञे करोति प्रजननाय तस्मात् यूथेयूथे ऋषभः[१]" इति। या एता अन्याः 'इष्टकाः,' ताः सर्वा गोरूपा। अतो 'यज्ञे' तासां मिथुनभावाय एताम् ऋषभाख्याम् इष्टकाम् उपदध्यात्। यस्मादत्र एकस्याञ्चित्याम् ऋषभम् उपधीयते, तस्माल्लोकेऽपि एकैकस्मिन् गोयूथे एकैक 'ऋषभः' तिष्ठति। सर्वचितिषु अपेक्षितत्वादिदं ब्राह्मणं प्रथमचित्यन्ते द्रष्टव्यम्।

यदुक्तं सूत्रकारेण,—'संवत्सरस्य प्रतिमामिति प्राजापत्याम्' इति। तदिदं विधातुं मन्त्रमुत्पादयति,—"संवत्सरस्य प्रतिमां यां त्वा रात्रि उपासते। प्रजाᳲ सुवीरां कृत्वा विश्वमायुर्व्यश्नवद्[२]" इति। 'हे रात्रि' एकाष्टकारूपे, 'यां' 'त्वा' 'प्रतिमां' प्रतिनिधिरूपां सर्वे यजमाना. 'उपासते' सेवन्ते, '*एषा वै संवत्सरस्य पत्नी यदेकाष्टका* एतस्यां वा एष एताᳲ रात्रिं वसति' इति हि अन्यत्राम्नातं। तां त्वां 'कृत्वा' इष्टोपधाय 'सुवीरां' शोभनभृत्योपेतां 'प्रजां' पुत्रादिरूपां 'विश्वमायु,' कृत्स्नमप्यायुष्यं 'व्यश्नवत्' विशेषेण व्याप्नोति।

एतन्मन्त्रसाध्यमुपधानं विधत्ते,—"प्राजापत्याम् एताम् उप दधाति इयं वाव एषा एकाष्टका यदेव एकाष्टकायाम् अन्नं क्रियते तदेव एतया अवरुन्धे एषा वै प्रजापते. कामदुघा तयैव यजमानः अमुष्मिं ल्लोकेऽस्मिं दुहे[३]" इति। एकाष्टकायाः संवत्सररूपप्रजापतिपत्नीत्वात् तद्रूपेयमिष्टका प्राजापत्या, तामेतामुपदध्यात्। 'एषा' च 'एकाष्टका' 'इयम्' एव भूमिस्वरूपा। तथा सति भूमिरूपायाम्

एतस्याम् 'एकाष्टकायां' यत् 'अन्नं' सम्पाद्यते तत्' सर्वं प्राप्नोति। किञ्च इयम् एकाष्टका 'प्रजापतेः' संवत्सररूपस्य कामधेनुः, 'यजमानः' 'अमुष्मिन् लोके' कामान् दोग्धि दुग्धे*। एतच्च नच-चेष्टकाब्राह्मणात् (५।४।१) ऊर्ध्वं द्रष्टव्यम्।

यदुक्तं सूत्रकारेण, 'येन देवा ज्योतिषोर्ध्वा उदायन्निति प्रादेश-मात्रैः काष्ठैरुख्यमुपसमिन्धे' इति। तदिदं विधातुं मन्त्रमुत्पाद-यति, "येन देवाः ज्योतिषा ऊर्ध्वाः उदायन् येन आदित्याः वसवो येन रुद्राः। येन अङ्गिरसो महिमानम् आनशुः तेन एतु यजमानः स्वस्ति(१)" इति। 'देवाः' सर्वे 'येन' 'ज्योतिषा' अग्निना 'ऊर्ध्वाः' उपरितनलोकवर्तिनः 'उदायन्' उत्कर्षं प्राप्ताः। तथा 'आदित्याः' 'वसवः' च 'येन' उदायन्। 'रुद्राः' च 'येन' अग्निना उदायन्। 'अङ्गिरसः' महर्षयः 'येन' अग्निना 'महिमानम् आनशुः' स्वकीयं सामर्थ्यं प्राप्ताः,'तेन' अग्निना 'यजमानः' अयं 'स्वस्ति' क्षेमम् 'एतु' प्राप्नोतु।

तमिमं मन्त्रं विनियुङ्क्ते,—"सुवर्गाय वा एष लोकाय चीयते यदग्निः येन देवा ज्योतिषा ऊर्ध्वाः उदायन् इति उख्यं समिन्धे इष्टकाः एवैताः उप धत्ते वानस्पत्याः सुवर्गस्य लोकस्य समष्ट्यै(१)" इति। अयं अग्निः, स्वर्गार्थं चीयमानत्वात् स्वर्गस्यसर्वदेवप्रतिपादकेन मन्त्रेण इन्धने सति याभिः समिद्भिरिध्यते, ताः सर्वाः 'वानस्पत्याः' इष्टका एव उपहिता भवन्ति। तच्च स्वर्गप्राप्त्यै सम्पद्यते। एतच्च "विष्णुमुखा वै देवाः" (५।२।१।१) इत्यनुवाके द्रष्टव्यम्।

* एवमेव सर्वत्र पाठः। 'दुग्धे' दोग्धि इति पाठो भवितुं युक्तः।

यत्तु सूत्रकारेण,—"शतायुधाय शतवीर्यायेति पञ्चाज्यानीः प्रतिदिशमेकां मध्ये" इति। तत्र प्रथमामाह,—"शतायुधाय शतवीर्याय शतोतये अभिमातिषाहे। शतं यो न शरदो अजीतान् इन्द्रो नेषत् अति दुरितानि विश्वा[७]" इति। 'यः' 'इन्द्रः' 'नः' अस्मान् 'शतं' 'शरदः' शतसङ्ख्याकान् संवत्सरान् 'अजीतान्' 'नेषत्' केनापि व्याधि-तस्करादिना यथा जिताः पीडिता न भवामः, तथा नेतुं समर्थः। किं कृत्वा ? 'विश्वा' 'दुरितानि' 'अति' सर्वाणि पापानि अतिक्रम्य ;- यानि पापानि अस्माभिः कृतानि, तानि सर्वाणि विनाश्य ; सर्वस्मिन्नप्यायुषि अस्मान् केनाप्यनुपद्रुतान् करोतीत्यर्थ। तस्मै इन्द्राय नमोऽस्त्वित्यध्याहारः। कीदृशाय ? शतसङ्ख्याकान्यायुधानि वज्रधनुरादीनि यस्यासौ शतायुधः, तस्मै। शतसङ्ख्याकानि वीर्याणि युद्धेषु विजयरूपाणि यस्यासौ शतवीर्यः, तस्मै। शतसङ्ख्याका ऊतयो-ऽस्मद्रक्षणानि यस्यासौ शतोतिः, तस्मै। 'अभिमातिषाहे'* पाप्मानं सहते अभिभवतीति अभिमातिषाट्, तस्मै।

अथ द्वितीयामाह,—"ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति। तेषां यः अज्यानिम् अजीतिम् आवहात् तस्मै नो देवाः परिदत्त इह सर्वे[८]" इति। 'द्यावापृथिवी' 'अन्तरा' द्यावापृथिव्योर्मध्ये, 'ये चत्वारः पथयः' मार्गाः 'वियन्ति' विविधं गच्छन्ति, प्रवर्तन्ते। कीदृशा मार्गाः ? 'देवयानाः' देवानां यानं गमनम् एषु ते देवयानाः; देवा हि देवलोक-पितृलोक-मनुष्यलोक-मनुष्यलोकविषयेषु मार्गेषु विसम्भेण सञ्चरन्ति ; 'तेषां' मार्गाणां

* 'अभिमातिम्' इति पदं पतितमिव प्रतिभाति।

'यः' इन्द्रः 'अज्यानिम् अजीतिम् आवहात्';—रथ प्रभृतिभिरनुपद्रवः 'अजीतिः', सा अजीतिः 'अज्यानिः' कदाचिदपि हानिरहिता; तादृशीम् अजीतिम् आवहति, तेषु मार्गेषु गच्छतामस्माकं नित्यमनुपद्रवं सम्पादयतीत्यर्थः। 'तस्मै' इन्द्राय, हे 'सर्वे' 'देवाः', 'इह' कर्मणि 'नः' अस्मान् 'परिदत्त' अयं यजमानः सर्वेषु मार्गेषु रक्षणीयः—इत्येवमस्मानिन्द्राय समर्पयत।

अथ तृतीयामाह,—"ग्रीष्मो हेमन्तः उत नो वसन्तः शरत् वर्षाः सुवितं न अस्तु। तेषामृतूनाꣳ शतशारदानां निवाते एषामभये स्याम(९)" इति। यो ग्रीष्माख्य ऋतुः, स 'नः' अस्मान् प्रति 'सुवितम्' 'अस्तु' शोभनगतिं प्राप्नोतु, कालोचितभोग्यद्रव्यप्रदः अस्त्वित्यर्थः। एवं हेमन्तादिषु योज्यम्। 'शतशारदानां' अस्मदायुषि शतसंवत्सरसम्बन्धिनां 'तेषाम्' 'एषां' ग्रीष्मादीनाम् 'ऋतूनाम्' अनुग्रहाद् वयं 'निवाते' वाताद्युपद्रवरहिते 'अभये' भयरहितस्थाने 'स्याम' सुखेनावस्थिता भवेम।

अथ चतुर्थीमाह,—"इदुवत्सराय परिवत्सराय संवत्सराय कृणुता बृहत् नमः। तेषां वयꣳ सुमतौ यज्ञियानां ज्योक् अजीताः अहताः स्याम(१०)" इति। प्रभवादिसंवत्सराणां पञ्चके चतुर्थः इदुवत्सरः, द्वितीयः परिवत्सरः, प्रथमः संवत्सरः। एतच्च कृत्स्नकालस्याप्युपलक्षणम्। हे ऋत्विग्यजमानाः, इदुवत्सरादिरूपाय कालाय 'बृहत् नमः' 'कृणुत' अत्यन्तभक्तिपुरःसरं नमस्कारं कुरुत। 'यज्ञियानां' यज्ञनिष्पादकानां तेषां संवत्सरविशेषाणां 'सुमतौ' अनुग्रहबुद्धौ सत्यां 'वयं' सर्वे 'ज्योक्' चिरम् 'अजीताः' केनाप्यवशीकृताः, 'अहताः' अमारिताश्च 'स्याम' भवेम।

अथ पञ्चमीमाह,—"भद्रात् नः श्रेयः समनैष्ट देवास्त्वया अवसेन समशीमहि त्वा। स नो मयोभूः पितो आ विशस्व शं तोकाय तनुवे स्योनः[११]" इति। हे 'देवाः', 'भद्रात्' कल्याणाद् अस्मात् कर्मसाधनभूतात् 'श्रेयः' अधिकं प्रशस्तं फलं 'नः' अस्मान् 'समनैष्ट' सम्यक् प्रापयत। तथा चित्याग्नौ ह्रूयमान हे सोम, 'त्वया' 'अवसेन' त्वदीयेन रक्षणेन वयं त्वां 'समशीमहि' सम्यक् व्याप्नुयाम। हे 'पितो' अन्नभूत सोम, 'स' त्वं 'मयोभूः' सुखस्य भावयिता सन् 'नः' अस्मान् 'आ'—'विशस्व' प्रविश। 'तोकाय' अस्मदपत्याय 'शं' सुखं कुरुत। 'तनुवे' शरीराय 'स्योनः' सुखप्रदो भव।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"अज्यानीः एताः उप दधाति एताः वै देवताः अपराजितास्ता एव प्र विशति नैव जयते[१२]" इति। अज्यानिशब्दोपेतैर्मन्त्रैरुपधेया इष्टकाः अज्यानयः, ताः उपदध्यात्। एतैर्मन्त्रैः प्रतिपाद्या या इन्द्रादिदेवताः, 'एताः'* सर्वा देवताः क्वापि 'अपराजिताः,' अयं यजमानः 'ताः' 'एव' देवताः 'प्र'-'विशति'; केनाप्यन्येन शत्रुणा 'नैव' 'जीयते'। एतदपि नक्षत्रेष्टकाब्राह्मणसमीपे (५।४।१) द्रष्टव्यम्।

अथाग्रयणप्रस्तावे यदुक्तं सूत्रकारेण,—'निरुप्तं हविरुपसन्नमप्रोक्षितं भवत्यथ पञ्चाज्यानीर्जुहोति शतायुधाय शतवीर्याय' इति।

तदिदं विधत्ते,—"ब्रह्मवादिनो वदन्ति यदर्धमासाः मासाः ऋतवः संवत्सरः ओषधीः पचन्ति अथ कस्मात् अन्याभ्यो देवताभ्य आग्रयणं निरुप्यते इति एता हि तत् देवताः उदजयन् यत् ऋतुभ्यो निर्वपेत्

* क्वच 'याः एताः' इति का० श्रौ० पुस्तकपाठः।

देवताभ्यः समदं दध्यात् आग्रयणं निरुप्य एताः आहुतीर्जुहोति अर्धमासानेव मासान् ऋतून् संवत्सरं प्रीणाति न देवताभ्यः समदं दधाति[१३]" इति। 'ब्रह्मवादिनः' परस्परमेवं विचारयन्ति, अर्धमासमासर्तुसंवत्सररूपा देवताः ओषधीनां परिपाकं सम्पादयन्ति। एवं सति, ता देवताः उपेक्ष्य 'अन्याभ्य.' इन्द्राग्न्यादिभ्यो 'देवताभ्य.' आग्रयणाख्यं नूतनधान्यरूपं हविः 'कस्मात्' कारणात् 'निरुप्यते इति?'। तत्राभिज्ञा एवमुत्तरमाहुः,—यस्मात् 'एताः' इन्द्राग्न्यादयो 'देवता.' इतरैर्देवैः सह समयं कृत्वा तत्र-तत्रौषधिविषये उत्कर्षेण जयं प्राप्ताः, तस्मात् इन्द्राग्न्यादिभ्यो निर्वापो युक्तः। एतच्च राजसूयप्रकरणे आग्रयणविधौ स्पष्टमाम्नातम्,—"देवा वा ओषधीष्वाजिमयुः ता इन्द्राग्नी उदजयताम्" (१।६।१।१०ब्रा०) इति। एवं सति व्रीहिण् इन्द्राग्न्यादीन् उपेक्ष्य यदि ऋतुमासादिदेवताभ्यो 'निर्वपेत्,' तदानीमेतासां तासां च देवतानां कलहं संपादयेत्। एवं तर्हि ओषधिपरिपाकहेतुनाम् ऋतुमासादिदेवतानां परितोषः कथम्? इति चेत्। श्रूयताम्,—इन्द्राग्न्यादिभ्यः 'आग्रयणं' 'निरुप्य' शतायुधायेति 'एताः' अन्याहुतीः मासादिदेवताभ्यो जुहुयात्। तेनार्धमासादिदेवान् प्रीणयति, ततो देवतानां कलहं न करोति।

यदपि सूत्रकारेणाग्रयणप्रस्तावे विहितम्,—'भद्रान्नः श्रेयः समनैष्ट देवा इति यजमानभागं प्राश्नाति' इति। तं विधिं मन्त्रव्याख्यानरूपार्थवादेनोन्नयति,—"भद्रात् नः श्रेयः समनैष्ट देवाः इति आह हुताद्याय यजमानस्य पराभावाय[१४]" इति। यजमानो भक्षणकाले 'भद्राद्'-इत्यादिमन्त्रं पठेत्। अयय मन्त्रो

हुतशेषस्य भ्रदनाय समर्थः। 'अशीमहि'-इति मन्त्रलिङ्गात् हुतभक्षणेन यजमानः पराभूतो न भवति। एतच्च ब्राह्मणम् आयतनविधिसमीपे (१।६।१।८ब्रा०) नेतव्यम् ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके द्वितीयोऽनुवाकः ॥०॥

---

इन्द्र॑स्य॒ वज्रो॑ऽसि॒ वार्त्र॑घ्नस्तनू॒पा नः॑ प्रतिस्प॒शः। यो नः॑ पु॒रस्ता॑द्दक्षिण॒तः प॒श्चादु॑त्त॒र॒तो॑ऽघा॒युर॑भि॒दा-स॑त्ये॒तꣳ सो॑ऽश्मान॑मृच्छतु[१]। दे॒वा॒सु॒राः संय॑त्ता आस॒न्ते ऽसु॑रा दि॒ग्भ्य आबा॑धन्त॒ तान्दे॒वा इष्वा॑ च॒ वज्रे॑ण॒ चापा॑-नुदन्त॒ यद्व॒ज्रिणी॑रुप॒दधा॑तीष्वा॒ चै॒व तद्वज्रे॑ण च॒ यज॑-मानो॒ भ्रातृ॑व्या॒नप॑ नुदते[२] दि॒क्षूप॑ ॥ १ ॥

द॒धाति॒ दे॒वपु॒रा ए॒वैता॑स्त॒नूपानीः॑ प॒र्यू॑हते[३] अग्ना॑-विष्णू स॒जोष॑से॒मा व॑र्धन्तु वां॒ गिरः॑। द्यु॒म्नैर्वाजे॑भि॒रा ग॑तम्[४]। ब्र॒ह्म॒वा॒दिनो॑ वदन्ति॒ यन्न दे॒वता॑यै॒ जुह्व॑त्यथ॒ किं-दे॑व॒त्या॑ व॒सो॑र्धारे॒त्य॒ग्निर्वसु॑स्त॒स्यैषा धारा॒ विष्णु॒र्वसु॑-स्त॒स्यैषा धारा॑ग्नावैष्ण॒व्य॑र्चा व॒सो॑र्धारां जुहोति भाग॒-धेये॑नै॒वैनौ॒ सम॑र्धयत्य॒थो॑ ए॒तां ॥ २ ॥

ए॒वाहु॑तिमा॒यत॑नवतीं करोति॒ यत्का॑म ए॒नां जु॒-होति॒ तदे॒वाव॑ रुन्धे[५] रु॒द्रो वा ए॒ष यद॒ग्निस्तस्यै॒ते त॒नुवौ॑ घो॒रान्या शि॒वान्या यच्छ॑तरु॒द्रीय॑ जुहोति॒ यै॒वास्य॑

घोरा तनूस्तां तेन शमयति यद्वसोर्धारां जुहोति यै-
वास्य शिवा तनूस्तां तेन प्रीणाति(६) यो वै वसोर्धारायै
॥ ३ ॥

प्रतिष्ठां वेद प्रत्येव तिष्ठति यदाज्यमुच्छिष्येत तस्मिन्
ब्रह्मौदनं पचेत्तं ब्राह्मणाश्चत्वारः प्राश्नीयुरेष वा अग्नि-
र्वैश्वानरो यद् ब्राह्मण एषा खलु वा अग्नेः प्रिया तनू-
र्यद्वैश्वानरः प्रियायामेवैना तनुवां प्रतिष्ठापयति(७)
चतस्रो धेनूर्दद्यात्ताभिरेव यजमानोऽमुष्मिंल्लोकेऽग्निं
दुहे(८) ॥ ४ ॥

उप। एतां। धारायै। षट्चत्वारिंशच्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके
तृतीयोऽनुवाकः ॥ ० ॥

द्वितीये ऋषभादीनामुपधानादिकं श्रुतम्।

अथ तृतीये वज्रिणीष्टकोपधानं विधातुं मन्त्रानुत्पादयति,—
"इन्द्रस्य वज्रोऽसि वार्त्रघ्नः तनूपाः नः प्रतिस्पशः। यो नः पुर-
स्तात् दक्षिणतः पश्चात् उत्तरतः अघायुः अभिदासति एतं सः
अश्मानमृच्छतु(१)" इति। इष्टकास्थानीय हे अश्मन्, त्वम् 'इन्द्रस्य'
'वज्रोऽसि' वज्रसमानोऽसि। कीदृशस्त्वम्? 'वार्त्रघ्नः' वैरिघाती।
'नः' अस्माकं 'तनूपाः' शरीरस्य पालकः। 'प्रतिस्पशः' रोगाद्यनि-
ष्टस्य विनाशयिता। किञ्च, 'यः' शत्रुः अघं पापं अस्मदुपद्रवम्

इच्छतीत्यभिप्रायः तथाविधः सन् 'पुरस्तात्' पूर्वस्यान्दिशि 'नः' अस्मान् 'अभिदासति' हिनस्ति, 'सः' शत्रुः 'एतम्' 'अश्मानम्' उपधीयमानं पाषाणम् 'ऋच्छतु' प्राप्नोतु; पाषाणं प्राप्य स्वयमेव व्याधितो भवत्वित्यर्थः। 'दक्षिणतः' इत्यादिभिस्त्रिभिः पदैः त्रयो मन्त्रा भिद्यन्ते। तेषु त्रिष्वपि अवशिष्टमनुषञ्जनीयम्।

तैरेतैश्चतुर्भिर्मन्त्रैः साध्यमुपधानं विधत्ते,—"देवासुराः संयत्ता आसन् ते असुराः दिग्भ्यः आ अबाधन्त तान् देवाः इष्वा च वज्रेण च अपानुदन्त यद्वज्रिणीरुपदधाति इष्वा च एव तद्वज्रेण च यजमानो भ्रातृव्यान् अप नुदते[१]" इति। यदा 'देवासुराः' युद्धोद्यताः, तदानीम् 'असुराः' चतसृभ्यः 'दिग्भ्यः' आगत्य सर्वतो बाधितवन्तः। 'तान्' असुरान् 'देवाः' 'इष्वा' वज्रसदृशेन पाषाणेन च तान्असुरान्* 'अपानुदन्त'। ततो 'यजमानः' भ्रातृव्यापनोदनाय 'वज्रिणीः' उपदध्यात्।

तस्य चोपधानस्य चितेर्बहिर्देशं विधत्ते,—"दिक्षु उप दधाति देवपुराः एव एताः तनूपानीः पर्यूहते[२]" इति। याः 'एताः' वज्रिण्यः, ताः 'देवपुराः' 'एव' देवानामिन्द्रादीनां पुरस्थानीया एव। तनूपानीः अस्मच्छरीरस्य पालयित्रीः। एतादृशीः परितः स्थापयति। एतदपि नक्षत्रेष्टकाब्राह्मणाद् (५।४।१) ऊर्द्ध्वं द्रष्टव्यम्।

यत्पूर्वं विहितं "वसोर्धारां जुहोति" (५।४।८) इति।

---

* एवमेव सर्व्वत्र पाठः। अत्र पुनः 'तान् असुरान्' इति पाठः अधिक इव प्रतिभाति।

तदेतदनूद्य विशेषं वक्तुम्, आम्नातमपि (४।७।१) मन्त्रं पुनः पठति,— "अग्नाविष्णू सजोषसा इमाः वर्धन्तु वां गिरः द्युम्नैर्वाजेभिः आ गतम्"(४) इति। हे 'अग्नाविष्णू', 'इमाः' 'गिरः' अस्माभिः प्रयुक्ताः स्तुतिरूपा वाचः 'सजोषसा' 'वां' परस्परं समानप्रीतियुक्तौ युवां 'वर्धन्तु' परितोषयन्तु। युवाञ्च 'द्युम्नै' धनैः 'वाजेभि' अन्नैश्च सहितौ 'आ' 'गतम्' इहागच्छतम्।

तमिमं मन्त्रं विनियुङ्क्ते,—"ब्रह्मवादिनो वदन्ति यत् न देवतायै जुह्वति अथ किंदेवत्या वसोर्धारा इति अग्निर्वसुः तस्य एषा धारा विष्णुर्वसुः तस्य एषा धारा आग्नावैष्णव्या ऋचा वसोर्धारां जुहोति भागधेयेनैव एनौ समर्धयति अथो एतामेव आहुतिम् आयतनवतीं करोति यत्काम. एनां जुहोति तदेव अव रुन्धे(५)" इति। अत्र 'ब्रह्मवादिनः' एवं विचारयन्ति, वसोर्धाराया मन्त्रे "वाजश्च मे प्रसवश्च मे" (४।७।१।१) इत्येवं फलप्रार्थनैव प्रतीयते, न तु काचिद्देवता प्रतिपाद्यते। विधिवाक्ये अपि आज्यधाराख्यं द्रव्यमेव प्रतीयते, न तु काचिद्देवता। एवं सति, होतारः 'देवतायै' यस्मात् 'न' 'जुह्वति', तस्मात् 'किंदेवत्या' इयं 'वसोर्धारा'? इत्येव प्रश्नः। तत्राभिज्ञा उत्तरमेवमाहुः,—विधिवाक्यगतेन वसुधारा-शब्देनैव द्रव्यदेवतासम्बन्धः प्रतीयते। वासयतीति व्युत्पत्त्या 'वसु' 'अग्निः', 'तस्य' इयमाज्यधारा वसोर्धारा। एवं विष्णावपि योजनीयम्। यद्यप्येतौ देवौ "वाजश्च मे" इत्यादिना न प्रतीयेते, तथापि अनया ऋचा प्रतीयेते। तस्मात् एतया 'वसोर्धारां' जुहुयात्। तथा सति, उचितेन भागेनैतौ तोषयति। अपि च

'एताम्' 'आहुतिं' देवताद्रूपाधारवतीं 'करोति'। किञ्च यत्फलं कामयित्वा 'जुहोति' तत्प्राप्नोति।

प्रकारान्तरेणैतां प्रशंसति,—"रुद्रो वै एष यदग्निस्तस्यैते तनुवौ घोरा अन्या शिवा अन्या यत् शतरुद्रीयं जुहोति या एव अस्य घोरा तनूः तां तेन शमयति यत् वसोर्धारां जुहोति या एव अस्य शिवा तनूः तां तेन प्रीणाति(६)" इति। शतरुद्रीयहोमेन उग्रातनोः शान्तावपि शिवातनोः प्रीत्यर्थोऽयं वसोर्धाराहोमः इति अस्य प्रशंसायां विशेषं विधातुमयं प्रसङ्गः कृतः।

तं विशेषं विधत्ते,—"यो वै वसोर्धारायै प्रतिष्ठां वेद प्रति एव तिष्ठति यत् आज्यमुच्छिष्येत तस्मिन् ब्रह्मौदनं पचेत् तं ब्राह्मणाश्चत्वारः प्राश्नीयुः एष वै अग्निर्वैश्वानरो यत् ब्राह्मणः एषा खलु वै अग्नेः प्रिया तनूः यत् वैश्वानरः प्रियायामेव एनां तनुवां प्रतिष्ठापयति(७)" इति। 'यः' यजमानः वसोर्धारायाः प्रतिष्ठाप्रकारं 'वेद,' सः 'प्रति'-'तिष्ठति' 'एव'। कासौ तस्याः प्रतिष्ठा? इत्युच्यते,—होमावशिष्टे आज्ये ब्रह्मौदनं पक्त्वा ब्राह्मणानां प्राशनं यत्, सैव प्रतिष्ठा। ब्राह्मणस्य सर्वपुरुषप्रियत्वेन वैश्वानररूपत्वात्, वैश्वानरस्य च अग्निप्रियशरीरत्वात् तस्मिन्नेव प्रियशरीरे तम् अग्निं 'प्रतिष्ठापयति'।

यदुक्तं सूत्रकारेण,—'यदाज्यमुच्छिष्येत तस्मिन् ब्रह्मौदनं पक्त्वा चतुरो ब्राह्मणान् भोजयेच्चतुःशरावमोदनं पक्त्वा तद्ब्राह्मणं भोजयेत् प्राशितवद्भ्यश्चतस्रो धेनूर्दद्यात्' इति; तच्च दानं विधत्ते,—"चतस्रो धेनूर्दद्यात् ताभिरेव यजमानः अमुष्मिन् लोके अग्निं दुहे(८)" इति।

अथ मीमांसा।

तृतीयाध्यायस्य षष्ठपादे (१९अ०) चिन्तितम्,—

अखण्डादीष्टकाधर्मा. चित्रिण्यादिषु नोचिता.।
सन्ति वा ? वाक्यमप्यत्रानारभ्योक्तं ततो न ते॥
प्रकृतापूर्वसम्बन्धात्तादृशादपि वाक्यतः।
अखण्डत्वादयोऽग्न्यर्थाश्चित्रिण्यादिषु सन्ति ते॥

अनारभ्य श्रूयते,—'चित्रिणीरुपदधाति' इति, 'वज्रिणीरुपदधाति' इति च। अग्निप्रकरणे इष्टकानां धर्माः श्रुता. 'अखण्डामकृष्णां कुर्यात्' इति। पूर्वत्र अंशदाभ्ययोरुत्पत्तिवाक्यस्य अनारभ्याधीतत्वेऽपि विनियोजकवाक्यं प्रकरणाधीतम्। चित्रिण्यादिनामकानाम् इष्टकाविशेषाणां विनियोजकवाक्यमप्यनारभ्याधीतम्। तच चित्यन्तरे ताश्चित्रिणीर्विनियुङ्क्ते। अखण्डत्वादिधर्मास्तु पञ्चानां चितीनां मध्ये प्रथमचितौ आम्नाताः। तस्मात्, ते 'चित्रिण्यादिषु नोचिता.' इति प्राप्ते-ब्रूम',—यद्यपि उत्पत्तिविनियोजकवाक्ययोरन्यतरस्यापि प्रकरणपाठो नास्ति, तथापि "य एवं विद्वानग्निं चिनुते" इति प्रकृतम् यदेतदग्न्यपूर्वं, तत्सम्बन्धित्वेनैव चित्रिण्यादयोऽपि अप्रकरणपठितेनापि वाक्येन विनियुज्यन्ते। अखण्डत्वादयश्च अग्निसाधनभूतेष्टकाधर्मा', न तु प्रथमचितिधर्माः। तस्मादग्निसाधनभूतासु चित्रिण्यादीष्टकास्वपि ते सन्ति।

पञ्चमाध्यायस्य तृतीयपादे (७अ०) चिन्तितम्,—

चित्रिण्यादेरुत्तमायामुपधानं पुराऽथवा।
अव्यवायादुत्तमायां, मध्यमायान्तु वाक्यत'॥

उत्तमायां पञ्चम्यां चितौ चिचिण्यादेरमारभ्याधीताया इष्टकाया उपधानमुक्तम्। तथा सति, प्रकरणाधीतानां क्लृप्तक्रमाणामिष्टकानां परस्परव्यवधानं न प्रसज्येत—इति चेत्। मैवम्, 'याङ्कांश्चित् ब्राह्मणवतीमिष्टकामभिजानीयात्, तां मध्यमायां चितौ' इति वाक्येन अनारभ्याधीतेन ब्राह्मणेन विहितानामिष्टकानां मध्यमचितौ विनिवेशः* ॥ तत्रैव (८ अ०) अन्यचिन्तितम्,—

लोकं-पृणात ऊर्ध्वं स्याच्चिचिण्युत ततः पुरा।
बादरायणदृष्ट्योर्ध्वं पूरणोक्तेस्ततः पुरा॥

'चिचिणीरुपदधाति', 'वज्रिणीरुपदधाति', 'भूतेष्टका उपदधाति' इति विहितम्। चिचिण्यादिकं मध्यमायां चितौ लोकंपृणाभिधाया इष्टकाया ऊर्ध्वमुपधेयम्। कुतः?। बादरायणेन तथा दृष्टत्वात्। "अन्ते तु बादरायणः" (मी० ५।२।१९) इति सूत्रेण बादरायणस्य मतमुपन्यस्तम्। स हि आगन्तूनामन्ते निवेशमाह,—लोकं-पृणा च प्रकरणपठितानाम् अन्तिमेष्टका, ततस्तस्या ऊर्ध्वं चिचिण्यादिकम्—इति प्राप्ते, ब्रूमः,—"लोकं पृण छिद्रं पृण" (४।२।४।४) इत्यनेन मन्त्रेण उपधीयमाना इष्टका लोकं-पृणा। तस्याः कर्मणि ऊनत्वादिदोषपरिहारेण सम्पूर्त्तिहेतुत्वं मन्त्रलिङ्गादवगम्यते। ब्राह्मणेऽप्येवमाम्नातम्,—'यदेवास्योनं यच्छिद्रं तदेतया पूरयति लोकं पृण छिद्रं पृण' इति। यद्येतस्या इष्टकाया ऊर्ध्वं चिचिण्यादय उपधीयेरन्, तदानीं चिचिण्यादिगते ऊनत्वच्छिद्रत्वे न पूर्येयाताम्। तस्मात् लोकं-पृणातः पूर्वं चिचिण्याद्युपधानम्।

* विनियोगविशेष—इति आदर्शपुस्तकपाठः।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके तृतीयोऽनुवाकः ॥ ० ॥

---

चित्तिं जुहोमि मनसा घृतेनेत्याहादाभ्या वै नामैषाहुतिर्वैश्वकर्मणी नैनं चिक्यानं भ्रातृव्यो दभ्नोत्यथो देवता एवाव रुन्धे(१) अग्ने तमद्येति पङ्क्त्या जुहोति पङ्क्त्याहुत्या यज्ञमुखमा रभते(२) सप्त ते अग्ने समिधः सप्त जिह्वा इत्याह होत्रा एवाव रुन्धेऽग्निर्देवेभ्योऽपाक्रामद्भागधेयम् ॥ १ ॥

इच्छमानस्तस्मा एतद्भागधेयं प्रायच्छन्नेतद्वा अग्नेरग्निहोत्रमेतर्हि खलु वा एष जातो यर्हि सर्वश्चितो जातायैवास्मा अन्नमपि दधाति स एनं प्रीतः प्रीणाति वसीयान् भवति(१) ब्रह्मवादिनो वदन्ति यदेष गार्हपत्यश्चीयतेऽथ क्वास्याहवनीय इत्यसावादित्य इति ब्रूयादेतस्मिन् हि सर्वाभ्यो देवताभ्यो जुह्वति ॥ २ ॥

य एवं विद्वानग्निं चिनुते साक्षादेव देवता ऋध्नोति(३) अग्ने यशस्विन् यशसेममर्पयेन्द्रावतीमपचितीमिहा वह। अयं मूर्धा परमेष्ठी सुवर्चाः समानानां-

मुत्तमश्लोको अस्तु[५]। भद्रं पश्यन्त उप सेदुरग्रे तपो दीक्षामृषयः सुवर्विदः। ततः क्षत्रं बलमोजश्च जातं तदस्मै देवा अभि सन्नमन्तु[६]। धाता विधाता परमा ॥ ३ ॥

उत संदृक् प्रजापतिः परमेष्ठी विराजा। स्तोमाश्छन्दांसि निविदो म आहुरेतस्मै राष्ट्रमभि सन्नमाम[७]। अभ्यावर्त्तध्वमुप मेत साकमयं शास्ताधिपतिर्वो अस्तु। अस्य विज्ञानमनु संरभध्वमिमं पश्चादनु जीवाथ सर्वे[८]। राष्ट्रभृत एता उप दधात्येषा वा अग्नेश्चितो राष्ट्रभृत्तयैवास्मिन्राष्ट्रं दधाति, राष्ट्रमेव भवति नास्माद्राष्ट्रं भ्रंशते ॥ ४ ॥

भागधेयं। जुहोति। परमा। राष्ट्रं दधाति। सप्त च ॥ ४ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके चतुर्थोऽनुवाकः ॥०॥

चितिविषयत्र वसोर्धाराहुतीये समुदीरिताः।

अथ चतुर्थे होमविशेषाः राष्ट्रभृदाख्या इष्टकाश्चाभिधीयन्ते। यदुक्तं सूत्रकारेण,—'चितिं जुहोम्यग्ने तमदार्श्यमिति द्वे आहुतीर्हुत्वा' इति।

तत्र प्रथमाहुतेर्विधिं मन्त्रव्याख्यानेनोन्नयति, "चित्तिं जुहोमि मनसा इतेन इति आह अदाभ्या वै नाम एषा आहुतिः वैश्वकर्मणी न एनं चिक्यानं भ्रातृव्यो दभ्नोति अथो देवताः एव अव रुन्धे[१]" इति। अथ मन्त्र. पूर्वम् "आपो वरुणस्य पत्नयः" (५।५।४) इत्यनुवाके समाम्नातो व्याख्यातश्च। तमिमं होमसाधनत्वेन पठेत्। अस्या आहुतेः* 'अदाभ्या' इति 'नाम', रक्षोभिः कैरपि विनाशयितुमशक्यत्वात्। सा च विश्वकर्मदेवताका, तस्मिन् मन्त्रे 'विश्वकर्मणे' इत्याम्नानात्। अस्यामाहुतौ हुतायां चितवन्तम् 'एनं' यजमानं 'भ्रातृव्यो' 'न' हिनस्ति। तस्मादेतां जुहुयात्। अपि चैतां जुह्वत् पुरुषो 'देवता.' प्राप्नोति 'एव'।

अथ द्वितीयामाहुतिं विधत्ते,—"अग्ने तम् अद्य इति पङ्क्त्या जुहोति पङ्क्त्या आहुत्या यज्ञमुखम् आ रभते[२]" इति। अयं मन्त्रश्चतुर्थकाण्डे "अग्निर्मूर्धा" (४।४।४) इत्यनुवाके पठितो व्याख्यातश्च। पङ्क्तिच्छन्दसा ह्रयमाना येयमाहुति', तया यज्ञप्रारम्भं प्राप्नोति।

"प्राचीमनु प्रदिशम्" (५।४।७) इत्यस्मिन् ब्राह्मणानुवाके 'पूर्णया जुहोति' इति यद्विहित, तदेवानूद्य प्रशंसति,—"सप्त ते अग्ने समिधः सप्त जिह्वाः इति आह होत्राः एव अव रुन्धे अग्निर्देवेभ्यो अपाक्रामत् भागधेयम् इच्छमानः तस्मै एतद्भागधेयं प्रायच्छन् एतत् वै अग्नेः अग्निहोत्रम् एतर्हि खलु वै एष जातो

---

* 'यस्याहुते' इति सर्वत्र पाठो न समीचीन।

यर्हि सर्वश्चितो जाताय एव अस्मै अन्नम् अपि दधाति स एनं प्रीतः प्रीणाति वसीयान् भवति[१]" इति। अयञ्च मन्त्रश्चतुर्थकाण्डे "प्राचीम्" (४।६।५) इत्यनुवाके समाम्नाता व्याख्यातश्च। तस्मिन् मन्त्रे 'सप्त होत्राः' इत्यभिधानात् अनया आहुत्या होत्रकान् प्रशास्त्रादीन् अधीनान् करोति। किञ्च देवैर्दत्तो योऽयमग्नेर्भाग', तद्रूपत्वात् इयमाहुतिः अस्य चीयमानस्य 'अग्नेः' 'अग्निहोत्रम्' इत्युच्यते। यस्मिन् काले साकल्येन अयमग्निः 'चित',' तदैवायम् उत्पन्नो भवति; उत्पन्नाय च तस्मै तदाहुतिरूपम् 'अन्न' सम्पादितं भवति। तेन च सन्तोऽग्निर्यजमानं प्रीणयति। स च यजमानो धनपतिर्भवति। एतदुक्तं सर्वं "प्राचीम्" (४।६।५) इत्यनुवाके एव द्रष्टव्यम्।

अथाच चीयमानमग्निं प्रश्नोत्तराभ्यामादित्यरूपेण प्रशंसति,—"ब्रह्मवादिनो वदन्ति यत् एष गार्हपत्य. चीयते अथ क अस्य आहवनीयः इति' असौ आदित्यः इति ब्रूयात् एतस्मिन् हि सर्वाभ्यो देवताभ्यो जुह्वति य एवं विद्वान् अग्निं चिनुते साक्षात् एव देवताः ऋध्नोति[२]" इति। अन्यच 'अग्निर्होता गृहपतिः' इत्यादिषु मन्त्रेषु अग्नेर्गृहपतित्वमुक्तम्। गृहपतिस्वामिकः कश्चित्* प्रदेशो गार्हपत्यः। एव सति पूर्वस्मिन् वाक्ये 'एतद्वा अग्नेरग्निहोत्रम्' इति चितेऽग्नौ हूयमानायाः पूर्णाहुतेरग्निस्वामिकत्वाभिधानात् सर्वोऽप्ययं चीयमानो गार्हपत्यः सपन्न'। तस्मात् आहवनीयो न लभ्यते। आ समन्तात् सर्वे देवा यत्र हूयन्ते सोऽयम् आहवनीयः। सर्वस्यापि

* 'गृहपतिस्वामिकश्चित्' इति आदर्शपुस्तके पाठः एवं 'गृहपतिस्वामी कश्चित्' इति का० को० पुस्तके पाठो न समीचीन।

चितप्रदेशस्य अग्न्यर्थहोमाधारत्वेन गार्हपत्यत्वे सति देवतान्तरहोमार्थः आहवनीयः 'अस्य' यजमानस्य कुत्र सम्भवेत्?—इत्येवं ब्रह्मवादिनां प्रश्नः। तत्राभिज्ञः कश्चित् उत्तरमेवं ब्रूयात्,—'असौ आदित्यः' एव यजमानस्य आहवनीय इति, आदित्ये हि सर्वदेवार्थो होमः क्रियते, 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' इति स्मृतेः*। एवं सति यो यजमानश्चीयमानस्य अग्नेरादित्यरूपत्वं ज्ञात्वा चयनं करोति, सोऽयं 'साक्षादेव' अव्यवधानेन 'देवताः' तोषयति।

यदुक्तं सूत्रकारेण,—'अग्ने यशस्विन्निति चतस्रो राष्ट्रभृत पुरस्तादुपधाय' इति। तदेतद्विधातुम् उत्पादनीयेषु मन्त्रेषु प्रथमामृचमाह,—"अग्ने यशस्विन् यशसा इमम् अर्पय इन्द्रावतीम् अपचितीम् इह आ वह। अयं मूर्धा परमेष्ठी सुवर्चाः समानानाम् उत्तमश्लोकः अस्तु[१]" इति। प्रभूतं यशो यस्यास्ति स यशस्वी, तादृश हे अग्ने, 'इमं' यजमानं 'यशसा' 'अर्पय' संयोजय। 'इन्द्रावतीम्' इन्द्रस्य योग्यां 'अपचितीं' पूजाम् 'इह' कर्मणि 'आ-वह' सम्पादय। 'अयं' यजमानः त्वत्प्रसादात् 'समानानां' यजमानानां मध्ये 'मूर्धा' शिरःस्थानीयः, 'परमेष्ठी' उत्तमस्थाननिवासी, 'सुवर्चाः' शोभनकान्तिः, 'उत्तमश्लोकः' सत्कीर्त्तियुक्तश्च 'अस्तु'।

अथ द्वितीया,—"भद्रं पश्यन्तः उप सेदुः अग्रे तपो दीक्षाम् ऋषयः सुवर्विदः। ततः क्षत्रं बलम् ओजश्च जातं तदस्मै देवा अभिसन्नमन्तु[२]" इति। 'अग्रे' पूर्वस्मिन् काले 'ऋषयः' केचित् महात्मानः 'भद्रं' कल्याणं कर्मफलं 'पश्यन्तः' शास्त्रदृष्ट्या निश्चिन्वानाः

* 'अग्ने' इति का० क्री० पुस्तके पाठः।

'सुवर्विदः' स्वर्गं लब्धुकामाः 'तपः' कर्माङ्गभूतम् अनशनादिकं, 'दीक्षां' मौञ्ज्यादिनियमविशेषञ्च 'उप'—'सेदुः' अनुष्ठितवन्तः। ततोऽनुष्ठानात् तेषां 'चत्रं' क्षतादनिष्टात् त्राणं रक्षणं, 'बलं' शरीरसामर्थ्यं, 'ओजः' धातुपुष्टिश्च इत्येतत् सर्वं 'जातं' सम्पन्नं; 'तत्' फलं सर्वम् 'अस्मै' यजमानाय 'देवाः' 'अभि'—'सन्नमन्तु' सर्वतः सम्पादयन्तु।

अथ तृतीयामाह,—"धाता विधाता परमा उत सन्दृक् प्रजापतिः परमेष्ठी विराजा स्तोमाः छन्दांसि निविदः मे आहुः एतस्मै राष्ट्रम् अभि सन्नमाम(७)" इति। 'परमा' परमः उत्तमो 'धाता' पोषको यो देवः, यश्च 'विधाता' स्रष्टा, 'उत' अपिच 'सन्दृक्' सम्यगभिज्ञः 'प्रजापतिः' प्रजानां पालकः, परमे उत्कृष्टे सत्यलोकादौ तिष्ठति इति 'परमेष्ठी', 'विराजा' ब्रह्माण्डरूपया विराण्मूर्त्या सहितः, तादृशो यो देवः, ये च 'स्तोमाः' त्रिवृदादयः, यानि च 'छन्दांसि' गायत्र्यादीनि, याश्च 'निविदः' 'देवेद्धमन्विद्ध'—इत्यादीनि निवित्पदानि, सर्वे 'मे' मदर्थम् 'आहुः' ब्रुवन्तु। तैर्वक्तव्यं प्रदर्श्यते,—'एतस्मै' यजमानाय 'राष्ट्रम्' 'अभि'—'सन्नमाम' देशाधिपत्यं सर्वतः सम्पादयाम। तदिदं तैर्वक्तव्यम्।

अथ चतुर्थी,—"अभ्यावर्त्तध्वम् उप मा एत साकम् अयं शास्ता अधिपतिर्वः अस्तु। अस्य विज्ञानम् अनु संरभध्वम् इमं पश्चात् अनु जीवाथ सर्वे(८)" इति। हे मनुष्याः, 'सर्वे' यूयं 'अभ्यावर्त्तध्वं' सर्वतः आगच्छत। 'साकं' परस्परं मिलित्वा 'मा' मदीयं यजमानं 'उप' समीपम् 'एत' आगच्छत। 'अयं' यजमानः 'वः' युष्माकं 'शास्ता' अनुशासकः 'अधिपतिः' अधिकं पालयिता च 'अस्तु'।

'अस्य' यजमानस्य 'विज्ञानं' चित्तवृत्तिम् अनुसृत्य 'संरभध्वं' सम्यक् प्रवर्तध्वं। 'इमं' यजमानम् अनुसृत्य 'पश्चात्' 'जीवाथ' एनं यजमान सविज्ञानेन दत्त जीवितं गृह्णीत इत्यर्थः।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"राष्ट्रभृत एताः उप दधाति एषा वै अग्ने चितिः राष्ट्रभृत् तया एव अस्मिन् राष्ट्रं दधाति राष्ट्रमेव भवति न अस्मात् राष्ट्रं भ्रंशते(८)" इति। राष्ट्रशब्दोपेतान् मन्त्रान् बिभ्रति तैरुपधीयन्ते इति 'राष्ट्रभृतः', एतदुपधानेन निष्पन्ना या 'चितिः', सा 'एषा' 'अग्नेः' सम्बन्धिनी 'राष्ट्रभृत्'—इत्युच्यते। 'तया' 'एव' अस्मिन्' यजमाने 'राष्ट्रं' स्थापयति। तच्च 'राष्ट्रम्' अस्याधीनमेव 'भवति' 'अस्मात्' यजमानात् तत् 'राष्ट्रं' कदाचिदपि 'न' भ्रष्टं भवति। एतच्च नक्षत्रेष्टकाब्राह्मणात् (५।४।१) ऊर्ध्वं द्रष्टव्यम् ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके चतुर्थोऽनुवाकः ॥०॥

---

यथा॒ वै पु॒त्रो जा॒तो म्रि॒यत॑ ए॒वं वा ए॒ष म्रि॑यते॒ यस्या॒ग्निरु॒ख्य॑ उ॒द्वाय॑ति॒ यन्नि॒र्मन्थ्यं॑ कु॒र्याद्वि॒च्छि॑न्द्या॒द्भ्रातृ॑व्यमस्मै जनयेत्स ए॒व पुनः॑ प॒रीध्यः॒ स्वादे॒वैनं॒ योने॑र्जनयति॒ नास्मै॒ भ्रातृ॑व्यं जनयति॒ तमो॒ वा ए॒तं गृ॑ह्णाति॒ यस्या॒ग्निरु॒ख्य॑ उ॒द्वाय॑ति मृ॒त्युस्तमः॑ कृ॒ष्णं वासः॑ कृ॒ष्णा धे॒नुर्दक्षि॑णा॒ तम॑सा ॥ १ ॥

एव तमो मृत्युमपहते[१] हिरण्यं ददाति ज्योतिर्वै हिरण्यं ज्योतिषैव तमोऽपहतेऽथो तेजो वै हिरण्यं तेज एवात्मन्धत्ते[२] सुवर्न घर्मः स्वाहा सुवर्नार्कः स्वाहा सुवर्न शुक्रः स्वाहा सुवर्न ज्योतिः स्वाहा सुवर्न सूर्यः स्वाहा[३] अर्को वा एष यदग्निरसावादित्यः ॥ २ ॥

अश्वमेधो यदेता आहुतीर्जुहोत्यर्काश्वमेधयोरेव ज्योतींꣳषि सन्दधात्येष ह त्वा अर्काश्वमेधो यस्यैतदग्नौ क्रियते[४] आपो वा इदमग्रे सलिलमासीत् स एतां प्रजापतिः प्रथमाञ्चितिमपश्यत्तामुपाधत्त तदियमभवत्[५] तं विश्वकर्माऽब्रवीदुप त्वायानीति नेह लोकोऽस्तीति ॥ ३ ॥

अब्रवीत्स एतां द्वितीयाञ्चितिमपश्यत्तामुपाधत्त तदन्तरिक्षमभवत्[७] स यज्ञः प्रजापतिमब्रवीदुप त्वायानीति नेह लोकोऽस्तीत्यब्रवीत्स विश्वकर्माणमब्रवीदुप त्वायानीति केन मोपैष्यसीति दिश्याभिरित्यब्रवीत्तं दिश्याभिरुपैत्ता उपाधत्त ता दिशः ॥
॥ ४ ॥

अभवन्[८]स परमेष्ठी प्रजापतिमब्रवीदुप त्वायानीति नेह लोकोऽस्तीत्यब्रवीत्स विश्वकर्माणं च यज्ञञ्चाब्रवीदुप वामायानीति नेह लोकोऽस्तीत्यमूताꣳ स

एतां तृतीयाञ्चितिमपश्यत्तामुपाधत्त तदसावभवत्[८]
स आदित्यः प्रजापतिमब्रवीदुप त्वा ॥ ५ ॥

आयानीति नेह लोकोऽस्तीत्यब्रवीत्स विश्वकर्माणं
च यज्ञञ्चाब्रवीदुप वामायानीति नेह लोकोऽस्ती-
त्यब्रूताᳪस परमेष्ठिनमब्रवीदुप त्वायानीति केन मोपै-
ष्यसीति लोकंपृणयेत्यब्रवीत्तᳪ लोकंपृणयोऽपैत्तस्मा-
दयातयाम्नी लोकंपृणायातयामा ह्यसौ ॥ ६ ॥

आदित्यः[१०]तान्ययोऽब्रुवन्नुप व आयामेति केन न
उपैष्यथेति भूम्नेत्यब्रुवन् तान् द्वाभ्याञ्चितीभ्यामुपायन्
स पञ्चचितीकः समपद्यत[११] य एवं विद्वानग्निं चिनुते
भूयानेव भवत्यभीमान् लोकान् जयति विदुरेनं देवा
अथो एतासामेव देवतानाᳪ सायुज्यं गच्छति[१२] ॥७॥

तमसा। आदित्यः। अस्तीति। दिशः। आदित्यः
प्रजापतिमब्रवीदुप त्वा। असौ। पञ्चचत्वारिᳪशच्च ॥५॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके
पञ्चमोऽनुवाकः ॥०॥

---

तिस्र आहुतयो राष्ट्रभृतस्तुर्ये समीरिताः।

अथ पञ्चमे पुन परीक्षनादयो विधीयन्ते। यदुक्तं सूत्रकारेण,—
'पश्चाग्निहव्य उद्दायेद्गार्हपत्यादन्य प्रणयेत्स एव पुन. परीक्ष्यः' इति।

तदिदं विधत्ते,—"यथा वै पुत्रो जातो म्रियते एवं वै एष म्रियते यस्याग्निरुख्य उद्वायति यत् निर्मन्थ्यं कुर्यात् विच्छिन्द्यात् भ्रातृव्यम् अस्मै जनयेत् स एव पुनः परीध्य. स्वात् एव एनं योनेर्जनयति न अस्मै भ्रातृव्यं जनयति(१)" इति। 'यस्य' यजमानस्य उख्याग्निः शाम्यति, तस्य पुत्रमरणवत् अग्निनाशनिमित्तं दुःखं जायते। तस्य निर्मन्थ्येन अग्न्यन्तरोत्पादने सति पूर्वः* अग्निं 'विच्छिन्द्यात्'। स च विच्छिन्नः अस्य यजमानस्य वैरिणं 'जनयेत्'। अतस्तत्परिहाराय गार्हपत्यनिष्ठः 'सः' अग्निः 'एव' पुनरपि आनीय परितः काष्ठप्रक्षेपेण इन्धनीयः; तथा सति स्वकारणादेव उत्पन्नत्वात् वैरिणं 'न' 'जनयति'।

अत्रैव प्रायश्चित्तरूपां दक्षिणां विधत्ते,—"तमो वै एतं गृह्णाति यस्याग्निरुख्य उद्वायति मृत्युस्तमः कृष्णं वास. कृष्णा धेनुर्दक्षिणा तमसा एव तमो मृत्युम् अपहते(२)" इति। 'यस्य' यजमानस्य उख्याग्निः नश्येत्, एनं यजमानं 'तमः' 'गृह्णाति;' तच्च मृत्युरूपम्। अतस्तत्परिहाराय कृष्णवर्णमेकं वस्त्रं कृष्णवर्णा च 'धेनुः' 'दक्षिणा' तेन दातव्या। एवं सति तमोरूपत्वात् दक्षिणायाः तं मृत्युरूपं 'तमः' विनाशयति।

अथ तत्रैव दानान्तरं विधत्ते,—"हिरण्यं ददाति ज्योतिर्वै हिरण्यं ज्योतिषा एव तमः अपहते अथो तेजो वै हिरण्यं तेज एव आत्मन् धत्ते(३)" इति। हिरण्यरूपेण 'ज्योतिषा' मृत्युरूपस्य तमसो विनाशनं युक्तम्। अपि च हिरण्यस्य तेजस्त्वात् आत्मनि 'तेजः' सम्पादयति। तदेतत् ब्राह्मणं सर्वान्ते द्रष्टव्यम्।

---

* 'पूर्वम्' इति पाठो भवितुं युक्तः।

यदुक्तं सूत्रकारेण,—'सुवर्न घर्मः स्वाहेति पञ्चार्काहुतीर्हुत्वा' इति। तदिदं विधातुं मन्त्रानुत्पादयति,—"सुवर्न घर्मः स्वाहा सुवर्न अर्कः स्वाहा सुवर्न शुक्रः स्वाहा सुवर्न ज्योतिः स्वाहा सुवर्न सूर्यः स्वाहा(४)" इति। 'सुवर्न' स्वर्गे इव, यथा स्वर्गे अवस्थिता देवाः दीप्यमानाः, एवं 'घर्मः' दीप्यमानो योऽग्निः, तस्मै 'स्वाहा' हुतमस्तु। एवमुत्तरत्रापि योज्यम्। 'अर्कः' अर्चनीयः। 'शुक्र' अतिनिर्मलः। 'ज्योतिः' प्रकाशरूपः। 'सूर्यः' सूर्यवर्णः आदित्यरूपः।

एतैर्मन्त्रैर्होमं विधत्ते,—"अर्को वै एष यदग्निः असौ आदित्यः अश्वमेधः यत् एताः आहुतीर्जुहोति अर्काश्वमेधयोरेव ज्योतींषि सन्दधाति एष ह त्वै अर्काश्वमेधी यस्य एतत् अग्नौ क्रियते(५)" इति। योऽयं चीयमानः 'अग्निः' क्रतुसाधनभूतः, 'एषः' अर्चनीयत्वात् 'अर्कः' इत्युच्यते। योऽयम् 'आदित्यः', स एव क्रतुफलरूपत्वात् 'अश्वमेधः' इत्युच्यते। 'सुवर्न' इत्येतन्मन्त्रहोमेन 'अर्काश्वमेधयोः' अग्न्यादित्ययोः यानि 'ज्योतींषि' तानि सम्पादयति। 'यस्य' यजमानस्य अग्निचयने तत् 'एतत्' आहुतिपञ्चकं 'क्रियते', स 'एषः' एव यजमानः 'अर्काश्वमेधी' क्रतुसाधन-तत्फलाभ्यामुपेतः। एतच्च ब्राह्मणं "अग्निर्देवेभ्यः"(५।४।८) इत्यनुवाकान्ते द्रष्टव्यम्।

अथ चितीनां पञ्चानां प्रशंसा। तत्र प्रथमाञ्चितिं प्रशंसति,— "आपो वै इदमग्रे सलिलमासीत् स एतां प्रजापतिः प्रथमां चितिम् अपश्यत् ताम् उपाधत्त तत् इयम् अभवत्(६)" इति। यदिदं भूम्यन्तरिक्षादिरूपं जगत्, तत् 'इदं' सृष्टेः प्राक् अनेन रूपेण विस्पष्टं नासीत्, किन्तु 'आपः' एव आसीत्। तासु अप्सु भूतान्तरं

न मिलितम्, किन्तु नैरन्तर्येण 'सलिलम्' एव 'आसीत्'। तदानीं 'प्रजापतिः' अवस्थातुमाधारः को वा भविष्यति?—इति विचार्य 'एतां' 'प्रथमाञ्चितिं' दृष्ट्वा 'उपाधत्त'। तदानीं सा चितिः 'इयं' भूमिरूपा 'अभवत्', तत्रायं प्रजापतिरवस्थितः।

अथ द्वितीयाञ्चितिं प्रशंसति,—"तं विश्वकर्मा अब्रवीत् उप त्वा आयानि इति नेह लोकः अस्ति इति अब्रवीत् स एतां द्वितीयां चितिम् अपश्यत् ताम् उपाधत्त तत् अन्तरिक्षम् अभवत्(७)" इति। विश्वकर्माख्यः कश्चित् अन्य अवस्थातुमाधारम् अलभमानः 'तं' भूमौ अवस्थितं प्रजापतिम् इदम् 'अब्रवीत्',—अहमपि त्वाम् 'उप' आगच्छानि त्वत्समीपे उपविशानि 'इति'। स च प्रजापतिः 'इह' भूमौ तव अवकाशो 'न' 'अस्ति' 'इति' 'अब्रवीत्'। ततः 'सः' विश्वकर्मा स्वस्याधारः को भविष्यति?—इति विचार्य 'एतां' 'द्वितीयाञ्चितिं' दृष्ट्वा 'ताम्' 'उपाधत्त'। तदानीं सा द्वितीया चितिः 'अन्तरिक्षम्' 'अभवत्'। तत्रायं विश्वकर्मा अवस्थितः।

अथ दिश्याख्या इष्टकाः प्रशंसति,—"स यज्ञः प्रजापतिम् अब्रवीत् उप त्वा आयानि इति नेह लोकः अस्ति इति अब्रवीत् स विश्वकर्माणम् अब्रवीत् उप त्वा आयानि इति केन मा उपैष्यसि इति दिश्याभिः इति अब्रवीत् तं दिश्याभिः उपैत् ताः उपाधत्त ता दिशः अभवन्(८)" इति। यज्ञाख्येन पुरुषेण स्थाने पृष्टे सति प्रजापतिः परिजहार। विश्वकर्मा तु 'केन' उत्कोचरूपेण साधनेन सह मां प्रत्यागमिष्यसि?—इति पप्रच्छ। स च यज्ञः 'दिश्याभिः' इष्टकाभिः सह आगमिष्यामि—इत्युक्त्वा तथैव

गतवान्। "राज्ञ्यसि प्राची दिक्" (४।४।२) इत्यादिभिर्मन्त्रैर्दिक्षु उपधेया 'दिश्याः', 'ताः' च उपहिताः सत्यो दिग्रूपाः 'अभवन्'। ततो यज्ञस्य अवकाशोऽभूत्।

अथ तृतीयाञ्चितिं प्रशंसति,—"स परमेष्ठी प्रजापतिमब्रवीत् उप त्वा आयानि इति नेह लोकः अस्ति इति अब्रवीत् स विश्वकर्माणं च यज्ञञ्च अब्रवीत् उप वाम् आयानि इति नेह लोकः अस्ति इति अब्रूताꣳ स एतां तृतीयां चितिम् अपश्यत् ताम् उपाधत्त तत् असौ अभवत्(९)" इति। प्रजापतिर्विश्वकर्मा परमेष्ठी—इत्येते त्रयोऽपि एतस्यैव* मूर्त्तिभेदाः। तत्र परमेष्ठिना प्रार्थितः प्रजापतिः भूमौ अवकाशम् अदत्वा परिजहार; विश्वकर्मा यज्ञश्च—इत्येतावपि अन्तरिक्षे दिक्षु च अवकाशमदत्वा परिजह्रतुः। ततः परमेष्ठी विचार्य 'तृतीयाञ्चितिं' दृष्ट्वा 'उपाधत्त'। सापि चितिर्द्यौः 'अभवत्'। तत्रायं परमेष्ठी स्वयमवस्थितः।

अथ लोकंपृणेष्टकां प्रशंसति,—"स आदित्यः प्रजापतिम् अब्रवीत् उप त्वा आयानि इति नेह लोकः अस्ति इति अब्रवीत् स विश्वकर्माणञ्च यज्ञञ्च अब्रवीत् उप वाम् आयानि इति नेह लोकः अस्ति इति अब्रूताꣳ स परमेष्ठिनम् अब्रवीत् उप त्वा आयानि इति केन मा उपैष्यसि इति लोकंपृणया इति अब्रवीत् तं लोकंपृणया उपैत् तस्मात् अयातयाम्नी लोकंपृणा अयातयामा हि असौ आदित्यः(१०)" इति। 'स आदित्यः' लोकंपृणाम् आनीतवान्। तस्याम् उपहितायाम् आदित्यस्य

* 'एकस्यैव' इति पाठो भवितुं युक्तः।

अवकाशोऽभूत् । यस्मादियमादित्येन आनीता, 'तस्मात्' अगतमारा 'लोकंपृणा'; आदित्योऽपि अगतमारः पुनःपुनरावर्त्तमानोऽपि तस्मिन् जगदुपकारकस्य प्रकाशरूपस्य मारस्य अक्षीयमाणत्वात् । आदित्यवत् लोकंपृणा पुनःपुनः प्रयुज्यमानापि अक्षीयमाणमारा । यत्र यत्र* चितौ छिद्रमस्ति, तत्र तत्र लोकंपृणा प्रयुज्यते ।

अथ चतुर्थपञ्चमचिती प्रशंसति,—"तान् ऋषयः अब्रुवन् उप वः आयाम इति केन न उपैष्यथ इति भूम्ना इति अब्रुवन् तान् द्वाभ्याञ्चितीभ्याम् उपायन् सः पञ्चचितीकः समपद्यत(११)" इति । 'तान्' प्रजापति-विश्वकर्म-यज्ञ-परमेष्ठ्यादित्यान् अन्ये केचित् 'ऋषय.' स्थानं प्रार्थितवन्तः; ततः प्रजापत्यादिभिरुत्कोचे याचिते सति उत्कोचबाहुल्यं प्रतिज्ञाय चितिद्वयमानीतवन्तः। अतस्तेषामवकाशो-ऽभूत् । तदेवं प्रशस्ताभिश्चितिभिः अयमग्निः 'पञ्चचितीक.' अभूत् ।

एतद्वेदनपूर्वकमनुष्ठानं प्रशंसति,—"य एवं विद्वान् अग्निं चिनुते भूयान् एव भवति अभि इमान् लोकान् जयति विदुः एनं देवाः अथो एतासामेव देवतानाꣳ सायुज्यं गच्छति(१२)" इति । विद्यादि-गुणसमृद्धिः भूयस्त्वम् । लोकत्रयस्य स्वाधीनत्वं जयः । देवैर्वेदनं नाम एतदीया कीर्त्तिः† । अपि च 'एतासां' 'देवतानां' सहभावं प्राप्नोति ।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके पञ्चमोऽनुवाकः ॥०॥

---

* 'यत्र कुत्र' इति आदर्शादिपुस्तकपाठो न सम्यक् ।
† 'देवैतदीया कीर्त्तिः' इति का० सी० पु० पाठः ।

वयो वा अग्निर्यदग्निचित्पक्षिणोऽश्नीयात्तमेवाग्नि-मद्यादार्त्तिमार्च्छेत् संवत्सरं व्रतञ्चरेत् संवत्सरꣳ हि व्रतं नाति[1] पशुर्वा एष यदग्निर्हिनस्ति खलु वै तं पशुर्य एनं पुरस्तात् प्रत्यञ्चमुपचरति तस्मात् पश्चात् प्राङुपचर्य आत्मनोऽहिꣳसायै[2] तेजोऽसि तेजो मे यच्छ पृथिवीं यच्छ ॥ १ ॥

पृथिव्यै मा पाहि ज्योतिरसि ज्योतिर्मे यच्छान्तरिक्षं यच्छान्तरिक्षान्मा पाहि सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहि[3] इत्याहैताभिर्वा इमे लोका विधृता यदेता उपदधात्येषां लोकानां विधृत्यै[4] स्वयमातृण्णा उपधाय हिरण्येष्टका उप दधातीमे वै लोकाः स्वय-मातृण्णा ज्योतिर्हिरण्यं यत्स्वयमातृण्णा उपधाय ॥ २ ॥

हिरण्येष्टका उपदधातीमानेवैताभिर्लोकान् ज्योति-ष्मतः कुरुतेऽथो एताभिरेवास्मा इमे लोकाः प्रभान्ति[1] यास्ते अग्ने सूर्ये रुच उद्यतो दिवमातन्वन्ति रश्मिभिः। ताभिः सर्वाभी रुचे जनाय नस्कृधि[2]। या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः। इन्द्राग्नी ताभिः सर्वाभी रुचं नो धत्त बृहस्पते[3]। रुचं नो धेहि ॥ ३ ॥

ब्राह्मणेषु रुचꣳ राजसु नस्कृधि। रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचं[4] द्वेधा वा अग्निं चिक्यानस्य

यर्श इन्द्रियं गच्छत्युग्निं वा चितमीजानं वा यद्वेता आहुतीर्जुहोत्यात्मनेव यर्श इन्द्रियन्धत्ते(९) ईश्वरो वा एष आर्तिमार्तोर्योऽग्निं चिन्वन्नधिक्रामति तत्त्वा यामि ब्रह्मणा वन्दमान इति वारुण्यर्चा ॥ ४ ॥

जुहुयाच्छान्तिरेवैषाग्नेर्गुप्तिरात्मनः(१०) हविष्कृतो वा एष योऽग्निं चिनुते यथा वै हविस्कन्दत्येवं वा एष स्कन्दति योऽग्निं चित्वा स्त्रियमुपैति मैत्रावरुण्यामिक्षया यजेत मैत्रावरुणतामेवोपैत्यात्मनोऽस्कन्दाय(११) यो वा अग्नि-मृतुस्थां वेदर्तुर्ऋतुरस्मै कल्पमान एति प्रत्येव तिष्ठति संवत्सरो वा अग्निः ॥ ५ ॥

ऋतुस्थास्तस्य वसन्तः शिरो ग्रीष्मो दक्षिणः पक्षो वर्षाः पुच्छꣳ शरदुत्तरः पक्षो हेमन्तो मध्य पूर्वपक्षा-श्चितयोऽपरपक्षाः पुरीषमहोरात्राणीष्टका एष वा अग्निर्ऋतुस्था य एवं वेदर्तुर्ऋतुरस्मै कल्पमान एति प्रत्येव तिष्ठति(१२) प्रजापतिर्वा एतं ज्यैष्ठ्यकामो न्यधत्त ततो वै स ज्यैष्ठ्यमगच्छद्य एवं विद्वानग्निं चिनुते, ज्यैष्ठ्यमेव गच्छति(१३) ॥ ६ ॥

पृथिवीं यच्छ। यत्स्वयमातृण्णा उपधाय। धेहि। ऋचा। अग्निः। चिनुते। वीर्यं च ॥ ६ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके षष्ठोऽनुवाकः ॥०॥

पुनःपरीक्षनाद्यच पञ्चमे समुदीरितम्।

अथ षष्ठे व्रतचरणादिकमभिधीयते।

यदुक्तं सूत्रकारेण,—'संवत्सरं न किञ्चन प्रत्यवरोहेन्न च रामामुपेयान्न पक्षिणोऽश्नीयात्' इत्यादि। तत्र पक्ष्यशननिषेधरूपं संवत्सरव्रतं विधत्ते,—"वयो वै अग्निः यत् अग्निचित् पक्षिणः अश्नीयात् तमेवाग्निम् अद्यात् आर्त्तिमार्च्छेत् संवत्सरं व्रतं चरेत् संवत्सरꣳ हि व्रतं न अति[१]" इति। योऽयं चीयमानः 'अग्निः', स पक्षिस्वरूप एव। "वयसां वा एष प्रतिमया चीयते" (५।५।३।२) इति पूर्वमुक्तम्। एवं सति अयम् 'अग्निचित्' यदि 'पक्षिणः' भक्षयेत्, तर्हि 'अग्निम् एव' भक्षितवान् भवति। ततो म्रियेत। अतस्तत्परिहाराय संवत्सरमात्रं पक्षिभक्षणवर्जनरूपं 'व्रतं' 'चरेत्'। तस्मात् संवत्सरमतीत्य व्रतचरणं न क्वापि दृष्टम्। तस्मात्तद्व्रतपर्याप्तम् एतद्ब्राह्मणं, पूर्वोक्तञ्च (५।७।५।५) चितिप्रशंसारूपं ब्राह्मणं सर्वान्ते द्रष्टव्यम्।

अथ चित्यारोहणस्य पश्चिमदिङ्नियमं विधत्ते,—"पशुर्वै एष यदग्निर्हिनस्ति खलु वै तं पशुः य एनं पुरस्तात् प्रत्यञ्चम् उपचरति तस्मात् पश्चात् प्राङ् उपचर्य आत्मनः अहिꣳसायै[२]" इति। अग्नेः पशुरूपत्वात् पुरस्तात् आरोहणे यथा पशुः शृङ्गाभ्यां हिनस्ति, तद्वत् अयमपि हिंस्यात्। 'तस्मात्' पश्चिमायां दिशि प्राङ्मुखेन 'उपचर्य' आरोहणीयः। तत्र 'आत्मनः' आरोढुः अहिंसार्थं भवति। एतच्च "अग्ने तव अवो वयः" (५।२।१६) इत्यनुवाके द्रष्टव्यम्।

यदुक्तं सूत्रकारेण,—'तेजोऽसि तेजो मे यच्छेति हिरण्येष्टकाम्'—

इति, 'ज्योतिरसि ज्योतिर्मे यच्छेति हिरण्येष्टकाम्' इति च, 'सुवरसि सुवर्मे यच्छेति हिरण्येष्टकाम्' इति च। तदेतद्विधातुं मन्त्रानुत्पादयति,—"तेजोऽसि तेजो मे यच्छ पृथिवीं यच्छ पृथिव्यै मा पाहि ज्योतिरसि ज्योतिर्मे यच्छ अन्तरिक्षं यच्छ अन्तरिक्षात् मा पाहि सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहि[१]" इति। प्रथमचितौ उपधातव्ये हे हिरण्येष्टके, त्वं तेजोरूपासि। 'मे' मदर्थं 'तेजः' देहि। तथा 'पृथिवीं' देहि। यद्वा पृथिवीं मदुपकारित्वेन नियमय। तस्याः पृथिव्याः सकाशान्मां 'पाहि', यथा पृथिवी नोपद्रवं करोति तथा कुरु। एवं तृतीयपञ्चमचितिविषययोरुत्तरयोर्मन्त्रयोर्योज्यम्। 'सुवः' स्वर्गसुखम्। 'दिवं' द्युलोकम्।

एतैर्मन्त्रैः साध्यमुपधानं विधत्ते,—"इत्यं ह एताभिर्वै इमे लोकाः विधृताः यत् एताः उपदधाति एषां लोकानां विधृत्यै[४]" इति। इत्युक्तान् मन्त्रानुपधानकाले पठेत्। 'एताभिः' हिरण्येष्टकाभिः 'इमे' त्रयो 'लोकाः' 'विधृताः'। अतः एतदुपधानं लोकधृत्यै भवति।

अस्योपधानस्य तत्तच्चितिगतस्वयमातृण्णाभ्य ऊर्ध्वकालं विधत्ते,—"स्वयमातृण्णा उपधाय हिरण्येष्टका उप दधाति इमे वै लोकाः स्वयमातृण्णा ज्योतिर्हिरण्यं यत् स्वयमातृण्णाः उपधाय हिरण्येष्टकाः उपदधाति इमान् एव एताभिर्लोकान् ज्योतिष्मतः कुरुते अथो एताभिरेव अस्मै इमे लोकाः प्र भान्ति[१]" इति। एतच्च "स्वयमातृण्णाम्" (५।२।८) इत्यनुवाके द्रष्टव्यम्।

यदुक्तं सूत्रकारेण,—'यास्ते अग्ने सूर्ये रुच इति तिस्रो रुचे'

इति। रुगाख्या आहुतीर्जुहुयादित्यर्थः। तत्र प्रथमामाह,—"यास्ते अग्ने सूर्ये रुचः उद्यतो दिवम् आतन्वन्ति रश्मिभिः ताभिः सर्वाभि. रुचे जनाय नः कृधि(६)" इति। हे 'अग्ने', 'सूर्ये' सूर्यमण्डले स्थितस्य 'ते' तव 'उद्यतः' उदयं गच्छतः 'याः' 'रुचः' दीप्तय. 'दिवं' द्युलोकम् 'आतन्वन्ति' सर्वतो व्याप्नुवन्ति, 'ताभिः' 'सर्वाभि.' 'रश्मिभिः' 'नः' 'जनाय' अस्मदीयजनार्थं 'रुचे' 'कृधि' रुचं दीप्तं कुरु।•

अथ द्वितीयामाह,—"या वो देवाः सूर्ये रुचः गोषु अश्वेषु या रुचः इन्द्राग्नी ताभिः सर्वाभिः रुचं नः धत्त बृहस्पते(७)"—इति। हे 'देवा.', 'वः' युष्माक सम्बन्धिन्य' सूर्यमण्डले 'याः' 'रुच.' दीप्तयो वर्त्तन्ते, तथा 'गोषु' 'अश्वेषु' च 'या रुच.' वर्त्तन्ते, हे 'इन्द्राग्नी', 'ताभिः सर्वाभिः' दीप्तिभिः 'नः' अस्मदर्थं 'रुचं' 'धत्त' दीप्तं कुरुत।

अथ तृतीयामाह,—"रुचं नो धेहि ब्राह्मणेषु रुचम् राजसु नः कृधि रुच विश्येषु शूद्रेषु मयि धेहि रुचा रुचम्(८)"—इति। हे अग्ने, 'नः' अस्मदीयेषु 'ब्राह्मणेषु' 'रुचं' 'धेहि' प्रकाश कुरु। 'नः' अस्मदीयेषु 'राजसु' 'रुच' 'कृधि' प्रकाशं कुरु। तथा 'विश्येषु' वैश्येषु 'शूद्रेषु' च 'रुच' प्रकाशं कुरु। तथा च 'रुचा' त्वदीयया दीप्त्या 'मयि' 'रुचं' 'धेहि' प्रकाशं कुरु।

एतैर्मन्त्रै. साध्यं होमं विधत्ते,—"द्वेधा वै अग्निं चिक्यानस्य यशः इन्द्रिय गच्छति अग्निं वा चितम् ईजानं वा यदेता आहुतीः जुहोति आत्मन्नेव यशः इन्द्रियं धत्ते(९)" इति। यो यजमान'

अग्निं चितवान् तस्य 'यशः' कीर्तिः 'इन्द्रियं' सामर्थ्यं वा अन्यत्र गच्छति । कुत्र ? इति चेत् । श्रूयताम्, योऽयमिदानीं चितः अग्निः तं वा प्राप्नोति । यस्तु ईजानः पूर्वं चिते अग्नौ यागं कृतवान् तं वा प्राप्नोति । सर्वथापि अस्मद्यजमानात् अपगच्छति । एतैर्मन्त्रैर्होमे तु तत् 'यशः' इन्द्रियं च स्वात्मन्येव धारयति । एतच्च "अग्निर्देवेभ्यः" (५।४।८) इत्यनुवाकादूर्ध्वं द्रष्टव्यम् ।

यदुक्तं सूत्रकारेण,—'तत्त्वा यामि ब्रह्मणा वन्दमान इति शालामुखीये हुत्वा' इति। तदिदं विधत्ते,—"ईश्वरो वै एष आर्तिम् आ अर्तोः यः अग्निं चिन्वन् अधिक्रामति तत् त्वा यामि ब्रह्मणा वन्दमान इति वारुण्या ऋचा जुहुयात् शान्तिरेव एषा अग्नेर्गुप्तिः आत्मनः[१०]" इति । 'यः' यजमानः चयनकाले 'अग्निम्' अधिरुह्य पादेनाक्रामति, 'एषः' यजमानो विनाशं प्राप्तुं समर्थः। तत्परिहाराय 'तत्त्वा यामि'-इति 'ऋचा' जुहुयात्। सेयम् ऋक् "इन्द्रं वो विश्वतस्परीन्द्रं नरः" (२।१।११) इत्यनुवाके व्याख्याता । 'एषा' आहुतिः 'अग्नेः' शमनहेतुः, 'आत्मनः' यजमानस्य च रक्षणहेतुः । तच्च "अग्ने तव श्रवो वयः" (५।२।६) इत्यनुवाके द्रष्टव्यम् ।

यथाग्निचयनादूर्ध्वं तदङ्गत्वेन सौत्रामणी पूर्वं विहिता एवमत्र मैत्रावरुणीं विधत्ते,—"हविष्कृतो वै एष योऽग्निं चिनुते यथा वै हविः स्कन्दति एवं वै एष स्कन्दति योऽग्निं चित्वा स्त्रियम् उपैति मैत्रावरुण्या आमिक्षया यजेत मैत्रावरुणताम् एव उपैति आत्मनः अस्कन्दाय[११]" इति। 'यः' यजमानः 'अग्निं' 'चिनुते',

'एषः' हविःस्वरूपं प्राप्तः। तथा सति स्त्रीगमनस्य स्वरूपनाशो हविर्नाशसमानः। अतस्तत्परिहारार्थं 'यजेत'। तेन यागेन स्वयं मित्रावरुणसम्बन्धितां प्राप्य यागादूर्ध्वं हविषः उपयुक्तत्वात् हविःस्थानीयस्य स्वस्य गमनेऽपि नास्ति विनाशः।

अथ अग्निं संवत्सररूपकल्पनया प्रशंसति,—"यो वै अग्निम् ऋतुस्थां वेद ऋतुः ऋतुः अस्मै कल्पमानः एति प्रति एव तिष्ठति संवत्सरो वै अग्निः ऋतुस्थाः तस्य वसन्तः शिरः ग्रीष्मो दक्षिणः पक्षः वर्षाः पुच्छं शरत् उत्तरः पक्षः हेमन्तो मध्यं पूर्वपक्षाश्चितयः अपरपक्षाः पुरीषम् अहोरात्राणि इष्टका एष वै अग्निः ऋतुस्था यम् एव वेद ऋतुः ऋतुः अस्मै कल्पमानः एति प्रति एव तिष्ठति[१२]" इति। ऋतुषु तिष्ठतीति ऋतुस्थाः संवत्सरः। तद्रूपम् 'अग्निं' 'यः' 'वेद' मनसा भावयेत्, 'अस्मै' यजमानाय स स ऋतुः स्वस्वोचित-भोगप्रदानसमर्थः सन् एनं प्राप्नोति। तद्योगेन च अयं 'प्रति'-'तिष्ठति'। 'संवत्सरो वै अग्निः' इत्यादि भावनाप्रकारः। 'य एवं वेद' इत्यादि पूर्वोक्तफलोपसंहारः।

अथ फलान्तरेण प्रशंसति,—"प्रजापतिर्वै एतं ज्यैष्ठ्यकामो न्यधत्त ततो वै स ज्यैष्ठ्यमगच्छत् य एवं विद्वान् अग्निं चिनुते ज्यैष्ठ्यमेव गच्छति[१३]"—इति। 'न्यधत्त' चितवानित्यर्थः। 'ज्यैष्ठ्यं' वयोगुणाभ्यामाधिक्यम्। एतच्च सर्वमन्ते द्रष्टव्यम्।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके षष्ठोऽनुवाकः। ०॥

---

यदाकूतात्समसुस्रोद्धृदो वा मनसो वा संभृतञ्चक्षुषो वा । तमनु प्रेहि सुकृतस्य लोकं यत्रर्षयः प्रथमजा ये पुराणाः[१] । एतꣳ सधस्थ परि ते ददामि यमावहाच्छेवधिं जातवेदाः अन्वागन्ता यज्ञपतिर्वो अत्र तꣳ स्म जानीत परमे व्योमन्[२] । जानीतादेनं परमे व्योमन् देवाः सधस्था विद रूपमस्य । यदागच्छात् ॥ १ ॥

पथिभिर्देवयानैरिष्टापूर्ते कृणुतादाविरस्मै[३] । सं प्र च्यवध्वमनु सं प्र यातामग्ने पथो देवयानान् कृणुध्वम् । अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत[४] । प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा । ऋचेमं यज्ञं नो वह सुवर्देवेषु गन्तवे[५] । यदिष्टं यत् परादानं यद्दत्तं या च दक्षिणा तत ॥ २ ॥

अग्निर्वैश्वकर्मणः सुवर्देवेषु नो दधत्[६] । येना सहस्रं वहसि येनाग्ने सर्ववेदसं । तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे[७] । येनाग्ने दक्षिणा युक्ता यज्ञं वहन्त्यृत्विजः । तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे[८] । येनाग्ने सुकृतः पथा मधोर्धारा व्यानशुः । तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे[९] । यत्र धारा अनपेता मधोर्घृतस्य च याः । तदग्निर्वैश्वकर्मणः सुवर्देवेषु नो दधत्[१०] ॥ ३ ॥

आगच्छात्। तद्। व्यानशुः। तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे। चतुर्दश च ॥ ७ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके सप्तमोऽनुवाकः॥

प्रतेष्टकाप्रशंसा हि सर्वाः षष्ठे समीरिताः।

अथ सप्तमे आकूतिमन्त्रा उच्यन्ते। यदुक्तं सूत्रकारेण,—'यदाकूतादिति। दशाकूतीर्जुहोति'।

तत्र प्रथमामाह,—"यद् आकूतात् समसुस्रोत् हृदो वा मनसो वा संभृतं चक्षुषो वा। तमनु प्रेहि सुकृतस्य लोकं यत्र ऋषयः प्रथमजाः ये पुराणाः" इति। आकूतादिभिः 'सम्भृतं' सम्पादितं यत्फलं पूर्वो यजमानसङ्घः 'समसुस्रोत्' सम्यक् प्राप्तवान्। हे यजमान, त्वं 'सुकृतस्य लोकं' त्वदीयस्य कर्मणः फलभूतं 'तं' भोगम् 'अनु प्रेहि' अनुक्रमेण प्राप्नुहि। आकूतं संकल्पः अक्षयं सुखं प्राप्नोमीत्येवंरूपः। हृदयं चित्तं श्रुतिस्मृत्युदितसाधनोपायचिन्तनम्। मनः अन्तःकरणं तदनुकूलप्रवृत्तिनिष्ठत्यात्मकम्। चक्षुषः चक्षुषा लक्ष्यन्ते यानि सम्यगनुष्ठानेनाभिमतं फलं साधयन्ति। एतैः सर्वैः सम्पादितं प्राप्नुहीत्यन्वयः। 'यत्र' यस्मिन् सुकृतस्य लोके 'प्रथमजाः' स्वयम्भूप्रभृतयः 'ऋषयः' सर्वज्ञाः आसते। 'ये' च 'पुराणाः' पूर्वे यजमानाः सन्ति, तेऽपि यत्र आसते, 'तम्' 'अनु-प्रेहि'।

अथ द्वितीयामाह,—"एतꣳ सधस्थ परि ते ददामि यम् आवहात् शेवधिं जातवेदाः। अन्वागन्ता यज्ञपतिर्वः अत्र तꣳ स्म

जानीत परमे व्योमन्[१]" इति । हे 'सधस्थ' सहस्थितयजमानैरस्माभिः सह अस्यां यज्ञभूमाववस्थित, हे अग्ने, 'ते' तुभ्यं 'एतं' यजमानं 'परि'-'ददामि' रक्षार्थं त्वद्धस्ते ददामीत्यर्थः। 'जातवेदाः' उत्पन्नानां प्राणिनां योगक्षेमाभिज्ञः त्वं 'शेवधिं' निधिवद्रक्षणीयं, 'यं' यजमानम् 'आवहात्' आवहसि,—मदीयोऽयमिति स्वीकरोषि, तं यजमानं परिददामीति पूर्वत्रान्वयः। हे देवाः, 'यज्ञपतिः' अयं यजमानः 'वः' युष्मान् 'अन्वागन्ता' युष्माकं पृष्ठे आगमिष्यति। 'अत्र' अस्मिन् 'परमे' 'व्योमन्' उत्कृष्टविशिष्टरक्षणयोग्ये स्थाने भवदीये लोके 'तं' यजमानं 'जानीत' 'स्म' सर्वथा रक्षणीयोऽयमिति स्मरत।

अथ तृतीयामाह,—"जानीतात् एनं परमे व्योमन् देवाः सधस्था विद रूपम् अस्य यत् आगच्छात् पथिभिर्देवयानैः इष्टापूर्त्ते कृणुतात् आविरस्मै[१]" इति। हे देवाः, 'परमे' स्थाने भवदीये लोके 'एनं' 'जानीतात्' यजमानम् अविस्मृत्य सर्वदा रक्षार्थं स्मरत। हे 'सधस्थाः' यजमानेन सह तस्मिन् पुण्यलोके स्थिता, देवाः, 'अस्य' यजमानस्य, 'रूपं' अग्निचयनाद्यनुष्ठानयुक्तं स्वरूपं 'विद' जानीत,—तस्मिन् लोके पुनः पुनः स्मरत। 'देवयानैः' भवदीयगमनयोग्यैः 'पथिभिः' मार्गैः, 'यत् आगच्छात्' यो यजमान आगच्छति, 'अस्मै' एतद्-यजमानार्थं, 'इष्टापूर्त्ते' श्रौतस्मार्तकर्मफले, 'आविः'-'कृणुयात्' प्रकटीकुरुत, हे यजमान, तवेदं श्रौतकर्मफलं, इदं च स्मार्त्तकर्म-फलमित्येवं सावधाना अनुगृह्णीतेत्यर्थः।

अथ चतुर्थीमाह,—"सं प्र च्यवध्वमनु सं प्र यातानग्ने पथो देव-

यानान् कृणुध्वं। अस्मिन् सधस्थे अधि उत्तरस्मिन् विश्वे देवा यजमानश्च सीदत[४]" इति। हे 'अग्ने', त्वं, 'विश्वे देवाः' सर्व्वेऽपि देवाः, यजमान इत्येते यूयं सर्व्वेऽपि 'सं प्र-च्यवध्वं' अस्मात् भूलोक-'स्थानात् सम्यक् प्रचलिला* च 'अनु- सं प्र यात' अनन्तरं यजमानेन सङ्गता एव गच्छत, गमनकाले च 'देवयानान्' 'पथः' 'कृणुध्वं'। न तु नरकलोकमनुष्यलोकमार्गः कर्त्तव्यः। 'सधस्थे' यजमानेन सहावस्थानयोग्ये 'अस्मिन्' यज्ञभूमिरूपे भूलोके 'अधि' 'उत्तरस्मिन्' फलभोगस्थाने, स्वर्गलोके च 'सीदत' यजमानो यूयं च सह तिष्ठत।

अथ पञ्चमीमाह,—"प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा। ऋचेमं यज्ञं नो वह सुवर्देवेषु गन्तवे[५]" इति। हे अग्ने, प्रस्तरादिभि' सर्व्वैर्यज्ञसाधनैः सहितं नः अस्मदीयम् इमं यज्ञं 'सुवः' स्वर्गलोके 'वह' प्रापय। किमर्थं?—'देवेषु गन्तवे' देवानां मध्ये गन्तुं, तेषां प्रदर्शनार्थमित्यर्थः।

अथ षष्ठीमाह,—"यदिष्टं यत्परादानं यद्दत्तं या च दक्षिणा तदग्निर्वैश्वकर्मणः सुवर्देवेषु नो दधत्[६]" इति। दर्शपूर्णमासादिरूप 'यत्' कर्म 'इष्टम्' अनुष्ठितं, 'यत्' च 'परादानं' दीनान्धकृपणादिभ्यः स्वल्पदानं, 'यत्' अपि 'दत्तं' बर्हिर्वेदिपाचप्रभृतिभ्योऽनूचानेभ्यो बहु द्रव्यं समर्पितं, 'या च' अन्या 'दक्षिणा' यज्ञमध्ये गवादिरूपा दत्ता,

---

* एवमेव सर्व्वत्र पाठ। 'प्रचलत, चलिला च' इत्येवरूप कश्चित् पाठ पतित इव प्रतिभाति।

'नः' अस्मदीयं 'तत्' सर्व्वं 'वैश्वकर्मणः' कृत्स्नकर्मस्वामिभूतोऽयम् 'अग्निः' 'सुवर्द्देवेषु' स्वर्गलोकनिवासिषु मध्ये 'दधत्' स्थापयतु ।

अथ सप्तमीमाह,—"येना सहस्रं वहसि येनाग्ने सर्व्ववेदसन्तेनेमं यज्ञं नो वह सुवर्द्देवेषु गन्तवे(७)" इति । हे 'अग्ने', त्वं 'येन' मार्गेण 'सहस्रं' 'वहसि' सहस्रदक्षिणाकं यज्ञं नयसि, 'येन' च 'सर्व्ववेदसं' सर्वस्वदक्षिणाकं यज्ञं नयसि, 'तेन' मार्गेण 'नः' अस्मदीयम् 'इमं' 'यज्ञं' 'वह' । 'नय सुवः' इत्यादि पूर्ववत् ।

अथाष्टमीमाह,—"येनाग्ने दक्षिणाः युक्ताः यज्ञं वहन्ति ऋत्विजः । तेनेमं यज्ञं नो वह सुवर्द्देवेषु गन्तवे(८)" इति । 'ऋत्विजः' सर्वे 'युक्ताः' योग्याः शास्त्रीयाः 'दक्षिणाः' 'यज्ञं' च 'इमं' येन शास्त्रीयेण मार्गेण 'वहन्ति' निर्वहन्ति अनुतिष्ठन्तीत्यर्थः, 'तेन' एव शास्त्रीयेण मार्गेण 'इमं यज्ञम्' इत्यादि पूर्ववत् ।

अथ नवमीमाह,—"येनाग्ने सुकृतः पथा मधोर्धारा व्यानशुः । तेनेमं यज्ञं नो वह सुवर्द्देवेषु गन्तवे(९)" इति । हे 'अग्ने', 'सुकृतः' पूर्वं पुण्यकृतो* यजमाना 'येन' मार्गेण गत्वा 'मधोः' मधुरस्य पीयूषस्य 'धाराः' 'व्यानशुः' व्याप्तवन्तः । तेनेत्यादि पूर्ववत् ।

अथ दशमीमाह,—"यत्र धारा अनपेता मधोः घृतस्य च याः तदग्निर्वैश्वकर्मणः सुवर्द्देवेषु नो दधद्(१०)" इति । 'यत्र' यस्मिन् लोके 'मधोः' माक्षिकस्य 'घृतस्य' च 'धाराः' 'अनपेताः' अविच्छिन्नाः, तत्र लोके 'अग्निः'-इत्यादि पूर्ववत् । एते च दश मन्त्राः पूर्वस्मिन् मन्त्रकाण्डे "ममाग्ने (४।७।१४)" इत्यनुवाकादूर्ध्वं द्रष्टव्याः ।

* पूर्व्वपुण्यकृत इति का० क्रौ० पु० पाठ ।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके सप्तमोऽनुवाकः ॥०॥

---

यास्ते अग्ने समिधो यानि धाम या जिह्वा जातवेदो यो अर्चिः ये ते अग्ने मेडयो य इन्दवस्तेभिरात्मानं चिनुहि प्रजानन्(१)। उत्सन्नयज्ञो वा एष यदग्निः किं वाहैतस्य क्रियते किं वा न यद्वा अध्वर्युरग्नेश्चिन्वन्नन्तरेत्यात्मनो वै तदन्तरेति यास्ते अग्ने समिधो यानि ॥ १ ॥

धामेत्याहैषा वा अग्नेः स्वयंचितिरग्निरेव तदग्निं चिनोति नाध्वर्युरात्मनोऽन्तरेति(२) चतस्र आशाः प्र चरन्त्वग्नयं इमं नो यज्ञं नयतु प्रजानन्। घृतं पिन्वन्नजरं सुवीरं ब्रह्म समिद्भवत्याहुतीनां(३)। सुवर्गाय वा एष लोकायोपधीयते यत्कूर्मश्चतस्र आशाः प्र चरन्त्वग्नये इत्याह ॥ २ ॥

दिश एवैतेन प्र जानाति(४) इमं नो यज्ञं नयन्तु प्रजानन्नित्याह सुवर्गस्य लोकस्याभिनीत्यै(५) ब्रह्म समिद्भवत्याहुतीनामित्याह ब्रह्मणा वै देवाः सुवर्गं लोकमायन्(६) यद् ब्रह्मण्वत्योपदधाति ब्रह्मणैव तद् यजमानः

सुवर्गं लोकमेति[७] प्रजापतिर्वा एष यदग्निस्तस्य प्रजाः पशवश्छन्दाꣳसि रूपꣳ सर्वान्वर्णानिष्टकानां कुर्याद्रूपेणैव प्रजान् पशूꣳश्छन्दाꣳस्यव रुन्धे[८] अथो प्रजाभ्य एवैनं पशुभ्यश्छन्दोभ्योऽवरुध्य चिनुते ॥ ३ ॥

एति यास्ते अग्ने समिधो यानि । अग्नय इत्याह । इष्टकानाꣳ । षोडश च ॥ ८ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके अष्टमोऽनुवाकः ॥

---

आकूत्याकूतिमन्त्रा ये ते सप्तम उदीरिताः ।

अथाष्टमे स्वयचित्यादिकमभिधीयते । यदुक्तं सूत्रकारेण,—'यास्ते अग्ने समिध इति स्वयंचित्याभिमृशति' इति । तदेतद्विधातुं मन्त्रमुत्पादयति,—"यास्ते अग्ने समिधो यानि धाम या जिह्वा जातवेदो यो अर्चिः । ये ते अग्ने मेडयो य इन्दवस्तेभिरात्मानं चिनुहि प्रजानन्[1]" इति। हे 'जातवेदः' 'अग्ने', ते त्वदीयाः 'समिधः' समिन्धनक्रिया 'याः' सन्ति, 'यानि' च 'धाम' त्वदीयानि स्थानानि गार्हपत्यादीनि, 'या' च 'जिह्वा' त्वदीया 'काली कराली'इत्यादिकाः, 'यः' 'अर्चिः' प्रकाशनसामर्थ्यं, हे 'अग्ने', 'ते' त्वदीया 'ये' 'मेडयः', शब्दविशेषाः, 'ये' 'इन्दवः' इन्दुसदृशा विस्फुलिङ्गाः, 'तेभिः' तैः सर्वैः प्रजानन्, चयनप्रकाराभिज्ञस्त्वं 'आत्मानं' 'चिनुहि' स्वकीयस्वरूपमुपचितं कुरु ।

अनेन मन्त्रेण साध्यस्य चैत्राभिमर्शनस्य विधिमुन्नयति, "उत्सन्नयज्ञो वै एष यदग्निः किं वा अहैतस्य क्रियते किं वा न यद्वै अध्वर्युरग्नेश्चिन्वन्नन्तरेत्यात्मनो वै तदन्तरेति यास्ते अग्ने समिधो यानि धामेत्याहैषा वै अग्ने स्वयञ्चितिरग्निरेव तदग्नि चिनोति नाध्वर्युरात्मनोऽन्तरेति(१)" इति। योऽयञ्चीयमानोऽग्नि सोऽयम् 'उत्सन्नयज्ञ', बह्वङ्गेषु यस्य कस्यचिदिस्मृतिसम्भवेन विनष्टयज्ञत्वम्, अत 'अस्य' यज्ञस्य 'किम्' अङ्गमनुष्ठितं 'किं वा' नेति ज्ञातुमशक्यम्। एवं च सति चिन्वान अयम् 'अध्वर्यु' 'अग्ने' सम्बन्धि 'यत्' 'अङ्गम्' अन्तरितं करोति, 'तत्' 'आत्मन' एवाङ्गमन्तरितं कुर्यात्, अतस्तत्परिहाराय चैत्राभिमर्शनकाले 'यास्ते अग्ने' इत्येतामृचं ब्रूयात्। येयं 'यास्ते अग्ने'-इत्यृक्, सैषा 'स्वयञ्चिति'-इत्यभिधीयते, 'आत्मानं चिनुष्व' इत्येवं स्वेन स्वस्यैव चीयमानत्वाभिधानात्। तेन मन्त्रपाठेन 'तत्' 'अग्नि' 'एव' स्वयम् 'अग्निम्' स्वात्मानं 'चिनोति'। तत 'अध्वर्यु' स्वसम्बन्धि किञ्चिदपि 'अङ्ग' 'न' 'अन्तरेति'। एतदपि 'अग्ने तव श्रवो वय' (५।२।६)" इत्यनुवाके द्रष्टव्यम्।

यदुक्तं सूत्रकारेण,—"'मधुवाता ऋतायते' इति तिसृभिर्दध्ना मधुमिश्रेण कूर्ममभ्यज्य 'मही द्यौः पृथिवी च न (४।२।८)' इति पुरस्तात्स्वयमातृण्णाया प्रत्यञ्चं जीवन्तं कूर्मं प्राङ्मुखं उपदधाति इति। 'चतस्र आशा प्र चरन्तु अग्नय' इति वा उपधाय' -इति। तत्र कूर्मोपधाने विकल्पितं मन्त्रमुत्पादयति,—"चतस्र आशा प्र चरन्तु अग्नय इमं नो यज्ञं नयतु प्रजानन्। घृतं पिन्वन्नजरꣳ सुवीरं ब्रह्म

समिद् भवति आहुतीनाम्[२]" इति । 'अग्नयः' आहवनीयादयः सन्ति, ते 'चतस्रः' चतुःसङ्ख्याका दिशः पूर्वाद्याः 'प्र चरन्तु' कूर्मस्य स्वर्गमार्गाभिज्ञानाय सर्वासु दिक्षु प्रकाशं कुर्वन्तु। अयं च कूर्मः 'प्रजानन्' अस्मदीयं कर्म प्रकर्षेण अवगच्छन्, 'नः' अस्मदीयमिमं यज्ञ 'नयतु' स्वर्गं प्रापयतु । किं कुर्वन्?—'अजरं' विनाशरहितं 'सुवीरं' शोभनवीर्यप्रदं । 'घृत' मधुमिश्रमाज्यं, 'पिन्वन्' पिबन्, आहुतिप्रदानां यजमानानां 'ब्रह्म समिद्' 'भवति', मन्त्र एव स्वर्गमार्गप्रकाशको भवति । अनेन मन्त्रेण साध्यं कूर्मोपधानं पूर्वमेव विहितं "यञ्जीवन्तं कूर्ममुपदधाति (५।८।२)" इति । अत्र तु मन्त्रमेतं विनियोक्तुमादौ तदर्थः प्रकाश्यते ।

तत्र प्रथमपादस्य तात्पर्यं दर्शयति,—"सुवर्गाय वै एष लोकाय उपधीयते यत्कूर्मश्चतस्र आशाः प्रचरन्त्वग्नय इत्याह दिशा एवैतेन प्र जानाति[३]" इति । सुवर्गलोके नेतुमयं कूर्म उपधीयते, अतः मार्गाभिज्ञानाय एतेन पादेन दिक्प्रकाशनं प्रार्थ्यते ।

द्वितीयपादस्य तात्पर्यं दर्शयति,—"इमं नो यज्ञं नयतु प्रजानन्नित्याह सुवर्गस्य लोकस्याभिनीत्यै[४]" इति। 'नयतु' इति सामान्येनोक्तेऽपि स्वर्गं प्रत्यवगमनमत्र विवक्षितम् ।

चतुर्थपादस्य तात्पर्यं दर्शयति,—"ब्रह्म समिद्भवत्याहुतीनामित्याह ब्रह्मणा वै देवाः सुवर्गं लोकमायन्[५]" इति । आहुतिप्रदाः पूर्वे देवाः मन्त्रसामर्थ्येनैव स्वर्गं प्राप्ताः, अतो मन्त्र एव प्रकाशसाधनं ।

व्याख्यातमेतं मन्त्रं विनियुङ्क्ते,—"यद् ब्रह्मण्वत्या उपदधाति ब्रह्मणैव तद्यजमानः सुवर्गं लोकमेति[७]" इति। ब्रह्मशब्दो यस्याम्

ऋचि अस्ति सेयं ब्रह्मवती। तदिदं ब्राह्मणं "स्वयमातृण्णामुपदधाति (५।२।८)"—इत्यनुवाके द्रष्टव्यम्।

यदुक्तं सूत्रकारेण,—'सर्वान्वर्णानिष्टकानां कुर्यादिति लेखाधिकारो भवति इति विज्ञायते ल या दक्षिणावृतस्ता दक्षिणत उपदध्यात् स व्यावृत उत्तरत ऋजुलेखाः पश्चात्पुरस्ताच्च अलिखिता मध्ये' इति। तदेतत्सर्वं विधत्ते,—"प्रजापतिर्वै एष यदग्निस्तस्य प्रजाः पशव-श्छन्दांऽसि रूपऽ सर्वान् वर्णानिष्टकानां कुर्याद्रूपेणैव प्रजां पशून् छन्दांस्यव रुन्धे(८)" इति। चीयमानः 'अग्निः' प्रजापतिजन्यत्वात् 'प्रजापतिः' एव, 'तस्य' च प्रजापतेः प्रजा-पशु-च्छन्दांसि परस्पर-विलक्षणानि स्वरूपम्। अतस्तद्रूपप्रत्यभिज्ञानाय 'इष्टकानां' 'सर्वान् वर्णान्' बहुविधरेखाविशेषान् 'कुर्यात्'। एवं सति प्रजापतिरूपेणैव प्रजापतिं प्राप्नोति।

"अथो प्रजाभ्य एवैनं पशुभ्यश्छन्दोभ्योऽवरुध्य चिनुते" इति। अपि च प्रजादिभि. 'एव' 'एनम्' अग्निं स्वाधीनं कृत्वा चितवान् भवति। एतदपि "स्वयमातृण्णामुपदधाति (५।२।८)" इत्यनुवाके द्रष्टव्यम्।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके अष्टमोऽनुवाकः ॥०॥

मयि गृह्णाम्यग्रे अग्निम् रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय। मयि प्रजां मयि वर्चो दधाम्यरिष्टा स्याम तनुवा सुवीराः[1]। यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो मर्त्याम् आविवेश। तमात्मन् परि गृह्णीमहे वयं मा सो अस्माम् अवहाय परा गात्[2]। यदध्वर्युरात्मन्नग्निमगृहीत्वाग्निं चिनुयाद्योऽस्य स्वोऽग्निस्तमपि ॥१॥

यजमानाय चिनुयादग्निं खलु वै पशवोऽनूप तिष्ठन्तेऽपक्रामुका अस्मात् पशवः स्युर्मयि गृह्णाम्यग्रे अग्निमित्याहात्मन्नेव स्वमग्निन्दाधार नास्मात् पशवोऽप क्रामन्ति[3] ब्रह्मवादिनो वदन्ति यन्मृचापश्चाग्नेरन्नाद्यमथ कस्मान् मृदा चाद्भिश्चाग्निश्चीयत इति यदद्भिः संयौति ॥ २ ॥

आपो वै सर्वा देवता देवताभिरेवैनम् सम् सृजति यन्मृदा चिनोतीयं वा अग्निर्वैश्वानरोऽग्निनैव तदग्निं चिनोति[4] ब्रह्मवादिनो वदन्ति यन्मृदा चाद्भिश्चाग्निश्चीयतेऽथ कस्मादग्निरुच्यत इति यच्छन्दोभिः चिनोत्यग्नयो वै छन्दाम्सि तस्मादग्निरुच्यतेऽथो इयं वा अग्निर्वैश्वानरो यत् ॥ ३ ॥

मृदा चिनोति तस्मादग्निरुच्यते[1] हिरण्येष्टका उप दधाति ज्योतिर्वै हिरण्यं ज्योतिरेवास्मिन् दधात्यथो

तेजो वै हिरण्यं तेज एवात्मन्धत्ते[१] यो वा अग्निꣳ सर्वतोमुखं चिनुते सर्वासु प्रजास्वन्नमत्ति सर्वा दिशोऽभि जयति गायत्री पुरस्तादुप दधाति त्रिष्टुभं दक्षिणतो जगती पश्चादनुष्टुभमुत्तरतः पङ्क्तिं मध्य एष वै, अग्निः सर्वतोमुखस्तं य एवं विद्वाꣳश्चिनुते सर्वासु प्रजास्वन्नमत्ति सर्वा दिशोऽभि जयत्यथो दिश्येव दिशं प्र वयति तस्माद्दिशि दिक्प्रोता[२] ॥ ४ ॥

अपि। संयौति। वैश्वानरो यत्। एष वै। पञ्चविꣳशतिश्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके नवमोऽनुवाकः ॥०॥

स्वयश्चितिश्च कूर्मादिरष्टमे समुदीरित ।

अथ नवमेऽग्निग्रहणादिकमभिधीयते । यदुक्तं सूत्रकारेण,— 'मयि गृह्णाम्यग्रे अग्नि, यो नो अग्नि पितर इति द्वाभ्यामात्मन्नग्नि गृहीत्वा' इति ।

तत्र प्रथमामाह,—"मयि गृह्णाम्यग्रे अग्निꣳ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । मयि प्रजा मयि वर्चो दधाम्यरिष्टाः स्याम तनुवा सुवीराः[१]" इति । 'अग्रे', परकीयस्याग्नेश्चयनात् पूर्वम् 'अग्नि' स्वकीय पूर्वमिद्धं वह्निं 'मयि गृह्णामि' स्वात्मन्येव यथा स्थिरो भवति तथा स्वीकरोमि। किमर्थं? धनपुष्टि शोभनापत्य-शोभनसामर्थ्यार्थं ।

अस्य गृहीतस्याग्नेः प्रसादात् 'प्रजाम्' उत्पत्स्यमानां पुत्रादिकां, 'मयि' स्थापयामि, 'वर्चः' शारीरं बलं च मयि स्थापयामि। 'सुवीराः' शोभनपुत्रभृत्योपेताः वयं 'तनुवा' मदीयेन शरीरेण सह 'अरिष्टाः' हिंसारहिताः 'स्याम'।

अथ द्वितीया,—"यो नो अग्निः पितरो हृत्सु अन्तर् अमर्त्यो मर्त्याꣳ आविवेश। तम् आत्मन् परि-गृह्णीमहे वयं मा सो अस्माꣳ अवहाय परा-गात्[१]" इति। हे 'पितरः' पालकाः, अस्मच्छरीर-गता भूतेन्द्रियविशेषाः, 'अमर्त्यः' मरणरहितः 'अग्निः' 'हृत्सु' 'अन्तः' हृदयाद्यवयवेषु मध्ये 'मर्त्यान्' मरणयोग्यान् अस्मान् 'आविवेश' सर्वतः प्रविष्टः। 'तम्' अग्निं 'वयं' 'आत्मन्' 'परि-गृह्णीमहे' स्वशरीरे एव स्थिरं धारयामः। 'सो'ऽग्निः 'अस्मान्' 'अवहाय' परित्यज्य 'मा' 'परा-गात्' अन्यत्र मा गच्छतु।

एतन्मन्त्रद्वयसाध्यमग्निग्रहणं विधत्ते,—"यदध्वर्युरात्मन्नग्निम् अगृहीत्वा अग्निं चिनुयाद् यः अस्य स्वोऽग्निः तमपि यजमानाय चिनुयादग्निं खलु वै पशवोऽनूप तिष्ठन्ते अपक्रामुका अस्मात् पशवः स्युर्मयि गृह्णामि अग्रे अग्निमित्याह आत्मन्नेव स्वमग्निं दाधार न अस्मात् पशवः अप क्रामन्ति[१]" इति। यदि अयम् 'अध्वर्युः' 'मयि गृह्णामि' इति मन्त्राभ्यां स्वकीयम् 'अग्निं' स्वस्मिन् 'अगृहीत्वा' परार्थम् 'अग्निं' 'चिनुयात्', तदानीम् 'अस्य' अध्वर्योः 'यः' स्वकीयः पूर्वमेव चितोऽग्निः 'तमपि' यजमानार्थमेव चितवान् भवति। 'पशवः' च सर्वेऽपि 'अग्निम्' अनुसेवन्ते। अतोऽपक्रामन्तं तमग्निमनु 'पशवः' अपि 'अस्मात्' अध्वर्योः अपक्रामन्ति। अस्मात्परिहर्तुमग्निग्रहणाय

'मयि गृह्णामि' इति मन्त्रद्वयं ब्रूयात्। तेन स्वकीयमग्निं स्वस्मिन् अवधारयति, पशवोऽपि अस्मात् न अपक्रामन्ति। एतदपि पूर्व-ब्राह्मणेन सह द्रष्टव्यम्।

अथ प्रश्नोत्तराभ्यां चयनं प्रशंसति,—"ब्रह्मवादिनो वदन्ति यत्, मृच्च आपश्च अग्नेरनाद्यम् अथ कस्मात् मृदा चाद्भिश्चाग्निश्चीयते इति, यदद्भिः संयौति आपो वै सर्वा देवता देवताभिरेवैनꣳ सꣳ सृजति, यत् मृदा चिनोति इयं वै अग्निर्वैश्वानरोऽग्निनैव तद् अग्निं चिनोति[७]" इति। मृत्तिका च आपश्चेति यदस्ति तदु-भयमग्नेर्भक्ष्यं न भवति, अतो भक्ष्यम् आज्यपुरोडाशादिकं विहाय कस्मादेताभ्यां मृज्जलाभ्यां इष्टकारूपाभ्यामग्निश्चीयते इति ब्रह्म-वादिनां प्रश्नः। तत्राभिज्ञा एवमुत्तरमाहुः, यद्यपि आपो न भक्ष्याः तथापि, अद्भिर्मृत्तिकां मिश्रयति इति 'यत्', तेन 'देवताभि-रेव' अग्निं संयोजयति, अपां सर्वदेवतात्मकत्वात्। वृत्रवधादाविन्द्रस्य सहकारित्वेन अपां सर्वदेवोपकारित्वात् सर्वदेवतात्मकत्वम्। अतः सर्वदेवतासंयोजनाय अद्भिश्चयनं युक्तम्। तथा मृदा चयनं यदस्ति, तदपि युक्तम्, भूमेर्वैश्वानराग्निरूपत्वात् तद्रूपत्वं च "तस्मादिमां वयाꣳसि नक्तं नाध्यासते" इत्यत्रोपपादितम्। अतो मृद्रूपेणाग्निनैव तम् 'अग्निं चिनुते' इत्येतदुपपन्नम्।

इदानीं मृज्जलाभ्यां चयनमङ्गीकृत्य तत्राग्नितेरग्नित्वं प्रश्नो-त्तराभ्यां प्रतिपादयति,—"ब्रह्मवादिनो वदन्ति यत् मृदा चाग्नि-श्चाग्निश्चीयते अथ कस्मादग्निरुच्यते इति, यच्छन्दोभिश्चिनोत्यग्नयो वै छन्दाꣳसि तस्मादग्निरुच्यते अथो इयं वै अग्निर्वैश्वानरो यन्मृदा

चिनोति तस्मादग्निरुच्यते[१]" इति । इयमग्न्याख्या चितिर्मृज्जलाभ्यामेव निष्पाद्यते, न त्वङ्गारैर्ज्वालाभिर्वा । तथा सति कस्मात् कारणाद् अग्निनाम सम्पन्नमिति ब्रह्मवादिनां प्रश्नः । तत्राभिज्ञा उत्तरमाहुः, न केवलं मृज्जलाभ्यामेव चयनम्, किन्तु छन्दोयुक्तैर्मन्त्रैरपि। छन्दांसि चाग्निस्वरूपाणि "अभित्वा देव सवितः"(३।५।११) इत्यादिभिर्मन्त्रगतैश्छन्दोभिर्मथनहेतुभिरग्नेरुत्पाद्यत्वात्। अतश्छन्दोद्वारा चितेरग्नित्वम् । अपि च भूमेर्वैश्वानरत्वमिदानीमेवोदाहृतम्, अतो मृत्कार्यत्वादग्नित्वं युक्तम् । एतद्ब्राह्मणमन्ते द्रष्टव्यम् ।

यदुक्तं सूत्रकारेण,—'हिरण्येष्टकाभिः सर्वतोमुखमुपदधाति गायत्रीं पुरस्तादुपदधातीत्युक्तम्' इति।तदिदं विधत्ते,—"हिरण्येष्टका उप दधाति ज्योतिर्वै हिरण्यं ज्योतिरेवास्मिन्' दधाति अथो तेजो वै हिरण्यं तेज एवात्मन् विधत्ते[१]" इति। ज्योतिदृम् इतरप्रकाशकत्वं। तेजः सम्पिण्डं, कान्तिः ।

प्रपाठकादौ "आग्नेय्या गायत्रिया (५।०।१)" इत्यादिना माचिकेतचयनप्रकरणगता मन्त्रादय उदाहृताः । तांश्च मन्त्रान् अत्र हिरण्येष्टकोपधाने विनियुङ्क्ते,—"यो वै अग्निं सर्वतोमुखं चिनुते सर्वासु प्रजास्व्न्नमत्ति सर्वा दिशोऽभि जयति गायत्रीं पुरस्तादुप दधाति त्रिष्टुभं दक्षिणतो जगतीं पश्चादनुष्टुभमुत्तरतः पङ्क्तिं मध्ये एष वै अग्निः सर्वतोमुखस्तं य एवं विद्वाꣳश्चिनुते सर्वासु प्रजास्व्न्नमत्ति सर्वा दिशोऽभि जयति अथो दिश्येव दिशं प्र वयति तस्माद्दिशि दिक् प्रोता[२]" इति । या हिरण्येष्टका तदेवाग्नेर्मुखं, गायत्र्यादयः सर्वा दिशोऽभिजयन्तः सर्वासु दिक्षु विद्यन्त इत्ययम् 'अग्निः

सर्वतोमुख', एतस्य चयने सति खण्डद्वयवर्त्तिप्रजास्विव सर्वदिग्वर्त्ति-प्रजासु स्निग्धो भूत्वा अन्नमत्ति, अत एव सर्वा दिशोऽनेन जिता भवन्ति। पुनरप्यन्ते फलाभिधानम् उपसंहाराय। अपि च सर्वासु दिक्षु प्रधानेनैकस्या 'दिशि' अन्या 'दिश' 'प्र वयति' सूच्या वस्त्रमिव श्लिष्टा करोति। अत एव लोकेऽपि एकस्या 'दिशि' अन्या 'दिक्' 'प्रोता' वर्त्तते। आग्नेयादिविदिक्षु द्वयोर्दिगन्तयो संश्लेषात्। इद च ब्राह्मण नवचेष्टकाभ्य' (४।४।१०) ऊर्ध्वं द्रष्टव्यम्।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजु-संहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके नवमोऽनुवाक' ॥०॥

---

प्रजापतिर॒ग्निम॑सृजत॒ सोऽस्मात् सृ॒ष्टः प्राङ् प्राद्र॑वत् तस्मा॒ अश्वं॒ प्रत्या॑स्यत॒ स द॑क्षि॒णाव॑र्त्तत॒ तस्मै॑ वृ॒ष्णिं॑ प्रत्या॑स्यत् स प्र॒त्यङ्ङाव॑र्त्तत॒ तस्मा॑ ऋष॒भं प्र॒त्या॑स्यत् स उद॒ङ्ङाव॑र्त्तत॒ तस्मै॑ ब॒स्तं प्रत्या॑स्यत॒ स ऊ॒र्ध्वोऽद्र॑वत् तस्मै॒ पुरु॑षं॒ प्रत्या॑स्यत् प॒शुशी॒र्षाण्यु॒पद॑धाति स॒र्वत॑ ए॒वैन॑म् ॥ १ ॥

अ॒व॒रुध्य॑ चिनुते(१) ए॒ता वै प्रा॑ण॒भृत॒श्चक्षु॑ष्मती॒रिष्ट॑का॒ यत् प॒शुशी॒र्षाणि॒ यत् प॒शुशी॒र्षाण्यु॒पद॑धाति॒ ताभि॑-रे॒व यज॑मानो॒ऽमुष्मिं॑ल्लो॒के प्राणि॒त्यथो॒ ताभि॑रे॒वास्मा॑

इमे लोकाः प्र भान्ति[१] मृदाभिलिप्योप दधाति मेध्यत्वाय[२] पशुर्वा एष यदग्निरन्नं पशव एष खलु वा अग्निर्यत् पशुशीर्षाणि यं कामयेत कनीयोऽस्यान्नम् ॥ २ ॥

स्यादिति सन्तरान्तस्य पशुशीर्षाण्युप दध्यात्कनीय एवास्यान्नं भवति यं कामयेत समावदस्यान्नं स्यादिति मध्यतस्तस्योप दध्यात्समावदेवास्यान्नं भवति यं कामयेत भूयोऽस्यान्नꣳ स्यादित्यन्तेसु तस्य व्युदूह्योप दध्यादन्तत एवास्मा अन्नमवरुन्धे भूयोऽस्यान्नं भवति ॥ ३ ॥.

एनम् । अस्यान्नम् । भूयोऽस्यान्नं भवति ॥ १० ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके दशमोऽनुवाकः ॥

---

अग्निग्रहः सर्वसुखं यमोतं नवमे श्रुतम् ।

अथ दशमे पशुशीर्षाण्युच्यन्ते। यत्पूर्वं द्वितीयप्रपाठके विहितं "पशुशीर्षाण्युपदधाति (५।२।८)" इति । तदनूद्य प्रशंसति,— "प्रजापतिरग्निमसृजत सोऽस्मात् सृष्टः प्राङ् प्र-अद्रवत्तस्मै अश्वं प्रति-आस्यत् स दक्षिणा आ-अवर्त्तत तस्मै वृष्णिं प्रति-आस्यत् स प्रत्यङ्-आवर्त्तत तस्मै ऋषभं प्रति-आस्यत् स उदङ् आ-अवर्त्तत तस्मै वस्तं प्रति-आस्यत् स ऊर्ध्वोऽद्रवत्तस्मै पुरुषं प्रति-आस्यत् यत् पशुशीर्षाण्युपदधाति सर्वत एवैनं अवरुध्य चिनुते[१]" इति । प्रजापतिना 'सृष्टः'

अग्निर्यदा पूर्वस्यान्दिशि पलायते, तदा तन्निवारणायार्थं तत्प्रातिकूल्येन स्थापितवान्। एवं दिगन्तरेष्वपि योज्यम्। अतः पशुशीर्षाणामुपधाने सति अग्नेः पूर्वतः पलायनं निवार्य तमग्निं चिनोति।

प्रकारान्तरेण पशुशीर्षाणि प्रशंसति,—"एता वै प्राणभृतश्चक्षुष्मतीरिष्टका यत् पशुशीर्षाणि यत् पशुशीर्षाण्युपदधाति ताभिरेव यजमानोऽमुष्मिन् लोके प्र-अणिति अथो ताभिरेवास्मै इमे लोकाः प्र भान्ति(१)" इति। पशुशीर्षाणां प्राणभृतां चक्षुष्मत्त्वञ्च भूतपूर्वगत्या द्रष्टव्यम्। तदुपधानेन यजमानः सुवर्गे 'प्राणिति' चिरञ्जीवति। अपि च यजमानार्थमिमे सर्वे लोकाः पशुशीर्षेष्टकाभिः प्रकर्षेण भासन्ते।

तदुपधाने कञ्चिद्विशेषं विधत्ते,—"मृदा अभिलिप्योप दधाति मेध्यत्वाय(२)" इति। मृतानां पशुशीर्षाणां मृल्लेपेन मृन्मयत्वे सति यज्ञयोग्यं भवति।

अथान्वयव्यतिरेकाभ्यामपरं विशेषं विधत्ते,—"पशुर्वा एष यदग्निरन्नं पशव एव खलु वै अग्निर्यत् पशुशीर्षाणि यं कामयेत कनीयोऽस्यान्नं स्यादिति सन्तरान्तस्य पशुशीर्षाण्युप दध्यात्कनीय एवास्यान्नं भवति यं कामयेत समावदस्यान्नꣳ स्यादिति मध्यतस्तस्योप दध्यात् समावदेवास्यान्नं भवति यं कामयेत भूयोऽस्यान्नꣳ स्यादिति अन्तेषु तस्य व्युदूह्य उप दध्यादन्तत एवास्मै अन्नमव रुन्धे भूयोऽस्यान्नं भवति(४)" इति। अयमग्निः पशुसाधनत्वात् पशुस्वरूपः पशवश्चान्नसाधनत्वादन्नरूपः पशुशीर्षाणि चाग्निनिष्पादकत्वादग्निरूपाणि। एवं सति अश्नाल्पत्वकामनायां 'सन्तरां' सन्निकृष्टतराणि यथा भवन्ति,

तथा 'उप-दध्यात्', ततोऽन्नमल्पमेव भवति। अथात्यल्पं नापि बहुलं किन्तु 'समावत्' समं जीवनमात्रपर्याप्तमन्नं स्यादिति कामनायां मध्यत 'उप-दध्यात्', नात्यन्तं सन्निकर्षः, नाप्यतिविकर्षः। तथा सति जीवनमात्रपर्याप्तमेवान्नं भवति। अथान्नभूयस्त्वकामनायां चितेरन्तेषु परस्परं 'व्युदूह्य' यथा भवति, तथा पशुशीर्षाणि अप-सार्य 'उप-दध्यात्', तथा सति सर्वस्मादपि दिगन्तरतोऽस्यान्नसधीनं भवति, ततोऽतिबहुलमन्नमुपचयते। एतच्च सर्वम् "एषां वा एतल्लोकानाम्" (५।२।८) इत्यनुवाके द्रष्टव्यम् ।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके दशमोऽनुवाकः ॥१०॥

---

स्तेगान्, दꣳष्ट्राभ्यां(१) मण्डूकान् जम्भ्येभिः(२) आदकां खादेन(३) ऊर्जꣳ * सꣳसूदेन(४) आरण्यं जाम्बीलेन(५) मृदं बर्स्वेभिः(६) शर्कराभिरवकाम्(७) अवकाभिः शर्कराम्(८) उत्सादेन जिह्वाम्(९) अवक्रन्देन तालुꣳ(१०) सरस्वतीं जिह्वाग्रेण(११) ॥ १ ॥

स्तेगान्। द्वाविꣳशतिः ॥ ११ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके एकादशोऽनुवाकः ॥

---

* 'उर्जं' इति आदर्शपुस्तकपाठः ।

विशेषः पशुशीर्षेषु दर्शने समुदीरितः।

समाप्तं चैतावताग्निमाह्मणम्।

अथाश्वमेधमन्त्राः* केचिदत्रोच्यन्ते। यदुक्तं सूत्रकारेण,—"हविषा प्रचर्याश्वमवदानं कृत्वा, स्तेगान् दंष्ट्राभ्यां(१) मण्डूकान् जम्भेभिः(२)—इत्येतैश्चतुर्दशभिरनुवाकैः प्रतिमन्त्रं शरीरहोमान् जुहोति' इति।

तत्र प्रथमानुवाकगतान् मन्त्रनाह,—"स्तेगान्दंष्ट्राभ्यां(१) मण्डूकान् जम्भेभिः(२) आदकां खादेन(३) ऊर्जं संसूदेन(४) आरण्यं जाम्बीलेन(५) मृद वर्त्सेभि(६) शर्कराभिरवकाम्(७) अवकाभिः शर्कराम्(८) उत्सादेन जिह्वाम्(९) अवक्रन्देन तालुं(१०) सरस्वतीं जिह्वाग्रेण(११)" इति। अत्र द्वितीयान्तनिर्दिष्टा देवता, तृतीयान्तनिर्दिष्टानि अश्वस्य अङ्गानि। इमां देवतामनेनाङ्गेन प्रीणयामीति होमकाले उभयं स्मर्तव्यमिति मन्त्राभिप्रायः। स्तेगाः क्षुद्रजन्तुविशेषाः, 'गोकर्णगा' इति लोके प्रसिद्धाः। तदधिष्ठात्री काचिद्देवतेह लक्ष्यते। दंष्ट्रे स्वनते। स्तेगाभिमानिनी देवता दंष्ट्राभ्यां यजामि। स एको मन्त्रः। एवमुत्तरत्रापि द्रष्टव्यम्।

मण्डूकाः प्रसिद्धाः। दन्तमूलं जम्भ', तत्र भवा जम्भाः, पार्श्वदन्ताः। आदका भक्षयित्री, प्राणाभिमानिनी देवता। खादः भक्षणहेतुर्दन्तविशेषः। ऊर्क् रसाभिमानिनी देवता। सूदं सन्ततचरणौ नासिकादिः। आरण्यं प्रसिद्धं। जाम्बीलं आमाशय'।

* "अथाश्वमेधा समन्त्रा" इति आदर्शपुस्तकपाठः।

अथ भेचितं दृण्णं निधीयते तत् रुद्रं। वर्खभिः* दन्तमूलमांसादीनि। शर्कराः तत्सदृशानि कठिनास्थीनि। अवकाः शैवालसदृशानि मांसानि। शर्करा प्रसिद्धा। उत्साद उच्चप्रदेशः। जिह्वा प्रसिद्धा। अवक्रन्दः आन्तरं काधिकाशब्दाभिव्यक्तिस्थानं। तालु जिह्वामूलं। सरस्वती जिह्वाग्रमित्युभय प्रसिद्धम्।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके एकादशोऽनुवाकः ॥०॥

---

वाज॑ꣳ, हनू॑भ्याम्(१) अप आ॒स्ये॑न(२) आ॒दि॒त्यान् श्म॒श्रुभिः॑(३) उपया॒मम् अध॑रे॒णोष्ठे॑न(४) स॒दु॒त्त॑रे॒ण(५) अ॒न्त॑रे॒णानू॒का॒शं(६) प्र॑का॒शेन॒ वा॒ह्यꣳ(७) स्त॒न॒यि॒त्नुं नि॑र्बा॒धे॑न(८) सू॒र्या॒ग्नी चक्षु॑र्भ्यां(९) वि॒द्युतौ॑ क॒नी॒नका॑भ्याम्(१०) अ॒श॒निं म॒स्तिष्के॑ण(११) बलं॑ म॒ज्जभिः॑(१२) ॥ १ ॥

वाज॑ं। पञ्च॑विꣳशतिः ॥ १२ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके द्वादशोऽनुवाकः ॥

---

* एवमेव सर्व्वत्र पाठः। वर्त्सैः इति पाठो भवितुं युक्तः।

† एवमेव सर्व्वत्र पाठः। 'कादिक'इत्येवंरूप कश्चित् पाठो भवितुं युक्तः।

विहितेषु चतुर्दशसु द्वितीयानुवाकगतान्मन्त्रानाह,—"वाजं हनूभ्याम्(१) अप आस्येन(२) आदित्यान् श्मश्रुभिः(३) उपयाममधरेणोष्ठेन(४) सद् उत्तरेण(५) अन्तरेणानूकाशं(६) प्रकाशेन वाह्यं(७) स्तनयित्नुं निर्बाधेन(८) सूर्याग्नी चक्षुर्भ्यां(९) विद्युतौ कनीनकाभ्याम्(१०) अशनिं मस्तिष्केण(११) बलं मज्जभिः(१२)" इति। वाजोऽन्नं हन्वादीनां पञ्चानां पदानामर्थाः प्रसिद्धाः। उपयामः पृथिवी, 'इयं वा उपयाम' इति श्रुत्यन्तरात्। अधरमोष्ठं प्रसिद्धं। सच्छब्देन द्यौरुच्यते, सीदन्त्यस्यां पुण्यकृत इति व्युत्पत्तेः। उत्तरेणेत्यूर्ध्वोष्ठेनेत्यनुवर्तते*। अन्तरम् ओष्ठयोर्मध्यम्। अनूकाशं द्यावापृथिव्योर्मध्यं, अनुक्रमेण काशन्ते भासन्ते ज्योतींषि अस्मिन्निति व्युत्पत्तेः। प्रकाशोऽभ्यन्तरं प्रकाशस्थानं। बाह्यं ब्रह्माण्डात् बहिस्थानं। स्तनयित्नुः प्रसिद्धः। निर्बाधो गमनकालीनः शब्दः। सूर्याग्नी चक्षुषी चेत्युभयं प्रसिद्धं। विद्युतौ वृष्टिकालेतरकालीने। कनीनके अक्षिस्थे कृष्णमण्डले। अशनिः प्रसिद्धः। मस्तिष्कं शिरोमांसं। बल मज्जेत्युभयं प्रसिद्धम्।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके द्वादशोऽनुवाकः ॥०॥

---

* अत्र 'उत्तरेण ऊर्द्धेन, ओष्ठेनेति अनुवर्त्तते' इत्येवंरूपः कश्चित्पाठो भवितुं युक्तः।

कूर्मान्, शफैः[१] अच्छलाभिः कपिञ्जलान्[२] साम कुष्ठिकाभिः[३] जवं जङ्घाभिः[४] अगदं जानुभ्यां[५] वीर्यं कुहाभ्यां[६] भयं प्रचालाभ्यां[७] गुहोपपक्षाभ्यां[८] अश्विनावꣳसाभ्याम्[९] अदितिꣳ शीर्ष्णा[१०] निर्ऋतिं निर्जाल्मकेन शीर्ष्णा[११] ॥ १ ॥

कूर्मान्। त्रयोविꣳशतिः ॥ १३ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके त्रयोदशोऽनुवाकः ॥

अथ तृतीयगतान्मन्त्रानाह,—'कूर्मान् शफैः[१] अच्छलाभिः कपिञ्जलान्[२] साम कुष्ठिकाभिः[३] जवं जङ्घाभिः[४] अगदञ्जानुभ्यां[५] वीर्यं कुहाभ्यां[६] भयं प्रचालाभ्यां[७] गुहा उपपक्षाभ्याम्[८] अश्विनौ अꣳसाभ्याम्[९] अदितिꣳ शीर्ष्णा[१०] निर्ऋतिं निर्जाल्मकेन शीर्ष्णा[११] इति। कूर्म.* शफाश्च प्रसिद्धाः। अच्छलाः शकलमांसानि।- कपिञ्जलाः प्रसिद्धाः। साम गीतिः। कुष्ठिकाः प्रकोष्ठारोग्य-जानुनी (?) जङ्घाभ्यामधःप्रदेशः। जवो वेगः। जङ्घाः सन्धिभ्योऽधः-प्रदेशः। अगदः आरोग्यं। जानुनी प्रसिद्धे। वीर्यं बलं। कुहा हस्तयोर्मध्यसन्धी। भयं प्रसिद्धं। प्रचालौ पादयोरुपरिप्रदेशौ। गुहा गुहनी। उपपक्षौ पार्श्वे। अश्व्यंसशब्दौ प्रसिद्धौ। अदितिर्भूमिः।

* कूर्मा· इति पाठो भवितुं युक्त·।

शीर्ष्णा शिरसा। निर्ऋतिः प्रसिद्धा। निर्जाल्मकेन केशरहितेन। शीर्ष्णा शिरसा।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके त्रयोदशोऽनुवाकः ॥१३॥

---

योक्त्रं, गृध्राभिः(१) युगमानतेन(२) चित्तं मन्याभिः(३) संक्रोशान् प्राणैः(४) प्रकाशेन त्वचं(५) पराकाशेनान्तरां(६) मशकान् केशैः(७) इन्द्रꣲ स्वपसा वहेन(८) बृहस्पतिꣲ शकुनिसादेन(९) रथमुष्णिहाभिः(१०) ॥ १ ॥

योक्त्रम्। एकविꣲशतिः ॥ १४ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके चतुर्दशोऽनुवाकः ॥

अथ चतुर्थगतान्मन्त्रानाह,—"यक्त्रं गृध्राभिः(१) युगमानतेन(२) चित्तम् मन्याभि.(३) संक्रोशान् प्राणैः(४) प्रकाशेन त्वचं(५) पराकाशेनान्तरां(६) मशकान् केशै(७) इन्द्रꣲ स्वपसा वहेन(८) बृहस्पतिꣲ शकुनिसादेन(९) रथमुष्णिहाभिः(१०)" इति। योक्त्रं दर्भमयं बन्धनसाधनं। गृध्रा कचाः। युगं कृतत्रेतादि। आनतं ग्रीवाप्रदेशः। चित्तं प्रसिद्धं। मन्या ग्रीवारेखाः। संक्रोशाः घोषाः। प्राणाश्चक्षुरादयः। प्रकाशो बाह्यं रूपं। त्वक् त्वगिन्द्रियाभिमानिनी। पराकाशोऽभ्यन्तरं

रूपं। अन्तरा अभ्यन्तरप्रदेशाभिमानिनी। मशककेशेन्द्रशब्दाः प्रसिद्धाः। स्वपसा वहेन शोभनव्यापारेण अङ्गबलेन। बृहस्पतिः प्रसिद्धः। शकुनिसादः पृष्ठं, यत्र शकुनयः शक्ता वीराः सीदन्ति। रथः प्रसिद्धः। उष्णिहा रथवाहनदेशः।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके चतुर्दशोऽनुवाकः ॥०॥

---

मित्रावरुणौ श्रोणीभ्याम्(१) इन्द्राग्नी शिखण्डाभ्याम्(२) इन्द्राबृहस्पती ऊरुभ्याम्(३) इन्द्राविष्णू अष्ठीवद्भ्याꣳ(४) सवितारं पुच्छेन(५) गन्धर्वान् शेपेन(६) अप्सरसो मुष्काभ्यां(७) पवमानं पायुना(८) पवित्रं पोत्राभ्याम्(९) आक्रमणꣳ स्थूराभ्याꣳ(१०) प्रतिक्रमणं कुष्ठाभ्याम्(११) ॥ १ ॥ १५ ॥

इति तैत्तिरियसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके पञ्चदशोऽनुवाकः ॥

अथ पञ्चमगतान्मन्त्रानाह,—"मित्रावरुणौ श्रोणीभ्याम्(१) इन्द्राग्नी शिखण्डाभ्याम्(२) इन्द्राबृहस्पती ऊरुभ्याम्(३) इन्द्राविष्णू अष्ठीवद्भ्याꣳ(४) सवितारं पुच्छेन(५) गन्धर्वान् शेपेन(६) अप्सरसो मुष्काभ्यां(७) पवमानं पायुना(८) पवित्रं पोत्राभ्याम्(९) आक्रमणꣳ स्थूराभ्याꣳ(१०) प्रतिक्रमणं कुष्ठाभ्याम्(११)" इति। श्रोणी जघनगते मांसे। शिखण्डे ततोऽप्यधस्तने।

ऊरू ततोऽप्यधस्तने। अष्ठीवती जङ्घयोः पृष्ठभागगते मांसे। पोत्रा-स्थूर-कुष्ठशब्दे पायुसमीपवर्त्तिन एव मांसविशेषा उच्यन्ते। देवतानामानि तु स्पष्टानि।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके पञ्चदशोऽनुवाकः ॥०॥

---

इन्द्र॑स्य, क्रो॒डः(१) अदि॑त्यै पाज॒स्यं॑(२) दि॒शां ज॒त्रवः॑(३) जी॒मूता॑न् हृदयौप॒शाभ्या॑म्(४) अ॒न्तरि॑क्षं पुरि॒तता॑(५) नभ॑ उद॒र्ये॑ण(६) इन्द्रा॒णीं प्ली॒ह्ना(७) व॒ल्मीका॑न् क्लो॒म्ना गि॒रीन् प्ला॒शिभिः॑(८) स॒मु॒द्रमु॒दरे॑ण(९) वै॒श्वान॒रं भस्म॑ना(१०) ॥ १ ॥

मित्रावरु॑णौ। इन्द्र॑स्य। द्वावि॑ꣳशतिः। द्वावि॑ꣳशतिः*

॥ १६ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके षोडशोऽनुवाकः ॥

अथ षष्ठगतान्मन्त्रनाह,—'इन्द्रस्य क्रोड(१) अदित्यै(२) पाजस्य दिशा यत्रव(३) जीमूतान् हृदयौपशाभ्याम्(४) अन्तरिक्ष पुरितता(५) नभ उदर्येण(६) इन्द्राणीं प्लीह्ना(७) वल्मीकान् क्लोम्ना(८) गिरीन् प्लाशिभि(९) समुद्रमुदरेण(१०) वैश्वानर भस्मना(११)' इति। क्रोडो

---

* 'इन्द्रस्य। द्वाविꣳशतिः' इति आदर्शपुस्तकपाठ।

गलभागः। पाजस्यं पादतलं। जत्रवोऽसमीपवर्तीनि अस्थीनि। हृदयमध्यम्* अष्टदलं मांसपद्मं। औपशं तदेष्टनं मांसं। पुरिततां† अन्त्राणि। उदर्यमुदरगत मांस। क्लोहक्लोमशब्दाभ्यां उदरपार्श्ववर्तिनी मांसखण्डे उच्येते। तत्समीपवर्त्तीनि मांसानि शाशीनि। उदरं प्रसिद्धं। भस्म जीर्णहृणादि। यथा द्वितीयया देवतानिर्देशः, एवम् 'इन्द्रस्य' इत्यादौ षष्ठीचतुर्थीभ्यामपि देवतानिर्देशो द्रष्टव्यः।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके षोडशोऽनुवाकः ॥०॥

---

पूष्णः, वनिष्ठुः[१] अन्धाहेः स्थूरगुदा[२] सर्पान् गुदाभिः[३] ऋतून् पृष्टीभिः[४] दिवं पृष्ठेन[५] वसूनां प्रथमा कीकसा[६] रुद्राणां द्वितीया[७] आदित्यानां तृतीया[८] अङ्गिरसां चतुर्थी[९] साध्यानां पञ्चमी[१०] विश्वेषां देवानाꣳ षष्ठी[११] ॥ १७‡ ॥

पूष्णः। चतुर्विꣳशतिः ॥ १७॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके सप्तदशोऽनुवाकः ॥

---

* 'अत्र हृदयं हृदयमध्यं कि वा हृदयमध्यस्थं' इत्येवंरूप. कश्चित् पाठो भवितु युक्त।

† 'पुरितत्' इति पाठो भवितुं युक्त।

‡ आदर्शपुस्तके १ इत्यङ्कोऽस्ति।

अथ सप्तमगतान्मन्त्रानाह,—"पूष्णो वनिष्ठुः(१) अन्धाहेः स्थूरगुदा(२) सर्पान् गुदाभिः(३) विह्रुत आन्त्रैः(४) अपो वस्तिना(५) वृषणमाण्डाभ्याम्(६) वाजिनं शेपेन(७) प्रजां रेतसा(८) चाषान् पित्तेन(९) प्रदरान् पायुना(१०) कूश्माञ्छकपिण्डैः(११)"* इति। ... "दिवं पृष्ठेन(४) वसूनां प्रथमा कीकसा(६) रुद्राणां द्वितीया(७) आदित्यानां तृतीया(८) अङ्गिरसां चतुर्थी(९) साध्यानां पञ्चमी(१०) विश्वेषां देवानाꣳ षष्ठी(११)" इति। वनिष्ठुः प्रौढम् अन्त्रम्। स्थूरगुदा गुदकाण्डे स्थूलो भागः। गुदा गुदकाण्डस्य सूक्ष्मभागाः। पृष्ठ्यो गुदसमीपवर्तिन्य शिराः। पृष्ठमुपरिभागः। तत्समीपवर्तिनोऽस्थिविशेषाः कीकसाः, ताश्च षट्सङ्ख्याकाः क्रमेण वस्वादीनां भागाः।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके सप्तदशोऽनुवाकः ॥०॥

---

ओजः॑, ग्रीवाभिः॒(१) निर्ऋ॑तिम॒स्थभिः॒(२) इन्द्र॒ꣳ स्वप॑सा॒ वहे॑न(३) रु॒द्रस्य॑ विच॒लः स्क॒न्धः(४) अ॒होरा॒त्रयो॑र्द्वि॒तीयः॑(५) अ॒र्धमा॒साना॑ं तृ॒तीयः॑(६) मा॒सां चतु॒र्थः(७) ऋ॒तू॒नां प॑ञ्च॒मः(८) सं॑वत्स॒रस्य॑ ष॒ष्ठः(९) ॥ १८* ॥

ओजः। विꣳशतिः ॥ १८ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके अष्टादशोऽनुवाकः ॥०॥

---

* आदर्शपुस्तके १—इत्यङ्कोऽस्ति। एवं परत्रापि।

अथाष्टमगतान्मन्त्रानाह,—'ओजो ग्रीवाभि.(१) निऋतिमस्थभि (२) इन्द्रं स्वपसा वहेन(३)रुद्रस्य विचल' स्कन्ध.(४) अहोरात्रयोर्द्वितीय.(५) अर्धमासानां तृतीय.(६) मासां चतुर्थ.(७) ऋतूनां पञ्चम.(८) संवत्सरस्य षष्ठः(९)" इति । ग्रीवास्तदवयवा' । अस्थीनि तत्रत्यानि । योऽयं 'वहो' वहनयोग्यप्रदेशः 'स्वपा' शोभनकर्मा, वहेनेत्यन्त' स्वपाः, सोऽयमिन्द्रस्य भागः । स्कन्धोऽवयवभेदेन षोढा भिन्न', तत्रात्यन्तचञ्चलोऽवयवो रुद्रस्य। तत्तदनन्तरभाविनोऽहोरात्रादीनाम्।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजु-संहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके अष्टादशोऽनुवाक' ॥०॥

---

आनन्दं, नन्दथुना(१) कामं प्रत्यासाभ्यां(२) भयꣳ शितीमभ्यां(३) प्रशिषं प्रशासाभ्याꣳ(४) सूर्याचन्द्रमसौ वृक्याभ्याꣳ(५) श्यामशवलौ मतस्नाभ्यां(६) व्युष्टिꣳ रूपेण(७) निर्मुक्तिमरूपेण(८) ॥ ९ ॥

आनन्दꣳ । षोडश ॥ १९ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके एकोनविंशोऽनुवाकः ॥०॥

अथ नवमगतान्मन्त्रानाह,—"आनन्दं नन्दथुना(१) काम प्रत्यासाभ्यां(२) भयꣳ शितीमभ्यां(३) प्रशिषं प्रशासाभ्याꣳ(४) सूर्याचन्द्रमसौ

वृक्याभ्याꣳ(५) श्यामशबलौ मतस्नाभ्यां(६) व्युष्टिꣳ रूपेण(७) निमुक्तिमरूपेण(८)" इति। नन्द्युर्गुह्येन्द्रियम्। प्रत्यासत्तिमितीम-प्रशाश्रम्दैर्गुह्यसमीपवर्तीनि अवयवयुगलानि अभिधीयन्ते। वृक्कौ पार्श्वद्वयवर्तिन्यौ मांसग्रन्थी। तत्समीपवर्त्तिनी मतस्ने। रूपं समीचीन आकारः। तद्विपरीतम् अरूपम्।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजु-संहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके एकोनविंशोऽनुवाकः ॥०॥

---

अह्नः, माꣳसेन(१) रात्रिं पीवसा(२) अपो यूषेण(३) घृतꣳ रसेन(४) श्यां वसया(५) दूषीकाभिः ह्रादुनिं(६) अश्रुभिः पृष्वां(७) दिवꣳ रूपेण(८) नक्षत्राणि प्रतिरूपेण(९) पृथिवीं चर्मणा(१०) छवीं छव्या(११) उपाकृताय स्वाहा(१२) आलब्धाय स्वाहा(१३) हुताय स्वाहा(१४) ॥ १० ॥

अह्नः। अष्टाविꣳशतिः ॥ २०॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके विंशोऽनुवाकः ॥०॥

अथ दशमगतान्मन्त्रानाह,—'अहर्माꣳसेन(१) रात्रिं पीवसा(२) अपः यूषेण(३) घृतꣳ रसेन(४) श्यां वसया(५) दूषीकाभिर्ह्रादुनिं(६) अश्रुभिः पृष्वां(७) दिवꣳ रूपेण(८) नक्षत्राणि प्रतिरूपेण(९) पृथिवीं

चर्मणा[१०] छवीं छव्या[११] उपाकृताय स्वाहा[१२] आलब्धाय स्वाहा[१३] हुताय स्वाहा[१४]" इति । पीवो-यूष-रस-वसा-प्रब्दास्त्वचत्यद्रवाणां विशेषाः । दूषीका नेत्रयोर्मलं । अश्रूणि नेत्र-जलानि । पृष्वा (?) । रूपं नेत्रगोलक । प्रतिरूपं तत्रत्यं प्रति-बिम्बं । चर्म पक्ष्मपटलम् । छवी नेत्रगता कान्तिः । योऽयमुपा-कृतमश्वमभिमान्यमानो देवः तस्मै इदं स्वा हुतमस्तु*। तथैवालब्ध-मभिमन्यमानाय, हुतमभिन्यमानाय च देवाय तत्तदवस्थापन्नमिदं हुतमस्तु ।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके विंशोऽनुवाकः ॥०॥

---

अ॒ग्नेः, प॑क्ष॒तिः[१] सर॑स्वत्यै॒ निप॑क्षतिः[२] सोम॑स्य तृ॒तीया॒[३] अ॒पां च॑तु॒र्थी[४] ओष॑धीनां पञ्च॒मी[५] सं॑वत्स॒रस्य॑ ष॒ष्ठी[६] म॒रुता॑ꣳ सप्त॒मी[७] बृह॒स्पते॑रष्ट॒मी[८] मि॒त्रस्य॑ नव॒मी[९] वरु॑णस्य दश॒मी[१०] इन्द्र॑स्यैकाद॒शी[११] विश्वे॑षां दे॒वानां॑ द्वाद॒शी[१२] द्यावा॑पृथि॒व्योः पा॒र्श्वं॑[१३] य॒मस्य॑ पाटू॒रः[१४] ॥ ११ ॥

अ॒ग्नेः । एका॒न्नचि॑ꣳश॒त् ॥ २१ ॥

---

* एवमेव सर्व्वत्र पाठ'। 'स्वाहा' हुतमस्तु' इत्येवंरूपः कश्चित्पाठो भवितुं युक्त'।

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके एकविंशोऽनुवाकः ॥०॥

अथैकादशगतान्मन्त्रनाह,—"अग्ने' पक्षति (१) सरस्वत्यै निपक्षति (२) सोमस्य तृतीया(३) अपा चतुर्थी(४) ओषधीनां पञ्चमी(५) संवत्सरस्य षष्ठी(६) मरुताऽऽ सप्तमी(७) बृहस्पतेरष्टमी(८) मित्रस्य नवमी(९) वरुणस्य दशमी(१०) इन्द्रस्यैकादशी(११) विश्वेषा देवानां द्वादशी(१२) द्यावापृथिव्यो. पार्श्व(१३) यमस्य पाटूर.(१४)" इति। दक्षिणपार्श्वस्य मूले वर्त्तमाना येय वङ्क्रि सा पक्षति। तदनन्तरभाविनी वङ्क्रि निपक्षति। एव तत्तदनन्तरभाविन्यो वङ्क्रयो द्वितीयादि-शब्दैरुच्यन्ते। एता वङ्क्रयो यस्मिन् पृष्ठभागगतेऽस्थिपार्श्वविशेषे सम्बध्यन्ते, सोऽय पाटूर।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजु-संहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके एकविंशोऽनुवाक ॥०॥

---

वायोः, पक्षतिः(१) सरस्वतो निपक्षतिः(२) चन्द्रमसः तृतीया(३) नक्षत्राणां चतुर्थी(४) सवितुः पञ्चमी(५) रुद्रस्य षष्ठी(६) सर्पाणाऽऽ सप्तमी(७) अर्यम्णोऽष्टमी(८) त्वष्टुर्नवमी(९) धातुर्दशमी(१०) इन्द्राण्या एकादशी(११) अदित्यै द्वादशी(१२) द्यावापृथिव्योः पार्श्व(१३) यम्यै पाटरः(१४) ॥ १२ ॥

वायोः। अष्टाविंशतिः॥ २२ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके द्वाविंशोऽनुवाकः ॥०॥

अथ द्वादशगतान्मन्त्रानाह,—"वायोः पचतिः[१] सरस्वतो निपचतिः[२] चन्द्रमसः तृतीया[३] नक्षत्राणां चतुर्थी[४] सवितुः पञ्चमी[५] रुद्रस्य षष्ठी[६] सर्पाणाꣳ सप्तमी[७] अर्यम्णोऽष्टमी[८] त्वष्टुर्नवमी[९] धातुर्दशमी[१०] इन्द्राण्या एकादशी[११] अदित्यै द्वादशी[१२] द्यावापृथिव्योः पार्श्वं[१३] यम्यै पाटूरः[१४]" इति। पूर्वोक्तदक्षिणपार्श्ववदुत्तरपार्श्वपरत्वेनेदं सर्वं व्याख्येयम्।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके द्वाविंशोऽनुवाकः ॥०॥

---

पन्थाम्, अनूवृग्भ्याꣳ[१] सन्ततिꣳ स्नावन्याभ्याꣳ[२] शुकान् पित्तेन[३] हरिमाणं यक्ना[४] हलीक्ष्णान् पापवातेन[५] कूश्मान् शकभिः[६] शवर्तान् ऊवध्येन[७] शुनो विशसनेन[८] सर्पान् लोहितगन्धेन[९] वयाꣳसि पक्वगन्धेन[१०] पिपीलिकाः प्रशादेन[११] ॥ १४ ॥

पन्थां। द्वाविंशतिः॥ २३ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके त्रयोविंशोऽनुवाकः ॥०॥

अथ त्रयोदशगतान्मन्त्रनाह,—"पन्थामनूवृग्भ्याꣳ(१) सन्ततिꣳ स्नावन्याभ्याꣳ(२) शुकान् पित्तेन(३) हरिमाणं यक्ना(४) हलीक्ष्णान् पापवातेन(५) कूश्मान् शकभि(६) शवर्त्तान् ऊवध्येन(७) शुनो विशसनेन(८) सर्पान् लोहितगन्धेन(९) वयाꣳसि पक्कगन्धेन(१०) पिपीलिका प्रशादेन(११)" इति। अनूवृक्शब्देन पूर्वोक्तयोर्वृक्कयोः समीपवर्त्तिनी मांसखण्डे उच्येते। स्नावन्यशब्देन सूक्ष्माणां स्नायुविशेषाणां मूले, ते पार्श्वद्वयवर्त्तिन्यौ द्वे शिरे उच्येते। पित्तं प्रसिद्धं। यक्ना यकृच्छब्देन* पित्तगतो वर्णविशेषः। पापवातोऽपानवायुः। शकानि शकृत्पिण्डान्। ऊवध्यं अपक्वं शकृत्। विशसनं छिन्नस्थानं। लोहितगन्धपक्कगन्धौ प्रसिद्धौ। प्रशादो विशसनकालपतितो मांसलेशविशेषः।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमखण्डे सप्तमप्रपाठके त्रयोविंशोऽनुवाकः ॥०॥

क्रमैः, अत्यक्रमीद्वाजी विश्वैर्देवैर्यज्ञियैः संविदानः। स नो नय सुकृतस्य लोकं तस्य ते वयꣳ स्वधया मदेम ॥ १४ ॥

क्रमैः। अष्टादश ॥ २४ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके चतुर्विंशोऽनुवाकः ॥०॥

* 'यकना' यकृता। यकृच्छब्देन पित्तगतो वर्णविशेषोऽत्राभिप्रेत इत्येव रूपः कश्चित् पाठो भवितुं युक्तः।

अथ चतुर्दशोक्तं मन्त्रमाह,—"क्रमैरत्यक्रमीद्वाजी विश्वैर्देवैर्यज्ञियैः सविदानः। स नो नय सुकृतस्य लोकं तस्य ते वयꣳ स्वधया मदेम" इति। अयं 'वाजी' पूर्वोक्तावयवसम्पन्नोऽश्वो 'यज्ञियैः' यज्ञार्हैः 'विश्वैर्देवैः पूर्वोक्तैस्तेगादिभिः पिपीलिकान्तैः सर्वैर्देवैः ऐकमत्यङ्गतः 'क्रमैः' पादविन्यासैः 'अत्यक्रमीत्' भूलोकमतिक्रम्य स्वर्गं गतवान्। हे वाजिन्, 'सः' त्वं 'नः' अस्मान् 'सुकृतस्य' फलभूतं 'लोकं' 'नय' प्रापय। तस्य 'ते' त्वदर्थं 'वयं' स्वधाशब्दोपलक्षितेनाज्येन हविषा हर्षं जनयाम।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुः-संहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके चतुर्विंशोऽनुवाकः ॥०॥

---

द्यौः, ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षꣳ समुद्रो योनिः सूर्यस्ते चक्षुर्वातः प्राणश्चन्द्रमाः श्रोत्रं मासाश्चार्धमासाश्च पर्वाण्यृतवोऽङ्गानि संवत्सरो महिमा ॥ १५॥
द्यौः। पञ्चविंशतिः ॥ २५ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके पञ्चविंशोऽनुवाकः ॥०॥

एवमाज्याहुतिसाधनभूताश्चतुर्दशानुवाकगता मन्त्रा उक्ताः। अथ यदिहितमश्वमेधब्राह्मणे,—"द्यौस्ते पृष्ठं पृथिवी सधस्थमित्यश्व-

नुमन्त्रयते" (२।८।५।म्ना०) इति। तं मन्त्रमस्मिन् पञ्चविंशानुवाके पठति,—"द्यौस्ते पृष्ठं पृथिवी सधस्थम् आत्मा अन्तरिक्षं समुद्रो योनिः सूर्यस्ते चक्षुर्वातः प्राणश्चन्द्रमाः श्रोत्रं मासाश्च अर्द्धमासाश्च पर्वाण्यृतवोऽङ्गानि संवत्सरो महिमा" इति। हे अश्व, येयं 'द्यौः', सा 'ते' तव 'पृष्ठम्' उपरिभागः। या च 'पृथिवी' सा यजमानादिभिः सह तवावस्थानहेतुः। यच्च 'अन्तरिक्षं' तत्तव 'आत्मा,' उदरभागः। योऽयं 'समुद्रः' स त्वदीय-'योनिः', "अप्सुयोनिर्वा अश्वः" (५।२।१२) इति श्रुत्यन्तरात्। यः 'सूर्यः' स विराड्रूपस्य तव 'चक्षुः'। यो 'वातः' स तव 'प्राणः'। यः 'चन्द्रमाः,' स तव 'श्रोत्रं'। 'मासाः' पक्षाश्च तव 'पर्वाणि'। वसन्ताद्यृतवः तव हस्तपादाद्यङ्गानि। 'संवत्सरः' तव युद्धजयादिरूपो 'महिमा'।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुःसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके पञ्चविंशोऽनुवाकः ॥०॥

---

अ॒ग्निः प॒शुरा॑सी॒त्तेना॑यजन्त॒ स ए॒तं लो॒कम॑जय॒द् यस्मि॑न्न॒ग्निः स ते॑ लो॒कस्तञ्जे॑ष्य॒स्यथाव॑ जिघ्र वा॒युः प॒शुरा॑सी॒त्तेना॑यजन्त॒ स ए॒तं लो॒कम॑जय॒द्यस्मि॑न् वा॒युः स ते॑ लो॒कस्तस्मा॑त् त्वान्त॒रे॑ष्यामि॒ यदि॒ नाव॒जिघ्र॒स्यादि॒त्यः प॒शुरा॑सी॒त्तेना॑यज॒न्त॒ स ए॒तं लो॒कम॑जय॒द्यस्मि॑न्, आ॒दि॒त्यः स ते॑ लो॒कस्तं जे॑ष्यसि॒ यद्य॑व॒जिघ्र॑सि ॥ १ ॥

यस्मि॑न्। अ॒ष्टौ च॑ ॥ २६ ॥

यो वै अयथादेवतम् (१)। त्वामग्ने (२)। इन्द्रस्य (३)। चित्तिं (४)। यथा वै (५)। वयो वै (६)। यदाकूतात् (७)। यास्ते अग्ने (८)। मयि गृह्णामि (९)। प्रजापतिः—सोऽस्मात् (१०)। स्तेगान् (११)। वाजं (१२)। कूर्मान् (१३)। योक्त्रं (१४)। मित्रावरुणौ (१५)। इन्द्रस्य (१६)। पूष्णः (१७)। ओजः (१८)। आनन्दम् (१९)। अहः (२०)। अग्ने (२१)। वायोः (२२)। पन्थाम् (२३)। क्रमैः (२४)। द्यौस्ते (२५)। अग्निः पशुरासीत् (२६)। षड्विंशतिः ॥ २६ ॥

यो वै (१।१)। एवाहुतिम् (३।३)। अभवन् (५।५)। पथिभिः (७।२)। अवरुध्य (१०।२)। आनन्दम् (१९)। अष्टौ-पञ्चाशत् ॥ ५८* ॥

सावित्राणि(१)। विष्णुमुखाः(२)। उत्सन्नयज्ञः(३)। देवासुराः(४)। यदेकेन(५)। हिरण्यवर्णाः(६)। यो वै अयथादेवतम्(७)। सप्त ॥ ७ ॥

इति तैत्तिरीयसंहितायां पञ्चमकाण्डे सप्तमप्रपाठके षड्विंशोऽनुवाकः ॥०॥

पञ्चमाष्टकः समाप्तः।

---

* प्रथमेऽनुवाके ३ द्वितीये ५ तृतीये ४ चतुर्थे ४ पञ्चमे ७ षष्ठे ६ सप्तमे ३ अष्टमे ३ नवमे ४ दशमे ३ एकादशात् षड्विंशपर्यन्तं प्रत्येकं एकैकमिति १६। मिलित्वा ५८।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरेण सायनाचार्येण विरचिते माधवीये वेदार्थ-प्रकाशनामकतैत्तिरीययजुःसंहिताभाष्ये पञ्चमकाण्डे सप्तमप्रपाठके षड्विंशोऽनुवाकः ॥०॥

॥०॥ समाप्तं पञ्चमं काण्डम् ॥०॥

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY

THE ASIATIC SOCIETY OF BENGAL

NEW SERIES NOS 843 859, 868 885 902 909 937, 942 & 952

---

## THE SANHITA' OF THE BLACK YAJUR VEDA

WITH THE COMMENTARY OF

MA'DHAVA A'CHA'RYA

EDITED BY

PANDIT SATYAVRATA SA'MASRAMI'

*Assoc ate Member of the Asiat c Soc ety of Bengal Ed tor Author Commentator Annotator Compiler Translator and Publ sher of d fferent Vedic wo ks &c &c*

VOL VI

KANDA VI & VII

---

CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS

1899

# ॥ सम्पादकोक्तिः ॥

अथ तैत्तिरीयसंहितेति व्याख्यास्याम । "मन्त्रब्राह्मणयोर्वेदनामधेयम्"–इत्याहापस्तम्ब ( य प सू ३४ )। तत्र मन्त्रग्रन्थाना मेव संहितेति नामान्तरम् । तासां संहिताना हि बहुप्राचीनत्वात् कालभेद-देशभेद व्यक्तिभेदादिभिरध्ययनाध्यापनयोरुच्चारणादिभेदा पाठभेदाश्च सम्पन्ना, पाठन्यूनातिरिक्तता च किञ्चित् सञ्जाता, आचार्याणा प्रकृतिवैषम्यात् स्वस्वदेशकालाद्यनुरोधाच्च अनुष्ठेयभेदा तत्प्रयोगभेदाश्च सम्पन्ना, अत एवैकैकोऽपि वेदो बहुशाखत्व मापन्न । तदेवोदाहृत प्राचीनभाषित चरणषट्क षड्गुरुशिष्येण—"एकविंशत्यध्वयुक्त ऋग्वेद ऋषयो विदु । सहस्राध्वा सामवेदो यजुरेकशताध्वकम् । नवाध्वाथर्वणोऽन्ये तु प्राहु पञ्चदशाध्वकम्"–इति। 'अध्वा, देवता, गति, शाखा इति पर्यायवाचका'–इति च तत्रोक्त तेनैव। पातञ्जले महाभाष्येऽप्युक्त मेवमेव। तथाहि पस्पशाह्निके—"एकशत मध्वर्युशाखा, सहस्रवर्त्मा सामवेद, एकविंशतिधा बाह्वृच्यम्, नवधाथर्वणो वेद "–इति । चरणव्यूहे तु किञ्चित् पार्थक्य मपि । तद्यथा—"ऋग्वेदस्य ० ० ० शाखा पञ्चविधा भवन्ति। आश्वलायनी शाङ्खायनी शाकला बाष्कला माण्डूकेया चेति"–इति । "यजुर्वेदस्य षडशीतिर्भेदा भवन्ति। तत्र चरका नाम द्वादशभेदा भवन्ति। चरका आह्वरका कठा प्राच्यकठा कपिष्ठलकठाश्चारायणीया वारायणीया वार्त्तान्तवेया श्वेताश्वतरा औपमन्यव पाताण्डिनीया मैत्रायणीया श्चेति। तत्र मैत्रायणी नाम सप्तभेदा भवन्ति। मानवा दुन्दुभाश्चैवेया वाराहा हारिद्रवेया श्यामा श्यामायणीयाश्चेति। ० ० ०। वाजसनेया नाम सप्तदशभेदा भवन्ति। जाबाला गोधेया काण्वा माध्यन्दिना शापीयास्तापनीया कापाला पौण्ड्रवत्सा आवटिका परमावटिका पाराशरीया वैधेया वैनया औधेया गालवा वैजका कात्यायनीयाश्चेति। ० ० ०। तैत्तिरीयका नाम द्विभेदा भवन्ति। औख्या खाण्डिकेयाश्चेति। खाण्डिकेया नाम पञ्चभेदा भवन्ति। आपस्तम्बी बौधायनी सत्याषाढी हिरण्यकेशी औधेयी चेति"–इत्यादि। विष्णुपुराणादौ तु शाखाना सङ्ख्या नामानि च पृथक् पृथगेव, तदल मिहानतिप्राचीनाना धर्मविजृम्भिताना मिव तेषा मवतारणेन। चरणव्यूहादावपि पाठभेदा सन्त्येवेति।

इत्थं बहुशाखत्वेऽप्येकैकस्य वेदस्य, एकैकस्या' शाखाया अध्ययनेनैव भवेदेवाधीत एकैको वेदः; सर्वास्वेवैकवेदीयशाखासु संहितायाः प्रायोऽभेदात्। किञ्चिन्मन्त्रन्यूनातिरिक्तेन, किञ्चित्पाठव्यतिक्रमेण, किञ्चिदुच्चारणभेदेन, किञ्चिदनुष्ठानविधिपार्थक्येन च न भवेद्वस्तुतो विभिन्नत्वम्; जागर्त्येव ह्यत्र न्यायः—'एकदेशविकृत मनन्यवत् (पा० सू० १. १. ७२. भा०)'—इति। भवत्येव हि छिन्नपुच्छे शुनि श्वेतिव्यवहारो लोके। अत एव सायणाचार्यादिभिरेकैकैव शाखा व्याख्याता, तथापि च सर्ववेदव्याख्याने आत्मनः कृतकृत्यतेति। एवं "वेदः कृत्स्नोऽधिगन्तव्यः (२. १६५.)"—इति, "षट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम् (३. १.)"—इति, "वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् (३. २.)"—इति च मनुवचनानि सङ्गच्छन्ते; शाखानां मन्त्रगतप्रकृतपार्थक्ये हि कथं सम्भवेन्नामाध्ययनं द्वादशस्वेवाब्देषु सहस्रशाखस्य सामवेदस्य? ततस्तादृशस्मृतिवचनाना मुन्मत्तप्रलपितत्व मेव प्रसज्येतेति। अतोऽत्रैवमेवावधार्यम्,— वेदशाखाभेदो न मन्वाद्यध्यायभेदतुल्यः, प्रत्युत भिन्नकाललिखितानां भिन्नदेशीयाना मेकग्रन्थीयाना मपि बहुतरादर्शपुस्तकानां यथा भवत्येव पाठादिभेदः, प्रायस्तथैवेति। वेदाना मनुश्रवत्वं, बहुप्राचीनत्वं, शाखाप्रवर्त्तकानां प्रवचने किञ्चित् स्वातन्त्र्यं चेह वीजानि। अथाप्यत्र संशयश्चेत् कस्याप्येकस्य वेदस्य कयोरपि शाखयोराद्यन्तपाठसन्दर्शनेनैव तद्दूरोत्सारणं सुकर मेवेति भवेन्निवृत्तः कोलाहलः।

परन्त्वेव मपि यजुर्वेदस्य वाजसनेय-तैत्तिरीययोः शाखयोरेवं मिथः पार्थक्य मुपलभ्यते, यत्तयोरुभयोः शुक्लत्वकृष्णत्वेऽमंसत प्राचीनाः। तथा च जाबालादीनां समस्तवाजसनेयशाखानां शुक्लयजुरिति ख्यातिः; औख्यादीनां तैत्तिरीयशाखान्तु सर्वां यजुःशाखानां कृष्णयजुरिति समाख्या चेति। ईदृशासदृशभेदकारणं शतपथश्रुत्यादितात्पर्यतोऽवगन्तव्यम्।

तथाहि—"आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते"—इति शत० ब्रा० १४. ९. ४. ३३। 'वाजिशाखावच्छिन्नानां यजुषां सूर्येणोपदिष्टत्वं याज्ञवल्क्येन प्राप्तत्वं च पुराणेषु प्रसिद्धम्'—इति वाह तद्भाष्ये द्विवेदगङ्गः। तथा चेमानि पुराणवचनानि—

"वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन्।
यैश्चीर्णं ब्रह्महत्यांहः क्षपणं स्वगुरोर्व्रतम्॥ ६१॥
याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन् कियत्।
चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम्॥ ६२॥
इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया।
[illegible] ॥ ६३ ॥

देवरातसुत सोऽपि छर्दित्वा यजुषा गणम ।
ततो गतोऽथ मुनयो ददृशुस्तान् यजुर्गणान ॥ ६४ ॥
यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाददु ।
तैत्तिरीया इति यजु शाखा आसन सुपेशला ॥ ६५ ॥
याज्ञवल्क्यस्ततो ब्रह्मश्छन्दांस्यधिगवेषयन ।
गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम ॥ ६६ ॥
*　　*　　*　　*　　*　　*
एवं स्तुत स भगवान वाजिरूपधरो रवि ।
यजूंष्ययातयामानि मुनयेऽदात् प्रसादित ॥ ७३ ॥'
—इति भाग० पु० १२ ७ ।

सैषा कृष्णयजुर्वेदसंहिता तित्तिरिनाममहर्षिणा प्रोक्तेति तैत्तिरीय संहितेत्युच्यते । तदाह भगवान् पाणिनि —' तेन प्रोक्तम्, तित्तिरिवरतन्तु खण्डिकोखाच्छण्''—इति (४ ३ १०१, १०२)।

अत्रैतदपि ध्येयम्—तित्तिरिप्रमुखाना शाखाप्रोक्तृत्वेऽपि न तु तत्तच्छा खीयमन्त्राणा प्रोक्तृत्वम, प्रतिमन्त्रर्षिसंवादस्याकोपात्। अस्ति हि सर्वथा मैव मन्त्राणा पृथक्पृथगृषिसंवाद,—अयं मन्त्रोऽनेन ऋषिणा दृष्ट इति ।

अथापरमपि— तित्तिरिप्रोक्तैव शाखा क्रमात् षड्विधत्व मापन्ना औख्यादिनामत षोढा प्रसिद्धि गतेति तासा यथा मैव तैत्तिरीयत्वेऽपि औख्य- नामिका आद्यैव तैत्तिरीयेति व्यपदिश्यते विशेषत , यथा ऋग्वेदशाखाना पञ्चानामेव शाकलत्वेऽपि शैशिरीयाख्यायैव शाखा शाकलेति व्यपदिश्यते । तथाहि विद्वत्तिकौमुद्याम्—

"शाकल्यस्य शत शिष्या नैष्ठिकब्रह्मचारिण ।
पञ्च तेषा गृहस्थास्ते धर्मिष्ठाय कुटुम्बिन ॥
शिशिरो बाष्कल साङ्ख्यो वात्स्यश्चैवाश्वलायन ।
पञ्चैते शाकला शिष्या शाखाभेदप्रवर्त्तका ॥"—इति ।

तदेव शैशिरीया, वाष्कलीया, साङ्ख्या, वात्स्या, आश्वलायनी चेत्यासा पञ्चाना मेव शाखानां शाकलत्व गम्यते । अत एव "ऋग्वेदे शैशिरीयायां संहितायां यथाक्रमम् । प्रमाणं मनुवाकानां सूक्तैः शृणुत शाकला ॥"—इति शौनकीयानुक्रमणी-व्याख्यानावसरे प्राह षड्गुरुशिष्य — 'सर्वेषां (शैशिरी- यादिपञ्चशाखाध्येतॄणाम्) शाकलत्व मुक्तम्'—इति । एवं मपि चरणव्यूहादौ शैशिरीया शाखैव शाकलेति बुध्यतेऽस्माभिस्तथैव वैदिकप्रसिद्ध ।

ततोऽन्यान्यपि अष्टाविंशतिः पदानि सन्ति। तदित्थ मेतत्प्रपाठकपदसङ्ख्या वस्वश्विबाणैकमितेति (१५२८) बोधित मेतेन वाक्येन।

प्रतिप्रपाठकावसाने तत्तत्प्रपाठकाम्नातानुवाकानां यथाक्रमेण प्रतीकपदान्युद्धृत्य परिगणना च विद्यते, तत्तदनुवाकपरिगणनवाक्यमपि सस्वर मेवाधीयते। तद्यथा—"(१) इषे त्वा, (२) यज्ञस्य, (३) शुन्धध्वं, (४) कर्मणे वां, (५) देवो, (६) ऽयधूतं, (७) धृष्टिः, (८) संवपामि, (९)-ददे, (१०) प्रत्युष्टं, (११) कृष्णोऽसि, (१२) भुवनमसि, (१३) वाजस्य, (१४)-भावां चतुर्दश"–इति।

एवं प्रतिकाण्डान्ते तत्तत्काण्डीयप्रपाठकानां प्रतीकपदानि समुल्लिख्य परिगणना च सस्वरं पठ्यते। तद्यथा सप्तमकाण्डान्ते—"(१) प्रजननं, (२) साध्याः, (३) प्रजवं, (४) बृहस्पतिर्, (५) गावः पञ्च"–इति। सप्तमे काण्डे पञ्च प्रपाठकाः सन्ति, तत्र तेषां यथाक्रमेणेमानि प्रजनन मित्यादीनि प्रतीकपदानीति तदर्थः।

तथा ग्रन्थशेषे काण्डप्रतीकपरिगणनावाक्यं च सस्वरं समधीयते। तद्यथा—"(१) इषे, (२) वायव्यं, (३) प्रजापतिर्, (४) युञ्जानः, (५) सावित्राणि, (६) प्राचीनवꣳशं, (७) प्रजननं सप्त"–इति। एतेन वाक्येनात्र तैत्तिरीयसंहितायां सप्त काण्डाः सन्ति, तेषां च काण्डानाम् 'इषे'–इत्यादीनि सप्त प्रतीकपदानीति बोध्यत इति सर्वतोऽवद्वानि तैत्तिरीयमन्त्रभागपदादीनीति॥

अथ संहितापाठे सम्पादकेच्छाप्रसूतसन्धिविश्लेषस्यान्याय्यत्वं ६ भा० २१ पृ० ‡ टीप्पन्या विस्तृतेन बोधितम्, तथा अनुवाकमध्ये "। १ ॥"–एवमादिवाङ्कपूर्वकैरचिह्नेन खण्डभेदानां विधानस्यावैदिक मिति ६ भा० ३४ पृ०* टीप्पन्यां सूचितं तदत्रैवालोच्यमिति॥

अथैतद्भाष्यकारविषयेऽप्यस्ति किञ्चिद् वक्तव्यम्। कश्चिदाह यः खलु माधवाचार्यः स एव सायणाचार्य इति। तदेतन्मत माचारमाधवाद्युक्तपरिचयविरुद्ध मित्यवहेय मेव। तथा ह्याचारमाधवे, प्रायश्चित्तमाधवे, कालमाधवे, च भूमिकायाः षष्ठ-सप्तम-श्लोकाविमौ—

"श्रीमती जननी यस्य सुकीर्त्तिर्मायणः पिता।
सायणो भोगनाथश्च मनोबुद्धी सहोदरौ॥
यस्य बौधायनं सूत्रं शाखा यस्य च याजुषी।
भारद्वाजं कुलं यस्य सर्वज्ञः स हि माधवः॥"–इति।

नन्वेवं वेदभाष्यादौ पुष्पिकासु सर्वत्रैव 'सायणाचार्यविरचिते माधवीये'–इति लेखात् द्विकर्त्तृकत्वमेव कथं घटतेति चेत्? न; तत्र तत्र तथैव लिखितत्वात्। एकस्य हि आदिकर्त्तृत्वेन कर्त्तृत्व मपरस्य सामीक्षकत्वेन

तद्दिति द्विकर्तृकत्वं न विरुद्धम् । अपि वा उभयोर्भ्रात्रोर्वेदातिशय्यप्रकाशार्थं स्यात् तथा व्यवहार । कस्य चिन्नये माधवाचार्य एव वेदभाष्याणां कर्ता, "ये पूर्वोत्तरमीमांसे व्याख्यायातिसङ्ग्रहात्"–इत्युक्त । अतिसङ्ग्रहात् पूर्वोत्तर मीमांसयोर्व्याख्याता हि माधव एव, न तु सायण । एतन्मतन्त्वापातरमणीयमपि न विचारसहम्, सर्वत्र पुष्पिकासु "सायणाचार्यविरचिते'–इत्युल्लेखात्, यज्ञतन्त्रसुधानिधुपक्रमोक्तत्रयोदशचतुर्दशश्लोकविरोधाच्च । तथाहि—

"ते तपस्तनया राज्ञि माधीन परमात्मने ।
सवज्ञ सायणाचार्य पर्यपृच्छन समाम" ॥
अधीता सकला वेदास्त च दृष्टार्थगोचरा ।
त्वत्प्रणीतेन तद्भाष्यप्रदीपेन प्रयोगमा ॥' –इति ।

वस्तुत एतद्भाष्योपक्रमश्लोकेषु मुद्रितद्वतीयश्लोकादनन्तर लिपिकरप्रमादात् सर्वपुस्तकेष्वविद्यमानावपि स्त एवेमौ श्लोकौ—

"स श्राह नृपति राजन सायणार्या ममानुज ।
सर्वं वत्त्यष वेदाना व्याख्यातृत्व नियुज्यताम् ॥
इत्युक्तो माधवार्येण वीरबुक्कमहीपति ।
अन्वशात् सायणाचार्यं वेदार्थस्य प्रकाशने ॥'–इति ।

श्लोकावेतौ श्राघ्यार्यितिकपुस्तकालयीयैकस्मिन् जीर्णतमे अतिविशुद्धपुस्तके मयचितौ, तैत्तिरीयप्रथमभागस्य सम्पादकीयलिपेष्ट्रीप्यन्याश्चोद्धृतौ दृश्येते । एतच्छ्लोकद्वयास्परमूतश्चैव श्लोक स्यात् यत्र, योऽत्र मुद्रितश्चतुर्थ —

"ये पूर्वोत्तरमीमांसे व्याख्यायातिसङ्ग्रहात् ।
कृपालुर्माधवाचार्यो वेदार्थं वक्तु मुद्यत ॥"–इति ।

अस्य का गतिरिति चेत्, उद्यत सन् स्वमध्यमानुजेन सायणाचार्येण वेदार्थप्रकाशं कारयतीत्युह्य मित्यस्माकम् । एव हि सायणाचार्यकृतान्येव सर्वाणि वेदभाष्याणीति सिद्धम् ।

एव मपि मत्सम्पादितितत्खण्डानाश्च मुखपृष्ठासु यन्मुद्रित 'माधवाचार्यविरचितवेदार्थप्रकाशाख्यभाष्यसहिता'–इति, तत्सर्वं पूर्वपूर्वसम्पादकलेखानुसारत एवेति बोध्यम्; अन्यथा हि स्याद् ग्रन्थान्तरस्यप्रतीतिरिति ।

किञ्च वेदभाष्येषु तैत्तिरीयभाष्यस्यैव प्राथम्य स्यादभ्युपगम्यम्, ऋक्संहिताभाष्याद्युपक्रमश्लोकादिपाठास्तथैवोपलब्धे । तथाहि—

"आध्वर्यवस्य यज्ञेषु प्राधान्याद् व्याकृत पुरा ।
यजुर्वेदो, ऽथ होत्रार्थं ऋग्वेदो व्याकरिष्यते ॥"–इति

ऋ० स० भा० भू० ५ श्लो० ।

एतेन यजुर्भाष्यस्य प्राथम्ये विद्यातेऽपि न ज्ञायते तत् शुक्लस्य यजुष कृष्णस्य वेति। काण्वसंहिताभाष्योपक्रमस्थो पञ्चमैकादशश्लोकपाठात्तु सा शङ्कापि भवति छिन्नमूला। तथाहि—

"ऋग्यजुस्सामवेदा य व्याख्यातास्तेषु तद् यजु।
द्वेधा शुक्ल मिति द्वेधा, तत् कृष्णं तैत्तिरीयकम् ॥ ५ ॥
* * * * * *
व्यवस्थितप्रकरणं यजुः शुक्लं तदीर्यते ॥ ११ ॥"—इति।

एवञ्च काण्वशाख्यं शुक्लं यजुः पूर्वं न व्याख्यातम्, तैत्तिरीयाख्यं कृष्णयजुरेव पूर्वं व्याख्यात मिति स्फुटम्। तत्रापि ब्राह्मणारण्यकयोर्व्याख्यानात् पुरैवैषा संहिता व्याख्यातेति च ध्रुवम्। तथाहि ब्राह्मणभाष्योपक्रमे—

"व्याख्याता सुखबोधाय तैत्तिरीयकसंहिता।
तद्ब्राह्मणं व्याकरिष्ये सुखनार्थविशुद्धये ॥"—इति ५ श्लो०।

तथाचारण्यकभाष्ये—'व्याख्याता सुखबोधाय तैत्तिरीयकसंहिता।
तद्ब्राह्मणं च व्याख्यात मिष्ट मारण्यकं तत ॥'—इति ५ श्लो०।

"यस्य बोधायनं सूत्रं शाखा यस्य च याजुषी'—इत्युक्तेस्तस्याचार्यस्य तैत्तिरीयशाखाध्येतृकुलजत्वमपि सुव्यक्त मिति शम् ॥

कलकत्ता (राजन्वती)। }
संवत् १९४६(१८८९)। }

श्रीसत्यव्रतशर्म्मा।
( सामश्रमी )

---

॥०॥ श्रीगणेशाय नमः ॥०॥

## अथ तैत्तिरीयसंहितायां

षष्ठकाण्डे प्रथमप्रपाठके

प्रथमोऽनुवाकः ।

हरिः ओम् ।

प्राचीनवꣳशङ्करोति देवमनुष्या दिशो व्यभजन्त यं
ाचीन्देवा दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीꣳ
द्रा यत् प्राचीनवꣳशङ्करोति देवलोकमेव तद्यजमान
उपावर्त्तते⁽¹⁾ परि-श्रयत्यन्तर्हितो हि देवलोको मनुष्य-
लोकात्⁽²⁾ नास्माल्लोकात् स्वेतव्यमित्याहुः को हि
तद्वेद यद्यमुष्मिंल्लोकेऽस्ति वा न वेति दिक्ष्वतीकाशान्
करोति⁽³⁾ ॥ १ ॥

उभयोर्लोकयोरभिजित्यै केशश्मश्रु वपते नखानि
निकृन्तते मृता वा एषा त्वगमेध्या यत् केशश्-
मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैति

ङ्गिरसः सुवर्गं लोकं यन्तोऽप्सु दीक्षातपसी प्रावेशय
प्सु स्नाति साक्षादेव दीक्षातपसी अव-रुन्धे[9] ती
स्नाति तीर्थे हि ते ताम्प्रावेशयन्[10] तीर्थे स्नाति ॥ २ ॥ ४ ॥
तीर्थमेव समानानां भवति[7] अपोऽश्नात्यन्त
एव मेध्यो भवति[8] वाससा दीक्षयति सौम्यं वै क्षौमं
देवतया सोममेष देवतामुपैति यो दीक्षते[9] सोम
तनूरसि तनुवं मे पाहीत्याह स्वामेव देवतामुपैत्य
आशिषमेवैतामा-शास्ते[10] अग्नेस्तूषाधानं वायोर्वात
पानं पितृणां नीविरोषधीनां प्रघातः ॥ ३ ॥
आदित्यानां प्राचीनताना विश्वेषां देवानामोतु
नक्षत्राणामतीकाशास्तद्वा एतत् सर्वदेवत्यं यद्वासो
यद्वाससा दीक्षयति सर्वाभिरेवैनं देवताभिर्दीक्षयति[11]
बहिःप्राणो वै मनुष्यस्तस्याशनं प्राणोऽश्नाति
एव दीक्षते[12] आशितो भवति यावानेवास्य प्र
सह मेधमुपैति[13] घृतं देवानां मस्तु पितृणां
मनुष्याणां तद्वै ॥ ४ ॥
एतत् सर्वदेवत्यं यन्नवनीतं यन्नवनीतेनाभ्यङ्क्ते स
एव देवताः प्रीणाति[14] प्रच्युतो वा एषोऽस्माल्लोका
तो देवलोकं यो दीक्षितोऽन्तरेव नवनीतं तस्मा
नीतेनाभ्यङ्क्ते[15] अनुलोमं यजुषा व्यावर्त्यै[16]

तत् शुद्ध लोकपाठा
इति। तैत्तिरी आरण्यकया व्याख्यानक्रमे
बु, लो०

न्द्रो वृत्रमहन् तस्य कनीनिका परापतत्तदाञ्जनम-
वद् यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते दक्षिणं
मोङ्क्ते[१०] ॥ ५० ॥
सव्यꣳ हि पूर्वं मनुष्या आञ्जते न नि-धावते नीव
मनुष्या धावन्ते पञ्चकृत्व आङ्क्ते पञ्चाक्षरा पङ्क्तिः
ङ्क्तो यज्ञो यज्ञमेवाव-रुन्धे परिमितमाङ्क्तेऽपरि-
तꣳ हि मनुष्या आञ्जते सतूलया आङ्क्तेऽपतूलया
मनुष्या आञ्जते व्यावृत्त्यै[११] यदपतूलयाञ्जीत वज्र
व स्यात् सतूलयाङ्क्ते मित्रत्वाय[१२] ॥ ६ ॥
इन्द्रो वृत्रमहन् सोऽपोऽभ्यम्रियत तासां यन्मेध्यं
ज्ञयꣳ सदेवमासीत्तदप उदक्रामत् ते दर्भा अभवन्
र्भपुञ्जीलैः पवयति या एव मेध्या यज्ञियाः सदेवा
तामिरेवैनं पवयति[१०] द्वाभ्यां पवयत्यहोरात्रा-
मेवैनं पवयति त्रिभिः पवयति त्रय इमे लोका
रेवैनं लोकैः पवयति पञ्चभिः ॥ ७ ॥
पवयति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञायै-
पवयति षड्भिः पवयति षड्वा ऋतव ऋतुभि-
नं पवयति सप्तभिः पवयति सप्त छन्दाꣳसि छन्दो-
रेवैनं पवयति नवभिः पवयति नव वै पुरुषे प्राणाः
प्राणमेवैनं पवयत्येकविꣳशत्या पवयति दश हस्त्या

अङ्गुलयो दश प्राणा आत्मैकविꣳशो यावानेव पुरुषस्तमपरिवर्गं ॥ ८ ॥

पवयति[२१] चित्पतिस्त्वा पुनात्वित्याह मनो वै चित्पतिर्मनसैवैनं पवयति वाक्पतिस्त्वा पुनात्वित्याह वाचैवैनं पवयति देवस्त्वा सविता पुनात्वित्याह सवितृप्रसूत एवैनं पवयति[२२] तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयमित्याहाशिषमेवैतामा-शास्ते[२३] ॥ ९ ॥*

अतीकाशान् करोति। अवेक्षयन् तीर्थे स्नाति। प्रघातः। मनुष्याणां तद्वै। आङ्क्ते। मित्रत्वाय। पञ्चभिः। अपरिवर्गम्। अष्टाचत्वारिꣳशच्च ॥ १ ॥

इति तैत्तिरीयसंहितायां षष्ठकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः ॥०॥

---

यावन्तो वै देवा यज्ञायापुनत त एवाभवन् य एवं विद्वान् यज्ञाय पुनीते भवत्येव बहिः पवयित्वान्तः प्र-पादयति मनुष्यलोक एवैनं पवयित्वा पूतं देवलोकं प्र णयति[१] अदीक्षित एकयाहुत्येत्याहुः स्रुवेण चतस्रो

---

* अस्यानुवाकस्य व्याख्यानं प्रथमकाण्डस्य द्वितीयप्रपाठकप्रथमानुवाकभाष्ये द्रष्टव्यम्।

जुहोति दीक्षितत्वाय स्रुचा पञ्चमीं पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव-रुन्धे(२) आकूत्यै प्रयुजेऽग्नये॥१॥

स्वाहेत्याहाकूत्या हि पुरुषो यज्ञमभि-प्रयुङ्क्ते यजेयेति(३) मेधायै मनसेऽग्नये स्वाहेत्याह मेधया हि मनसा पुरुषो यज्ञमभिगच्छति(४) सरस्वत्यै पूष्णेऽग्नये स्वाहेत्याह वाग्वै सरस्वती पृथिवी पूषा वाचैव पृथिव्या यज्ञं प्र-युङ्क्त(५) आपो देवीर्बृहतीर्विश्वशम्भुव इत्याह या वै वर्ष्यास्ताः ॥ २ ॥

आपो देवी बृहतीर्विश्वशम्भुवो(६) यदेतद्यजुर्न ब्रूयाद् दिव्या आपोऽशान्ता इमं लोकमा-गच्छेयुः(७) आपो देवीर्बृहतीर्विश्वशम्भुव इत्याहास्मा एवैना लोकाय शमयति तस्माच्छान्ता इमं लोकमा-गच्छन्ति(८) द्यावा-पृथिवीत्याह द्यावापृथिव्योर्हि यज्ञ उर्वन्तरिक्षमित्या-हान्तरिक्षे हि यज्ञो(९) बृहस्पतिर्नो हविषा वृधातु ॥३॥

इत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै यज्ञमव-रुन्धे(१०) यद्ब्रूयाद्विधेरिति यज्ञस्थाणुमृच्छेद्वृधात्वित्याह यज्ञस्थाणुमेव परि-वृणक्ति(११) प्रजापतिर्यज्ञमसृजत सोऽस्मात्सृष्टः पराङैत स प्र यजुरव्लीनात् प्र साम तमृगुदयच्छद् यदृगुदयच्छत्तदौद्ग्रहणस्यौद्ग्रहण-त्वम्(१२) ऋचा ॥ ४ ॥

जुहोति यज्ञस्योद्यत्यै[१३] अनुष्टुब् छन्दसामुदय-च्छदित्याहुस्तस्मादनुष्टुभा जुहोति यज्ञस्योद्यत्यै[१४] द्वादश वात्सबन्धान्युदयच्छन्नित्याहुस्तस्माद् द्वादशभिर्वात्स-बन्धुविदो दीक्षयन्ति[१५] सा वा एषर्गनुष्टुग्वागनुष्टुगय-देतयर्चा दीक्षयति वाचैवैनꣳ सर्वया दीक्षयति[१६] विश्वो देवस्य नेतुरित्याह सावित्र्येतेन मर्तो वृणीत सख्यं ॥ ५ ॥

इत्याह पितृदेवत्यैतेन विश्वे राय इषुध्यसीत्याह वैश्वदेव्येतेन द्युम्नं वृणीत पुष्यस इत्याह पौष्णैतेन सा वा एषर्क्सर्वदेवत्या यदेतयर्चा दीक्षयति सर्वाभिरेवैनं देवताभिर्दीक्षयति[१७] सप्ताक्षरं प्रथमं पदमष्टाक्षराणि त्रीणि यानि त्रीणि तान्यष्टावुप-यन्ति यानि चत्वारि तान्यष्टौ यदष्टाक्षरा तेन ॥ ६ ॥

गायत्री यदेकादशाक्षरा तेन त्रिष्टुग् यद् द्वादशा-क्षरा तेन जगती सा वा एषर्क्सर्वाणि छन्दाꣳसि यदेतयर्चा दीक्षयति सर्वैभिरेवैनं छन्दोभिर्दीक्षयति[१८] सप्ताक्षरं प्रथमं पदꣳ सप्तपदा शक्वरी पशवः शक्वरी पशूनेव अव-रुन्धे[१९] एकस्मादक्षरादनाप्तं प्रथमं पदं तस्माद्यद्वाचोऽनाप्तं तन्मनुष्या उप-जीवन्ति पूर्णया जुहोति, पूर्ण इव हि प्रजापतिः प्रजापतेराप्त्यै न्यूनया

जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजानाꣳ सृष्ट्यै[२] ॥ ७ ॥*

अग्नये। ता। दधातु। ऋचा। सख्यं। तेन। जुहोति। पञ्चदश च ॥ २ ॥

इति तैत्तिरीयसंहितायां षष्ठकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥०॥

---

ऋक्सामे वै देवेभ्यो यज्ञायातिष्ठमाने कृष्णो रूपं कृत्वापक्रम्यातिष्ठतां तेऽमन्यन्त यं वा इमे उपावर्त्स्यतः स इदं भविष्यतीति ते उपामन्त्रयन्त ते अहोरात्रयो-र्महिमानमपनिधाय देवानुपावर्त्तेतामेष वा ऋचो वर्णो यच्छुक्लं कृष्णाजिनस्यैष साम्नो यत्कृष्णम्[१] ऋक्सामयोः शिल्पे स्थ इत्याहर्क्सामे एव अव-रुन्धे[२] एषः ॥ १ ॥

वा अह्नो वर्णो यच्छुक्लं कृष्णाजिनस्यैष रात्रिया यत्कृष्णं यदेवैनयोस्तत्र न्यक्तं तदेवाव-रुन्धे[१] कृष्णाजिनेन दीक्षयति ब्रह्मणो वा एतद्रूपं यत्कृष्णाजिनं

---

* अस्यानुवाकस्य व्याख्यानं प्रथमकाण्डीयद्वितीयप्रपाठकस्य प्रथमद्वितीयानुवाकभाष्ययोर्द्रष्टव्यम्।

ब्रह्मणैवैनं दीक्षयति[९] इमान्धियं शिक्षमाणस्य देवेत्याह यथायजुरेवैतद्[४] गर्भो वा एष यद्दीक्षित उल्बं वासः प्रोर्णुते तस्मात् ॥ २ ॥

गर्भाः प्रावृता जायन्ते[१] न पुरा सोमस्य क्रयादपोर्णुवीत यत्पुरा सोमस्य क्रयादपोर्णुवीत गर्भाः प्रजानां परापातुका स्युः क्रीते सोमेऽपोर्णुते जायत एव तदथो यथा वसीयाꣳसं प्रत्यपोर्णुते तादृगेव तद्[७] अङ्गिरसः सुवर्गं लोकं यन्त ऊर्जं व्यभजन्त ततो यदत्यशिष्यत ते शरा अभवन्नूर्ग्वै शरा यच्छरमयी ॥ ३ ॥

मेखला भवत्यूर्जमेवाव-रुन्धे[८] मध्यतः सं-नह्यति मध्यत एवास्मा ऊर्जं दधाति तस्मान्मध्यत ऊर्जा भुञ्जते[९] ऊर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमवाचीनममेध्यं यन्मध्यतः सन्नह्यति मेध्यं चैवास्यामेध्यं च व्यावर्तयति[१०] इन्द्रो वृत्राय वज्रं प्राहरत्स त्रेधा व्यभवत् स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयम् ॥ ४ ॥

येऽन्तःशरा अशीर्यन्त ते शरा अभवन् तच्छराणाꣳ शरत्वं वज्रो वै शराः क्षुत् खलु वै मनुष्यस्य भ्रातृव्यो यच्छरमयी मेखला भवति वज्रेणैव साक्षात् क्षुधं भ्रातृव्यं मध्यतोऽप-हते[११] त्रिवृद्भवति त्रिवृद्वै प्राणस्त्रिवृतमेव प्राणं मध्यतो यजमाने दधाति[१२] पृथ्वी भवति

रज्जूनां व्यावृत्त्यै[१३] मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीं मिथुनत्वाय[१४] ॥ ५ ॥

यज्ञो दक्षिणामभ्यध्यायत् ताꣳ समभवत् तदिन्द्रोऽचायत् सोऽमन्यत यो वा इतो जनिष्यते स इदं भविष्यतीति तां प्राविशत् तस्या इन्द्र एवाजायत सोऽमन्यत यो वै मदितोऽपरो जनिष्यते स इदं भविष्यतीति तस्या अनुमृश्य योनिमाच्छिनत् सा सूतवशाभवत् तत् सूतवशायै जन्म ॥ ६ ॥

ताꣳ हस्ते न्यवेष्टयत तां मृगेषु न्यदधात् सा कृष्णविषाणाभवदिन्द्रस्य योनिरसि मा मा हिꣳसीरिति कृष्णविषाणां प्र-यच्छति सयोनिमेव यज्ञं करोति सयोनिं दक्षिणाꣳ सयोनिमिन्द्रꣳ सयोनित्वाय[१५] कृष्यै त्वा सुसस्याया इत्याह तस्मादकृष्टपच्या ओषधयः पच्यन्ते[१६] सुपिप्पलाभ्यस्त्वौषधीभ्य इत्याह तस्मादोषधयः फलं गृह्णन्ति[१७] यद्धस्तेन ॥ ७ ॥

कण्डूयेत पामनम्भावुकाः प्रजाः स्युर्यत् स्मयेत नग्नम्भावुकाः कृष्णविषाणया कण्डूयतेऽपिगृह्य स्मयते प्रजानां गोपीथाय[१८] न पुरा दक्षिणाभ्यो नेतोः कृष्णविषाणामव-चृतेद् यत्पुरा दक्षिणाभ्यो नेतोः कृष्णविषाणामवचृतेद् योनिः प्रजानां परापातुका स्यान्नीतासु

दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति योनिर्वै यज्ञस्य चात्वालं योनिः कृष्णविषाणा योनावेव योनिं दधाति यज्ञस्य सयोनित्वाय[१८]* ॥ ८ ॥

रुन्ध एव। तस्मात्। शरमयी। यूपस्तृतीयं। मिथुनत्वाय। जन्म। हस्तेन। अष्टाचत्वारिंशच्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां षष्ठकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः ॥०॥

---

वाग्वै देवेभ्योऽपाक्रामद् यज्ञायातिष्ठमाना सा वनस्पतीन् प्राविशत् सैषा वाग् वनस्पतिषु वदति या दुन्दुभौ या तूणवे या वीणायां, यद् दीक्षितदण्डं प्रयच्छति वाचमेवाव-रुन्धे[१] औदुम्बरो भवत्यूर्ग्वा उदुम्बर ऊर्जमेवाव-रुन्धे मुखेन सम्मितो भवति मुखत एवास्मा ऊर्जं दधाति तस्मान्मुखत ऊर्जा भुञ्जते[२] ॥ १ ॥

क्रीते सोमे मैत्रावरुणाय दण्डं प्र-यच्छति मैत्रावरुणो हि पुरस्तादृत्विग्भ्यो वाचं विभजति तामृत्विजो यजमाने प्रति-ष्ठापयन्ति[३] स्वाहा यज्ञं मनसेत्याह

---

* अस्यानुवाकस्य व्याख्यानं प्रथमकाण्डीयद्वितीयप्रपाठकस्य द्वितीयानुवाकभाष्ये द्रष्टव्यम्।

मनसा हि पुरुषो यज्ञमभिगच्छति स्वाहा द्यावापृथि-
वीभ्यामित्याह द्यावापृथिव्योर्हि यज्ञः स्वाहोरोरन्त-
रिक्षादित्याहान्तरिक्षे हि यज्ञः स्वाहा यज्ञं वातादा-
रभ इत्याहायं ॥ २ ॥

वाव यः पवते स यज्ञस्तमेव साक्षादा-रभते[७] मुष्टी
करोति वाचं यच्छति यज्ञस्य धृत्यै[४] अदीक्षिष्टायं
ब्राह्मण इति त्रिरुपांश्वाह देवेभ्य एवैनं प्राह त्रिरुच्चै-
रुभयेभ्य एवैनं देवमनुष्येभ्यः प्राह[६] न पुरा नक्षत्रेभ्यो
वाचं वि-सृजेद् यत्पुरा नक्षत्रेभ्यो वाचं विसृजेद् यज्ञं
वि-छिन्द्यात्[७] ॥ ३ ॥

उदितेषु नक्षत्रेषु व्रतं कृणुतेति वाचं वि-सृजति
यज्ञव्रतो वै दीक्षितो यज्ञमेवाभि वाचं वि-सृजति[८]
यदि विसृजेद्वैष्णवीमृचमनु-ब्रूयाद् यज्ञो वै विष्णुर्यज्ञे-
नैव यज्ञं सन्तनोति[९] दैवीं धियं मनामह इत्याह
यज्ञमेव तन् म्रदयति[१०] सुपारा नो असद् वश इत्याह
व्युष्टिमेवाव-रुन्धे[११] ॥ ४ ॥

ब्रह्मवादिनो वदन्ति होतव्यं दीक्षितस्य गृहा३इ
न होतव्या३मिति हविर्वै दीक्षितो यज्जुहुयाद् यज-
मानस्यावदाय जुहुयाद् यन्न जुहुयाद् यज्ञपरुरन्त-
रियाद् ये देवा मनोजाता मनोयुज इत्याह प्राणा वै

देवा मनोजाता मनोयुजस्तेष्वेव परोक्षं जुहोति तन्नैव हुतं नेवाहुतः[१५] स्वपन्तं वै दीक्षितः रक्षांसि जिघांसन्त्यग्निः ॥ ५ ॥

खलु वै रक्षोहाग्ने त्वः सु-जागृहि वयः सु-मन्दिषीमहीत्याहाग्निमेवाधिपां कृत्वा स्वपिति रक्षसामपहत्यै[१६] अव्रत्यमिव वा एष करोति यो दीक्षितः स्वपिति त्वमग्ने व्रतपा असीत्याहाग्निर्वै देवानां व्रतपतिः स एवैनं व्रत-मा-लम्भयति[१७] देव आ मर्त्येष्वेत्याह देवः ॥ ६ ॥

ह्येष सन् मर्त्येषु[१८] त्वं यज्ञेष्वीड्य इत्याहैतः हि यज्ञेष्वीडते[१९] अप वै दीक्षितात् सुषुपुष इन्द्रियं देवताः क्रामन्ति विश्वे देवा अभि मामावर्वृत्रन्नित्याहेन्द्रियेणैवैनं देवताभिः सन्नयति[२०] यदेतद् यजुर्न ब्रूयाद् यावत एव पशूनभि-दीक्षेत तावन्तोऽस्य पशवः स्यूरास्येयत् ॥ ७ ॥

सोमा भूयो भरेत्याहापरिमितानेव पशूनव-रुन्धे[२१] चन्द्रमसि मम भोगाय भवेत्याह यथादेवतमेवैनाः प्रति-गृह्णाति[२२] वायवे त्वा वरुणाय त्वेति यदेवमेता नानुदिशेद् यथादेवतन्दक्षिणा गमयेदा देवताभ्यो वृश्च्येत यदेवमेता अनुदिशति यथादेवतमेव दक्षिणा गमयति न देवताभ्य आ ॥ ८ ॥

वृञ्जते[२०] देवीरापो अपां नपादित्याह यद् वो मेध्यं यज्ञियꣳ सदेवं तद् वो माव-क्रमिषमिति वावैतदाह[२१] अछिन्नं तन्तुं पृथिव्या अनु गेषमित्याह सेतुमेव कृत्वात्येति[२२]* ॥ ६ ॥

भुञ्जते। अयं। छिन्द्यात्। रुन्धे। अग्निः। आह देवः। इयत्। देवताभ्य आ। चयस्त्रिꣳशच्च ॥ ४ ॥

इति तैत्तिरीयसंहितायां षष्ठकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥०॥

---

देवा वै देवयजनमध्यवसाय दिशो न प्राजानन् तेऽन्योऽन्यमुपाधावन् त्वया प्र-जानाम त्वयेति ते-ऽदित्याꣳ समध्रियन्त त्वया प्र-जानामेति साब्रवीद् वरं वृणै मत्प्रायणा एव वो यज्ञा मदुदयना असन्निति तस्मादादित्यः प्रायणीयो यज्ञानामादित्य उदयनीयः[१] पञ्च देवता यजति पञ्च दिशो दिशां प्रज्ञात्यै ॥ १ ॥

अथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव-

---

* अस्यानुवाकस्य व्याख्यानं प्रथमकाण्डीयद्वितीयप्रपाठकस्य द्वितीय-तृतीयानुवाकभाष्ययोर्द्रष्टव्यम्।

सन्त्ये[१] पथ्याᳪं स्वस्तिमयजन् प्राचीमेव तया दिशं प्राजानन्नग्निना दक्षिणा सोमेन प्रतीचीᳪं सवित्रोदीचीमदित्योर्ध्वां[१] पथ्याᳪं स्वस्तिं यजति प्राचीमेव तया दिशं प्र-जानाति पथ्याᳪं स्वस्तिमिष्ट्वाग्नीषोमौ यजति चक्षुषी वै एते यज्ञस्य यदग्नीषोमौ ताभ्यामेवानु-पश्यति ॥ २ ॥

अग्नीषोमाविष्ट्वा सवितारं यजति सवितृप्रसूत एवानु-पश्यति सवितारमिष्ट्वादितिं यजतीयं वा अदितिरस्यामेव प्रतिष्ठायानु-पश्यति[४] अदितिमिष्ट्वा मारुतीमृचमन्वाह मरुतो वै देवानां विशो देवविशं खलु वै कल्पमानं मनुष्यविशमनु-कल्पते यन्मारुतीमृचमन्वाह विशां कॢप्त्यै[५] ब्रह्मवादिनो वदन्ति प्रयाजवदननूयाजं प्रायणीयं कार्यमनूयाजवत् ॥ ३ ॥

अप्रयाजमुदयनीयमितीमे वै प्रयाजा अमी अनूयाजाः सैव सा यज्ञस्य सन्ततिः[६] तत्तथा न कार्यमात्मा वै प्रयाजाः प्रजानूयाजा यत्प्रयाजानन्तरियादात्मानमन्तरियाद् यदनूयाजानन्तरियात् प्रजामन्तरियाद् यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञः परा-भवति यज्ञं पराभवन्तं यजमानोऽनु ॥ ४ ॥

परा-भवति[७] प्रयाजवदेवानूयाजवत् प्रायणीयं

कार्यं प्रयाजवदनूयाजवदुदयनीयं नात्मानमन्तरेति न प्रजां न यज्ञः पराभवति न यजमानः[८] प्रायणीयस्य निष्कास उदयनीयमभि-निर्वपति सैव सा यज्ञस्य सन्ततिः[९] याः प्रायणीयस्य याज्या यत् ता उदयनीयस्य याज्याः कुर्यात् पराङमुं लोकमा-रोहेत् प्रमायुकः स्याद् याः प्रायणीयस्य पुरोनुवाक्यास्ताः, उदयनीयस्य याज्याः करोत्यस्मिन्नेव लोके प्रति-तिष्ठति[१०]*

॥ ५ ॥

प्रज्ञात्यै । पश्यति । अनूयाजवत् । यजमानोऽनु । पुरोनुवाक्यास्ताः । अष्टौ च ॥ ५ ॥

इति तैत्तिरीयसंहितायां षष्ठकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥०॥

---

कद्रूश्च वै सुपर्णी चात्मरूपयोरस्पर्धेताम् सा कद्रूः सुपर्णीमजयत् साब्रवीत् तृतीयस्यामितो दिवि सोम-

---

* अस्यानुवाकस्य व्याख्यानं प्रथमकाण्डीयद्वितीयप्रपाठकस्य चतुर्थानुवाकभाष्ये द्रष्टव्यम् ।

स्तमा-ऽहर् तेनात्मानं निष्क्रीणीष्वेति[१] इयं वै कद्रूरसौ सुपर्णी छन्दांसि सौपर्णेया[२] साब्रवीदस्मै वै पितरौ पुत्रान् बिभृतस्तृतीयस्यामितो दिवि सोमस्तमा-ऽहर् तेनात्मानं निष्क्रीणीष्व ॥ १ ॥

इति मा कद्रूरवोचदिति[३] जगतीमुदपतच्चतुर्दशाक्षरा सती साप्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमीयेतां सा पशुभिश्च दीक्षया चागच्छत् तस्माज्जगती छन्दसां पशव्यतमा तस्मात् पशुमन्तं दीक्षोप-नमति[४] त्रिष्टुगुदपतत् त्रयोदशाक्षरा सती साप्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमीयेतां सा दक्षिणाभिश्च ॥ २ ॥

तपसा चागच्छत्[५] तस्मात् त्रिष्टुभो लोके माध्यन्दिने सवने दक्षिणा नीयन्त एतत् खलु वाव तप इत्याहुर्य स्वं ददातीति[६] गायत्र्युदपतच्चतुरक्षरा सत्यजया ज्योतिषा तमस्या अजाभ्यरुन्ध तदजाया अजत्वं सा सोमञ्चा-ऽहरच्चत्वारि चाक्षराणि साष्टाक्षरा समपद्यत[७] ब्रह्म-वादिनो वदन्ति ॥ ३ ॥

कस्मात्सत्याद् गायत्री कनिष्ठा छन्दसां सती यज्ञमुखं परीयायेति यदेवादः सोममा-ऽहरत् तस्माद् यज्ञमुखं पर्यैत् तस्मात्तेजस्विनीतमा[८] पद्भ्यां द्वे सवने समगृह्णान्मुखेनैकं यन्मुखेन समगृह्णात् तदधयत्तस्माद् द्वे

सवने शुक्रवती प्रातःसवनं च माध्यन्दिनं च तस्मात् तृतीयसवन ऋजीषमभिषुण्वन्ति धीतमिव हि मन्यन्ते†[९] ॥ ४ ॥

आशिरमव नयति सशुक्रत्वायाथो सम्भरत्येवैनत्[१०] तꣳ सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात्स तिस्रो रात्रीः परिमुषितोऽवसत् तस्मात् तिस्रो रात्रीः क्रीतः सोमो वसति[११] ते देवा अब्रुवन्त्स्त्रीकामा वै गन्धर्वाः स्त्रिया निष्क्रीणामेति ते वाचꣳ स्त्रियमेकहायनीं कृत्वा तया निरक्रीणन्[१२]सा रोहिद्रूपं कृत्वा गन्धर्वेभ्यः ॥ ५ ॥

अपक्रम्यातिष्ठत्तद्रोहितो जन्म[१३] ते देवा अब्रुवन्नप युष्मदक्रमीन्नास्माननुपावर्तते वि ह्वयामहा इति ब्रह्म गन्धर्वा अवदन्नगायन् देवाः सा देवान् गायत उपावर्तत तस्माद्गायन्तꣳ स्त्रियः कामयन्ते[१४] कामुका एनꣳ स्त्रियो

* यद्यपि प्रथमादिभागचतुष्टये 'तैत्तिरीयसंहिताभाष्ये ।'–इति, एतद्भागे चेत' प्राक् 'तैत्तिरीयसंहितायां ।'–इति सप्तम्यन्तं शिरोनाम व्यवहृतं मत्पूर्वैः सम्पादकैः, परं न तद् युक्ततर मिव प्रतिभाति; नाम्ना प्रथमान्तव्यवहारस्यैव भूयोदर्शनात्, पाणिनेस्तथैव शासनाच्च (पा० सू० २.३.४६.)। पूर्णच्छेदेन चन्द्रनीचिह्नेन च काण्डाद्यङ्काना मेतेनान्वयबाधप्रतीतेः सप्तम्या नैरर्थक्यञ्चेह स्फुट मिति । इत प्राप्तसम्पादनाधिकारः श्रीसत्यव्रत ।

† 'मंन्यन्ते'–इति स्वरितादिपाठः १८२० शाकीये मुम्बई-मुद्रितपुस्तके ।

भवन्ति य एवं वेदाथो य एवं विद्वानपि जन्येषु भवन्ति तेभ्य एव ददत्युत यद्बहुतयाः ॥ ६ ॥

भव(१५)न्त्येकहायन्या क्रीणाति वाचैवैनꣳ सर्वया क्रीणाति तस्मादेकहायना मनुष्या वाचं वद(१६)न्त्यकूटया ऽकर्ण्या ऽकाण्या ऽस्रोण्या ऽसप्तशफया क्रीणाति(१७) सर्वयैवैनं क्रीणाति(१८) यच्छ्वेतया क्रीणीयाद्दुश्चर्मा यजमानः स्याद्यत्कृष्णयानुस्तरणी स्यात् प्रमायुको यजमानः स्याद्यद्द्विरूपया वार्त्रघ्नी स्यात्स वान्यं जिनीयात्तं वान्यो जिनीयादरुणया पिङ्गाक्ष्या क्रीणात्येतद्वै सोमस्य रूपꣳ स्वयैवैनं देवतया क्रीणाति(१९) ॥७*॥

क्रीणीष्व[१] च[२] वदन्ति[३]† मन्यन्ते[४] गन्धर्वेभ्यो[५] बहुतयाः[६] पिङ्गाक्ष्या दश च[७]‡ ॥ ६ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥

---

* इममनुवाकं १का० २प्र० ४अ० भाष्ये ऊनविंशाध्यायं कुर्वन्नुद्धृत्य व्याख्यत्। एतच्छेषाश्रमवलम्ब्य मीमांसाया मधिकरणञ्चैक मारचितम् (३ १ ६)।

† 'निष्क्रीणीष्व दक्षिणाभिश्च वदन्ति'—इति क ङ-पुस्तकयोः पाठः। यद्यप्येतत्पूर्वं मिह क-ख पुस्तकानुसारी एव खण्डान्तसङ्कुचवाक्यपाठ आदृतः, परं मेतादृशेषु वाक्येषु खण्डान्तपदैकमात्राया सङ्ग्रहस्याभीष्टत्वप्रतीते मुम्बई-मुद्रित पाठ एव न्याय्य इति मत्वेह स एवावलम्ब्यते।

‡ इह षष्ठानुवाके 'क्रीणीष्व'—इत्यादीनि षट् खण्डान्तपदानि, तत सप्तमखण्डे 'पिङ्गाक्ष्या'—इतिपदादनन्तरपठितान्यपराणि च दश पदानि सन्तीत्यर्थः। एवं मपरत्रापि सर्वत्रैव खण्डान्तसङ्कुचवाक्येषु बोध्यम्।

तद्धिरण्यमभवत्तस्मादद्भ्यो हिरण्यं पुनन्ति(१) ब्रह्मवादिनो वदन्ति कस्मात् सत्यादनस्थिकेन प्रजाः प्रवीयन्ते* ऽस्थन्वतीर्जायन्त इति यद्धिरण्यं घृतेऽवधाय जुहोति तस्मादनस्थिकेन प्रजाः प्र वीयन्ते† ऽस्थन्वतीर्जायन्त(२) एतद्वा अग्नेः प्रियं धाम यद् घृतं तेजो हिरण्यमियन्ते शुक्र तनूरिदं वर्च इत्याह सतेजस मेवैनꣳ सतनुम् ॥ १ ॥

करोत्यथो सम्भरत्येवैनं(३) यदबद्धमवदध्याद्‡ गर्भाः प्रजानाम्परापातुकाः§ स्युर्बद्धमव दधाति गर्भाणां धृत्यै(४) निष्टर्क्यं बध्नाति प्रजानां प्रजननाय(५) वाग्वा एषा यत्सोमक्रयणी जूरसीत्याह यद्धि मनसा जवते तद्वाचा वदति धृता मनसेत्याह मनसा हि वाग् धृता जुष्टा विष्णव इत्याह ॥ २ ॥

यज्ञो वै विष्णुर्यज्ञायैवैनां जुष्टां करोति तस्यास्ते सत्यसवसः प्रसव इत्याह सवितृप्रसूतामेव वाचमव रुन्धे(१) काण्डेकाण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्त्येष खलु वा अरक्षोहतः पन्था योऽग्नेश्च

---

* 'प्रवीयन्ते' क। † 'प्रवीयन्ते' क। 'प्रवीयन्ते'—इत्येकपदम् मु०। पदकारस्तु पूर्वं प्रवीयन्त इत्येकपदं स्वीकृत्याप्यत्र पदद्वयीकृत्यापठत्।

‡ 'मव दध्याद्' इति पदच्छेदयुक्तो मु पाठ पदग्रन्थविरुद्ध इत्युपेक्षित।

§ 'पातुका' क।

सूर्यस्य च सूर्यस्य चक्षुरारुहमग्नेरक्ष्णः कनीनिकामित्याह य एवास्य लोकस्तस्मात् पन्थास्तं समारोहति(७) ॥ ३ ॥

वाग्वा एषा यत्सोमक्रयणी चिदसि मनासीत्याह शास्त्येवैनामेतत्तस्माच्छिष्टाः प्रजा जायन्ते(८) चिदसीत्याह यद्धि मनसा चेतयते तद्वाचा वदति मनासीत्याह यद्धि मनसाभिगच्छति तत्करोति धीरसीत्याह यद्धि मनसा ध्यायति तद्वाचा ॥ ४ ॥

वदति दक्षिणासीत्याह दक्षिणा ह्येषा यज्ञियासीत्याह यज्ञियामेवैनां करोति क्षत्रियासीत्याह क्षत्रिया ह्येषा दितिरस्युभयतः शीर्ष्णीत्याह यदेवादित्यः प्रायणीयो यज्ञानामादित्य उदयनीयस्तस्मादेवमाह(९) यदबद्धा स्यादयता स्याद्यत्पदिबद्धानुस्तरणी स्यात् प्रमायुको यजमानः स्यात् ॥ ५ ॥

यत्कर्णगृहीता वार्त्रघ्नी स्यात्स वान्यं जिनीयात्त वान्यो जिनीयान्मित्रस्त्वा पदि बध्नात्वित्याह मित्रो वै शिवो देवानां तेनैवैनां पदि बध्नाति(१०) पूषाध्वनः पात्वित्याहेयं वै पूषेमामेवास्या अधिपामकः समष्ट्या इन्द्रायाध्यक्षायेत्याहेन्द्रमेवास्या अध्यक्षं करोति ॥ ६ ॥

अनु त्वा माता मन्यतामनु पितेत्याहानुमतयैवैनया क्रीणाति सा देवि देवमच्छेहीत्याह देवी ह्येषा देवः

सोम इन्द्राय सोममित्याहेन्द्राय हि सोम आह्रियते यदेतद्यजुर्न ब्रूयात्पराच्येव सोमक्रयणीयाद्रुद्रस्त्वा वर्त्तयत्वित्याह रुद्रो वै क्रूरः ॥ ७ ॥

देवानां तमेवास्यै परस्ताद्दधात्यार्त्यै क्रूरमिव वा एतत्करोति यद्रुद्रस्य कीर्त्तयति मित्रस्य पथेत्याह शान्त्यै वाचा वा एष वि क्रीणीते यः सोमक्रयण्या स्वस्ति सोमसखा पुनरेहि सह रय्येत्याह वाचैव विक्रीय पुनरात्मन्वाचं धत्तेऽनुपदासुकास्य वाग्भवति य एवं वेद[११] ॥ ८* ॥

सतनु[१] माह[२] समारोहति[३] वाचा[४] स्यात्[५]† करोति[६] क्रूरो[७] वेद[८]‡ ॥ ७ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ॥

---

* इम मनुवाकं १का० २प्र० ४अ० भाष्ये एकादशाधं कुर्वन्नुद्धृत्य व्याख्यत्। तत्र मुद्रिता 'सत्यसवितु'-इत्येवमादिका (१ भा. ३३२ पृ०) एतद्विरुद्धा पाठास्त्वेतदालोचनत एव प्रायश्च संशोध्या।

† 'सतनुं विष्णुव इत्याह समारोहति ध्यायति तद्वाचा यजमान स्यात्' क,ख।

‡ संहितापाठे पदाना विभजन मन्याय्यम्, संहितात्वबाधात्, प्रातिशाख्यविहिताना ऍ-आदिविधीना मप्रवृत्ते, पदपाठस्वरापत्तेश्च। अतोऽत्र मत्पूर्वसम्पादकरीतिर्नाचानुसृता, अपि वा न च तेनाप्यनुसृतान्न तत्पूर्वसम्पादकरीतिरिति तद्रीतेरेवानुसरण मिह कृत मिति।

पट् पुदान्यनु नि क्रामति पड्डं वाङ् नाति वदत्युत संवत्सुरस्यायने यावंत्येव वाक् तामव रुन्धे[१] सप्तमे पुदे जुहोति सुप्तपंदा शक्वरी पुशवुः शक्वरी पुशूनेवाव रुन्धे सुप्त ग्राम्याः पुशवः सुप्तारुण्याः सुप्त च्छन्दाꣳस्युभयुस्या-वरुध्यै[२] वस्व्यसि रुद्रासीत्याह रूपमेवास्या एतन्महि-मानम् ॥ १ ॥

व्याचंष्टे[३] बृहुस्पतिस्त्वा सुम्ने रंण्वुत्वित्याह ब्रह्म वै देवानां बृहुस्पतिर्ब्रह्मणैवास्मै पुशूनव रुन्धे रुद्रो वसु-भिरा चिंकेत्वित्याहाहत्यै[४] पृथिव्यास्त्वा मूर्धन्ना जिघर्मि देवुयजन इत्याह पृथिव्या ह्येप मूर्धा यद्देवुयजनमि-डायाः पुद इत्याहेडायै ह्येतत्पदं यत्सोमक्रयण्यै घृत-वति स्वाहा ॥ २ ॥

इत्याह यदेवास्यै पुदाद् घृतमपीड्यत तस्मादेव-माह[५] यदध्वर्युरनुग्नावाहुतिं जुहुयादन्धोऽध्वर्युः स्याद्र-क्षाꣳसि युज्ञꣳ हन्युर्हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोऽध्वर्युर्भवति न युज्ञꣳ रक्षाꣳसि घ्नन्ति[६] काण्डेकाण्डे वै क्रियमाणे युज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति परिलिखितꣳ रक्षः परिलिखिता अरातय इत्याह रक्षसामपहत्यै ॥ ३ ॥

इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान्

द्वेष्टि यश्च वयं द्विष्म इत्याह द्वौ वाव पुरुषौ यञ्चैव द्वेष्टि यश्चैनं द्वेष्टि तयोरेवानन्तरायं ग्रीवाः कृन्तति(७) पशवो वै सोमक्रयण्यै पदं यावत् त्वूतꣳ सं वपति पशूनेवाव-रुन्धेऽस्मे राय इति सं वपत्यात्मानमेवाध्वर्युः ॥ ४ ॥

पशुभ्यो नान्तरेति त्वे राय इति यजमानाय प्र यच्छति यजमान एव रयिं दधाति तोते राय इति पत्निया अर्धो वा एष आत्मनो यत्पत्नी यथा गृहेषु निधत्ते तादृगेव तत्(८) त्वष्टीमती ते सपेयेत्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृद्रूपमेव पशुषु दधा(९)-त्यस्मै वै लोकाय गार्हपत्य आ धीयतेऽमुष्मा आहव-नीयो यद्गार्हपत्य उपवपेदस्मिन् लोके पशुमान्त्स्याद्य-दाहवनीयेऽमुष्मिन् लोके पशुमान्त्स्यादुभयोरुप वप-त्युभयोरेवैनं लोकयोः पशुमन्तं करोति(१०) ॥ ५* ॥

महिमानꣳ(१) स्वाहा(२) ऽपहत्या(३) अध्वर्यु(४)र्धीयते चतुर्विꣳशतिश्च(५) † ॥ ८ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे प्रथमप्रपाठके अष्टमोऽनुवाकः ॥

---

* इम मनुवाकं १का० २प्र० ५अ० भाष्ये दशधा विभज्योद्धृत्य व्याख्यात्। एतत्प्रथमांश मवलम्ब्य मीमांसाया मधिकरणमारचितम् (४. १. ८.)।

† प्रथमे खण्डे उपवपेदित्येकं पदम्, उप वपति इति तु पदद्वयम्; इत्थं धीयते-इत्यनन्तरपठितानि पदानि चतुर्विंशतिर्गण्यन्ते। पदविभागे चार्थः पदपाठ एवाक्लाक मेकं शरणम्। एव मपरत्रापि बोध्यम्।

ब्रह्मवादिनो वदन्ति विचित्यः सोमा३ न विचित्या३ इति* सोमो वा ओषधीनाꣳ राजा तस्मिन् यदापन्नं ग्रसितमेवास्य तद्यद्विचिनुयाद् यथा स्याद् ग्रसितं निष्खिदति तादृगेव तद्यन्न विचिनुयाद्यथाक्षन्नापन्नं विधावति तादृगेव तत् क्षोधुकोऽध्वर्युः स्यात् क्षोधुको यजमानः सोमविक्रयिन्त्सोमꣳ शोधयेत्येव ब्रूयाद्यदीतरम् ॥ १ ॥

यदीतरमुभयेनैव सोमविक्रयिणमर्पयति तस्मात् सोमविक्रयी क्षोधुको[1]ऽरुणो ह स्माहौपवेशिः सोमक्रयण एवाहं तृतीयसवनमव रुन्ध इति पशूनां चर्मन्मिमीते पशूनेवाव रुन्धे पशवो हि तृतीयꣳ सवनं[2] यं कामयेतापशुः स्यादित्यृक्षतस्तस्य मिमीतर्क्षं वा अपशव्यमपशुरेव भवति यं कामयेत पशुमान्त्स्यात् ॥ २ ॥

इति लोमतस्तस्य मिमीतैतद्वै पशूनाꣳ रूपꣳ रूपेणैवास्मै पशूनव रुन्धे पशुमानेव भव[3]त्यपामन्ते क्रीणाति सरसमेवैनं क्रीणा[4]त्यमात्योऽसीत्याहामैवैनं कुरुते शुक्रस्ते ग्रह इत्याह शुक्रो ह्यस्य ग्रहो[5]ऽनसाच्छ याति महिमानमेवास्याच्छ या[6]त्यनसा ॥ ३ ॥

* 'विचार्यमाणानाम् (पा० ८ २ ९७)'–इतीह प्लुतिः।

. अच्छं याति तस्मादनोवाह्यं॰* समे जीवन्(७) यत् खलु वा एतं॰ शीर्ष्णा हरन्ति तस्माच्छीर्षहार्यं गिरौ जीवन्(८)मभि त्यं देवं॰ सवितारमित्यतिच्छन्दसर्चा मिमीतेऽतिच्छन्दा वै सर्वाणि च्छन्दां॰सि सर्वेभिरेवैनं छन्दोभिर्मिमीते वर्ष्म वा एषा छन्दसां यदतिच्छन्दा यदतिच्छन्दसर्चा मिमीते वर्ष्मैवैनं॰ समानानां करो(९)त्येकयैकयोत्सर्गम् ॥ ४ ॥

मिमीतेऽयातयाम्नियायातयाम्नियैवैनं मिमीते तस्मान्नानावीर्या अङ्गुलयः(१०) सर्वास्वङ्गुष्ठमुप नि गृह्णाति तस्मात् समावद्वीर्योऽन्याभिरङ्गुलिभिस्तस्मात् सर्वा अनु सञ्चरति(११) यत् सह सर्वाभिर्मिमीत सं॰श्लिष्टा अङ्गुलयो जायेरन्नेकयैकयोत्सर्गं मिमीते तस्माद्विभक्ता जायन्ते(१२) पञ्च कृत्वो यजुषा मिमीते पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे पञ्च कृत्वस्तूष्णीम् ॥ ५ ॥

दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धे यद्यजुषा मिमीते भूतमेवाव रुन्धे यत्तूष्णीं भविष्यद्(१३) यद्वै तावानेव सोमः स्याद्यावन्तं मिमीते यजमानस्यैव स्यान्नापि सदस्यानां प्रजाभ्यस्त्वे-

---

* वाह्यं॰ क, ख।

त्युप समूहति सदस्यानेवान्वाभजति वाससोप नह्यति सर्वदेवत्यं वै ॥ ६ ॥

वासः सर्वाभिरेवैनं देवताभिः समर्धयति पशवो वै सोमः प्राणाय त्वेत्युप नह्यति प्राणमेव पशुषु दधाति व्यानाय त्वेत्यनु श्रन्थति व्यानमेव पशुषु दधाति तस्मात् स्वपन्तं प्राणा न जहति(१४) ॥ ७* ॥

इतरं[१] स्या[२] दनसो[३]त्सर्गन्[४] तूष्णीं[५] वै[६] त्रयस्त्रिंशच्च[७]† ॥ ८ ‡ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः ॥

---

यत्कलया ते शफेन ते क्रीणानीति पणेताऽगोअर्घं सोमं कुर्यादगोअर्घं यजमानमगोअर्घमध्वर्युं गोस्तु महिमानं नाव तिरेद्गवा ते क्रीणानीत्येव ब्रूयाद्गोअर्घ-

---

* इम मनुवाक १का० २प्र० ६व० भाष्ये चतुर्द्धधा विभज्योद्धृत्य व्याख्यत् ।

† इह सप्तमे खण्डे पदपाठानुसारत सम्, उप, अनु इति पृथक् परिगणनादेव त्रयस्त्रिंशत्-सङ्ख्या-पूरणं भवति ।

‡ "इतरम्[१] पशुमान्त्स्याद्[२] यावदनसो[३]त्सर्गन्[४] तूष्णीं[५] सर्वदेवत्यं वै[६] त्रयस्त्रिंशच्च[७] ॥ ८ ॥"—इति क, ख, ग ।

मेव सोमं करोति गोऽघर्षं यजमानं गोघर्षमध्वर्युं न गोमंहिमानमवं तिर[१]त्यजया क्रीणाति सतपसमेवैनं क्रीणाति हिरण्येन क्रीणाति सशुक्रमेव॥ १ ॥

एनं क्रीणाति धेन्वा क्रीणाति साशिरमेवैनं क्रीणात्यृषभेणं क्रीणाति सेन्द्रमेवैनं क्रीणात्यनडुहा क्रीणाति वह्निर्वा अनड्वान् वह्निनैव वह्निं यज्ञस्य क्रीणाति मिथुनाभ्यां क्रीणाति मिथुनस्यावरुध्यै वाससा क्रीणाति सर्वदेवत्यं वै वासः सर्वाभ्य एवैनं देवताभ्यः क्रीणाति दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमवं रुन्धे[२] ॥ २ ॥

तपसस्तनूरसि प्रजापतेर्वर्ण इत्याह पशुभ्य एव तदध्वर्युर्नि ह्नुत आत्मनोऽनाव्रस्काय[३] गच्छति श्रियं प्र पशूनाप्नोति य एवं वेद[४] शुक्रन्ते शुक्रेण क्रीणामीत्याह यथायजुरेवैतद्देवा वै येन हिरण्येन सोममक्रीणन् तदभीषहा पुनरा ऽददत को हि तेजसा विक्रेष्यत इति येन हिरण्येन॥ ३ ॥

सोमं क्रीणीयात्तदभीषहा पुनरा ददीत तेज एवात्मन्धत्ते[५] ऽस्मे ज्योतिः सोमविक्रयिणि तम इत्याह ज्योतिरेव यजमाने दधाति तमसा सोमविक्रयिणमर्पयति[६] यदनुपग्रथ्य हन्यादन्दशूकास्ताः समाः

सर्पाः स्वुरिदमहꣳ सर्पाणां दन्दशूकानां ग्रीवा उप ग्रथ्नामीत्याहादन्दशूकास्ताꣳ समाꣳ सर्पा भवन्ति तमसा सोमविक्रयिणं विध्यति[७] स्वान ॥ ४ ॥

भ्राजेत्याहैते वा अमुष्मिन् लोके सोममरक्षन् तेभ्योऽधि सोममाऽहरन्[८] यदेतेभ्यः सोमक्रयणान्नानुदिशेदक्रीतोऽस्य सोमः स्यान्नास्यैतेऽमुष्मिन् लोके सोमꣳ रक्षेयुर्यदेतेभ्यः सोमक्रयणाननुदिशति क्रीतोऽस्य सोमो भवत्येतेऽस्यामुष्मिन् लोके सोमꣳ रक्षन्ति[९] ॥ ५ * ॥

एव[१] रुन्धे[२] हिरण्येन[३]† स्वान[४] चतुश्चत्वारिꣳशच्च[५] ॥ १० ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः ॥

---

वारुणो वै क्रीतः सोम उपनद्धो मित्रो न एहि सुमित्रधा इत्याह शान्त्या[१] इन्द्रस्योरुमा विश दक्षिण-

---

* इम मनुवाकं १का० २प्र० ७अनु० भाष्ये नवधा विभज्योद्धृत्य व्याख्यत् ।

† "सम्युक्तमेव[१] रुन्धे[२] येन हिरण्येन[३]"—इति क, ख, ग ।

मित्याह देवा वै यꣳ सोममक्रीणन् तमिन्द्रस्योरौ दक्षिण आसादयन्नेष खलु वा एतर्हीन्द्रो यो यजते तस्माद्देवमा[२] होदायुषा स्वायुषेत्याह देवता एवान्वारभ्योत् ॥ १ ॥

तिष्ठ[३] त्युर्वन्तरिक्षमन्विहीत्याहान्तरिक्षदेवत्यो१ ह्येतर्हि सोमो[४]ऽदित्याः सदोऽस्यदित्याः सद आ सीदेत्याह यथायजुरेवैतद्[५] वि वा एनमेतदर्धयति यद्वारुणꣳ सन्तं मैत्रं करोति वारुण्यर्चाऽऽसादयति स्वयैवैनं देवतया समर्धयति[६] वाससा पर्यानह्यति सर्वदेवत्यं वै वासः सर्वाभिरेव ॥ २ ॥

एनं देवताभिः समर्धयत्यथो रक्षसामपहत्यै[७] वनेषु व्यन्तरिक्षं ततानेत्याह वनेषु हि व्यन्तरिक्षं ततान वाजमर्वत्स्वित्याह वाजꣳ ह्यर्वत्सु पयो अघ्नियास्वित्याह पयो ह्यघ्नियासु हृत्सु क्रतुमित्याह हृत्सु हि क्रतुं वरुणो विक्ष्वग्निमित्याह वरुणो हि विक्ष्वग्निं दिवि सूर्यम् ॥ ३ ॥

इत्याह दिवि हि सूर्यꣳ सोममद्रावित्याह ग्रावाणो वा अद्रयस्तेषु वा एष सोमं दधाति यो यजते तस्माद्देवमा[८] होदु त्यं जातवेदसमिति सौर्यर्चा कृष्णाजिनं प्रत्यानह्यति रक्षसामपहत्या[९] उस्रावेतं धूर्षाहावि-

त्याह यथायजुरेवैतत्(१०) प्र च्यवस्व भुवस्पत इत्याह भूतानाꣳ हि ॥ ४ ॥

एष पतिर्विश्वान्यभि धामानीत्याह विश्वानि ह्ये३- षोऽभि धामानि प्रच्यवते मा त्वा परिपरी विददित्याह यदेवादः सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमु- ष्णात्तस्मादेवमाहापरिमोषाय(११) यजमानस्य स्वस्त्य- यन्यसीत्याह यजमानस्यैवैष यज्ञस्यान्वारम्भोऽनव- च्छित्त्यै(१२) वरुणो वा एष यजमानमभ्यैति यत ॥ ५ ॥

क्रीतः सोम उपनद्धो नमो मित्रस्य वरुणस्य चक्षस इत्याह शान्त्या(१३) आ सोमं वहन्त्यग्निना प्रति तिष्ठते तौ सम्भवन्तौ यजमानमभि सम्भवतः पुरा खलु वावैष मेधायात्मानमारभ्य चरति यो दीक्षितो(१४) यदग्नीषो- मीयम् पशुमालभत आत्मनिष्क्रयण एवास्य स(१५) तस्मात्तस्य नाश्यं पुरुषनिष्क्रयण इव(१६) ह्यथो खल्वा- हुरग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्निति यदग्नी- षोमीयं पशुमालभते वार्त्रघ्न एवास्य स तस्माद्वा- श्यं(१७) वारुण्यर्चा परि चरति स्वयैवैनं देवतया परि चरति(१८) ॥ ६ * ॥

---

* १का० २प्र० ७, ८, ९ अनु० भाष्ये सामदयधा विभज्योद्धृत्य व्याख्यत् ।

उद्[१] एवं[२] सूर्यं[३] हि[४] यद्[५] आहुः-सप्तविंशतिश्च[६] ॥ ११ * ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे प्रथमप्रपाठके एकादशोऽनुवाकः ॥

(१)प्राचीनवंशं (२)यावन्त (३)ऋक्सामे वै (४)वाग्वै देवेभ्यो (५)देवा वै देवयजनं (६)कद्रूश्च (७)तद्धिरण्यं (८)षट्पदानि (९)ब्रह्मवादिनो०—०विचित्यो (१०)यत्कलया ते (११)वारुणो वै क्रीतः सोम एकादश ॥ १ † ॥

(१)प्राचीनवंशं (२)स्वाहेत्याह (३)यन्तः शरा (४)ह्यप सन् (५)तपसा च (६)यत्कर्णगृह्यो (७)नेति लोमतो (८)वारुणः षट्सप्ततिः ‡ ॥ १ ॥

इति तैत्तिरीयसंहितायां षष्ठकाण्डे
प्रथमः प्रपाठकः ॥ १ ॥

---

* "अन्वारभ्योत्[१] सर्वाभिरेव[२] सूर्यं[३] भूतानां[४] ह्येति य[५]दाहुः-सप्तविंशतिश्च ॥ ११ ॥"—इति क, ख, ग।

† प्रपाठकेऽत्र ये एकादश खण्डा, इमानि तेषां प्रतीकानि। मु०-पुस्तके त्वेकैकपदान्येवेति विशेषः।

‡ १ पृ० ८पं०, ५ पृ० ३पं०, ८पृ० १६पं०, १२ पृ० ६पं०, १६ पृ० ११पं०,२० पृ० १४पं०,२४ पृ० १५पं०, २८पृ० १५पं०। प्रपाठकेऽत्र येऽष्टौ पञ्चाशत्कानि, इमानि तेषां प्रतीकानि। मु०-पुस्तके नास्त्येतद्वाक्यम्।

# अथ तैत्तिरीयसंहितायां

## षष्ठकाण्डे

### द्वितीयप्रपाठकः ।

॥ हरिः ओम् ॥

यद्भौ विमुच्यातिथ्यं गृह्णीयाद्यज्ञं वि च्छिन्द्याद् यदुभावविमुच्य यथानागतायातिथ्यं क्रियते तादृगेव तद्विमुक्तोऽन्योऽनड्वान् भवत्यविमुक्तोऽन्योऽथातिथ्यं गृह्णाति यज्ञस्य सन्तत्यै[1] पत्न्यन्वारभते पत्नी हि पारीणह्यस्येशे पत्नियैव वानुमतं निर्वपति यद्वै पत्नी यज्ञस्य करोति मिथुनं तदथो पत्निया एव ( १ * )

एष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै[2] यावद्भिर्वै राजानुचरैरागच्छति सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते छन्दांसि खलु वै सोमस्य राज्ञोऽनुचराण्यग्नेरातिथ्यमसि विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति सोमस्यातिथ्यमसि विष्णवे त्वेत्याह त्रिष्टुभ एवैतेन करोत्यतिथेरातिथ्यमसि विष्णवे त्वेत्याह जगत्यै ( २ )

* एवमादिक खण्डविभागो न छान्दसोऽतो बन्धनीषिद्धान्तोऽङ्कपातो न्याय्य ।

एवैतेन करोत्यग्नये त्वा रायस्पोषदाने* विष्णवे त्वेत्याहानुष्टुभं एवैतेन करोति श्येनाय त्वा सोमभृते विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति(२) पञ्च कृत्वो गृह्णाति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे(३) ब्रह्मवादिनो वदन्ति कस्मात् सत्याद् गायत्रिया उभयत आतिथ्यस्य क्रियत इति यदेवादः सोममा(३)

अहरत्तस्माद् गायत्रिया उभयत आतिथ्यस्य क्रियते पुरस्ताच्चोपरिष्टाच्च(५) शिरो वा एतद्यज्ञस्य यदातिथ्यं नवकपालः पुरोडाशो भवति तस्मान्नवधा शिरो विष्यूतं(६) नवकपालः पुरोडाशो भवति ते त्रयस्त्रिकपालास्त्रिवृता स्तोमेन सम्मितास्तेजस्त्रिवृत्तेज एव यज्ञस्य शीर्षन् दधाति(७) नवकपालः पुरोडाशो भवति ते त्रयस्त्रिकपालास्त्रिवृता प्राणेन सम्मितास्त्रिवृद्वै ( ४ )

प्राणस्त्रिवृतमेव प्राणमभिपूर्वं यज्ञस्य शीर्षन् दधाति(८) प्रजापतेर्वा एतानि पक्ष्माणि यदश्ववाला ऐक्षवी तिरश्ची यदाश्ववालः प्रस्तरो भवत्यैक्षवी तिरश्ची प्रजापतेरेव तच्चक्षुः सम्भरति(९) देवा वै या आहुतीरजुहवुस्ता असुरा निष्कावमादन् ते देवाः कार्ष्मर्यमपश्यन्

---

* 'दावने' क, ग।

कर्मण्या वै कर्मैनेन कुर्वीतेति ते कार्ष्मर्यमयान् परिधीन् (५)

अकुर्वत तैर्वै ते रक्षाꣳस्यपाघ्नत यत्कार्ष्मर्यमयाः परिधयो भवन्ति रक्षसामपहत्यै[१०] सꣳ स्पर्शयति रक्षसामनन्ववचाराय[११] न पुरस्तात् परि दधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षाꣳस्यपह[१२]न्त्यूर्ध्वे समिधावा दधात्युपरिष्टादेव रक्षाꣳस्यप हन्ति[१३] यजुषान्यान्तूष्णीमन्यां मिथुनत्वाय[१४] द्वे आ दधाति द्विपाद्यजमानः प्रतिष्ठित्यै[१५] ब्रह्मवादिनो वदन्ति (६)

अग्निश्च वा एतौ सोमश्च कथा* सोमायातिथ्यं क्रियते नाग्नय इति यदग्नावग्निं मथित्वा प्रहरति तेनैवाग्नय आतिथ्यं क्रियते[१६]ऽथो खल्वाहुरग्निः सर्वा देवता इति यद्धविरासाद्याग्निं मन्थति हव्यायैवासन्नाय सर्वा देवता जनयति[१७] ॥ १ ॥

एव[१] जगत्या[२] आ[३] वै[४] † परिधीन्[५] वद[६]न्त्येकचत्वारिंशच्च ॥ १ ॥

इति तैत्तिरीयसंहितायां षष्ठकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः ‡ ॥

---

* 'कथा' मु०।

† 'पक्षिया एव[१] जगत्या[२] आ[३] त्रिवद वै[४]'-इति घ, ख, ग।

‡ इममनुवाकं १का०२प्र०१०अनु०-भाष्ये सायणाचार्या विमर्ष्योद्धृत्य व्याख्यत्।

देवासुराः संयत्ता आसन् ते देवा मिथो विप्रिया आसन्नेऽन्योऽन्यस्मै ज्यैष्ठ्यायातिष्ठमानाः पञ्चधा व्यक्रामन्नग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैस्तेऽमन्यन्तासुरेभ्यो वा इदं भ्रातृव्येभ्यो रध्यामो यन्मिथो विप्रियाः स्मो या न इमाः प्रियास्तनुवस्ताः समवद्यामहै ताभ्यः स निर्ऋच्छाद्यः (१)

नः प्रथमोऽन्योऽन्यस्मै द्रुह्यादिति तस्माद्यः स तानूनप्त्रिणां प्रथमो द्रुह्यति स आर्तिमार्च्छति[1] यत्तानूनप्त्रꣳ समवद्यति भ्रातृव्याभिभूत्यै भवत्यात्मना परास्य भ्रातृव्यो भवति[2] पञ्च कृत्वोऽव द्यति पञ्चधा हि ते तत्समवाद्यन्ताथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे[3] आपतये त्वा गृह्णामीत्याह प्राणो वै (२)

आपतिः प्राणमेव प्रीणाति परिपतय इत्याह मनो वै परिपतिर्मन एव प्रीणाति तनूनप्त्र इत्याह तनुवो हि ते ताः समवाद्यन्त शाक्वरायेत्याह शक्त्यै हि ते ताः समवाद्यन्त शक्मन्नोजिष्ठायेत्याहौजिष्ठꣳ हि ते तदात्मनः समवाद्यन्ता[4]ऽनाधृष्टमस्यनाधृष्यमित्याहानाधृष्टꣳ ह्येतदनाधृष्यन्देवानामोजः (३)

इत्याह देवानाꣳ ह्येतदोजोऽभिशस्तिपा अनभिशस्तेन्यमित्याहाभिशस्तिपा ह्येतदनभिशस्तेन्य[4]मनु मे दीक्षां दीक्षापतिर्मन्यतामित्याह यथायजुरेवैतद्[6] घृतं वै देवा वज्रं* कृत्वा सोममघ्नन्नन्तिकमिव खलु वा अस्यैतच्चरन्ति यत्तानूनप्त्रेण प्रचर[7]न्त्यꣳशुरꣳशुस्ते देव सोमाप्यायतामित्याह यत् ( ४ )

एवास्यापुवायते यन्मीयते तदेवास्यैतेनाप्याययत्या तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेत्याहो भावेवेन्द्रञ्च सोमञ्चाप्याययत्या प्यायय सखीन्त्सन्या मेधयेत्याहर्त्विजो वा अस्य सखायस्तानेवाप्याययति स्वस्ति ते देव सोमसुत्यामशीय ( ५ )

इत्याहाशिषमेवैतामाशास्ते[8] प्र वा एतेऽस्माल्लोकाच्च्यवन्ते ये सोममाप्याययन्त्यन्तरिक्षदेवत्यो हि सोम आप्यायित एष्टा रायः प्रेषे भगायेत्याह द्यावापृथिवीभ्यामेव नमस्कृत्यास्मिन् लोके प्रति तिष्ठन्ति[9] देवासुराः संयत्ता आसन् ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निः सर्वा देवता इति ते ( ६ )

अग्निमेव वरूथं कृत्वासुरानभ्यभवन्नग्निमिव खलु वा एष प्र विशति योऽवान्तरदीक्षामुपैति भ्रातृव्या-

* 'देवावज्रं' मु०।

भिभूत्य भवत्यात्मना परास्य भ्रातृव्यो भव[१०]त्यात्मानमेव दीक्षया पाति प्रजामवान्तरदीक्षया[११] सन्तरां मेखलाꣳ समायच्छते प्रजा ह्यात्मनोऽन्तरतरा तप्तव्रतो भवति मदन्तीभिर्मार्जयते निर्ह्यग्निः शीतेन वायति समिध्य[१२] या ते अग्ने (७)

रुद्रिया तनूरित्याह स्वयैवैनं देवतया* व्रतयति सयोनित्वाय शान्त्यै[१३] ॥ २ ॥

यो[१] वा[२] ओजो[३] य[४]द्दशीय[५] ते[६]ऽग्न[७] † एकादश च ॥ २ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे द्वितीयप्रपाठके द्वितीयोऽनुवाकः ‡ ॥

---

तेषामसुराणां तिस्रः पुर आसन्नयस्मय्यवमाथ रजताथ हरिणी ता देवा जेतुं नाशक्नुवन् ता उपसदैवाजिगीषन्, तस्मादाहुर्यश्चैवं वेद यश्च नोपसदा वै महापुरं जयन्तीति त इषुꣳ समस्कुर्वताग्निमनीकꣳ सोमꣳ शल्यं विष्णुं तेजनं तेऽब्रुवन् क इमामसिष्यतीति (१)

---

* 'स्वयैवैनं देवतया' मु०।

† 'यो[१] वा[२] ओज[३] आह य[४]द्दशी[५]येति ते[६]ऽग्न' क, ख, ग।

‡ इमम् १का०२प्र०१०,११अनु०-भाष्ये अयोदशधा विभज्योद्धृत्य व्याख्यत्।

रुद्र इत्यब्रुवन्रुद्रो वै क्रूरः सोऽस्त्वित्ति सो ऽब्रवीद्वरं वृणा अहमेव पशूनामधिपतिरसानीति तस्माद्रुद्रः पशूनामधिपतिस्ताꣳ रुद्रोऽवासृजत्स तिस्रः पुरो भित्त्वैभ्यो लोकेभ्योऽसुरान् प्राणुदत(१) यदुपसद उपसद्यन्ते भ्रातृव्यपराणुत्त्यै(२) नान्यामाहुतिं पुरस्ताज्जुहुयाद्यदन्यामाहुतिं पुरस्ताज्जुहुयात् ( २ )

अन्यन्मुखं कुर्यात्(३) स्रुवेणाघारमा घारयति यज्ञस्य प्रज्ञात्यै(४) पराङतिक्रम्य जुहोति परा च एवैभ्यो लोकेभ्यो यजमानो भ्रातृव्यान् प्र णुदते(५) पुनरत्याक्रम्योपसदं जुहोति प्रणुद्यैवैभ्यो लोकेभ्यो भ्रातृव्यान् जित्वा भ्रातृव्यलोकमभ्यारोहति(६) देवा वै याः प्रातरुपसद उपासीदन्नह्नस्ताभिरसुरान् प्राणुदन्त याः सायꣳ रात्रियै ताभिर्यत्सायम्प्रातरुपसद- ( ३ )

उपसद्यन्तेऽहोरात्राभ्यामेव तद्यजमानो भ्रातृव्यान् प्रणुदते(७) याः प्रातर्याज्याः स्युस्ताः साय पुरोनुवाक्याः कुर्यादयातयामत्वाय(८) तिस्र उपसद उपैति त्रय इमे लोका इमानेव लोकान् प्रीणाति(९) षट् सम्पद्यन्ते षड्वा ऋतव ऋतूनेव प्रीणाति(१०) द्वादशाहीने सोम उपैति द्वादश मासाः संवत्सरः संवत्सरमेव प्रीणाति(११) चतुर्विꣳ शतिः सम ( ४ )

पद्यन्ते चतुर्विंशतिरर्द्धमासा अर्द्धमासानेव प्रीणा[12]त्यारांग्रामवान्तरदीक्षामुपेयाद्यः कामयेतास्मिन्मे लोकेऽर्द्धुकः स्यादित्येकमग्रेऽथ द्वावथ त्रीनथ चतुर एषा वा आरांग्रावान्तरदीक्षास्मिन्नेवास्मै लोकेऽर्द्धुकम् भवति[13] परोवरीयसीमवान्तरदीक्षामुपेयाद्यः कामयेतामुष्मिन् मे लोकेऽर्द्धुकः स्यादिति चतुरोऽग्रे (५)

अथ त्रीनथ द्वावथैकमेषा वै परोवरीयस्यवान्तरदीक्षामुष्मिन्नेवास्मै लोकेऽर्द्धुकं भवति[14] ॥ ३ ॥

इति[1] जुहुया[2]दुपसदः[3] स[4]मग्रे[5] षोडश च * ॥ ३ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः † ॥

---

सुवर्गं वा एते लोकं यन्ति य उपसद उपयन्ति तेषां य उन्नयते हीयत एव स नोदनेषीति सूंनीयमिव[1] यो वै स्वार्थेनां यताः श्रान्तो हीयत उत स निष्याय सह वसति[2] तस्मात्सकृदुन्नीय नापरमुन्नयेत[3] दध्नोन्नयेतैतद्वै पशूनाः रूपः रूपेणैव पशूनव रुन्धे[4] (१)

---

* 'क्षुभियणीति[1] जुहुयात्[2] गायम्भानुपसद[3]श्चतुर्विंशतिः सर्म[4] चतुरोऽग्रे[5] षोडश च'-इति क, ख, ग।

† इममनुवाकं १का०२प०११अनु०-भाष्ये चतुर्धाधा विभज्योद्दृत्य व्यारयत्।

यज्ञो देवेभ्यो निलायत विष्णूरूपं कृत्वा स पृथिवीं प्राविशत् तं देवा हस्तान्त्संरभ्यैच्छन् तमिन्द्र उपर्युपर्यत्यक्रामत्सोऽब्रवीत्को* मायमुपर्युपर्यत्यक्रमीदित्यहं दुर्गे हन्तेत्यथ कस्त्वमित्यहं दुर्गादाहर्तेति सोऽब्रवीद् दुर्गे वै हन्तावोचथा वराहोऽयं वाममोषः ( २ )

सप्तानां गिरीणां परस्ताद्वित्तं वेद्यमसुराणां बिभर्ति तं जहि यदि दुर्गे हन्तासीति स दर्भपुञ्जीलमुद्वृह्य सप्त गिरीन् भित्वा तमहन्त्सोऽब्रवीद् दुर्गाद्वा आहर्तावोचथा एत माहरेति तमेभ्यो यज्ञ एव यज्ञ माहरद्यत्तद्वित्तं वेद्यमसुराणामविन्दन्त तदेकं वेद्यै वेदित्व[५]मसुराणाम् ( ३ )

वा इयमग्र आसीद्यावदासीनः परापश्यति तावद् देवानां ते देवा अब्रुवन्नस्त्वेव नोऽस्यामपीति कियद्वो† दास्याम इति यावदियः सलावृकी त्रिः परिक्रामति तावन्नो दत्तेति स इन्द्रः सलावृकी रूपं कृत्वेमां त्रिः सर्वतः पर्यक्रामत्तदिमामविन्दन्त यदिमामविन्दन्त तद्वेद्यै वेदित्वम्[६] ( ४ )

सा वा इयः सर्वैव वेदिरियति शक्ष्यामीति त्वा‡

* '०त्सोऽब्रवीत्को' मु० ।
† 'कर्यद्वो' ग ।　　‡ 'तुवा' ग ।

अवमाय यजन्ते[७] त्रिंशत्पदानि पश्चात्तिरश्ची भवति षट्त्रिंशत्प्राची चतुर्विंशतिः पुरस्तात्तिरश्ची दशदश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धे[८] उद्धन्ति यदेवास्या अमेध्यन्तदपहु[९]न्त्युद्धन्ति तस्मादोषधयः परा भवन्ति (५)

बर्हिः* स्तृणाति तस्मादोषधयः पुनरा भव[१०]न्त्युत्तरं बर्हिष उत्तरबर्हिः स्तृणाति प्रजा वै बर्हिर्यजमान उत्तरबर्हिर्यजमान मेवायजमानादुत्तरं करोति तस्माद्यजमानो यजमानादुत्तरः[११] ॥ ४ ॥

रुन्धे[१] वाममोपो[२] ऽसुराणां[३] वेदित्वं[†] भवन्ति[४] पञ्चविंशतिश्च ॥ ४ ॥

इति तैत्तिरीयसंहितायां

षष्ठकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाकः‡ ॥

---

यदा अनीशानो भारमादत्ते वि वै स लिशते यद्द्वादश साह्नस्योपसदः स्युस्तिसोऽहीनस्य यज्ञस्य वि-

---

* क पुस्तके लिख सर्वत्रैव बर्हिं-शब्दोऽन्तस्थ-वकारादिः (वुर्हिं)।

† 'वेदित्व मसुराणां'-इति क, ख, ग ।

‡ इमन्तु १का० २प्र० ११अनु०-भाष्ये एकादशधा विभज्योद्धृत्य व्याख्यात् ।

लोम क्रियेत तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य यज्ञस्य सवीर्यत्वायाथो सलोम क्रियते(१) वत्सस्यैकः स्तनो भागी हि सोऽथैकꣳ स्तनं व्रत * मुपैत्यथ द्वावथ त्रीनथ चतुर एतद्वै (१)

क्षुरपवि नाम व्रतं येन प्र जातान् भ्रातृव्यान्नुदते प्रति जनिष्यमाणानथो कनीयसैव भूय उपैति(२) चतुरोऽग्रे स्तनान् व्रतमुपैत्यथ त्रीनथ द्वावथैक मेतद्वै सुजघनं नाम व्रतं तपस्यꣳ सुवर्ग्यमथो प्रैव जायते प्रजया पशुभि(३)र्यवागू राजन्यस्य व्रतं क्रूरेव वै यवागूः क्रूर इव (२)

राजन्यो वज्रस्य रूपꣳ समृद्ध्या(४) आमिक्षा वैश्यस्य पाकयज्ञस्य रूपं पुष्ट्यै(५) पयो ब्राह्मणस्य तेजो वै ब्राह्मणस्तेजः पयस्तेजसैव तेजः पय आत्मन्धत्तेऽथो पयसा वै गर्भा वर्द्धन्ते गर्भ इव खलु वा एष यद्दीक्षितो यदस्य पयो व्रतम् भवत्यात्मान मेव तद्वर्धयति(६) त्रिव्रतो वै मनुरासीद् द्विव्रता असुरा एकव्रताः (३)

देवाः प्रातर्मध्यन्दिने सायं तन्मनोर्व्रतमासीत् पाकयज्ञस्य रूपं पुष्ट्यै प्रातश्च सायञ्चासुराणां निर्मध्यं क्षुधो रूपं ततस्ते परा भवन्मध्यन्दिने मध्यरात्रे देवा-

* क पुस्तके लिङ्ग सर्वत्रैव व्रतशब्द स्योप-मकारादिः (व्रत)।

नां ततस्ते ऽभवन् सुवर्गं लोकमायन्(७) यदस्य मध्यन्दिने मध्यरात्रे व्रतं भवति मध्यतो वा अन्नेन भुञ्जते मध्यत एव तदूर्जन्धत्ते भ्रातृव्याभिभूत्यै भवत्यात्मना (४)
परास्य भ्रातृव्यो भवति(८) गर्भो वा एष यद्दीक्षितो योनिर्दीक्षितविमितं यद्दीक्षितो दीक्षितविमितात् प्रवसेद्यथा योनेर्गर्भः स्कन्दति तादृगेव तन्न प्रवस्तव्यमात्मनो गोपीथा(९)यैष वै व्याघ्रः कुलगोपो यदग्निस्तस्माद्यद्दीक्षितः प्रवसेत्स एनमीश्वरोऽनूत्थाय हन्तोर्न प्रवस्तव्यमात्मनो गुप्त्यै(१०) दक्षिणतः शय एतद्वै यजमानस्य (५)
आयतनः स्व एवायतने शये(११) ऽग्निमभ्यावृत्य शये देवता एव यज्ञमभ्यावृत्य शये(१२) ॥ ५ ॥
वा[१] इवै[२]कव्रता[३] * आत्मना[४] यजमानस्य[५] चयोदश च ॥ ५ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः† ॥

---

* 'एतद्वै[१] क्रूर इवै[२]-कव्रता'-इति क, ख, ग।
† इममनुवाकं १का०२प्र०११अनु०-भाष्ये द्वादशधा विभज्योद्धृत्य व्याख्यत्।

पुरोहविषि देवयजने याजयेद्यं कामयेतोपैनमुत्त-
रो यज्ञो नमेदभि सुवर्गं लोकं जयेदि(१)त्येतद्वै पुरो
हविर्देवयजनं यस्य होता प्रातरनुवाक मनुब्रुवन्न-
ग्निमप आदित्यमभि विपश्य(२)त्युपैन मुत्तरो यज्ञो
नमत्यभि सुवर्गं लोकं जय(३)त्याप्ते देवयजने याजयेद्
भ्रातृव्यवन्त(४) पन्थां वाधिस्पर्शयेत्कर्त्तं वा यावन्नानसे
यातवै (१)

न रथायैतद्वा आप्तं देवयजन(५)माप्नोत्येव भ्रातृव्यं
नैनं भ्रातृव्य आप्नो(६)त्येकोन्नते देवयजने याजयेत्
पशुकाम(७)मेकोन्नताद्वै देवयजनादङ्गिरसः पशूनसृज-
न्ता(८)ऽन्तरा सदोहविर्धाने उन्नतः स्यादेतद्वा एकोन्नतं
देवयजनम्(९) पशुमानेव भवति(१०) त्र्युन्नते देवयजने
याजयेत् सुवर्गकामं(११) त्र्युन्नताद्वै देवयजनादङ्गिरसः
सुवर्गं लोकमायन्(१२) नन्तराहवनीयञ्च हविर्धा-
नञ्च (२)

उन्नतः स्यादन्तरा हविर्धानञ्च सदश्चान्तरा सदश्च
गार्हपत्यञ्चैतद्वै त्र्युन्नतं देवयजनः(१३) सुवर्गमेव लोक-
मेति(१४) प्रतिष्ठिते देवयजने याजयेत् प्रतिष्ठाकाम(१५)
मेतद्वै प्रतिष्ठितं देवयजनं यत्सर्वतः समं(१६) प्रत्येव
तिष्ठति(१७) यत्रान्या अन्या ओषधयो व्यतिषक्ताः

स्युस्तयाजयेत् पशुकाम(१८) मेतद्वै पशूनाꣳ रूपꣳ रूपेणै-वास्मै पशून् (३)

अवं रुन्धे(१९) पशुमानेव भवति(२०) निर्ऋतिगृहीते देवयजने याजयेद्(२१) यं कामयेत निर्ऋत्यास्य यज्ञं ग्राहयेयमित्येतद्वै निर्ऋतिगृहीतं देवयजनं यत् सदृश्यै सत्या ऋक्षं(२२) निर्ऋत्यैवास्य यज्ञं ग्राहयति(२३) व्यावृत्त देवयजने याजयेद् व्यावृत्काम यं पात्रे वा तल्पे वा मीमाꣳसेरन्(२४) प्राचीनमाहवनीयात् प्रवणꣳ स्यात्प्र-तीचीनं गार्हपत्यादेतद्वै व्यावृत्तं देवयजनं(२५) वि पाप्मना (४)

भ्रातृव्येणाऽऽवर्त्तते नैनं पात्रे न तल्पे मीमाꣳसन्ते(२६) कार्ये देवयजने याजयेद्भूतिकामं(२७) कार्यो वै पुरुषो(२८) भवत्येव(२९) ॥ ६ ॥

यातवे[१] च[२]* पशून्[३] पाप्मना[४] ऽष्टादश च ॥ ६॥

इति तैत्तिरीयसंहितायां
पष्ठकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः †॥

---

* 'यातवे[१] हविर्धाने च[२]' इति क, ख, ग।

† इमच १का० २प्र० ११अनु०-भाष्ये उत्तचिग्रदश्च कुर्वन्नुद्धृत्य व्याख्यत्।

तेभ्य उत्तरवेदिः सिꣳही रूपं कृत्वोभयानन्तरापक्रम्यातिष्ठत् ते देवा अमन्यन्त यतरान् वा इय मुपावर्त्स्यति त इदं भविष्यन्तीति तामुपा मन्त्रयन्त सा ब्रवीदर' वृणै सर्वान्मया कामान् व्यश्नवथ पूर्वान्तु मामे राहुतिरश्नवता इति तस्मादुत्तरवेदिं पूर्वामग्नेर्व्याघारयन्ति वारेवृतꣳ ह्यस्य[1] शम्यया परिमिमीते (१)

मात्रैवास्य साथो युक्तेनव युक्तमव रुन्धे[2] वित्तायनी मेऽसीत्याह वित्ता ह्येनानावत् तिक्तायनी मेऽसीत्याह तिक्तान् ह्येनानावदवतान्मा नाथितमित्याह नाथितान् ह्येनानावदवतान्मा व्यथितमित्याह व्यथितान् ह्येनानावद्[3] विदेरग्निर्नभो नाम (२)

अग्ने अङ्गिर इति त्रिर्हरति य एवैषु लोकेष्वग्नयस्तानेवाव रुन्धे तूष्णीं चतुर्थꣳ हरत्यनिरुक्तमेवाव रुन्धे[4] सिꣳहीरसि महिषीरसीत्याह सिꣳहीह्येषा रूपं कृत्वोभयानन्तरापक्रम्यातिष्ठ[5]दुरु प्रथस्वोरु ते यज्ञपतिः प्रथतामित्याह यजमानमेव प्रजया पशुभिः प्रथयति ध्रुवा (३)

असीति सꣳ हन्ति धृत्यै देवेभ्यः शुन्धस्व देवेभ्यः शुम्भस्वेत्यव चोक्षति प्र च किरति शुध्या[6] इन्द्रघोषस्त्वा वसुभिः पुरस्तात् पात्वित्याह दिग्भ्य एवैनां

प्रोक्षति[७] देवाश्चेदुत्तरवेदिरुपावर्त्तीहैव वि जयामहा इत्यसुरा वज्रमुद्यत्य देवानभ्यायन्त तानिन्द्रघोषो वसुभिः पुरस्तादप (४)

अनुदत मनोजवाः पितृभिर्दक्षिणतः प्रचेता रुद्रैः पश्चाद्विश्वकर्माऽऽदित्यैरुत्तरतो[८] यदेवमुत्तरवेदिं प्रोक्षति दिग्भ्य एव तद्यजमानो भ्रातृव्यान् प्र णुदत[९] इन्द्रो यतीन्त्सालावृकेभ्यः प्रायच्छत्तान् दक्षिणत उत्तरवेद्या आदन्यत् प्रोक्षणीनामुच्छिष्येत तद्दक्षिणत उत्तरवेद्यै नि नयेद् यदेव तत्र क्रूरं तत्तेन शमयति[१०] यन्द्विष्यात्तं ध्यायेच्छुचा (५)

एवैनमर्पयति[११] ॥ ७ ॥

मिमीते[१] नाम[२] भुवा[३]ऽप[४]शुचा[५] चीणि च ॥७॥

इति तैत्तिरीयसंहितायां

षष्ठकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः* ॥

---

सोत्तरवेदिरब्रवीत्सर्वान्मया कामान् व्यश्नवथेति ते देवा अकामयन्तासुरान् भ्रातृव्यानभि भवेमेति

---

* इमम् १का॰ २प्र॰ १२अनु॰-भाष्ये एकादशधा विभज्योद्धृत्य व्याख्यत् ।

तेऽजुहवुः सिꣳहीरसि सपत्नसाही स्वाहेति तेऽसुरान् भ्रातृव्यानभ्यभवन् तेऽसुरान् भ्रातृव्यानभिभूयाकामयन्त प्रजां विन्देमहीति तेऽजुहवुः सिꣳहीरसि सुप्रजावनिः स्वाहेति ते प्रजामविन्दन्त ते प्रजां वित्त्वा (१)

अकामयन्त पशून्विन्देमहीति तेऽजुहवुः सिꣳहीरसि रायस्पोषवनिः स्वाहेति ते पशूनविन्दन्त ते पशून्वित्त्वाऽकामयन्त प्रतिष्ठां विन्देमहीति तेऽजुहवुः सिꣳहीरस्यादित्यवनिः स्वाहेति त इमां प्रतिष्ठामविन्दन्त त इमां प्रतिष्ठां वित्त्वाऽकामयन्त देवता आशिष उपेयामेति तेऽजुहवुः सिꣳहीरस्या वह देवान् देवयते (२)

यजमानाय स्वाहेति ते देवता आशिष उपायन्[1] पञ्च कृत्वो व्याघारयति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे[2] ऽक्ष्णया व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै[3] भूतेभ्यस्त्वेति स्रुचमुद्गृह्णाति य एव देवा भूतास्तेषां तद्भागधेयं तानेव तेन प्रीणाति[4] पौतुद्रवान् परिधीन् परि दधात्येषाम् (३)

लोकानां विधृत्या[5] अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्नि-

बिभेदित्थं वाव स्य आर्त्तिमारिष्यतीति स निलायत स यां वनस्पतिष्ववसत्तां पूतुद्रौ यामोषधीषु ताꣳ सुगन्धितेजने यां पशुषु तां पेत्वस्यान्तरा शृङ्गे तं देवताः प्रैषमैच्छन् तमन्वविन्दन् तमब्रुवन् ( ४ )

उप न आ वर्त्तस्व हव्यन्नो वहेति सोऽब्रवीद्वरं वृणै यदेव गृहीतस्याहुतस्य बहिः*परिधि स्कन्दात् तन्मे भ्रातृणाम् भागधेयमसदिति तस्माद्यद् गृहीतस्याहुतस्य बहिःपरिधि स्कन्दति तेषां तद्भागधेयं तानेव तेन प्रीणाति सोऽमन्यतास्थन्वन्तो मे पूर्वे भ्रातरः प्रामेषतास्थानि शातया इति स यानि ( ५ )

अस्थान्यशातयत तत् पूतुद्र्वभवद्यन्मांसमुपमृतं तद्गुल्गुलु(१) यदेतान्त्संभारान्त्संभरत्यग्निमेव तत्संभरत्यग्नेः(२) पुरीषमसीत्याहाग्नेर्ह्येतत् पुरीषं यत्संभारा(३) अथो खल्वाहुरेते वावैनं ते भ्रातरः परिश्रेरे यत् पौतुद्रवाः परिधय इति(४) ॥ ८ ॥

वित्वा(१) देवयुत(२) एषा(३) मब्रुवन्(४) यानि(५) चतुश्चत्वारिंशच्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे द्वितीयप्रपाठकेऽष्टमोऽनुवाकः † ॥

---

* 'बहिः'—इति क । एवं सिद्ध उत्तरत्रापि ।

† इममनुवाकं १का० २प्र० १२अनु०-भाष्ये नवधा विभज्योद्धृत्य व्याख्यत् ।

बद्धमव स्यति वरुणपाशादेवैनं मुञ्चति प्र णेनेक्ति मेध्यमेवैनं करोति[१] सावित्रियर्चा हुत्वा हविर्धाने प्र वर्तयति सवितृप्रसूत एवैने प्र वर्तयति[२] वरुणो वा एष दुर्वागुभयतो बद्धो यदक्षः स यदुत्सर्जेद्यजमानस्य गृहानभ्युत्सर्जेत्सुवाग्देव दुर्याꣳ आ वदेत्याह गृहा वै दुर्याः शान्त्यै[३] पत्नी ( १ )

उपानक्ति पत्नी हि सर्वस्य मित्रं मित्रत्वाय यद्वै पत्नी यज्ञस्य करोति मिथुनं तद्यो पत्निया एवैष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै[४] वर्त्मना वा अन्वित्य यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति वैष्णवीभ्यामृग्भ्यां वर्त्मनोर्जुहोति यज्ञो वै विष्णुर्यज्ञादेव रक्षाꣳस्यप हन्ति[५] यदध्वर्युरनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः स्याद्रक्षाꣳसि यज्ञꣳ हन्युः ( २ )

हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोऽध्वर्युर्भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति[६] प्राची प्रेतमध्वरं कल्पयन्ती इत्याह सुवर्गमेवैनं लोकं गमय[७]त्यत्र रमेथां वर्ष्मन् पृथिव्या इत्याह वर्ष्म ह्येतत् पृथिव्या यद्देवयजनꣳ[८] शिरो वा एतद् यज्ञस्य यद्धविर्धानं दिवो वा विष्णवुत वा पृथिव्याः ( ३ )

इत्याशीर्पदयर्चा* दक्षिणस्य हविर्धानस्य मेथीं नि हन्ति शीर्षत एव यज्ञस्य यजमान आशिषोऽव रुन्धे(९) दण्डो वा औपरस्तृतीयस्य हविर्धानस्य वषट्कारेणाक्षमच्छिनद्यत् तृतीयं छदिर्हविर्धानयोरुदाह्रियते तृतीयस्य हविर्धानस्यावरुध्यै(१०) शिरो वा एतद् यज्ञस्य यद्धविर्धानं विष्णो रराटमसि विष्णोः पृष्ठमसीत्याह तस्मादेतावद्धा शिरो विष्यूत(११) विष्णोः (४)

स्यूरसि विष्णोर्ध्रुवमसीत्याह वैष्णवꣳ हि देवतया हविर्धान(१२) यं प्रथमं ग्रन्थिं ग्रथ्नीयाद्यत्तन्न विस्रꣳसयेदमेहेनाध्वर्युः प्र मीयेत तस्मात्स विस्रस्यः(१३) ॥ ९ ॥

पत्नी[१] हन्युः[२] पृथिव्या[३] विष्णोः[४] † षड्विꣳशतिश्च ॥ ९ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः ‡ ॥

---

* इति + आशीर्पदया + ऋचा। आशीर्पदयेति साहितिको रेफ, 'आशीर्पदयेत्याशी ऽपदया'—इतिपदपाठश्रुते। 'आशीर्वदया'—इति क-पाठस्तथा भाष्ये मुद्रितपाठश्च (१भा० ४२८ पृ०) प्रामादिक। 'आशीर्षदया'—इति मु०-पाठस्तु मुद्राकरप्रमादज स्पष्टम्।

† "पत्नी[१] हन्यु[२]र्वा पृथिव्या[३] विष्यूत विष्णो [४]"—इति क, ख, ग।

‡ इमम् १का० २प्र० १३अनु०-भाष्ये त्रयोदशधा विभज्योद्धृत्य व्याख्यत्।

देवस्य त्वा सवितुः प्रसव इत्यभ्रिमा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्ताम् पूष्णो हस्ताभ्यामित्याह यत्यै[१] वज्र इव वा एषा यदभ्रिरभ्रिरसि नारिरसीत्याह शान्त्यै[२] काण्डेकाण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति परिलिखितꣳ रक्षः परिलिखिता अरातय इत्याह रक्षसामपहत्यै ( १ )

इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इत्याह द्वौ वाव पुरुषौ यं चैव द्वेष्टि यश्चैनं द्वेष्टि तयोरेवानन्तरायं ग्रीवाः कृन्तति[३] दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेत्याहैभ्य एवैनां लोकेभ्यः प्रोक्षति[४] परस्तादर्वाचीं प्रोक्षति तस्मात् ( २ )

परस्तादर्वाचीं मनुष्या ऊर्जमुप जीवन्ति[५] क्रूरमिव वा एतत्करोति यत्खनत्यपोऽव नयति शान्त्यै[६] यवमतीरव नयत्यूर्ग् वै यव ऊर्गुदुम्बर ऊर्जैवोर्जꣳ समर्धयति[७] यजमानेन सम्मितौदुम्बरी भवति यावानेव यजमानस्तावतीमेवास्मिन्नूर्जं दधाति[८] पितृणाꣳ सदनमसीति बर्हिरव स्तृणाति पितृदेवत्यम् ( ३ )

ह्येतद्यन्निखातं[९] यद्बर्हिरनवस्तीर्य मिनुयात् पितृदेवत्या निखाता स्याद् बर्हिरवस्तीर्य मिनोत्यस्यामे-

वैनां मिनोत्यथो स्वारुहमेवैनं करो[10]त्युद्दिवꣳ स्तभानाऽन्तरिक्षं पृणेत्याहैषां लोकानां विधृत्यै[11] द्युतानस्त्वा मारुतो मिनोत्वित्याह द्युतानो ह स्म वै मारुतो देवानामौदुम्बरीं मिनोति तेनैव (४)

एनां मिनोति[12] ब्रह्मवनिं त्वा क्षत्रवनिमित्याह यथायजुरेवैतद्[13] घृतेन द्यावापृथिवी आ पृणेथामित्यौदुम्बर्यां जुहोति द्यावापृथिवी एव रसेनान[14]क्त्यान्तमन्ववस्रावयत्यान्तमेव यजमानं तेजसान[15]क्त्यैन्द्रमसीति·च्छदिरधि नि दधात्यैन्द्रꣳ हि देवतया सदो विश्वजनस्य च्छायेत्याह विश्वजनस्य ह्येषा छाया यत्सदो नवच्छदि[16] (५)

तेजस्कामस्य मिनुयात् त्रिवृता स्तोमेन सम्मितं तेजस्त्रिवृत् तेजस्व्येव भवत्येकादशच्छदीन्द्रियकामस्यैकादशाक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुगिन्द्रियाव्येव भवति पञ्चदशच्छदि भ्रातृव्यवतः पञ्चदशो वज्रो भ्रातृव्याभिभूत्यै सप्तदशच्छदि प्रजाकामस्य सप्तदशः प्रजापतिः प्रजापतेराप्त्या एकविꣳशतिच्छदि प्रतिष्ठाकामस्यैकविꣳशः स्तोमानां प्रतिष्ठा प्रतिष्ठित्या[17] उदरं वै सद ऊर्गुदुम्बरो मध्यत औदुम्बरीं मिनोति मध्यत एव प्रजानामूर्जं दधाति तस्मात् (६)

मध्यत ऊर्जा भुञ्जते[१८] यजमानलोके वै दक्षिणानि च्छदींष्यपि भ्रातृव्यलोक उत्तराणि दक्षिणान्युत्तराणि करोति यजमानमेवायजमानादुत्तरं करोति तस्माद् यजमानोऽयजमानादुत्तरो[१९]ऽन्तर्वर्त्तान् करोति व्यावृत्त्यै तस्मादरण्यं प्रजा उप जीवन्ति[२०] परि त्वा गिर्वणो गिर इत्याह यथायजुरेवैत[२१]दिन्द्रस्य स्यूरसीन्द्रस्य ध्रुवमसीत्याहैन्द्रं हि देवतया सदः[२२] (७) यं प्रथमं ग्रन्थिं ग्रथ्नीयाद्यत्तन्न विस्रंसयेदमेहेनाध्वर्युः प्र मीयेत तस्मात्स विस्रस्यः[२३] ॥ १० ॥

अपहत्यै[१] तस्मात्[२] पितृदेवत्य[३] मेव[४] नवच्छदि[५]* तस्मात्[६] सदः[७] पञ्चदश च ॥ १० ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः† ॥

---

शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवा हविर्धाने खायन्ते तस्माच्छीर्षन् प्राणा[१] अधस्तात् खायन्ते तस्मादधस्ताच्छीर्ष्णः प्राणा[२] रक्षोहणो वलगहनो वैष्णवान् खनामीत्याह वैष्णवा हि देवतयो-

* 'न्तेनैव[४]'—इति क, ख, ग।

† इदमनु १का० ३प्र० १अनु०-भाष्ये त्रयोविंशतिधा विभज्योद्धृत्य व्याख्यात।

परवा[६] असुरा वै निर्यन्तो देवानां प्राणेषु वलगान् न्यखनन् तान् बाहुमात्रेऽन्वविन्दन् तस्माद्बाहुमात्राः खायन्त[७] इदमहं तं वलगमुद्वपामि ( १ )

यन्नः समानो यमसमानो निचखानेत्याह द्वौ वाव पुरुषौ यश्चैव समानो यश्चासमानो यमेवास्मै तौ वलगं निखनतस्तमेवोद्वपति[५] सन्तृणत्ति तस्मात् सन्तृणा अन्तरतः प्राणा[६] न सम्भिनत्ति तस्मादसम्भिन्नाः प्राणा[७] अपोऽव नयति तस्मादार्द्रा अन्तरतः प्राणा[८] यवमतीरव नयति ( २ )

ऊर्ग्वै यवः प्राणा उपरवाः प्राणेष्वेवोर्जं दधाति[९] बर्हिः* रव स्तृणाति तस्माल्लोमशा अन्तरतः प्राणा[१०] आज्येन व्याघारयति तेजो वा आज्यं प्राणा उपरवाः प्राणेष्वेव तेजो दधाति[११] हनू वा एते यज्ञस्य यदधिषवणे न सन्तृणत्यसन्तृणे हि हनू[१२] अथो खलु दीर्घसोमे संतृद्ये धृत्यै[१३] शिरो वा एतद् यज्ञस्य यद्धविर्धानम् ( ३ )

प्राणा उपरवा हनू अधिषवणे जिह्वा चर्म ग्रावाणो दन्ता मुखमाहवनीयो नासिकोत्तरवेदिरुदरꣳ सदो यदा खलु वै जिह्वया दत्स्वधि खादत्यथ मुखं

---

* 'बर्हिः'—इतीदैतत्पूर्वमापरश्च धान्तःस्थवादि' क-पुस्तके।

गच्छति यदा मुखं गच्छत्यथोदरं गच्छति तस्माद्धवि-
र्धाने चर्मन्नधि ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्य-
ञ्चः परेत्य सदसि भक्षयन्ति[१४] यो वै विराजो यज्ञमुखे
दोहं वेद दुह एव (४)
एनामियं वै विराट् तस्यै त्वक् चर्माधोऽधिषवणे
स्तना उपरवा ग्रावाणो वत्सा ऋत्विजो दुहन्ति
सोमः पयो य एवं वेद दुह एवैनाम्[१५] ॥ ११ ॥
वयामि[१] नयति[२]* हविर्धाने[३] मेव[४] चर्मा-
विंशतिश्च ॥ ११ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे द्वितीयप्रपाठके एकादशोऽनुवाकः † ॥

[१]यद् [२]देवासुरा[३]स्तेषां[४]सुवर्गं [५]यत् [६]पुरो-
हविषि [७]तेभ्यः [८]सा [९]वृद्धं [१०]देवस्य [११]शिर एका-
दश ‡ ॥ २§ ॥

---

* 'यवंमतीरव नयति[२]'—इति क, ख, ग।

† इममनुवाकं १का० ३प्र० २अनु०-भाष्ये पञ्चदशधा विभज्योद्धृत्य व्याख्यत्।

‡ प्रपाठकेऽत्र य एकादश अनुवाकाः, तेषामेवैमानि प्रतीकानि।

§ "(१)यदुभौ (२)देवासुरा मिथ(३)स्तेषां (४)सुवर्गं (५)यदा वनी' धान (६)पुरोहविषि (७)तेभ्य (८)सोत्तरवेदि(९)र्वैद्ध (१०)देवस्याभिर (११)शिरो वा एकादश। ११।"—इति क, ख, ग।

(१)यद्‌भा(२)वित्याह देवानां (३)यज्ञो देवेभ्यो (४)न रथाय (५)यजमानाय (६)परस्तादर्वाचीन्नवपञ्चाशत् * ॥ २ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे द्वितीयः प्रपाठकः ॥ २ ॥

---

* ३२पृ० ६पं०, ३६पृ० १पं०, ४०पृ० १पं०, ४४पृ० ८पं०, ४८पृ० १२पं० ५२पृ० १३पं०। प्रपाठकेऽस्मिन् द्वे षट् पञ्चाशतकानि सन्ति, तेषामेवेमानि प्रतीकानि; एतदतिरिक्तान्यपीह षट्पञ्चाशत् पदानि सन्तीति प्राचीन वाक्येन ज्ञापितम्। मु०-पुस्तके नास्त्येतद्वाक्यम्।

# अथ तैत्तिरीयसंहितायां

## षष्ठकाण्डे

### तृतीयः प्रपाठकः ।

॥ हरिः ओम् ॥

चात्वालाद्धिष्णियानुप वपति योनिर्वै यज्ञस्य चात्वालं यज्ञस्य सयोनित्वाय[१] देवा वै यज्ञं पराजयन्त तमाग्नीध्रात् पुनरपाजयन्नेतद्वै यज्ञस्यापराजितं यदाग्नीध्रं यदाग्नीध्राद्धिष्णियान् विहरति यदेव यज्ञस्यापराजितं तत एवैनं पुनस्तनुते[२] पराजित्येव खलु वा एते यन्ति ये बहिष्पवमानः * सर्पन्ति बहिष्पवमाने स्तुते ( १ )

आहाग्नीदग्नीन् वि हर बर्हिः † स्तृणाहि पुरोडाशाः अलङ्कुविति यज्ञमेवापजित्य पुनस्तन्वाना[१] यन्त्यङ्गारैर्द्वे सवने वि हरति शलाकाभिस्तृतीयः सशुक्रत्वायाथो सम्भरत्येवैनद्[२] धिष्णिया वा अमुष्मि-

* 'बहिष्पवमानः'—इति क। एव मुत्तरत्रापि।

† 'बर्हि'—इति क।

ल्लोके सोममरक्षन् तेभ्योऽधि सोममाहरन् तमन्व-
वायन् तं पर्यविशन्[५] य एवं वेद विन्दते (२)

परिवेष्टार[६] ते सोमपीथेन व्यार्ध्यन्त ते देवेषु
सोमपीथमैच्छन्त तान् देवा अब्रुवन् द्वे द्वे नामनी
कुरुध्वमथ प्र वाप्स्यथ न वेत्यग्नयो वा अथ धिष्णि-
यास्तस्माद् द्विनामा ब्राह्मणोऽर्धुकस्तेषां ये नेदिष्ठं
पर्यविशन् ते सोमपीथं प्राप्नुवन्नाहवनीय आग्नीध्रीयो
हौत्रीयो मार्जालीयस्तस्मात्तेषु जुह्व[७]त्यतिहाय वषट्
करोति वि हि (३)

एते सोमपीथेनार्ध्यन्त[८] देवा वै याः प्राचीराहु-
तीरजुहवुर्ये पुरस्तादसुरा आसन् तांस्ताभिः प्राणु-
दन्त याः प्रतीचीर्ये पश्चादसुरा आसन् तांस्ताभिर-
पानुदन्त प्राचीरन्या आहुतयो हूयन्ते प्रत्यङ्ङासीनो
धिष्णियान् व्याघारयति पश्चाच्चैव पुरस्ताच्च यजमानो
भ्रातृव्यान् प्र णुदते तस्मात्पराचीः प्रजाः प्र वीयन्ते
प्रतीचीः (४)

जायन्ते[९] प्राणा वा एते यद्धिष्णिया यदध्वर्युः प्रत्यङ्
धिष्णियानतिसर्पेत् प्राणान्त्सङ्कर्षेत् प्रमायुकः स्या-
न्नाभिर्वा एषा यज्ञस्य यद्धोतोर्ध्वः खलु वै नाभ्यै
प्राणोऽवाङपानो यदध्वर्युः प्रत्यङ् होतारमतिसर्पेद-

पाने प्राणं दध्यात्* प्रमायुकः स्या(१०)न्नाध्वर्युरुप गायेद्वाग्वीर्यो वा अध्वर्युर्यदध्वर्युरुपगायेदुद्गात्रे (५)

वाचꣳ सम् प्र यच्छेदुपदासुकास्य वाक् स्याद्(११) ब्रह्मवादिनो वदन्ति नासꣳस्थिते सोमेऽध्वर्युः प्रत्यङ् सदोऽतीयादथ कथा दाक्षिणानि होतुमेति(१२) यामो हि स तेषां(१३) कस्मा अह देवा यामं वायामं वानु ज्ञास्यन्ती(१४)त्युत्तरेणाग्नीध्रं परीत्य जुहोति दाक्षिणानि न प्राणान्त्सङ्कर्षयति(१५) न्यन्ये धिष्णिया उप्यन्ते (६)

नान्ये यान्निवपति तेन तान् प्रीणाति(१६) यान्न निवपति यदनु दिशति तेन तान्(१७) ॥ १ ॥

स्तुते[५] विन्दते[२] हि[८] प्रतीची[७]† रुद्गात्रे[१] उप्यन्ते[१] चतुर्दश च ॥ १ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः ‡ ॥

---

सुवर्गाय वा एतानि लोकाय हूयन्ते यद्वैसर्जनानि(१) द्वाभ्यां गार्हपत्ये जुहोति द्विपाद्यजमानः प्रतिष्ठित्या

---

* 'दद्यात्'—इति मु०। † 'वीयन्ते प्रतीची [४]'—इति क, ख, ग।
‡ इममनुवाकं १का० ३प्र० ३अनु०-भाष्ये सप्तदशधा विभज्योद्धृत्य व्याख्यत्।

आग्नीध्रे जुहोत्यन्तरिक्ष एवाक्रमत आहवनीये जुहोति सुवर्गमेवैनं लोकं गमयति(२) देवान् वै सुवर्गं लोकं यतो रक्षांस्यजिघांसन् ते सोमेन राज्ञा रक्षांस्यपहत्याप्तुमात्मानं कृत्वा सुवर्गं लोकमायन् रक्षसामनुपलाभायात्तः सोमो भवत्यथ (१)

वैसर्जनानि जुहोति * रक्षसामपहत्यै(३)त्वं सोम तनूकृद्भ्य इत्याह तनूकृद्ध्येष(४) द्वेषोभ्योऽन्यकृतेभ्य इत्याहान्यकृतानि हि रक्षांसि(५)स्युरु यन्तासि वरूथमित्याहोरु णस्कृधीति वावैतदाह(६) जुषाणो अप्तुराज्यस्य वेत्वित्याहाप्तुमेव यजमानं कृत्वा सुवर्गं लोकं गमयति रक्षसामनुपलाभाया(७) सोमं दद्ते (२)

आ ग्रावण आ वायव्यान्या द्रोणकलशमुत्पत्नीमा नयन्त्यन्वनांसि प्र वर्तयन्ति यावदेवास्यास्ति तेन सह सुवर्गं लोकमेति(८) नयवत्यर्चाऽऽग्नीध्रे जुहोति सुवर्गस्य लोकस्याभिनीत्यै(९) ग्राव्णो वायव्यानि द्रोणकलशमाग्नीध्र उप वासयति(१०)वि ह्येनं नैर्ऋतने

---

* मीमांसायामेतद्विषयिणी बाह्यप्रत्यक्षस्मृति मवलम्ब्यैक मधिकरण मारचितम् (१अ० ३पा० ४सू० ; ३अधि०)। तत्र लोभमूला स्मृतिर्न प्रमाण मिति सिद्धान्तितम्। 'बाधाभावेऽपि (वेदविरोधाभावेऽपि) मूलवेदाभावान्नेयं स्मृतिः प्रमाणम्' - इति चाह तत्र न्यायमालाकृन्माधवः।

यत्सह्योपवासयेदपवायेत[११] सौम्यर्चा प्र पादयति स्वया ( ३ )

एवैनं देवतया प्र पादय[१२]त्यदित्याः सदोऽस्यदित्याः सद आ सीदेत्याह यथायजुरेवैतद्[१३] यजमानो वा एतस्य पुरा गोप्ता भवत्येष वो देव सवितः सोम इत्याह सवितृप्रसूत एवैनं देवताभ्यः सम्प्र यच्छ[१४]त्येतत् त्वꣳ सोम देवो देवानुपागा इत्याह देवो ह्येष सन् ( ४ )

देवानुपैतीदमहं मनुष्यो मनुष्यानित्याह मनुष्यो१ ह्येष सन् मनुष्यानुपैति यदेतद् यजुर्न ब्रूयादप्रजा अपशुर्यजमानः स्यात्सह प्रजया सह रायस्पोषेणेत्याह प्रजयैव पशुभिः सहेमं लोकमुपावर्त्तते[१५] नमो देवेभ्य इत्याह नमस्कारो हि देवानाꣳ स्वधा पितृभ्य इत्याह स्वधाकारो हि ( ५ )

पितृणा[१६]मिदमहं निर्वरुणस्य पाशादित्याह वरुणपाशादेव निर्मुच्यते[१७]ऽग्ने व्रतपत आत्मनः पूर्वा तनूरादेयेत्याहुः को हि तद्वेद यद्वसीयान्त्स्वे वशे भूते पुनर्वा ददाति न वेति[१८] ग्रावाणो वै सोमस्य राज्ञो मलिम्लुसेना य एवं विद्वान् ग्रावण आग्नीध्र उपवासयति नैनं मलिम्लुसेना विन्दति[१९] ( ६ ) ॥ २ ॥

अथ[1] ददते[2] स्वया[3] सन्[4] हि*[5] विन्दति[6] ॥२॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः † ॥

---

वैष्णव्यर्चा हुत्वा यूपमच्छैति वैष्णवो वै देवतया यूपः स्वयैवैनं देवतयाच्छै[1]त्यत्यन्यानगां नान्यानुपागामित्याहाति ह्यन्यानेति नान्यानुपैत्यर्वाक् त्वा परैरविदम्• परोऽवरैरित्याहार्वाग् ह्येनम् परैर्विन्दति परोवरैस्तं त्वा जुषे (१)

वैष्णवं देवयज्याया इत्याह देवयज्यायै ह्येनं जुषते[2] देवस्त्वा सविता मध्वानक्त्वित्याह तेजसैवैनमनक्त्योषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीरित्याह वज्रो वै स्वधितिः शान्त्यै[3] स्वधितेर्वृक्षस्य बिभ्यतः प्रथमेन शकलेन सह तेजः परा पतति यः प्रथमः शकलः परापतेत्तमप्या हरेत्सतेजसम् (२)

एवैनमा हर[4]तीमे वै लोका यूपात्प्रयतो बिभ्यति दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीरि-

---

* 'सन[4]-स्वधाकारो हि[5]'—इति क, ख, ग।

† इममनुवाकं १का० ३प्र० ४अनु०-भाष्ये ऊनविंशांशं सत्वोद्धृत्य याख्यत्।

त्याहैभ्य एवैनं लोकेभ्यः शमयति[५] वनस्पते शतवल्शो वि रोहेत्यावश्चने जुहोति तस्मादावश्चनाद् वृक्षाणां भूयांस उत्तिष्ठन्ति[६] सहस्रवल्शा वि वयं रुहेमे-त्याहाशिषमेवैतामा शास्ते[७]ऽनक्षसङ्गम् ( ३ )

वृश्चेद्[८] यदक्षसङ्गं वृश्चेदध रुकं यजमानस्य प्रमायुकः स्याद्[९] यं कामयेताप्रतिष्ठितः स्यादित्यारोहं तस्मै वृश्चेदेष वै वनस्पतीनामप्रतिष्ठितोऽप्रतिष्ठित एव भवति[१०] यं कामयेतापशुः स्यादित्यपर्णं तस्मै शुष्काग्रं वृश्चेदेष वै वनस्पतीनामपशव्योऽपशुरेव भवति[११] यं कामयेत पशुमान्त्स्यादिति बहुपर्णं तस्मै बहुशाखं वृश्चेदेष वै ( ४ )

वनस्पतीनां पशव्यः पशुमानेव भवति[१२] प्रतिष्ठितं वृश्चेत् प्रतिष्ठाकामस्यैष वै वनस्पतीनां प्रतिष्ठितो यः समे भूम्यै स्वाद्योने रूढः प्रत्येव तिष्ठति[१३] यः प्रत्यङ्ङुपनतस्तं वृश्चेत्स हि मेधमभ्युपनतः[१४] पञ्चारत्निं तस्मै वृश्चेयं कामयेतोपैनमुत्तरो यज्ञो नमेदिति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञ उपैनमुत्तरो यज्ञः ( ५ )

नमति षडरत्निं प्रतिष्ठाकामस्य षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति सप्तारत्निं पशुकामस्य सप्तपदा शक्वरी पशवः शक्वरी पशूनेवाव रुन्धे नवारत्निं तेज-

स्तामस्य त्रिवृता स्तोमेन सम्मितं तेजस्त्रिवृत्तेज-स्व्येव भवत्येकादशारत्निमिन्द्रियकामस्यैकादशाक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुगिन्द्रियाव्येव भवति पञ्चदशारत्निं भ्रातृव्यवतः पञ्चदशो वज्रो भ्रातृव्याभिभूत्यै सप्तदशारत्निं प्रजाकामस्य सप्तदशः प्रजापतिः प्रजापतेराप्त्यै (६)

एकविꣳशत्यरत्निं प्रतिष्ठाकामस्यैकविꣳशः स्तोमानां प्रतिष्ठा प्रतिष्ठित्या[१५] अष्टाश्रिर्भवत्यष्टाक्षरा गायत्री तेजो गायत्री गायत्री यज्ञमुखं तेजसैव गायत्रिया यज्ञमुखेन सम्मितः[१६] ॥ ३ ॥

जुषे[१] सतेजस[२] मनक्षसक्ष[३] वै[४] यज्ञ[५]* आप्त्या[६] एकान्नविꣳशतिश्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाकः † ॥

---

पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेत्याहैभ्य एवैनं लोकेभ्यः प्रोक्षति[१] पराञ्चं प्रोक्षति पराङिव हि

---

* 'बहुष्वाख वंसेदेव वै[४] यज्ञ उपैनमुत्तरो यज्ञ[५]'—क, ख, ग।

† इममनुवाकं १का० ३प्र० १अनु०–भाष्ये षोडशधा विभज्योद्धृय व्याख्यत्।

सुवर्गो लोकः(१) क्रूरमिव वा एतत् करोति यत् खनत्यपोऽव नयति शान्त्यै यवमतीरव नयत्यूर्ग्वै यवो यजमानेन यूपः सम्मितो यावानेव यजमानस्तावतीमेवास्मिन्नूर्जं दधाति (१)

पितृणाꣳ सदनमसीति बर्हिरव * स्तृणाति पितृदेवत्यꣳ ह्येतद्यन्निखातं यद्बर्हिरनवस्तीर्य मिनुयात् पितृदेवत्यो निखातः स्याद् बर्हिरवस्तीर्य मिनोत्यस्यामेवैनं मिनोति(१) यूपशकलमवास्यति सतेजसमेवैनं मिनोति(१) देवस्त्वा सविता मध्वानक्त्वित्याह तेजसैवैनमनक्ति(१) सुपिप्पलाभ्यस्त्वौषधीभ्य इति चषालं प्रति (२)

मुञ्चति तस्माच्छीर्षत ओषधयः फलं गृह्ण(१)न्त्यनक्ति तेजो वा आज्यं यजमानेनाग्निष्ठाश्रिः सम्मिता यदग्निष्ठामश्रिमनक्ति यजमानमेव तेजसानक्त्यान्तमनक्त्यान्तमेव यजमानं तेजसानक्ति(१) सर्वतः परिमृशत्यपरिवर्गमेवास्मिन् तेजो दधा(१)त्युद्दिवꣳ स्तभानान्तरिक्षम् पृणेत्याहैषां लोकानां विधृत्यै(१) वैष्णव्यर्चा (३)

कल्पयति वैष्णवो वै देवतया यूपः स्वयैवैनं देव-

---

* 'बर्हिरव'—इति क। एवमुत्तरत्रापि।

तया कल्पयति द्वाभ्यां कल्पयति[१०] द्विपाद्यजमानः प्रतिष्ठित्यै[११] यं कामयेत तेजसैनं देवताभिरिन्द्रियेण व्यर्द्धयेयमित्यग्निष्ठां तस्याग्निमाहवनीयादित्थं वेत्थं वाति नावयेत्तेजसैवैनं देवताभिरिन्द्रियेण व्यर्द्धयति[१२] यं कामयेत तेजसैनं देवताभिरिन्द्रियेण समर्द्धयेयमिति (४)

अग्निष्ठां तस्याग्नि*माहवनीयेन सम्मिनुयात् तेजसैवैनं देवताभिरिन्द्रियेण समर्द्धयति[१३] ब्रह्मवनिं त्वा क्षत्रवनिमित्याह यथायजुरेवैतत्[१४] परिव्ययत्यूर्ग्वै रशना यजमानेन यूपः सम्मितो यजमानमेवोर्जा समर्द्धयति[१५] नाभिदघ्ने परि व्ययति नाभिदघ्न एवास्मा ऊर्जं दधाति तस्मान्नाभिदघ्न ऊर्जा भुञ्जते[१६] यं कामयेतोर्जैनम् (५)

*व्यर्द्धयेयमित्यूर्ध्वां वा तस्यावाचीं वावोहेदूर्जैवैनं* व्यर्द्धयति[१७] यदि कामयेत वर्षुकः पर्जन्यः स्यादित्यवाचीमवोहेद् वृष्टिमेव नि यच्छति यदि कामयेतावर्षुकः स्यादित्यूर्ध्वामुदूहेद् वृष्टिमेवोद्यच्छति[१८] पितॄणां निखातं मनुष्याणामूर्ध्वं निखाताद्रा रशनाया ओषधीनां रशना विश्वेषाम् (६)

---

* 'तस्याग्निय'—इति मु० ।

देवानामूर्ध्वꣳ रशनाया आ चषालादिन्द्रस्य चषालꣳ साध्यानामतिरिक्तꣳ स वा एष सर्वदेवत्यो यद्यूपो यद्यूपं मिनोति सर्वा एव देवताः प्रीणाति[१८] यज्ञेन वै देवाः सुवर्गं लोकमायन् तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति ते यूपेन योपयित्वा सुवर्गं लोकमायन् तमृषयो यूपेनैवानु प्राजानन् तद्यूपस्य यूपत्वम् (७)

यद्यूपं मिनोति सुवर्गस्य लोकस्य प्रज्ञात्यै[२०] पुरस्तान् मिनोति पुरस्ताद्धि यज्ञस्य प्रज्ञायते प्रज्ञातꣳ हि तद्यदतिपन्न आहुरिदं कार्यमासीदिति[२१] साध्या वै देवा यज्ञमत्यमन्यन्त तान् यज्ञो नास्पृशत्तान् यद्यज्ञस्यातिरिक्तमासीत्तदस्पृशदतिरिक्तं वा एतद्यज्ञस्य यदग्नावग्निं मथित्वा प्रहरत्यतिरिक्तमेतद् (८)

यूपस्य यदूर्ध्वं चषालात् तेषां तद्भागधेयन्तानेव तेन प्रीणाति[२२] देवा वै सꣳस्थिते सोमे प्र स्रुचो हरन् प्र यूपन्तेऽमन्यन्त यज्ञवेशसं वा इदं कुर्म इति ते प्रस्तरꣳ स्रुचां निष्क्रयणमपश्यन्त्स्वरुं यूपस्य सꣳस्थिते सोमे प्र प्रस्तरꣳ हरति जुहोति स्वरुमयज्ञवेशसाय[२३]

॥ ४ ॥

दधाति[१] प्र[२]त्यु[३]चे [४]त्येन[५] विश्वेपा[६] यूपत्व[७] मेतद्[८] द्विचत्वारि॑ꣳशच्च ॥ ४ * ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः † ॥

---

साध्या वै देवा अस्मिंल्लोक आसन् नान्यत् किं॑चन मिषत् तेऽग्निमेवाग्नये मेधायालभन्त न ह्यन्यदालम्भ्यमविन्दन् ततो वा इमाः प्रजाः प्राजायन्त यदग्नावग्निं मथित्वा प्रहरति प्रजानां प्रजननाय[१] रुद्रो वा एष यदग्निर्यजमानः पशुर्यत् पशुमालभ्याग्निं मन्थेद्रुद्राय यजमानम् (१)

अपि दध्यात् प्रमायुकः स्या[२]दथो खल्वाहुरग्निः सर्वा देवता हविरेतद्यत् पशुरिति यत् पशुमालभ्याग्निं मन्थति हव्यायैवासन्नाय सर्वा देवता जनय[३]त्युपाकृत्यैव मन्थ्यस्तन्नेवालब्धं नेवानालब्ध[४]मग्नेर्जनित्रमसीत्याहाग्नेर्ह्येतज्जनित्रं वृषणौ स्थ इत्याह वृषणौ (२)

ह्येता[५]वुर्वश्यस्यायुरसीत्याह मिथुनत्वाय[६] घृते-

---

* 'दधाति[१] प्र[२]त्युचा[३] समर्धयेयुमि[४] त्युजैन[५] विश्वेषा[६] यूपत्व[७] मतिरिक्तमेतद्[८] द्विचत्वारिꣳशच्च ॥ ४ ॥'—इति क, ख, ग।

† इममनुवाकं १का० ३प्र० ६अनु०-भाष्ये त्रयोविंशतिधा छत्वा व्याख्यत्।

नाक्ते हर्पणं दधायामित्याह हर्पणः ह्येते दधाते ये अग्निं[९] गायत्रं छन्दोऽनु प्र जायस्वेत्याह छन्दोभिरेवैनं प्र जनय[८]त्यग्नये मथ्यमानायानु ब्रूहीत्याह[८] सावित्रीमृचमन्वाह सवितृप्रसूत एवैनं मन्थति[१०] जातायानु ब्रूहि (३)

प्रह्रियमाणायानु ब्रूहीत्याह काण्डेकाण्ड एवैनं क्रियमाणे समर्धयति[११] गायत्रीः सर्वा अन्वाह गायत्रच्छन्दा वा अग्निः स्वेनैवैनं छन्दसा समर्धय[१२]त्यग्निः पुरा भवत्यग्निं मथित्वा प्र हरति तौ सम्भवन्तौ यजमानमभि सम् भवतो भवतन्नः समनसावित्याह शान्त्यै[१३] प्रहृत्य जुहोति जातायैवास्मा अन्नमपि (४)

दधात्याज्येन जुहोत्येतद्वा अग्नेः प्रियं धाम यदाज्यं प्रियेणैवैनं धाम्ना समर्धयत्यथो तेजसा[१४] ॥ ५ ॥

यजमानं[१] हर्पणौ[२] ब्रू[३]ह्य[४]प्यष्टादश च ॥ ५ * ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः † ॥

---

* 'यजमान[१] माह हर्पणौ[२] जातायानु ब्रू[३]'—इति क, ख, ग।

† इममनुवाकं १का० ३प्र० ७अनु०-भाष्ये चतुर्द्धधा छला व्याख्यत्।

इषे त्वेति बर्हिरादत्त इच्छत इव ह्येष यो यजत[१]
उपवीरसीत्याहोप ह्येनानाकरो[२]त्युपो देवान् दैवी-
र्विशः प्रागुरित्याह दैवीर्ह्येता विशः सतीर्देवानुपय-
न्ति[३] वह्नीरुशिज इत्याहर्त्विजो वै वह्नय उशिज-
स्तस्मादेवमाह[४] बृहस्पते धारया वसूनीति (१)

आह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै पशू-
नव रुन्धे[५] हव्या ते स्वदन्तामित्याह स्वदयत्येवैनान्[६]
देवत्वष्टर्वसु रण्वेत्याह त्वष्टा वै पशूनां मिथुनानाꣳ
रूपकृद्रूपमेव पशुषु दधाति[७] रेवती रमध्वमित्याह
पशवो वै रेवतीः पशूनेवास्मै रमयति[८] देवस्य त्वा
सवितुः प्रसव इति (२)

रशनामा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्या-
हाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्या-
मित्याह यत्यै[९] ऋतस्य त्वा देवहविः पाशेना रभ
इत्याह सत्यं वा ऋतꣳ सत्येनैवैनमृतेना रभ ते[१०]
ऽक्ष्णया परि हरति वध्यꣳ हि प्रत्यञ्चं प्रतिमुञ्चन्ति
व्यावृत्त्यै[११] धर्षा मानुषानिति नि युनक्ति धृत्यै[१२]
अद्भ्यः (३)

त्वौषधीभ्यः प्रोक्षामीत्याहाद्भ्यो ह्येष ओषधीभ्यः
सम्भवति यत् पशु[१३]रपां पेरुरसीत्याहैष ह्यपां पाता

यो मेधायारभ्यते[१४] स्वात्तं चित्तदेवस्ं हव्यमापो देवीः स्वदैतैनमित्याह स्वदयत्येवैनं[१५] मुपरिष्टात् प्रोक्षत्युपरिष्टादेवैनं मेध्यं करोति पाययत्यन्तरत एवैनम् (४) मेध्यं करोत्यधस्तादुपोक्षति सर्वत एवैनं मेध्यं करोति[१६] ॥ ६ ॥

इतीत्यग्न्या[१३]* एनं[४] दश च ॥ ६† ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः‡ ॥

---

अग्निना वै होत्रा देवा असुरानभ्यभवन्नग्नये समिध्यमानायानु ब्रूहीत्याह भ्रातृव्याभिभूत्यै[१] सप्तदश सामिधेनीरन्वाह सप्तदशः प्रजापतिः प्रजापतेराप्त्यै[२] सप्तदशान्वाह द्वादश मासाः पञ्चर्तवः स संवत्सरः संवत्सरं प्रजा अनु प्र जायन्ते प्रजानां प्रजननाय देवा वै सामिधेनीरनूच्य यज्ञं नान्वपश्यन्त्स प्रजापतिस्तूष्णीमाघारम् (१)

---

* इति[१]+इति[२]+यज्ञा[३]।

† वसूनीति[१] प्रसव इ[२]त्यग्न्यो[३]ऽन्तरत एवैन[४] दश च ॥ ६ ॥

‡ इमन्तु १का० ३प्र० ७,८ अनु०-भाष्ये षोडशधा विभज्योद्धृत्य व्याख्यत्।

आऽघारयत् ततो वै देवा यज्ञमन्वपश्यन् यत्तूष्णी-
मांघारमांघारयति यज्ञस्यानुख्यात्या[७] असुरेषु वै यज्ञ
आसीत् तं देवास्तूष्णीꣳ होमेनावृञ्जत यत् तूष्णी-
मांघारमांघारयति भ्रातृव्यस्यैव तद् यज्ञं वृङ्क्ते[८] परि-
धीन्त्सम्मार्ष्टि पुनात्येवैनान् त्रिस्त्रिः सम्मार्ष्टि त्र्यावृद्धि
यज्ञोऽथो रक्षसामपहत्यै द्वादश सम्पद्यन्ते द्वादश (२)
मासाः संवत्सरः संवत्सरमेव प्रीणात्यथो संवत्सर-
मेवास्मा उप दधाति सुवर्गस्य लोकस्य समष्ट्यै[१]
शिरो वा एतद् यज्ञस्य यदाघारोऽग्निः सर्वा देवता
यदाघारमाघारयति शीर्षत एव यज्ञस्य यजमानः सर्वा
देवता अव रुन्धे[२] शिरो वा एतद् यज्ञस्य यदाघार
आत्मा पशुराघारमाघार्य पशुꣳ समनक्त्यात्मन्नेव
यज्ञस्य (३)
शिरः प्रति दधाति[३] सन्ते प्राणो वायुना गच्छ-
तामित्याह वायुदेवत्यो वै प्राणो वायावेवास्य प्राणं
जुहोति[४] सं यजत्रैरङ्गानि सं यज्ञपतिराशिषेत्याह
यज्ञपतिमेवास्याशिषं गमयति[१०] विश्वरूपो वै त्वाष्ट्र
उपरिष्टात् पशुमभ्यवमीत्तस्मादुपरिष्टात् पशोर्नाव
द्यन्ति यदुपरिष्टात् पशुꣳ समनक्ति मेध्यमेव (४)
एनङ्करो[११]त्यृत्विजो वृणीते छन्दाꣳस्येव वृणीते[१२]

सप्त वृणीते सप्त ग्राम्याः पशवः सप्तारण्याः सप्त छन्दाꣳस्युभयस्यावरुध्या[१३] एकादश प्रयाजान् यजति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तं प्र यजति[१४] वपामेकः परि शय आत्मैवात्मानं परि शये[१५] वज्रो वै स्वधितिर्वज्रो यूपशकलो घृतं खलु वै (५)

देवा वज्रं कृत्वा सोममघ्नन् घृतेनाक्तौ पशुं त्रायेथामिति याह वज्रेणैवैनं वशे कृत्वा ऽऽलभते[१६] ॥ ७ ॥

आघारं[१] द्वादश[२] यज्ञ[३]स्यैव[४] वा[५]* अष्टादश च ॥ ७ ॥

इति तैत्तिरीयसंहितायां

षष्ठकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः † ॥

---

पर्यग्नि करोति सर्वहुतमेवैनं करोत्यस्कन्दायास्कन्नꣳ हि तद्यद्धुतस्य स्कन्दति[१] त्रिः पर्यग्नि करोति त्र्यावृद्धि यज्ञोऽथो रक्षसामपहत्यै[२] ब्रह्मवादिनो वदन्त्यन्वारभ्यः पशू३र्नान्वारभ्या३ इति[३] मृत्यवे वा एष

---

* 'आघारम्[१] पर्यन्ति द्वादश[२]तमेव यज्ञस्य[३] मेधमेव[४] खलु वा[५]'—इति क, ख, ग ।

† इममनुवाकं १का० ३प्र० ८अनु० भाष्ये षोडशधा विभज्योद्धृतं व्याख्यत् ।

नीयते यत् पशुस्तं यदन्वारभेत प्रमायुको यजमानः स्या[४]द्यो खल्वाहुः सुवर्गाय वा एष लोकाय नीयते यत् (१)

पशुरिति यन्नान्वारभेत सुवर्गाल्लोकाद् यजमानो हीयेत[५] वपाश्रपणीभ्यामन्वारभते तन्नेवान्वारब्धं नेवानन्वारब्ध[६]मुप प्रेष्य होतर्हव्या देवेभ्य इत्याहेषितꣳ हि कर्म क्रियते[७] रेवतीर्यज्ञपतिं प्रियधाऽऽविशतेत्याह यथायजुरेवैत[८]दग्निना पुरस्तादेति रक्षसामपहत्यै[९] पृथिव्याः सम्पृच. पाहीति बर्हिः (२)

उपास्यत्यस्कन्दायास्कन्नꣳ हि तद्यद्बर्हिषि स्कन्दत्यथो बर्हिषदमेवैनं करोति[१०] पराङा वर्ततेऽध्वर्युः पशोः संज्ञप्यमानात् पशुभ्य एव तन्नि ह्नुत आत्मनोऽनाव्रस्काय[११] गच्छति श्रियं प्र पशूनाप्नोति य एवं वेद[१२] पश्चाल्लोका वा एषा प्राच्युदानीयते यत् पत्नी नमस्त आतानेत्याहादित्यस्य वै रश्मयः (३)

आतानास्तेभ्य एव नमस्करोत्य[१३]नर्वा प्रेहीत्याह भ्रातृव्यो वा अर्वा भ्रातृव्यापनुत्त्यै घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणेत्याहाशिषमेवैतामा शास्त आपो देवीः शुद्धायुव इत्याह यथायजुरेवैतत्[१४] ॥ ८ ॥

यद्[१] * वृर्हीः[२] रश्मयः[३] सप्तचिंशच्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे तृतीयप्रपाठके अष्टमोऽनुवाकः † ॥

---

पशोर्वा आलब्धस्य प्राणाञ्छुगृच्छति‡ वाक्त आ प्यायतां प्राणस्त आ प्यायतामित्याह प्राणेभ्य एवास्य शुचँ शमयति[१] सा प्राणेभ्योऽधि पृथिवीँ शुक् प्र विशति शमहोभ्यामिति नि नयत्यहोरात्राभ्यामेव पृथिव्यै शुचँ शमय[२]त्योषधे त्रायस्वैनँ स्वधिते मैनँ हिँसीरित्याह वज्रो वै स्वधितिः (१)

शान्त्यै पार्श्वत आ छ्यति मध्यतो हि मनुष्या आच्छ्यन्ति तिरश्चीनमा छ्यत्यनूचीनँ हि मनुष्या आच्छ्यन्ति व्यावृत्त्यै[३] रक्षसां भागोऽसीति स्थविमतो बर्हिरक्त्वापास्यत्यस्नैव रक्षाँसि निरवदयत[४] इदमहँ रक्षोऽधमं तमो नयामि योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इत्याह द्वौ वाव पुरुषौ यञ्चैव (२)

द्वेष्टि यश्चैनं द्वेष्टि तावुभावधमन्तमो नय[५]तीषे

---

* 'लोकायनीयत् यद्[१]'—इति क, ख, ग।

† इमञ्चानुवाकं १का० ३प्र० ८अनु०-भाष्ये चतुर्द्धधा विभज्योद्धृत्य व्याख्यत्।

‡ 'प्राणानृच्छुगृच्छति'—इति ख, मु०।

स्वाहोर्ध्वनभसं मारुतं गच्छतमित्याहोर्ध्वनभा ह स्म वै मारुतो देवानां वपाश्रपणी प्र हरति तेनैवैने प्र हरति(१८) विषूची प्र हरति तस्माद्विष्वञ्चौ प्राणापानौ(१९) ॥ ६ ॥

स्वधिति[१]श्चैवा[२]च्छिन्नो[३] हव्ये[४]नाह[५]* षट्चत्वारिꣳशच्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः† ॥

---

पशुमालभ्य पुरोडाशं निर्वपति समेधमेवैनमा लभते(१) वपया प्रचर्य पुरोडाशेन प्र चरत्यूर्ग्वै पुरोडाश ऊर्जमेव पशूनां मध्यतो दधात्यथो पशोरेव च्छिद्रमपि दधाति(२) पृषदाज्यस्योपहत्य त्रिः पृच्छति शृतꣳ हवीः शमितरिति त्रिषत्या हि देवा(३) योऽशृतꣳ शृतमाह स एनसा(४) प्राणापानौ वा एतौ पशूनाम् (१)

यत्पृषदाज्यं पशोः खलु वा आलब्धस्य हृदय-

---

* 'हव्येन[४] प्रेष्येत्याह[५]'—इति क, ख, ग।

† इममनुवाकं १का० ३प्र० ८अनु० भाष्ये विप्रतिधा विभज्योद्धृत्य व्याख्यत्।

मात्माभि समेति यत्पृषदाज्येन हृदयमभिघारयत्या-
त्मन्नेव पशूनां प्राणापानौ दधाति[५] पशुना वै देवाः
सुवर्गं लोकमायन् तेऽमन्यन्त मनुष्या नोऽन्वाभवि-
ष्यन्तीति तस्य शिरश्छित्वा मेधं प्राक्षारयन्त्स प्रक्षो-
ऽभवत्तत् प्रक्षस्य प्रक्षत्वं यत् प्रक्षशाखो*त्तरबर्हिर्भव-
ति समेधस्यैव (२)

पशोरवं द्यति[६] पशुं वै ह्रियमाणꣳ रक्षाꣳस्यनु
सचन्तेऽन्तरा यूपं चाहवनीयं च हरति रक्षसामप-
हत्यै[७] पशोर्वा आलब्धस्य मनोऽप क्रामति मनोताय
हविषोऽवदीयमानस्यानु ब्रूहीत्याह मन एवास्याव
रुन्द्धे[८] एकादशावदानान्यव द्यति दश वै पशोः प्राणा
आत्मैकादशो यावानेव पशुस्तस्याव (३)

द्यति[९] हृदयस्याग्रेऽव द्यत्यथ जिह्वाया अथ वक्षसो
यद्वै हृदयेनाभि गच्छति तज्जिह्वया वदति यज्जिह्वया
वदति तदुरसोऽधि निर्वदत्येतद्वै पशोर्यथापूर्वं[१०] यस्यैव-
मवदाय यथाकाममुत्तरेषामवद्यति यथापूर्वमेवास्य
पशोरवत्तं भवति[११] मध्यतो गुदस्याव द्यति मध्यतो
हि प्राण उत्तमस्याव द्यति (४)

उत्तमो हि प्राणो यदीतरं यदीतरमुभयमेवा-

* 'प्लक्षशाखो'–इति ग, मु०।

जामि[११] जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो* यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी तदव-दानैरेवावदयते तदवदानानामवदानत्वं[१२] देवासुराः संयत्ता आसन् ते देवा अग्निमब्रुवन् त्वया वीरेणा-सुरानभि भवामेति (५)

सोऽब्रवीद्वरं वृणै पशोरुद्धारमुद्धरा इति स एत-मुद्धारमुदहरत दोः पूर्वार्धस्य गुदं मध्यतः श्रोणिं जघनार्धस्य ततो देवा अभवन् परासुरा यत् त्र्यङ्गा-णाꣳ समवद्यति भ्रातृव्याभिभूत्यै भवत्यात्मना परास्य भ्रातृव्यो भवत्य[१३]क्ष्णुयावं द्यति तस्मादक्ष्णुया पश-वोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै[१४] ॥ १० ॥

पशूना[१]मेवा[२]र्व[३] स्य[४]तीति[५] † पञ्चचत्वारिꣳ-शच्च ॥ १० ॥

इति तैत्तिरीयसंहितायां
पष्ठकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः ‡ ॥

---

* 'ब्रह्मचर्येणर्षिभ्यो'—इति मु० ।

† 'एतौ पशूनाꣳ[१] समेधस्यैव[२] तस्यावा[३]ऽमराव स्य[४]तीति[५]'—इति क, ख, ग ।

‡ इममनुवाकं १का० २प्र० १०अनु०-भाष्ये पञ्चदशधा विभज्योद्धृत्य व्याख्यत् ।

मेदसा स्रुचौ प्रोर्णोति मेदोरूपा वै पशवो रूपमेव पशुषु दधाति[१] यूषन्नवधाय प्रोर्णोति रसो वा एष पशूनां यद्यू रसमेव पशुषु दधाति[२] पार्श्वेन वसाहोमं प्र यौति मध्यं वा एतत् पशूनां यत्पार्श्वꣳ रस एष पशूनां यद्वसा यत्पार्श्वेन वसाहोमं प्र यौति मध्यत एव पशूनाꣳ रसं दधाति[३] घ्नन्ति (१)

वा एतत् पशुं यत्संज्ञपयन्त्यैन्द्रः खलु वै देवतया प्राण ऐन्द्रोऽपान ऐन्द्रः प्राणो अङ्गेअङ्गे नि देध्यदित्याह प्राणापानावेव पशुषु दधाति[४] देव त्वष्टर्भूरि ते सꣳसमेत्वित्याह त्वाष्ट्रा हि देवतया पशवो[५] विषुरूपा यत् सलक्ष्माणो भवथेत्याह विषुरूपा ह्येते सन्तः सलक्ष्माण एतर्हि भवन्ति[६] देवत्रा यन्तम् (२)

अवसे सखायोऽनु त्वा मातापितरो मदन्त्वित्याहानुमतमेवैनं मात्रा पित्रा सुवर्गं लोकं गमय[७]त्यर्द्धर्चे वसाहोमं जुहोत्यसौ वा अर्द्धर्च इयमर्द्धर्च इमे एव रसेनानक्ति दिशो जुहोति दिश एव रसेनानक्त्ययो दिग्भ्य एवोर्जꣳ रसमव रुन्धे[८] प्राणापानौ वा एतौ पशूनां यत् पृषदाज्यं वानस्पत्याः खलु (३)

वै देवतया पशवो यत्पृषदाज्यस्योपहत्याह वनस्पतयेऽनु ब्रूहि वनस्पतये प्रेष्येति प्राणापानावेव पशुषु

दधात्य[९]न्यस्यान्यस्य समवत्तꣳ समवद्यति तस्मान्नानारूपाः पशवो[१०] यूष्णोप सिञ्चति रसो वा एष पशूनां यद्यू रसमेव पशुषु दधाती[११]डामुप ह्वयते पशवो वा इडा पशूनेवोप ह्वयते चतुरुप ह्वयते (४)

चतुष्पादो हि पशवो[१२] यं कामयेतापशुः स्यादित्यमेदस्कं तस्मा आ दध्यान्मेदोरूपा वै पशवो रूपेणैवैनं पशुभ्यो निर्भजत्यपशुरेव भवति[१३] यं कामयेत पशुमान्त्स्यादिति मेदस्वत्तस्मा आ दध्यान्मेदोरूपा वै पशवो रूपेणैवास्मै पशूनव रुन्धे पशुमानेव भवति[१४] प्रजापतिर्यज्ञमसृजत स आज्यम् (५)

पुरस्तादसृजत पशुं मध्यतः पृषदाज्यं पश्चात्तस्मादाज्येन प्रयाजा इज्यन्ते पशुना मध्यतः पृषदाज्येनानूयाजास्तस्मादेतन्मिश्रमिव पश्चात् सृष्टꣳ[१५] ह्येकादशानूयाजान् यजति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तमनु यजति[१६] घ्नन्ति वा एतत्पशुं यत्संज्ञपयन्ति प्राणापानौ खलु वा एतौ पशूनां यत्पृषदाज्यं यत्पृषदाज्येन (६)

अनूयाजान् यजति प्राणापानावेव पशुषु दधाति[१७] ॥ ११ ॥

घ्नन्ति[१] यन्त[२] खलु[३] ह्वयन्[४] * आज्यं[५] यत्पृ-
षदाज्येन[६] षट् च ॥ ११ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे तृतीयप्रपाठके एकादशोऽनुवाकः † ॥

(१)चात्वालात् (२)सुवर्गाय (३)वैष्णव्या (४)पृथिव्यै
(५)साध्या (६)इषे(७)ऽग्निना (८)पर्यग्नि (९)पशोः (१०)पशुम्
(११)मेदसैकादश ‡ ॥ ३ § ॥

(१)चात्वालाद् (२)देवानुपैति (३)मुञ्चति (४)प्रह्रिय-
माणाय (५)पर्यग्नि (६)पशुमालभ्य (७)चतुष्पादो द्वि-
पंष्टि· ¶ ॥ ३ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे तृतीयः प्रपाठकः ॥ ३ ॥

---

* 'खलु[३] चतुरश्रं ह्वयन्[४]'—इति क, ख, ग ।

† इममनुवाक १का॰ ३प्र॰ १०अनु॰ भाष्ये सप्तदशधा विभज्योद्धृत्य व्याख्यत् ।

‡ प्रपाठकेऽत्र य एकादश अनुवाकास्तेषामेवेमान्यादिप्रतीकानि ।

§ "(१)चात्वालात् (२)सुवर्गाय॰—॰यद्देवसर्जनानि (३)वैष्णव्यर्चा (४)पृथिव्यै
(५)साध्या (६)इषे(७)ऽग्निना (८)पर्यग्नि (९)पशो (१०)पशुमालभ्य
(११)मेदसा स्रुचावेकादश ॥ ११ ॥'—इति क, ख, ग ।

¶ ५८ए॰ ६प॰, ६२ए॰ ६प॰, ६६ए॰ १२प॰, ७०ए॰ ६प॰, ७४ए॰
१४प॰, ७८ए॰ १०प॰, ८२ए॰ ६ प॰ । मु॰ पुस्तके नास्त्येतद् वाक्यम् ।

## अथ तैत्तिरीयसंहितायां

षष्ठकाण्डे

चतुर्थः प्रपाठकः।

॥ हरिः ओम् ॥

यज्ञेन वै प्रजापतिः प्रजा असृजत ता उपय-
ड्भिरेवासृजत यदुपयज उपयजति प्रजा एव तद्य
जमानः सृजते[१] जघनार्द्धादव द्यति जघनार्द्धाद्धि
प्रजाः प्रजायन्ते[२] स्थविमतोऽव द्यति स्थविमतो
हि प्रजाः प्रजायन्ते[३] ऽसम्भिन्दन्नव द्यति प्राणा-
नामसम्भेदाय[४] न पर्यावर्त्तयति यत्पर्यावर्त्तयेदुदा-
वर्त्तः प्रजा ग्राहुकः स्यात्[५] समुद्रं गच्छ स्वाहेत्याह
रेतः (१)

एव तद्दधा[६]त्यन्तरिक्षं गच्छ स्वाहेत्याहान्तरिक्षे-
णैवास्मै प्रजाः प्र जनयत्यन्तरिक्षꣳ ह्यनु प्रजाः
प्रजायन्ते[७] देवꣳ सवितारं गच्छ स्वाहेत्याह सवितृ-
प्रसूत एवास्मै प्रजाः प्र जनय[८]त्यहोरात्रे गच्छ
स्वाहेत्याहाहोरात्राभ्यामेवास्मै प्रजाः प्र जनयत्यहो-

राज्ञे ह्यनुप्रजाः प्रजायन्ते(९) मित्रावरुणौ गच्छ
स्वाहा (२)

इत्याह प्रजास्वेव प्रजातासु प्राणापानौ दधाति(१०)
सोमं गच्छ स्वाहेत्याह सौम्या हि देवतया प्रजा(११)
यज्ञं गच्छ स्वाहेत्याह प्रजा एव यज्ञियाः करोति(१२)
छन्दाꣳसि गच्छ स्वाहेत्याह पशवो वै छन्दाꣳसि
पशूनेवाव रुन्धे(१३) द्यावापृथिवी गच्छ स्वाहेत्याह
प्रजा एव प्रजाता द्यावापृथिवीभ्यामुभयतः परि
गृह्णाति(१४) नभः (३)

दिव्यं गच्छ स्वाहेत्याह प्रजाभ्य एव प्रजाताभ्यो
वृष्टिं नियच्छ(१५)त्यग्निं वैश्वानरं गच्छ स्वाहेत्याह
प्रजा एव प्रजाता अस्यां प्रति ष्ठापयति(१६) प्राणानां
वा एषोऽव द्यति योऽवद्यति गुदस्य मनो मे हार्दि
यच्छेत्याह प्राणानेव यथास्थानमुप ह्वयते(१७) पशो-
र्वा आलब्धस्य हृदयꣳ शुगृच्छति सा हृदय-
शूलम् (४)

अभि समेति यत् पृथिव्याꣳ हृदयशूलमुद्वासयेत्
पृथिवीꣳ शुचार्पयेद्यदप्स्वपः शुचार्पयेच्छुष्कस्य चार्द्र-
स्य च सन्धावुद्वासयत्युभयस्य शान्त्यै(१८) यं द्विष्यात् तं
ध्यायेच्छुचैवैनमर्पयति(१९) ॥१॥

लोके पशुमान्त्स्यादुभयोरूपं सादयत्युभयोरेवैनं लोकयोः पशुमन्तं करोति[१४] सर्वतः परि हरति रक्षसामपहत्या[१५] इन्द्राग्नियोर्भागधेयीः स्थेत्याह यथायजुरेवैत[१६]दाग्नीध्र उप वासयत्येतद्वै यज्ञस्यापराजितं यदाग्नीध्रं यदेव यज्ञस्यापराजितं तदेवैना उप वासयति[१७] यतः खलु वै यज्ञस्य विततस्य न क्रियते ( ६ )

तदनु यज्ञꣳ रक्षाꣳस्यव चरन्ति यद्वहन्तीनां गृह्णाति क्रियमाणमेव तद्यज्ञस्य शये रक्षसामनन्ववचाराय[१८] न ह्येता ईलयन्त्या तृतीयसवनात्परि शेरे यज्ञस्य सन्तत्यै[१९] ॥ २ ॥

स्या[१]दिन्द्रो[२] गृह्णीया[३]द्दस्त्व[४]मुष्मिन्[५] क्रियते[६] पड्विꣳशतिश्च ॥ २ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः * ॥

---

ब्रह्मवादिनो वदन्ति स त्वा † अध्वर्युः स्याद् यः सोममुपावहरन्त्सर्वाभ्यो देवताभ्य उपावहरेदिति

---

*इममनुवाकं १का०३प्र०१२अनु० भाष्येऽनविंशतिधा विभज्योद्धृतं व्याख्यत्।
† 'स तु वा'—इति ग-सम्मत ।

हृदे त्वेत्याह मनुष्येभ्य एवैतेन करोति मनसे त्वेत्याह पितृभ्य एवैतेन करोति दिवे त्वा सूर्याय त्वेत्याह देवेभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्य उपावहरति(१) पुरा वाचः (१)

प्रवदितोः प्रातरनुवाकमुपाकरोति यावत्येव वाक् तामव रुन्धे(२) ऽपोऽग्रेऽभिव्याहरति यज्ञो वा आपो यज्ञमेवाभि वाचं वि सृजति(३) सर्वाणि छन्दाꣳस्यन्वाह पशवो वै छन्दाꣳसि पशूनेवाव रुन्धे(४) गायत्रिया तेजस्कामस्य परि दध्यात् त्रिष्टुभेन्द्रियकामस्य जगत्या पशुकामस्यानुष्टुभा प्रतिष्ठाकामस्य पङ्क्त्या यज्ञकामस्य विराजान्नकामस्य(५) शृणोत्वग्निः समिधा हवम् (२)

म इत्याह सवितृप्रसूत एव देवताभ्यो निवेद्यापोऽच्छै(६)त्यप इष्य होतरित्याहेषितꣳ हि कर्म क्रियते(७) मैत्रावरुणस्य चमसाध्वर्यवा द्रवेत्याह मित्रावरुणौ वा अपां नेतारौ ताभ्यामेवैना अच्छैति(८) देवीरापो अपान्नपादित्याहाहुत्यैवैना निष्क्रीय गृह्णात्यथो हविष्कृतानामेवाभि घृतानां गृह्णाति(९) (३)

कार्षिरसीत्याह शमलमेवासामप प्लावयति(१०) समुद्रस्य वोऽक्षित्या उन्नय इत्याह तस्माद्द्यमानाः

पीयमाना आपो न क्षीयन्ते[११] योनिर्वै यज्ञस्य
चात्वालं यज्ञो वसतीवरीर्होतृचमसञ्च मैत्रावरुण-
चमसञ्च सꣳस्पर्श्य वसतीवरीर्व्यानयति यज्ञस्य स-
योनित्वायाथो स्वादेवैना योनेः प्र जनय[१२]त्यध्वर्यो-
ऽवैरपा३ इत्याहोत (४)

ईमनन्नमुतेमाः पश्येति वावैतदाह[१३] यद्यग्नि-
ष्टोमो जुहोति यद्युक्थ्यः परिधौ नि मार्ष्टि यद्यति-
रात्रो यजुर्वदन् प्र पद्यते यज्ञक्रतूनां व्यावृत्त्यै[१४] ॥ ३ ॥

वाचो[१] हव[२] गृह्णा[३]त्युत[४]* पञ्चविꣳशतिश्च ॥३॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः † ॥

---

देवस्य त्वा सवितुः प्रसव इति ग्रावाणमा दत्ते
प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवाना-
मध्वर्यू आस्ताम् पूष्णो हस्ताभ्यामित्याह यत्यै[१] पशवो
वै सोमो व्यान उपाꣳशुसवनो यदुपाꣳशुसवनमभि
मिमीते व्यानमेव पशुषु दधा[२]तीन्द्राय त्वेन्द्राय त्वेति

---

* 'हव[२]मभि हतानां गृह्णा[३]त्युत[४]'—इति क, ख, ग।

† इममनुवाकं १का० ३प्र० १३अनु०-भाष्ये चतुर्दशधा विभज्योद्धृत्य व्याख्यत्।

मिमीत इन्द्राय हि सोम आह्रियते[४] पञ्च कृत्वो यजुषा मिमीते (१)

पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे पञ्च कृत्वस्तूष्णीं दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धे[४] श्वात्राः स्थ वृत्रतुर इत्याहैष वा अपाꣳ सोमपीथो[५] य एवं वेद नाप्स्वार्तिमार्च्छति[६] यत् ते सोम दिवि ज्योतिरित्याहैभ्य एवैनम् (२)

लोकेभ्यः सम्भरति[७] सोमो वै राजा दिशोऽभ्यध्यायत् स दिशोऽनु प्राविशत् प्रागपागुदगधरागित्याह दिग्भ्य एवैनꣳ सम्भरत्यथो दिश एवास्मा अव रुन्धे[८] ऽम्ब नि ष्वरेत्याह[९] कामुका एनꣳ स्त्रियो भवन्ति य एवं वेद[१०] यत् ते सोमादाभ्यं नाम जागृवीति (३)

आहैष वै सोमस्य सोमपीथो[११] य एवं वेद न सौम्यामार्तिमार्च्छति[१२] घ्नन्ति वा एतत्सोमं यदभिषुण्वन्त्यꣳशूनप गृह्णाति त्रायत एवैनं[१३] प्राणा वा अꣳशवः पशवः सोमोऽꣳशून् पुनरपि सृजति प्राणानेव पशुषु दधाति[१४] द्वौद्वावपि सृजति तस्माद् द्वौद्वौ प्राणाः[१५] ॥ ४ ॥

मिमीत[1] एन[2] मिति[3]* चतुश्चत्वारिंशच्च ॥ ४ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः † ॥

---

प्राणो वा एष यदुपांशुर्यदुपांश्वग्रा ग्रहा गृह्य-
न्ते प्राणमेवानु प्र य[1]न्त्यरुणो ह स्माहौपवेशिः प्रातः-
सवन एवाहं यज्ञꣳ सꣳ स्थापयामि तेन ततः सꣳस्थि-
तेन चरामीत्यष्टौ कृत्वोऽग्रेऽभि षुणोत्यष्टाक्षरा गायत्री
गायत्रं प्रातःसवनं प्रातःसवनमेव तेनाप्नोत्येकादश
कृत्वो द्वितीयमेकादशाक्षरा त्रिष्टुप् त्रैष्टुभं माध्य-
न्दिनम् (१)

सवनं माध्यन्दिनमेव सवनं तेनाप्नोति द्वादश
कृत्वस्तृतीयं द्वादशाक्षरा जगती जागतं तृतीयसवनं
तृतीयसवनमेव तेनाप्नोत्येताꣳ ह वाव स यज्ञस्य
संस्थितिमुवाचास्कन्दायास्कन्नꣳ हि तद्यद्यज्ञस्य सꣳ-
स्थितस्य स्कन्द[1]त्यथो खल्वाहुर्गायत्री वाव प्रातःसवने
नातिवाद इत्यनतिवादुक एनं भ्रातृव्यो भवति
य एवं वेद तस्मादष्टावष्टौ ( २ )

---

* 'यजुषा मिमीत[१] एन[२] माप्नोति[३]'—इति क, ख, ग।

† इममनुवाकं १का० ४प्र० १अनु०-भाष्ये यथाक्रमशो विभज्योदाजहार व्याख्यत्।

त्वाऽभिपुत्यम्[१] ब्रह्मवादिनो वदन्ति पवित्रवन्तो-
ऽन्ये ग्रहा गृह्यन्ते किम्पवित्र उपाꣳशुरिति वाक्पवित्र
इति ब्रूयाद्वाचस्पतये पवस्व वाजिन्नित्याह वाचैवैनं
पवयति[४] वृष्णो अꣳशुभ्यामित्याह वृष्णो ह्येतावꣳशू
यौ सोमस्य गभस्तिपूत इत्याह गभस्तिना ह्येनं पव-
यति देवो देवानां पवित्रमसीत्याह देवो ह्येषः ( ३ )
सन् देवानाम् पवित्रं येषां भागोऽसि तेभ्यस्त्वेत्याह
येषाꣳ ह्येष भागस्तेभ्य एनं गृह्णाति[५] स्वाङ्कृतोऽसी-
त्याह प्राणमेव स्वमकृत मधुमतीर्न इषस्कृधीत्याह
सर्वमेवास्मा इदꣳ स्वदयति विश्वेभ्यस्त्वेन्द्रियेभ्यो दि-
व्येभ्यः पार्थिवेभ्य इत्याहोभयेष्वेव देवमनुष्येषु प्राणान्
दधाति[६] मनस्त्वा ( ४ )
अष्टित्याह मन एवाश्नुत उर्वन्तरिक्षमन्विहीत्या-
हान्तरिक्षदेवत्यो हि प्राणः स्वाहा त्वा सुभवः सूर्या-
येत्याह प्राणा वै स्वभवसो देवास्तेष्वेव परोक्षं जुहोति
देवेभ्यस्त्वा मरीचिपेभ्य इत्याहादित्यस्य वै रश्मयो
देवा मरीचिपास्तेषां तद्भागधेयं तानेव तेन प्रीणा-
ति[७] यदि कामयेत वर्षुकः पर्जन्यः ( ५ )
स्यादिति नीचा हस्तेन नि मृज्याद् वृष्टिमेव नि
यच्छति यदि कामयेतावर्षुकः स्यादित्युत्तानेन नि

पानौ वि च्छिनत्ति ताजक् प्र मीयते यं कामयेत सर्वमायुरियादिति सꣳस्पृष्टौ तस्य सादयेद्यानेनैवास्य प्राणापानौ सन्तनोति सर्वमायुरेति[१] ॥ ६ ॥

त[१] उभयान्[१] गृह्यते[१] चतुश्चत्वारिꣳशच्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः * ॥

---

वाग्वा एषा यदैन्द्रवायवो यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते वाचमेवानु प्र यन्ति[१] वायुं देवा अब्रुवन्त्सोमꣳ राजानꣳ हनामेति सोऽब्रवीद्वरं वृणै मदग्रा एव वो ग्रहा गृह्यान्ता इति तस्मादैन्द्रवायवाग्रा ग्रहा गृह्यन्ते तमघ्न[२]न्त्सोऽपूयत्तं देवा नोपाधृष्णुवन् ते वायुमब्रुवन्निमं नः स्वदय ( १ )

इति सोऽब्रवीद्वरं वृणै मद्देवत्यान्येव वः पात्राण्युच्यान्ता इति तस्मान्नानादेवत्यानि सन्ति वायव्यान्युच्यन्ते तमेभ्यो वायुरेवास्वदयत् तस्माद्यत् पूयति तत् प्रवाते वि षजन्ति वायुर्हि तस्य पवयिता स्वदयिता[३] तस्य विग्रहणं नाविन्दन्त्सादितिरब्रवीद्वरं वृणा अथ मया वि गृह्णीध्वं मद्देवत्या एव वः सोमाः ( २ )

---

* इममनुवाकं १का० ४प्र० १अनु०-भाष्ये सप्तधा विभज्योद्धृत्य व्याख्यत् ।

सृन्ना अंसुन्नित्यंुपयाम*गृंहीतोऽसीत्यांहादितिर्देव्त्यांस्तेन् यानि हि दांरुमयांणि पात्रांण्यस्यै तानि योनेः सम्भूंतानि यानिं मृन्मयांनि साक्षात्तान्यस्यै तस्मांदेवमांह(४) वाग्वै पराच्यव्यांकृतावदत् ते देवा इन्द्रंमब्रुवन्निमां नो वाचं व्याकुर्विति सोंऽब्रवीद्वरं वृणै मह्यंञ्चैवैष वायवें च सृह ( ३ )

गृह्याता† इति तस्मांदैन्द्रवायवः सृह गृंह्यते तामिन्द्रो मध्यतोंऽवक्रम्य व्याकंरोत्तस्मांदियं व्याकृंता वागुंद्यते(५) तस्मात् सृकृदिन्द्रांय मध्यतो गृंह्यते द्विर्वायवे द्वौ हि स वरावर्वृंणीत(६) ॥ ७ ॥

स्वदय[१] सोमांः[२] सृहा[३]ष्टाविं॰शतिश्च ॥ ७ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाकः‡ ॥

---

मित्रं देवा अंब्रुवन्त्सोम॑ राजांनं॑ हनामेति सोंऽब्रवीन्नाहं॑§ सर्वस्य वा अहं मित्रमस्मीति तमंब्रुवन् हनांमेवेति सोंऽब्रवीद्वरं वृणै पयंसैव मे सोमं॑ श्रीणन्निति तस्मांन्मैत्रावरुणं॥ पयंसा श्रीणन्ति तस्मात्

---

* 'त्युपयाम'—इति ख। † 'गृह्याता'—इति ख।
‡ इममनुवाक १का० ४प्र० ४अनु०-भाष्ये षोढा विभज्योद्धृत्य व्याख्यत्।
§ 'न्नाहं॑'—इति सु०। || 'वरुणं'—इति क।

पशवोऽपाक्रामन् मित्रः सन् क्रूरमकरिति[१] क्रूरमिव खलु वा एषः (१)

करोति यः सोमेन यजते तस्मात् पशवोऽप क्रामन्ति यन्मैत्रावरुणं पयसा श्रीणाति पशुभिरेव तन्मित्रꣳ समर्द्धयति पशुभिर्यजमानं[२] पुरा खलु वा-वैवं मित्रो*ऽवेदप मत् क्रूरं चक्रुषः पशवः क्रमिष्यन्तीति † तस्मादेवमवृणीत[३] वरुणं देवा अब्रुवन् त्वयांऽशभुवा सोमꣳ राजानꣳ हनामेति सोऽब्रवीद्वरं वृणै मह्यं च (२)

एवैष मित्राय च सह गृह्याता इति तस्मान्मैत्रावरुणः सह गृह्यते तस्माद्राज्ञा राजान मꣳशभुवा घ्नन्ति वैश्येन वैश्यꣳ शूद्रेण शूद्रं[४] न वा इदं दिवा न नक्तमासीदव्यावृत्तं ते देवा मित्रावरुणावब्रुवन्निदन्नो वि वासयतमिति तावब्रूतां वरं वृणावहा एक एवावत्पूर्वो ग्रहो गृह्याता इति तस्मादैन्द्रवायवः (३)

पूर्वो मैत्रावरुणाद् गृह्यते[५] प्राणापानौ ह्येतौ यदुपाꣳश्वन्तर्यामौ[६] मित्रोऽहरजनयद्वरुणो रात्रिं ततो वा इदं व्यौच्छद्यन्मैत्रावरुणो गृह्यते व्युष्ट्यै[७] ॥ ८ ॥

---

* 'मित्रो'—इति मु०। † 'क्रमीष्यन्तीति'—इति ख।

एष[1] चैं[2]न्द्रवायवो[3] द्वाविंशतिश्च ॥ ८ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे चतुर्थप्रपाठके अष्टमोऽनुवाकः* ॥

---

यज्ञस्य शिरोऽच्छिद्यत ते देवा अश्विनावब्रुवन् भिषजौ वै स्थ इदं यज्ञस्य शिरः प्रति धत्तमिति ताव-ब्रूतां वरं वृणावहै ग्रह एव नावत्रापि गृह्यतामिति ताभ्यामेतमाश्विनमगृह्णन् ततो वै तौ यज्ञस्य शिरः प्रत्यधत्तां यदाश्विनो गृह्यते यज्ञस्य निष्कृत्यै[1] तौ देवा अब्रुवन्नपूतौ वा इमौ मनुष्यचरौ (१)

भिषजाविति तस्माद् ब्राह्मणेन भेषजं न कार्यमपूतो ह्ये१षो†ऽमेध्यो यो भिषक् तौ बहिष्पवमानेन पवयित्वा ताभ्यामेतमाश्विनमगृह्णन् तस्माद्बहिष्पवमाने स्तुत आश्विनो गृह्यते[2] तस्मादेवं विदुषा बहिष्पवमान उपसद्यः‡ पवित्रं वै बहि§ष्पवमान आत्मानमेव पवयते[3] तयोस्त्रेधा भैषज्यं विन्यदधुरग्नौ तृतीयमप्सु तृतीयं ब्राह्मणे तृतीयं तस्मादुदपात्रम् (२)

---

* इममनुवाकं १का० ४प्र० ५अनु० भाष्ये सप्तधा विभज्योद्धृत्य व्याख्यत्।
† 'ह्ये१षो'—इति मु०।   ‡ 'उपसद्य'—इति मु०।
§ 'वै बहि'—इति क।

उपनिधाय ब्राह्मणं दक्षिणतो निषाद्य भेषजं कुर्याद्यावदेव भेषजं तेन करोति समर्धुकमस्य कृतं भवति[४] ब्रह्मवादिनो वदन्ति कस्मात् सत्यादेकपात्रा द्विदेवत्या गृह्यन्ते द्विपात्रा हूयन्त इति[५] यदेकपात्रा गृह्यन्ते तस्मादेकोऽन्तरतः प्राणो द्विपात्रा हूयन्ते तस्माद्द्वौद्वौ बहिष्टात्प्राणाः[६] प्राणा वा एते यद् द्विदेवत्याः पशव इडा यदिडां पूर्वां द्विदेवत्येभ्य उपह्वयेत ( ३ )

पशुभिः प्राणानन्तर्दधीत प्रमायुकः स्याद् द्विदेवत्यान् भक्षयित्वेडामुपह्वयते प्राणानेवात्मन् धित्वा पशूनुप ह्वयते[७] वाग्वा ऐन्द्रवायवश्चक्षुर्मैत्रावरुणः श्रोत्रमाश्विनः पुरस्तादैन्द्रवायवं भक्षयति तस्मात् पुरस्ताद् वाचा वदति पुरस्तान्मैत्रावरुणं तस्मात् पुरस्ताच्चक्षुषा पश्यति सर्वतः परिहारमाश्विनं तस्मात् सर्वतः श्रोत्रेण शृणोति[८] प्राणा वा एते यद् द्विदेवत्याः ( ४ )

अरिक्तानि पात्राणि सादयति तस्मादरिक्ता अन्तरतः प्राणा यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञꣳ रक्षाꣳस्यवचरन्ति यदरिक्तानि पात्राणि सादयति क्रियमाणमेव तद्यज्ञस्य शये रक्षसामनन्वव-

चाराय(९) दक्षिणस्य हविर्धानस्योत्तरस्यां वर्त्तन्यां सादयति वाच्येव वाचं दधात्या(१०) तृतीयसवनात् परि शेरे यज्ञस्य सन्तत्यै(११) ॥ ९ ॥

मनुष्यचरा[१]वुदपात्र[२]मुपह्वयेत[३] द्विदेवत्याः[४] षट्चत्वारिंशच्च ॥ ९ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे चतुर्थप्रपाठके नवमोऽनुवाकः* ॥

---

बृहस्पतिर्देवानां पुरोहित आसीच्छण्डामर्कावसुराणां ब्रह्मण्वन्तो देवा आसन् ब्रह्मण्वन्तोऽसुरास्ते†ऽन्योऽन्यं नाशक्नुवन्नभिभवितुं ते देवाः शण्डामर्कावुपामन्त्रयन्त तावब्रूतां वरं वृणावहै ग्रहावेव नावत्रापि गृह्येतामिति ताभ्यामेतौ शुक्रामन्थिनावगृह्णन् ततो देवा अभवन् परा सुरा यस्यैवं विदुषः शुक्रामन्थिनौ गृह्येते भवत्यात्मना परा (१)

अस्य भ्रातृव्यो भवति(१) तौ देवा अपनुद्यात्मन इन्द्रायाजुहवुरपनुत्तौ शण्डामर्कौ सहामुनेति ब्रूयाद्यं द्विष्यात्तमेव द्वेष्टि तेनैनौ सहापनुदते(२) स प्रथमः

---

* इममनुवाकं १का० ४प्र० ६,७ अनु०-भाष्ये एकदशधा विभज्य व्याख्यत्।
† 'स्ते१ऽन्यो'—इति मु०। 'स्ते३ ऽन्यो'—इति क।

संज्ञतिर्विश्वकर्मेत्येवैनावात्मन् इन्द्रायाजुहवुरिन्द्रो ह्येतानि रूपाणि करिक्रदचर[३]दसौ वा आदित्यः शुक्रश्चन्द्रमा मन्थ्यपि गृह्य प्राञ्चौ निः ( २ )

क्रामतस्तस्मात् प्राञ्चौ यन्तौ न पश्यन्ति[४] प्रत्यञ्चावावृत्य जुहुतस्तस्मात् प्रत्यञ्चौ यन्तौ पश्यन्ति[५] चक्षुषी वा एते यज्ञस्य यच्छुक्रा*मन्थिनौ नासिकोत्तरवेदिरभितः परिक्रम्य जुहुतस्तस्मादभितो नासिकां चक्षुषी तस्मान्नासिकया चक्षुषी विधृते सर्वतः परि क्रामतो रक्षसामपहत्यै[६] देवा वै याः प्राचीराहुतीर्†-रजुहवुर्ये पुरस्तादसुरा आसन् तांस्ताभिः प्र ( ३ )

अनुदन्त याः प्रतीचीर्ये पश्चादसुरा आसन् तांस्ताभिरपानुदन्त प्राचीरन्या आहुतयो हूयन्ते प्रत्यञ्चौ शुक्रामन्थिनौ पश्चाच्चैव पुरस्ताच्च यजमानो भ्रातृव्यान् प्र णुदते तस्मात् पराचीः प्रजाः प्रवीयन्ते प्रतीचीर्जायन्ते[७] शुक्रामन्थिनौ वा अनु प्रजाः प्र जायन्ते चौश्चाद्याश्च सुवीराः प्रजाः प्रजनयन् परीहि शुक्रः शुक्रशोचिषा ( ४ )

सुप्रजाः प्रजाः प्रजनयन् परीहि मन्थी मन्थिशोचिषेत्याहैता वै सुवीरा या अचीरेताः सुप्रजा या

---

* 'यच्छुक्रा'—इति क। † 'प्राचीराहुती'—इति क।

आर्द्या[८] य एव वेदाव्यस्य प्रजा जायते नाद्या[९] प्रजापतेरक्ष्यश्वयत् तत्परापतत्तद्विकङ्कत् प्राविशत्त-द्विकङ्कते नारमत तद्यवं प्राविशत् तद्यवेऽरमत तद्यवस्य (५)

यवत्व यद्वैकङ्कत मन्थिपात्रं भवति सक्तुभिः श्रीणाति प्रजापतेरेव तच्चक्षु सम्भरति[१०] ब्रह्मवा-दिनो वदन्ति कस्मात् सत्यान्मन्थिपात्रः सदो नाश्नुत इत्यार्तपात्रः हीति ब्रूयाद्यदश्नुवीतान्धोऽध्वर्युः स्या-दार्त्तिमार्छेत् तस्मान्नाश्नुते[११] ॥ १० ॥

परा[१]* नि[२]ष्य्[३] शुक्रशोचिषा[४] यवस्य[५] सप्तचिंशच्च ॥ १० ॥

इति तैत्तिरीयसंहितायां
पष्ठकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः† ॥

---

देवा वै यद् यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा आग्रयणाग्रान् ग्रहानपश्यन् तानगृह्णत ततो वै तेऽग्रं पर्यायन यस्यैव विदुष आग्रयणाग्रा ग्रहा गृह्यन्ते-ऽग्रमेव समानानां पर्येति[१] रुग्णवत्यर्चा भ्रातृव्य-

---

* 'आत्मना प्रद्रा [१]' इति क, ख, ग।

† इममनुवाकं १का० ४प्र० ८६ अनु० भाष्ये एकादशधा विभज्य व्याख्यत।

वतो गृह्णीयाद् भ्रातृव्यस्यैव सृक्वायँ समानानां पर्यैति[१] ये देवा दिव्येकादश स्थेत्याह (१)

एतावतीर्वै देवतास्ताभ्य एवैनँ सर्वाभ्यो गृह्णा[२]त्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्याह वैश्वदेवो ह्येष देवतया[३] वाग्वै देवेभ्योऽपाक्रामद्यज्ञायातिष्ठमाना ते देवा वाच्यपक्रान्तायां तूष्णीं ग्रहानगृह्णत सामन्यत वागन्तर्यन्ति वै मेति साग्रयणं प्रत्यागच्छत् तदाग्रयणस्याग्रयणत्वम् (२)

तस्मादाग्रयणे वाग्वि सृज्यते यत्तूष्णीम्पूर्वे ग्रहा गृह्यन्ते[४] यथा त्सारीयति म आख इयति नाप रात्स्यामीत्युपावसृजत्येवमेव तदध्वर्युराग्रयणं गृहीत्वा यज्ञमारभ्य वाचं वि सृजते[६] त्रिर्हिङ्करोत्युद्गातॄनेव तद्वृणीते[७] प्रजापतिर्वा एष यदाग्रयणो यदाग्रयणं गृहीत्वा हिङ्करोति प्रजापतिरेव (३)

तत्प्रजा अभिजिघ्रति तस्माद् वत्सञ्जातं गौरभि जिघ्र[८]त्यात्मा वा एष यज्ञस्य यदाग्रयणः सवने सवनेऽभि गृह्णात्यात्मन्नेव यज्ञँ सन्तनो[९]त्युपरिष्टादा नयतिरेत एव तद्दधा[१०]त्यधस्तादुप गृह्णाति प्र जनयत्येव तद्[११] ब्रह्मवादिनो वदन्ति कस्मात् सत्याद्गायत्री कनिष्ठा छन्दसाँ सती सर्वाणि सव-

नानि वहतीति (४) एष वै गायत्रियै वत्सो यदाग्र-
यणस्तमेव तदभिनिवर्त्तं सर्वाणि सवनानि वहति
तस्माद् वत्समुपाकृतं गौरभिनि वर्त्तते(१२) ॥ ११ ॥

आह [१]आग्रयणत्व [२]मे [३]वेति [४] * विंशतिश्च ॥ ११ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे चतुर्थप्रपाठके एकादशोऽनुवाकः† ॥

(१)यज्ञेन (२)देवा (३)ब्रह्मवादिनो (४)देवस्य (५)प्राणो
(६)देवा (७)वाग् (८)मित्रं (९)यज्ञस्य (१०)बृहस्पति(११)र्देवा
एकादश ‡ ॥ ४६ ॥

(१)यज्ञेन (२)लोके पशुमान्त्स्यात् (३)सवनं माध्यन्दिनं
(४)वाग्वा (५)अरिक्तानि (६)तत्प्रजा अभ्येकपञ्चाशत्‖ ॥४॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे चतुर्थः प्रपाठक ॥ ४ ॥

---

* ' ०त्व[२] प्रजापतिरे[३]वेति[४] '—इति क, ख, ग।

† इममनुवाकं१का० ४प्र०१०,११ अनु० भाष्ये द्वादशाम्न कृत्वोद्धृत्य व्याख्यत्।

‡ प्रपाठकेऽत्र ये एकादश अनुवाकास्तेषा मेवेमानि प्रतीकपदानि।

§ "(१)यज्ञेन०—०ला उपयद्भि(२)र्देवा वै यज्ञमाशी धे (३)ब्रह्मवादिन ०—० सत्त्वै (४)देवस्य०—०यावाश (५)प्राण०—०उपांश्वया (६)देवा०—० उपांशौ (७)वाग्वै (८)मित्र (९)यज्ञस्य शिरो (१०)बृहस्पतिर्देवानां (११)देवा०—०आग्रयणायानेकादश ॥ ११ ॥"—इति क, ख, ग।

‖ ८४पृ० ६पं०, ८८पृ० १पं०, ९२पृ० १२पं०, ९६पृ० ८पं०, १००पृ० १७पं०, १०४पृ० १५पं०। मु० पुस्तके तु नास्त्येतद्वाक्यम्।

11

## अथ तैत्तिरीयसंहितायां

### षष्ठकाण्डे

### पञ्चम प्रपाठकः ।

॥ हरिः ओम् ॥

इन्द्रो वृत्राय वज्रमुदयच्छत् स वृत्रो वज्रादुद्यताद्-
बिभेत्सोऽब्रवीन्मा मे प्र हारस्ति वा इदं मयि वीर्यं तत्ते
प्र दास्यामीति तस्मा उक्थ्यं प्रायच्छत् तस्मै द्वितीयमुद्-
यच्छत्सोऽब्रवीन्मा मे प्र हारस्ति वा इदं मयि वीर्यं तत्ते
प्र दास्यामीति (१)

तस्मा उक्थ्यमेव प्रायच्छत्तस्मै तृतीयमुदयच्छत्तं
विष्णुरन्वतिष्ठत जहीति सोऽब्रवीन्मा मे प्र हारस्ति वा
इदं मयि वीर्यं तत्ते प्र दास्यामीति तस्मा उक्थ्यमेव
प्रायच्छत्तं निर्मायम् भूतमहन् यज्ञो हि तस्य माया-
सीद्यदुक्थ्यो गृह्यत इन्द्रियमेव (२)

तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्त[१] इन्द्राय त्वा बृह-
द्वते वयस्वत इत्याहेन्द्राय हि स तं प्रायच्छत्[२] तस्मै त्वा
विष्णवे त्वेत्याह यदेव विष्णुरन्वतिष्ठत जहीति तस्माद्

विष्णुमन्वाभजति[३] विनिर्गृह्णाति विहिं स तं तस्म प्रा-
यच्छ[४]दे॒प ते योनिः पुनर्हविरसीत्याह पुनःपुनः (३)
ह्यस्मान्निर्गृह्णाति[५] चक्षुर्वा एतद्यज्ञस्य यदुक्थ्य-
स्तस्मादुक्थ्यं हुतं सोमा अन्वायन्ति तस्मादात्मा
चक्षुरन्वेति तस्मादेकं यन्तं बहवोऽनु यन्ति तस्मादेको
बहूनां भद्रो भवति तस्मादेको बह्वीर्जाया विन्दते[६]
यदि कामयेताध्वर्युरात्मानं यज्ञयशसेनार्पयेयमित्यन्त-
राहवनीयञ्च हविर्धानञ्च तिष्ठन्नव नयेत् (४)
आत्मानमेव यज्ञयशसेनार्पयति यदि कामयेत
यजमानं यज्ञयशसेनार्पयेयमित्यन्तरा सदोहविर्धाने
तिष्ठन्नव नयेद् यजमानमेव यज्ञयशसेनार्पयति यदि
कामयेत सदस्यान् यज्ञयशसेनार्पयेयमिति सद आ-
लभ्याव नयेत् सदस्यानेव यज्ञयशसेनार्पयति[७] ॥ १ ॥
इ[१]त्येव[२]* पुनःपुन[३]र्नयेत्[४] त्रयस्त्रिंशच्च ॥ १ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः † ॥

---

* 'इती[१]न्द्रियमेव[२]'–इति क, ख, ग।

† इममनुवाकं १का० ४प० १२अनु०-भाष्ये सम्पार्थं सत्योद्धृत्य व्याख्यत्।

आयुर्वा एतद्यज्ञस्य यद् ध्रुव उत्तमो ग्रहाणां गृह्यते तस्मादायुः प्राणानामुत्तमं[१] मूर्धानन्दिवो अरतिं पृथिव्या इत्याह मूर्धानमेवैनꣳ समानानां करोति[२] वैश्वानरमृताय जातमग्निमित्याह वैश्वानरꣳ हि देवतयायु[३]रुभयतो वैश्वानरो गृह्यते तस्मादुभयतः प्राणा अधस्ताच्चोपरिष्टाच्चा[४]र्द्धि नोऽन्ये ग्रहा गृह्यन्तेऽर्द्धो ध्रुवस्तस्मात् ( १ )

अर्ध्यर्वाङ् प्राणोऽन्येषां प्राणाना[५]मुपोप्तेऽन्ये ग्रहाः साद्यन्तेऽनुपोप्ते ध्रुवस्तस्मादस्थ्नान्याः प्रजाः प्रतितिष्ठन्ति माꣳसेनान्या[६] असुरा वा उत्तरतः पृथिवीं पर्याचिकीर्षन् तां देवा ध्रुवेणादृꣳहन् तद् ध्रुवस्य ध्रुवत्वं यद् ध्रुव उत्तरतः साद्यते धृत्या[७] आयुर्वा एतद् यज्ञस्य यद् ध्रुव आत्मा होता यद्धोतृचमसे ध्रुवमवनयत्यात्मन्नेव यज्ञस्य ( २ )

आयुर्दधाति[८] पुरस्तादुक्थस्यावनीय इत्याहुः पुरस्ताद्ध्यायुषो भुङ्क्ते मध्यतोऽवनीय इत्याहुर्मध्यमेन ह्यायुषो भुङ्क्त उत्तरार्धेऽवनीय इत्याहुरुत्तमेन ह्यायुषो भुङ्क्ते[९] वैश्वदेव्या मृचि शस्यमानायामव नयति वैश्वदेव्यो वै प्रजाः प्रजास्वेवायुर्दधाति[१०] ॥ २ ॥

तस्मा॑द्[1]* य॒ज्ञ[2]स्यैका॒न्नच॑त्वारि॒ꣳशच्च॑ ॥ २ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः † ॥

---

य॒ज्ञेन॒ वै दे॒वा सु॑व॒र्गं लो॒कमा॑य॒न् तेऽमन्यन्त म॒नुष्या॑ नो॒ऽन्वा भ॑विष्य॒न्तीति॒ ते सं॑वत्स॒रेण॑ योपयि॒त्वा सु॑व॒र्गं लो॒कमा॑य॒न् तम॑पय ऋतुग्र॒हैरे॒वानु॒ प्राजा॑नन् यदृ॑तुग्र॒हा गृ॒ह्यन्ते॑ सुव॒र्गस्य॑ लो॒कस्य॒ प्रज्ञा॑त्यै॒[1] द्वाद॑श गृह्यन्ते॒ द्वाद॑श॒ मासा॑ः संवत्स॒रः सं॑वत्स॒रस्य॒ प्रज्ञा॑त्यै॒[2] स॒ह प्र॑थ॒मौ गृ॑ह्येते स॒होत्त॒मौ त॒स्माद् द्वौद्वा॑वृ॒तू[3] उ॑भ॒यतो॑मुखमृतुपा॒त्रं भ॑वति॒ कः ( १ )

हि तद्वेद॒ यत॑ ऋतू॒नां मुख॑[4] मृ॒तुना॑ प्रेष्येति॒ षट् कृत्व॑ आह॒ षड्वा ऋ॒तव॑ ऋ॒तूनेव॒ प्री॑णात्यृ॒तुभि॒रिति॑ चतु॒श्चतु॑ष्पद॒ ए॒व प॒शून् प्री॑णाति॒ द्विः पुन॑र्ऋ॒तुना॑ह द्वि॒पद॑ ए॒व प्री॑णा[5]त्यृ॒तुना॑ प्रेष्येति॒ षट् कृत्व॑ आहर्तु॑भि॒रिति॑ च॒तुस्त॒स्माच्चतु॑ष्पाद प॒शव॑ ऋ॒तूनुप॑जीवन्ति॒ द्विः (२)

---

* 'आर्द्रां ध्रुवस्तस्माद्[१] ए॒व'—इति क, ख, ग।

† इममनुवाक १का० ४प्र० १३अनु० भाष्ये दर्शाम्र कृत्वोद्धृत्य व्याख्यत् ।

पुनर्ऋतुनाह तस्माद् द्विपादश्चतुष्पद: पशूनुप जीव[6]न्त्यृतुना प्रेष्येति षट् कृत्व आहर्तुभिरिति चतुर्द्धिः पुनर्ऋतुनाहाक्रमणमेव तत् सेतुं यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्यै[7] नान्योऽन्यमनु प्र पद्येत यदन्योऽन्यमनु प्र पद्येतर्तुर्ऋतुमनु प्र पद्येतर्त्तवो मोहुकाः स्युः[8] (२)

प्रसिद्धमेवाध्वर्युर्दक्षिणेन प्र पद्यते प्रसिद्धं प्रतिप्रस्थातोत्तरेण तस्मादादित्यः षण्मासो दक्षिणेनैति षडुत्तरेणो[9]पयामगृहीतोऽसि सꣳसर्पोऽस्यꣳहस्पत्याय त्वेत्याहास्ति त्रयोदशो मास इत्याहुस्तमेव तत् प्रीणाति[10] ॥ ३ ॥

को [1] द्वि.[2]* स्यु [3]श्चतुस्त्रिꣳशच्च ॥ ३ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः† ॥

---

सुवर्गाय वा एते लोकाय गृह्यन्ते यदृतुग्रहा ज्योतिरिन्द्राग्नी यदैन्द्राग्नमृतुपात्रेण गृह्णाति ज्योतिरेवास्मा उपरिष्टाद् दधाति सुवर्गस्य लोकस्यानुख्यात्यै[1] ओजोभृतौ वा एतौ देवानां यदिन्द्राग्नी यदैन्द्राग्नो

---

* 'को[१] जो वन्ति द्वि [२]'–इति क, ख, ग।
† इममनुवाकं १का० ४प० १४अनु० भाष्ये दृष्ट्वा सात्त्वोद्धृत्य व्याख्यत।

गृह्यत ओज एवाव रुन्धे[१] वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति वैश्वदेव्यो वै प्रजा असावादित्यः शुक्रो यद्वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति तस्मादसावादित्यः (१)

सर्वाः प्रजाः प्रत्यङ्ङुदेति तस्मात्सर्व एव मन्यते मां प्रत्युदगादिति[२] वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति वैश्वदेव्यो वै प्रजास्तेजः शुक्रो यद्वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति प्रजास्वेव तेजो दधाति[३] ॥ ४ ॥

आदित्य १त्रिꣳशच्च* ॥ ४ ॥

इति तैत्तिरीयसंहितायां षष्ठकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः† ॥

---

इन्द्रो मरुद्भिः सांविद्येन माध्यन्दिने सवने वृत्रमहन्यन्माध्यन्दिने सवने मरुत्वतीया गृह्यन्ते वार्त्रघ्ना एव ते यजमानस्य गृह्यन्ते[१] तस्य वृत्रं जघ्नुष ऋतवो मुह्यन्त्स ऋतुपात्रेण मरुत्वतीयानगृह्णात्ततो वै स ऋतून् प्राजानाद्यदृतुपात्रेण मरुत्वतीया गृह्यन्त ऋतूनां प्रज्ञात्यै[२] वज्रं वा एतं यजमानो भ्रातृव्याय प्र हरति यन्मरुत्वतीया उदेव प्रथमेन (१)

---

* 'तस्मादसावादित्य[१]स्त्रिꣳशच्च'—इति क, ख, ग।

† इममनुवाकं १का० ४प्र० १५, १६ अनु०-भाष्ये चतुर्थं सत्वोद्धृत्य व्याख्यत्।

यच्छति* प्र हरति द्वितीयेन स्तृणुते तृतीये(३)नायुध वा एतद् यजमान सꣳस्कुरुते यन्मरुत्वतीया धनुरेव प्रथमो ज्या द्वितीय इषुस्तृतीय (४) प्रत्येव प्रथमेन धत्ते वि सृजति द्वितीयेन विध्यति तृतीयेने(५)न्द्रो वृत्रꣳ हत्वा परां परावतमगच्छदपाराधमिति मन्यमानः स हरितोऽभवत्स एतान्मरुत्वतीयानात्मस्परणानपश्यत् तानगृह्णीत (२)

प्राणमेव प्रथमेनास्पृणुतापानं द्वितीयेनात्मान तृतीये(६)नात्मस्परणा वा एते यजमानस्य गृह्यन्ते यन्मरुत्वतीयाः प्राणमेव प्रथमेन स्पृणुतेऽपानं द्वितीयेनात्मानं तृतीयेने(७)न्द्रो वृत्रमहन् तं देवा अब्रुवन्महान्वा अयमभूद्यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वꣳ स एतं माहेन्द्रमुद्धारमुदहरत वृत्रꣳ हत्वान्यासु देवतासु (३)

अधि यन्माहेन्द्रो गृह्यत उद्धारमेव तं यजमान उद्धरतेऽन्यासु प्रजास्वधि(८) शुक्रपात्रेण गृह्णाति यजमानदेवत्यो वै माहेन्द्रस्तेजः शुक्रो यन्माहेन्द्रꣳ शुक्रपात्रेण गृह्णाति यजमान एव तेजो दधाति(९) ॥ ५ ॥

---

* 'यच्छति'—इति क

प्रथमेना(१)गृह्णीत(२) देवता(३)स्त्वष्टाविंशतिश्च ॥५॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाकः* ॥

---

अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्तस्या उच्छेषणमददुस्तत्प्राश्नात् सा रेतोऽधत्त तस्यै चत्वार आदित्या अजायन्त(१) सा द्वितीयमपचत् सामन्यतोच्छेषणान्म इमेऽज्ञत यदग्रे प्राशिष्यामीतो मे वसीयाꣳसो जनिष्यन्त इति साग्रे प्राश्नात् सा रेतोऽधत्त तस्यै व्यृद्धमाण्डमजायत(२) सादित्येभ्य एव (१)

तृतीयमपचद्भोगाय म इदꣳ श्रान्तमस्त्विति तेऽब्रुवन् वरं वृणामहै योऽतो जायाता अस्माकꣳ स एकोऽसद्योऽस्य प्रजायामृध्याता अस्माकं भोगाय भवादिति ततो विवस्वानादित्योऽजायत तस्य वा इयं प्रजा यन्मनुष्यास्तास्वेक एवर्द्धो यो यजते स देवानां भोगाय भवति(१) देवा वै यज्ञात् (२)

रुद्रमन्तरायन्त्स आदित्यानन्वाक्रमत ते द्विदेवत्यान् प्रापद्यन्त तान्न प्रति प्रायच्छन् तस्मादपि वध्यं प्र-

---

* इममनुवाकं १का० ४प्र० १७—२१ अनु०-भाष्ये नवाधं हत्वोद्धृत्य व्याख्यत् ।

गृह्यते तृतीयस्य सवनस्यावरुद्ध्यै[४] सवितृपात्रेण वैश्वदेवं कलशाद् गृह्णाति वैश्वदेव्यो वै प्रजा वैश्वदेवः कलशः सविता प्रसवानामीशे यत् सवितृपात्रेण वैश्वदेवं कलशाद् गृह्णाति सवितृप्रसूत एवास्मै प्रजाः प्र (२)

जनयति[५] सोमे सोममभि गृह्णाति रेत एव तद्दधाति[६] सुशर्मासि सुप्रतिष्ठान इत्याह सोमे हि सोममभि गृह्णाति प्रतिष्ठित्यै[७] एतस्मिन् वा अपि ग्रहे मनुष्येभ्यो देवेभ्यः पितृभ्यः क्रियते सुशर्मासि सुप्रतिष्ठान इत्याह मनुष्येभ्य एवैतेन करोति बृहदित्याह देवेभ्य एवैतेन करोति नम इत्याह पितृभ्य एवैतेन करोति (३)

एतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णा[८]त्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्याह वैश्वदेवो ह्येषः[९] ॥ ७ ॥

विश्वे[१] प्र[२] करो[३]*त्येकान्नविꣳशतिश्च ॥ ७ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः† ॥

---

* "प्र[२] पितृभ्य एवैतेन करो[३]"—इति क, ख ।

† इममनुवाकं १का० ४प्र० २२–२६ अनु०-भाष्ये नवाग्र कृत्वोद्धृत्य व्याख्यत् ।

प्राणो वा एष यदुपाꣳशुर्यदुपाꣳशुपात्रेण प्रथम-
श्चोत्तमश्च ग्रहौ गृह्येते प्राणमेवानु प्र यन्ति प्राणमनू-
द्यन्ति[1] प्रजापतिर्वा एष यदाग्रयणः प्राण उपाꣳशुः
पत्नीः प्रजाः प्र जनयन्ति यदुपाꣳशुपात्रेण पात्नीवत-
माग्रयणाद् गृह्णाति प्रजानां प्रजननाय तस्मात्प्राणं
प्रजा अनु प्र जायन्ते[2] देवा वा इत इतः पत्नीः
सुवर्गम् (१)

लोकमजिगाꣳसन् ते सुवर्गं लोकं न प्राजानन् त
एतं पात्नीवतमपश्यन् तमगृह्णत ततो वै ते सुवर्गं लोकं
प्राजानन् यत्पात्नीवतो गृह्यते सुवर्गस्य लोकस्य प्र-
ज्ञात्यै[3] स सोमो नातिष्ठत स्त्रीभ्यो गृह्यमाणस्तं घृतं
वज्रं कृत्वाघ्नन् तं निरिन्द्रियं भूतमगृह्णन् तस्मात्
स्त्रियो निरिन्द्रिया अदायादीरपि पापात् पुꣳस उप-
स्तितरम् (२)

वदन्ति यद् घृतेन पात्नीवतꣳ श्रीणाति वज्रेणैवेनं
वशे कृत्वा गृह्णा[4]त्युपयामगृहीतोऽसीत्याहेयं वा उप-
यामस्तस्मादिमां प्रजा अनु प्र जायन्ते[5] बृहस्पतिसुतस्य
त इत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै प्रजाः
प्र जनयती[6]न्दो इत्याह रेतो वा इन्दू रेत एव तद्-
धा[7]तीन्द्रियाव इति (३)

घासं प्र यच्छेत्पुहत्यं परिधीञ्जुहोति निराधाना-भ्यामेव घासं प्र यच्छ[४]त्युन्नेता जुहोति यातयामेव ह्येतदध्वर्युः स्वगाकृतो यदध्वर्युर्जुहुयाद् यथा विमुक्तं पुनर्युनक्ति तादृगेव त[५]च्छीर्षन्नधि निधाय जुहोति शीर्षतो हि समभव[६]द्विक्रम्य जुहोति विक्रम्य हीन्द्रो वृत्रमहन्त्समृद्ध्यै[७] पशवो वै हारियोजनीर्यत्संभिन्द्या दल्पाः (३)

एनं पशवो भुञ्जन्त उप तिष्ठेरन् यन्न संभिन्द्याद्बहव एनं पशवोऽभुञ्जन्त उप तिष्ठेरन् मनसा सं बाधत उभयं करोति बहव एवैनं पशवो भुञ्जन्त उप तिष्ठन्त[८] उन्नेतर्युपह्वमिच्छन्ते य एव तत्र सोमपीथस्तमेवाव रुन्धत[९] उत्तरवेद्यां नि वपति पशवो वा उत्तरवेदिः पशवो हारियोजनीः पशुष्वेव पशून् प्रति ष्ठापय-न्ति[१०] (४) ॥ ९ ॥

अश्रीणा[१]दन्तराधानाभ्या[२]मल्पाः[३]स्थापयन्ति[४] ॥ ९ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः* ॥

---

* इममनुवाकं १का० ४प्र० २८ अनु०-माष्ये दृष्टाग्रं हृत्वोद्धृत्य याख्यत्।

ग्रहान् वा अनु प्रजाः पशवः प्र जायन्ते[1] उपाꣳश्वन्तर्यामावजावयः शुक्रामन्थिनौ पुरुषा ऋतुग्रहानेकशफा आदित्यग्रहं गावः[2] आदित्यग्रहो भूयिष्ठाभिर्ऋग्भिर्गृह्यते तस्माद्गावः पशूनां भूयिष्ठा[3] यत् त्रिरुपाꣳशुꣳ हस्तेन विगृह्णाति तस्माद् द्वौ त्रीनजा जनयत्य[4]थावयो भूयसीः[5] पिता वा एष यदाग्रयणः पुत्रः कलशो यदाग्रयण उपदस्येत् कलशाद् गृह्णीयाद्यथा पिता (१)

पुत्रं क्षित उपधावति तादृगेव तद्[6] यत् कलश उपदस्येदाग्रयणाद् गृह्णीयाद्यथा पुत्रः पितरं क्षित उपधावति तादृगेव तद्[7] यदात्मा* वा एष यज्ञस्य यदाग्रयणो यद्ग्रहो वा कलशो वोपदस्येदाग्रयणाद् गृह्णीयादात्मन एवाधि यज्ञं निष्करो[8]त्यविज्ञातो वा एष गृह्यते यदाग्रयण स्थाल्या गृह्णाति वायव्येन जुहोति तस्मात् (२)

गर्भेणाविज्ञातेन ब्रह्महा[9]वभृथमव यन्ति परा स्थालीरस्यन्त्युद्वायव्यानि हरन्ति तस्मात् स्त्रियं जातां परास्यन्त्युत्पुमाꣳसꣳ हरन्ति[10] यत्पुरोरुचमाह यथा वस्यस आहरति तादृगेव तद्यद् ग्रहं गृह्णाति यथा

* "तदात्मा"—इति ख, मु०-पुस्तकेऽपि, परं पदपाठविरुद्ध।

वस्यंस आहृत्य प्राहं तादृगेव तद्यत् सादयंति यथा वस्यंस उपनिधायापक्रामंति तादृगेव तद्यत्[११] (३)

वै यज्ञस्य साम्ना यजुंषा क्रियतें शिथिलं तद्यदृचा तद् दृढं पुरस्तांदुपयामा यजुंषा गृह्यन्त उपरिंष्टादुपयामा ऋचा यज्ञस्य धृत्यै[१२] ॥ १० ॥

पिता[१] तस्माद्[२] यद्[३] अष्टादंश च ॥ १०* ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः† ॥

---

प्रान्यानि पात्राणि युज्यन्ते नान्यानि[१] यानि पराचीनानि प्रयुज्यन्तेऽमुमेव तैर्लोकमभि जयति पराङिव ह्यसौ लोको यानि पुनः प्रयुज्यन्त इममेव तैर्लोकमभि जयति पुनःपुनरिव ह्ययं लोकः[२] प्रान्यानि पात्राणि युज्यन्ते नान्यानि यानि पराचीनानि प्रयुज्यन्ते तान्यन्वोषधयः परा भवन्ति यानि पुनः (१)

---

* "यथा पिता[१] तस्मा[२]दपक्रामंति तादृगेव तद्यदष्टादंश च॥१०॥"—इति क, ख, ग।

† इममनुवाकं १का० ४प्र० २८ अनु०-भाष्ये द्वादशाग्रं छत्वोञ्चत्य व्याख्यत्।

प्रयुज्यन्ते तान्यन्वोषधयः पुनरा भवन्ति[१] ग्राम्यानि पार्चाणि युज्यन्ते नान्यानि यानि पराचीनानि प्रयुज्यन्ते तान्यन्वारण्याः पशवोऽरण्यमप यन्ति यानि पुनः प्रयुज्यन्ते तान्यनु ग्राम्याः पशवो ग्राममुपावयन्ति[४] यो वै ग्रहाणां निदानं वेद निदानवान् भवत्याज्यमित्युक्थं तद्वै ग्रहाणां निदानं यदुपांशु शंसति तत् (२)

उपांश्वन्तर्यामयोर्यदुच्चैस्तदितरेषां ग्रहाणामेतद्वै ग्रहाणां निदानं य एवं वेद निदानवान् भवति[५] यो वै ग्रहाणां मिथुनं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते स्थालीभिरन्ये ग्रहा गृह्यन्ते वायव्यैरन्य एतद्वै ग्रहाणां मिथुनं य एवं वेद प्र प्रजया पशुभिर्मिथुनैर्जायत[६] इन्द्रस्त्वष्टुः सोममभीषहापिबत्स विष्वङ् (३)

व्यार्च्छत्स आत्मन्नारमणं नाविन्दत्स एताननुसवनं पुरोडाशानपश्यत्तान्निरवपत्तैर्वै स आत्मन्नारमणमकुरुत तस्मादनुसवनं पुरोडाशा निरुप्यन्ते तस्मादनुसवनं पुरोडाशानां प्राश्नीयादात्मन्नेवारमणं कुरुते नैनं सोमोऽति पवते[७] ब्रह्मवादिनो वदन्ति नर्चा न यजुषा पङ्क्तिराप्यतेऽथ किम् (४)

यज्ञस्य पाङ्क्तत्वमिति धानाः करम्भः परिवापः

पुरोडाशः पयस्या तेन पङ्क्तिराप्यते तद्यज्ञस्य पाङ्क्त्वम्(८) ॥ ११ ॥

पुन(१)स्तद्(२) विप्रड्(३) किं(४) चतुर्दश च ॥ ११* ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे पञ्चमप्रपाठके एकादशोऽनुवाकः† ॥

(१)इन्द्र (२)आयु (३)र्यज्ञेन (४)सुवर्गा(५)येन्द्रो (६)ऽदिति-(७)रन्तर्यामपात्रेण (८)प्राण (९)इन्द्रो (१०)ग्रहान् (११)प्रैकादश‡ ॥ ५§ ॥

(१)इन्द्रो वृत्राय (२)पुनर्ऋतुनाह (३)मिथुनं पशवो (४)नेष्टः पत्नी(५)मुपांश्वन्तर्यामयोर्द्विचत्वारिंशत्‖ ॥ ५ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे पञ्चमः प्रपाठकः ॥ ५ ॥

---

* "भवन्ति यानि पुनः[१] प्रशंसति तद्[२]"–इति क, ख, ग।

† इममनुवाकं १का० ४प्र० २८अनु०-भाष्ये व्यस्य विभज्योद्धृत्य व्याख्यत्।

‡ "(१)इन्द्रो वृत्राया(२)युर्वै (३)यज्ञेन (४)सुवर्गाये(५)न्द्रो मरुद्भि(६)रदिति-(७)रन्तर्यामपात्रेण (८)प्राणो वै ०.—.० पात्रेणे(९)न्द्रो वृत्रमहन् तस्य (१०)ग्रहान् वै (११)प्रान्यानि पात्राण्येकादश ॥ ११ ॥"–इति क, ख, ग।

§ प्रपाठकेऽत्र य एकादश अनुवाकास्तेषा मेवेमानि प्रतीकपदानि।

‖ १०६पृ० ६पं०, १०९पृ० १८पं०, ११४पृ० ५पं०, ११८पृ० १४पं०, १२३पृ० ८पं०। मु०-पुस्तके तु नास्त्येतद्वाक्यम्।

## अथ तैत्तिरीयसंहितायां

### षष्ठकाण्डे

### षष्ठ प्रपाठकः ।

॥ हरिः ओम् ॥

सुवर्गाय वा एतानि लोकाय हूयन्ते यद्दाक्षिणानि[१] द्वाभ्यां गार्हपत्य जुहोति द्विपाद्यजमानः प्रतिष्ठित्या आग्नीध्रे जुहोत्यन्तरिक्ष एवा क्रमते[२] सदोऽभ्यैति सुवर्गमेवैनं लोकं गमयति[३] सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोत्यमुमेवैनं लोकꣳ समारोहयति नयवत्यर्चाग्नीध्रे जुहोति सुवर्गस्य लोकस्याभिनीत्यै[४] दिवं गच्छ सुवः पतेति हिरण्यम् ( १ )

हुत्वोद्गृह्णाति सुवर्गमेवैनं लोकं गमयति[१] रूपेण वो रूपमभ्यैमीत्याह रूपेण ह्यासाꣳ रूपमभ्यैति यद्धिरण्येन[१] तुथो वो विश्ववेदा वि भजत्वित्याह तुथो ह स्म वै विश्ववेदा देवानां दक्षिणा वि भजति तेनैवैना वि भज°त्येतत्ते अग्ने राधः ( २ )

ऐति सोमच्युतमित्याह सोमच्युतꣳ ह्यस्य राध ऐति[८] तन्मित्रस्य पथा नयेत्याह शान्त्यै[९] ऋतस्य पथा प्रेत चन्द्रदक्षिणा इत्याह सत्यं वा ऋतꣳ सत्येनैवैना ऋतेन वि भजति[१०] यज्ञस्य पथा सुविता नयन्तीरित्याह यज्ञस्य ह्येताः पथा यन्ति यद्दक्षिणा[११] ब्राह्मणमद्य राध्यासम् ( ३ )

ऋषिमार्षेयमित्याहैष वै ब्राह्मण ऋषिरार्षेयो यः शुश्रुवान् तस्मादेवमाह[१२] वि सुवः पश्य व्यन्तरिक्षमित्याह सुवर्गमेवैनं लोकं गमयति[१३] यतस्व सदस्यैरित्याह मित्रत्वाय[१४]स्मद्दाचा देवत्रा गच्छत मधुमतीः प्रदातारमा विशतेत्याह वयमिह प्रदातारः स्मोऽस्मानमुत्र मधुमतीरा विशतेति ( ४ )

वावैतदाह[१५] हिरण्यं ददाति ज्योतिर्वै हिरण्यं ज्योतिरेव पुरस्ताद्धत्ते सुवर्गस्य लोकस्यानुख्यात्या[१६] अग्नीधे ददात्य*ग्निमुखानेवर्तून् प्रीणाति[१७] ब्रह्मणे ददाति प्रसूत्यै होत्रे ददात्यात्मा वा एष यज्ञस्य यद्धोतात्मानमेव यज्ञस्य दक्षिणाभिः समर्धयति[१८] ॥ १ ॥

---

* "अग्नीधे ददाति"—इति मु० पाठोऽस्ति ।

हिरंण्यम्[१] राधो[२] राध्यास[३]मित्य[४]ष्टाचिंशच* ॥ १ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे षष्ठप्रपाठके प्रथमोऽनुवाकः† ॥

---

समिष्टयजूंषि जुहोति यज्ञस्य समिष्ट्यै यद्वै यज्ञस्य क्रूरं यद्विलिष्टं यदत्येति यन्नात्येति यदतिकरोति यन्नापि करोति तदेव तैः प्रीणाति[१] नव जुहोति नव वै पुरुषे प्राणाः पुरुषेण यज्ञः सम्मितो यावानेव यज्ञस्तं प्रीणाति[२] षड्ग्मियाणि जुहोति षड्वा ऋतव ऋतूनेव प्रीणाति त्रीणि यजूंषि ( १ )

त्रय इमे लोका इमानेव लोकान् प्रीणाति[३] यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छेत्याह यज्ञपतिमेवैनं गमयति स्वां योनिं गच्छेत्याह स्वामेवैनं योनिं गमय[४]त्येष ते यज्ञो यज्ञपते सहसूक्तवाकः सुवीर इत्याह यजमान एव वीर्यं दधाति[५] वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छ यत्सृञ्जयान् बहुयाजिनोऽयीयजो यज्ञे ( २ )

---

* "राध्यास[३] मधुमतीराविशतेत्य[४]ष्टाचिंशच"–इति क, ख, ग।

† इममनुवाकं १का० ४प्र० ४४अनु०-भाष्येऽस्तारभाय ह्यतोद्धृत्य व्याख्यत्।

यज्ञं प्रत्यतिष्ठिपा३ यज्ञपता३विति स होवाच यज्ञपताविति सत्याद्वै स्रञ्जयाः परा बभूवुरिति होवाच यज्ञे वाव यज्ञः प्रतिष्ठाप्य आसीद्यजमानस्यापराभावा-येति[१] देवा गातुविदो गातुं वित्त्वा गातुमितेत्याह यज्ञ एव यज्ञं प्रति ष्ठापयति यजमानस्यापराभावाय[२] ॥ २ ॥

यजूꣳषि ५ यज्ञ ५ एकचत्वारिꣳशच्च ॥ २ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे षष्ठप्रपाठके द्वितीयोऽनुवाकः* ॥

---

अवभृथ यजूꣳषि जुहोति यदेवार्वाचीनमेकहाय-नादेनः करोति तदेव तैरव यजते[१]ऽपोऽवभृथमवैत्यप्सु वै वरुणः साक्षादेव वरुणमव यजते[२] वर्त्मना वा अन्वित्य यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति साम्ना प्रस्तोता-न्ववैति साम वै रक्षोहा रक्षसामपहत्यै[३] त्रिर्निधनमुपैति त्रय इमे लोका एभ्य एव लोकेभ्यो रक्षाꣳसि ( १ )

---

* इममनुवाकं १का० ४प्र० ४४अनु० भाष्ये समाप्य व्याख्यातवान्।

अप हन्ति[४] पुरुषःपुरुषो निधनमुपैति पुरुषः-
पुरुषो हि रक्षस्वी रक्षसामपहत्या[५] उरुꣳ हि राजा
वरुणश्चकारेत्याह प्रतिष्ठित्यै[६] शतं ते राजन् भिषजः
सहस्रमित्याह भेषजमेवास्मै करो[७]त्यभिष्ठितो वरु-
णस्य पाश इत्याह वरुणपाशमेवाभि तिष्ठति[८] बर्हि-
रभि जुहोत्याहुतीनां प्रतिष्ठित्या अथो अग्निवत्येव
जुहो[९]त्यपबर्हिषः प्रयाजान् ( २ )

यजति प्रजा वै बर्हिः प्रजा एव वरुणपाशान्मुञ्च[१०]-
त्याज्यभागौ यजति यज्ञस्यैव चक्षुषी नान्तरेति[११]
वरुणं यजति वरुणपाशादेवैनं मुञ्च[१२]त्यग्नीवरुणौ
यजति साक्षादेवैनं वरुणपाशान्मुञ्च[१३]त्यपबर्हिषावनू-
याजौ यजति प्रजा वै बर्हिः प्रजा एव वरुणपाशान्मु-
ञ्चति[१४] चतुरः प्रयाजान् यजति द्वावनूयाजौ षट्
सम्पद्यन्ते षड्वा ऋतवः ( ३ )

ऋतुष्वेव प्रति तिष्ठ[१५]त्यवभृथ निचङ्कुणेत्याह यथो-
दितमेव वरुणमव यजते[१६]समुद्रे ते हृदयमप्स्वन्त-
रित्याह समुद्रे ह्यन्तर्वरुणः[१७] सं त्वा विशन्त्वोषधीरु-
ताप इत्याहाद्भिरेवैनमोषधीभिः सम्यञ्चं दधाति[१८]
देवीराप एष वो गर्भ इत्याह यथायजुरेवैतत्[१९] पशवो
वै ( ४ )

सोमो यद्भिन्दूनां भक्षयेत् पशुमान्त्स्याद्वरुणस्त्वेनं गृह्णीयाद्यन्न भक्षयेदपशुः स्यान्नैनं वरुणो गृह्णीयादुपस्पृश्यमेव पशुमान् भवति नैनं वरुणो गृह्णाति(१०) प्रति युतो वरुणस्य पाश इत्याह वरुणपाशादेव निर्मुच्यते(११) प्रतीक्षमा यन्ति वरुणस्यान्तर्हित्यै(१२) एधोस्येधिषीमहीत्याह समिधैवाग्निं नमस्यन्तः (५) उपायन्ति(१३) तेजोऽसि तेजो मयि धेहीत्याह तेज एवात्मन् धत्ते(१४) ॥ ३ ॥

रक्षांसि(१)* प्रयाजाः(२) ऋतवो(३) वै(४) नमस्यन्तो(५) द्वादश च ॥ ३ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे षष्ठप्रपाठके तृतीयोऽनुवाकः† ॥

---

स्फ्येन वेदिमुद्धरन्ति रथाक्षेण वि मिमीते यूपं मिनोति त्रिवृतमेव वज्रं सम्भृत्य भ्रातृव्याय प्र हरति स्तृत्यै(१) यदन्तर्वेदि मिनुयाद्देवलोकमभि जयेद् यद्बहिर्वेदि मनुष्यलोकं वेद्यन्तस्य सन्धौ मिनोत्युभयोर्लोकयोरभिजित्यै(२) उपरसम्मितां मिनुयात् पितृलोककाः-

---

* "लोकेभ्यो रक्षांसि[१]"—इति क, ख, ग।

† इममनुवाकं १का० ४प्र० ४५अनु०-भाष्ये चतुर्विंशार्थं व्याख्यातं वदन्ति।

मस्य रशनसंमितां मनुष्यलोककामस्य चषालसंमितामिन्द्रियकामस्य सर्वान्त्समान् प्रतिष्ठाकामस्य ये त्रयो मध्यमास्तान्त्समान् पशुकाम[३]स्यैतान् वै ( १ )

अनु पशव उप तिष्ठन्ते पशुमानेव भवति[४] व्यतिषजेदितरान् प्रजयैवैनं पशुभिर्व्यतिषजति[५] यं कामयेत प्रमायुकः स्यादिति गर्त्तमितं तस्य मिनुयादुत्तरार्ध्यं वर्षिष्ठमथ ह्रसीयाꣳसमेषा वै गर्त्तमितस्यैवं मिनोति ताजक् प्र मीयते दक्षिणार्ध्यं वर्षिष्ठं मिनुयात् सुवर्गकामस्याथ ह्रसीयाꣳसमाक्रमणमेव तत् सेतुं यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्यै[६] ( २ )

यदेकस्मिन् यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते यन्नैकाꣳ रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दते[७] यं कामयेत स्त्र्यस्य जायेतेत्युपान्ते तस्य व्यतिषजेत् स्त्र्येवास्य जायते यं कामयेत पुमानस्य जायेतेत्यान्तं तस्य प्र वेष्टयेत् पुमानेवास्य ( ३ )

जायते[८]ऽसुरा वै देवान् दक्षिणत उपानयन् तान् देवा उपशयेनैवापानुदन्त तदुपशयस्योपशयत्वं यद्दक्षिणत उपशय उपशये भ्रातृव्यापनुत्त्यै[९] सर्वे वा अन्ये यूपाः पशुमन्तोऽथोपशय एवापशुस्तस्य यजमानः

पशुर्यन्न निर्दिशेदार्त्तिमार्च्छेद् यजमानोऽसौ ते पशुरिति निर्दिशेद् यं द्विष्याद्यमेव (४)

द्वेष्टि तमस्मै पशुं निर्दिशति[10] यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयान्न ग्राम्यान् पशून् हिनस्ति नारण्यान्[11] प्रजापतिः प्रजा असृजत सोऽन्नाद्येन व्यार्ध्यत स एतामेकादशिनीमपश्यत् तया वै सोऽन्नाद्यमवारुन्धत यद्दश यूपा भवन्ति दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धे (५)

य एकादश स्तन* एवास्यै स दुह एवैनां तेन[12] वज्रो वा एषा सम्मीयते यदेकादशिनी सेश्वरा पुरस्तात् प्रत्यञ्चं यज्ञꣳ सम्मर्दितोर्यत् पात्नीवतं मिनोति यज्ञस्य प्रत्युत्तब्ध्यै सयत्वाय[13] ॥ ४ ॥

वै[1] समेध्या[2] अस्यै[3]व[4]† हन्ध्ये[5] त्रिꣳशच्च ॥ ४ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे षष्ठप्रपाठके चतुर्थोऽनुवाकः‡ ॥

---

* "एकादश स्तन"–इति मु॰।

† "समर्ध्यै[२] पुमानेवास्य[३] यमेव[४]"—इति क, ख, ग।

‡ तत्रैव भाष्ये तत इममप्यनुवाकं चयोदशधा विभज्योद्धृत्य व्याख्यत्।

प्रजापतिः प्रजा असृजत स रिरिचानोऽमन्यत स एता मैकादशिनी मपश्यत्तया वै स आयुरिन्द्रियं वीर्यं मात्मन्नधत्त प्रजा इव खलु वा एष सृजते यो यजते स एतर्हि रिरिचान इव यदेषैकादशिनी भवत्यायुरेव तयेन्द्रियं वीर्यं यजमान आत्मन्धत्ते[१] प्रैवाग्नेयेन वापयति मिथुनं सारस्वत्या करोति रेतः (१)

सौम्येन दधाति प्र जनयति पौष्णेन बार्हस्पत्यो भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै प्रजाः प्र जनयति वैश्वदेवो भवति वैश्वदेव्यो वै प्रजाः प्रजा एवास्मै प्र जनयतीन्द्रियमेवैन्द्रेणाव रुन्धे विशं मारुतेनौजो बलमैन्द्राग्नेन प्रसवाय सावित्रो निर्वरुणत्वाय वारुणो[१] मध्यत ऐन्द्रमा लभते मध्यत एवेन्द्रियं यजमाने दधाति (२)

पुरस्तादैन्द्रस्य वैश्वदेवमा लभते वैश्वदेवं वा अन्नमन्नमेव पुरस्ताद् धत्ते तस्मात् पुरस्तादन्नमद्यत ऐन्द्रमालभ्य मारुत मा लभते विड्वै मरुतो विशमेवास्मा अनु बध्नाति[१] यदि कामयेत योऽवगतः सोऽप रुध्यतां योऽपरुद्धः सोऽव गच्छत्वित्यैन्द्रस्य लोके वारुण मा लभेत वारुणस्य लोक ऐन्द्रम् (३)

य एवावगतः सोऽप रुध्यते योऽपरुद्धः सोऽव

गच्छति[४] यदि कामयेत प्रजा मुह्येयुरिति पशून् व्यतिषजेत् प्रजा एव मोहयति[५] यदभिवाहुतोऽपां वारुणमा लभेत प्रजा वरुणो गृह्णीयाद् दक्षिणत उदञ्चमा लभतेऽपवाहुतोऽपां प्रजानामवरुणग्राहाय[६] ॥ ५ ॥

रेतो[१] दधा[२]त्यैन्द्रं[३]* सप्तचित्वारिंशच्च ॥ ५ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः† ॥

---

इन्द्रः पत्निया मनुमयाजयत् तां पर्यग्निकृतामुदसृजत् तया मनुरार्ध्नोत् पर्यग्निकृतं पात्नीवतमुत्सृजति यामेव मनुर्ऋद्धिमार्ध्नोत्तामेव यजमान ऋध्नोति[१] यज्ञस्य वा अप्रतिष्ठिताद्यज्ञः परा भवति यज्ञं पराभवन्तं यजमानोऽनु परा भवति यदाज्येन पात्नीवतꣳ संस्थापयति यज्ञस्य प्रतिष्ठित्यै यज्ञं प्रतितिष्ठन्तं यजमानोऽनु प्रति तिष्ठ[२]तीष्टं वपया (१)

भवत्यनिष्टं वशयाथ पात्नीवतेन प्र चरति तीर्थ एव प्रचरत्यथो एतर्ह्येवास्य याम[३]स्त्वाष्ट्रो भवति त्वष्टा वै

* "यजमाने दधाति(२) लोक ऐन्द्रः(३)"—इति क, ख, ग।

† इममपि तत्रैव तत उत्तरं षडंशं सत्वोद्धृत्य व्याख्यत्।

रेतसः सिक्तस्य रूपाणि वि करोति तमेव रूपाणां पत्नीष्वपि सृजति सोऽस्मै रूपाणि वि करोति[४] ॥ ६ ॥

वपया[१] षट्चिंशच्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः* ॥

---

घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति यत्सौम्यो भवति यथा मृतायानुस्तरणीं घ्नन्ति तादृगेव त[१]द्यदुत्तरार्धे वा मध्ये वा जुहुयाद्देवताभ्यः समदं दध्याद् दक्षिणार्धे जुहोत्येषा वै पितृणां† दिक् स्वायामेव दिशि पितॄन्निरवदयत[२] उद्गातृभ्यो हरन्ति सामदेवत्यो वै सौम्यो यदेव साम्नश्छम्बट्कुर्वन्ति तस्यैव स शान्ति[३]-रव (१)

ईक्षन्ते पवित्रं वै सौम्य आत्मानमेव पवयन्ते[४] य आत्मानं न परिपश्येदितासुः स्यादभिदृदिं कृत्वावेक्षेत तस्मिन् ह्यात्मानं परिपश्यत्यथो आत्मानमेव पवयते[५] यो गतमनाः स्यात्सोऽवेक्षेत यन्मे मनः परागतं यद्वा मे अपरागतं राज्ञा सोमेन तद्वयमस्मासु धारयामसीति मन एवात्मन् दाधार (२)

---

* तथेममपि चतुरभ्रं कृत्वोद्धृत्य तमेव ततोऽप्युत्तरम्। † 'पितृणां' ख।

गच्छति(४) यदि कामयेत प्रजा मुह्येयुरिति पशून् व्यति-षजेत् प्रजा एव मोहयति(५) यदभिवाहुतोऽपां वारुण मा लभेत प्रजा वरुणो गृह्णीयाद् दक्षिणत उदञ्च मा लभतेऽपवाहुतोऽपां प्रजानामवरुणग्राहाय(६) ॥ ५ ॥

रेतो(१) दधा(२)त्यैन्द्रं ३)* सप्तचत्वारिंशच्च ॥ ५ ॥

इति तैत्तिरीयसंहितायां षष्ठकाण्डे षष्ठप्रपाठके पञ्चमोऽनुवाकः† ॥

---

इन्द्रः पत्निया मनुमयाजयत् तां पर्यग्निकृतामुदसृजत् तया मनुरार्ध्नोद्यत् पर्यग्निकृतं पात्नीवतमुत्सृजति यामेव मनुर्ऋद्धिमार्ध्नोत्तामेव यजमान ऋध्नोति(१) यज्ञस्य वा अप्रतिष्ठिताद्यज्ञः परा भवति यज्ञं पराभवन्तं यजमानोऽनु परा भवति यदाज्येन पात्नीवतः संस्थापयति यज्ञस्य प्रतिष्ठित्यै यज्ञं प्रतितिष्ठन्तं यजमानोऽनु प्रति तिष्ठ(२)तीष्टं वपया (१)

भवत्यनिष्टं वशयाथ पात्नीवतेन प्र चरति तीर्थ एव प्रचरत्यथो एतर्ह्येवास्य याम(३)स्त्वाष्ट्रो भवति त्वष्टा वै

---

* "यजमाने दधाति[२] लोक ऐन्द्रश्[३]"—इति क, ख, ग।

† इममपि तत्रैव तत उत्तरं मर्दशं समीकृत्य व्याख्यत्।

रेतसः सिक्तस्य रूपाणि वि करोति तमेव रूपाणं पत्नीष्वपि सृजति सोऽस्मै रूपाणि वि करोति(४) ॥ ६ ॥

वपया(१) षट्त्रिंशच्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे षष्ठप्रपाठके षष्ठोऽनुवाकः* ॥

---

घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति यत्सौम्यो भवति यथा मृतायानुस्तरणीं घ्नन्ति तादृगेव त(१)द्यदुत्तरार्धे वा मध्ये वा जुहुयाद्देवताभ्यः समदं दध्याद् दक्षिणार्धे जुहोत्येषा वै पितृणां† दिक् स्वायामेव दिशि पितॄन्निरवदयत(२) उद्गातृभ्यो हरन्ति सामदेवत्यो वै सौम्यो यदेव साम्नश्छम्बट्कुर्वन्ति तस्यैव स शान्ति(३)रव (१)

ईक्षन्ते पवित्रं वै सौम्य आत्मानमेव पवयन्ते(४) य आत्मानं न परिपश्येदितासुः स्यादभिदधिं कृत्वावेक्षेत तस्मिन् ह्यात्मानं परिपश्यत्यथो आत्मानमेव पवयते(५) यो गतमनाः स्यात्सोऽवेक्षेत यन्मे मनः परागतं यद्वा मे अपरागतं राज्ञा सोमेन तद्वयमस्मासु धारयामसीति मन एवात्मन् दाधार (२)

---

* तथेममपि चतुरंशं सत्योद्धृत्य तत्रैव ततोऽप्युत्तरम्। † 'पितृणा' ख।

न गतमंना भव[१]त्यप वै तृतीयसवने यज्ञः क्रामतीजानाद्नीजानमभ्याग्नावैष्णव्यर्चा घृतस्य यजत्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं च दाधारो[७]-पांशु यजति मिथुनत्वाय[८] ब्रह्मवादिनो वदन्ति मित्रो यज्ञस्य स्विष्टं युवते वरुणो दुरिष्टं क्व तर्हि यज्ञः क्व यजमानो भवतीति यन्मैत्रावरुणीं वशामालभते मित्रेणैव (३)

यज्ञस्य स्विष्टꣳ शमयति वरुणेन दुरिष्टं नार्तिमार्च्छति यजमानो[९] यथा वै लाङ्गलेनोर्वरां प्रभिन्दन्त्येवमृक्सामे यज्ञं प्र भिन्तो यन्मैत्रावरुणीं वशामालभते यज्ञायैव प्रभिन्नाय मत्यमन्ववास्यति शान्त्यै[१०]यातयामानि वा एतस्य छन्दाꣳसि य ईजानश्छन्दसामेष रसो यद्वशा यन्मैत्रावरुणीं वशा मालभते छन्दाꣳस्येव पुनरा प्रीणाति (४)

अयातयामत्वायाथो छन्दःस्वेव रसं दधाति[११] ॥१॥

अव[१] दाधारे[१०]व[७]* प्रीणाति[४] पद् च ॥ ७ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे षष्ठप्रपाठके सप्तमोऽनुवाकः † ॥

---

* "दाधार[९] मित्रेणैव[३]"—इति क, ख, ग।

† तथेममपि तत्रैव तत उत्तर मेकादशार्थं प्रपाठकोऽद्धृयेति द्रष्टव्यम्।

देवा वा इन्द्रियं वीर्यꣳ व्यभजन्त* ततो यदत्यशिष्यत तदतिग्राह्या अभवन् तदतिग्राह्याणामतिग्राह्यत्वं यदतिग्राह्या गृह्यन्त इन्द्रियमेव तद्वीर्यं यजमान आत्मन् धत्ते[१] तेज आग्नेयेनेन्द्रियमैन्द्रेण ब्रह्मवर्चसꣳ सौर्येणो[२]पस्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्याश्चक्रे पृष्ठानि यत् पृष्ठ्येन गृह्णीयात् प्राञ्चं यज्ञं पृष्ठानि सꣳ शृणीयु[३]र्यदुक्थ्ये (१)

गृह्णीयात् प्रत्यञ्चं यज्ञमतिग्राह्याः सꣳ शृणीयु[४]र्विश्वजिति सर्वपृष्ठे ग्रहीतव्या यज्ञस्य सवीर्यत्वाय[५] प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत्स प्रियास्तनूरपन्यधत्त तदतिग्राह्या अभवन्वितनुस्तस्य यज्ञ इत्याहुर्यस्यातिग्राह्या न गृह्यन्त इत्यप्यग्निष्टोमे ग्रहीतव्या यज्ञस्य सतनुत्वाय[६] देवता वै सर्वाः सदृशीरासन् ता न व्यावृतमगच्छन् ते देवाः (२)

एत एतान् ग्रहानपश्यन् तानगृह्णताग्नेयमग्निरैन्द्रमिन्द्रः सौर्यꣳ सूर्यस्ततो वै तेऽन्याभिर्देवताभिर्व्यावृतमगच्छन् यस्यैवं विदुष एते ग्रहा गृह्यन्ते व्यावृतमेव पाप्मना भ्रातृव्येण गच्छती[७]मे लोका ज्योतिष्मन्तः समावद्वीर्याः कार्या इत्याहुराग्नेयेनास्मिन् लोके

* “वीर्यꣳ व्यां व्यभजन्त”—इति क, “वीर्यां१ व्यभजन्त”—इति ख।

ज्योतिर्धत्त ऐन्द्रेणान्तरिक्ष इन्द्रवायू हि सयुजौ सौर्येणामुष्मिन् लोके (३)

ज्योतिर्धत्ते ज्योतिष्मन्तोऽस्मा इमे लोका भवन्ति समावद्वीर्यानेनान् कुरुत[८] एतान्वै ग्रहान् बम्बाविश्ववयसाववित्तां ताभ्यामिमे लोकाः पराञ्चश्चार्वाञ्चश्च प्राभुर्यस्यैवं विदुष एते ग्रहा गृह्यन्ते प्रास्मा इमे लोकाः पराञ्चश्चार्वाञ्चश्च भान्ति[९] ॥ ८ ॥

उक्थे[१] देवा[२] लोक[३]* एकान्नचत्वारिंशच्च ॥८॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे षष्ठप्रपाठकेऽष्टमोऽनुवाकः† ॥

---

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा अदाभ्ये छन्दांसि सवनानि समस्थापयन् ततो देवा अभवन् परासुरा यस्यैवं विदुषोऽदाभ्यो गृह्यते भवत्यात्मना परास्य भ्रातृव्यो भवति[१] यद्वै देवा असुरानदाभ्येनादभ्नुवन् तददाभ्यस्यादाभ्यत्वं[२] य एवं वेद दभ्नोत्येव भ्रातृव्यं नैनं भ्रातृव्यो दभ्नोति[३] (१)

एषा वै प्रजापतेरतिमोक्षिणी नाम तनूर्यददाभ्य

---

* "अमुष्मिन् लोक[३]"—इति क, ख, ग।

† इममनुवाकं १का० ४प्र० ४५अनु०-भाष्ये यथार्थं व्याख्यातम्।

उपनद्धस्य गृह्णात्यतिमुक्त्या[८] अति पाप्मानं भ्रातृव्यं मुच्यते य एवं वेद[६] घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति सोमे हन्यमाने यज्ञो हन्यते यज्ञे यजमानो ब्रह्मवादिनो वदन्ति किं तद्यज्ञे यजमानः कुरुते येन जीवन्त्सुवर्गं लोक मेतीति जीवग्रहो वा एष यददाभ्योऽनभिषुतस्य गृह्णाति (२)

जीवन्तमेवैनꣳ सुवर्गं लोकं गमयति[६] वि वा एतद्यज्ञं छिन्दन्ति यददाभ्ये सꣳस्थापयन्त्यꣳशूनपि सृजति यज्ञस्य सन्तत्यै[७] ॥ ६ ॥

दृभ्नोति[१] गृह्णा[२]*त्येकान्नविꣳशतिश्च ॥ ६ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे षष्ठप्रपाठके नवमोऽनुवाकः †॥

---

देवा वै प्रबाहुग् ग्रहानगृह्णत स एतं प्रजापतिरꣳशुमपश्यत् तमगृह्णीत तेन वै स आर्ध्नोद्यस्यैवं विदुषोꣳशुर्गृह्यत ऋध्नोत्येव[१] सकृदभिषुतस्य गृह्णाति सकृद्धि स तेनार्ध्नो[२]न्मनसा गृह्णाति मन इव हि प्रजापतिः प्रजापतेराप्त्यै[३] औदुम्बरेण गृह्णात्यूर्ग्वा उदुम्बर ऊर्जमेवाव रुन्धे[४] चतुःस्रक्ति भवति दिक्षु(१)

---

* दृभ्नो[१]त्यनभिषुतस्य गृह्ण[२]"—इति क, ख, ग।

† इममनुवाकं १का० ४प्र० ४५अनु०-भाष्ये सम्यक् सत्वोद्धृत्य व्याख्यत्।

एव प्रतितिष्ठति[५] यो वा अꣳशोरायतनं वेदायतनवान् भवति वामदेव्यमिति साम तद्वा अस्यायतनं मनसा गायमानो गृह्णात्यायतनवानेव भवति[६] यदध्वर्युरꣳशुं गृह्णन्नार्धयेदुभाभ्यां नर्ध्नोताध्वर्यवे च यजमानाय च यदर्धयेदुभाभ्यामृध्नोतानवानं गृह्णाति सैवास्यर्द्धि[७]र्हिरण्यमभि व्यनिति (२)

अमृतं वै हिरण्यमायुः प्राण आयुषैवामृतमभि धिनोति[८] शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठति[९] ॥ १० ॥

दिव्ये-[१]निति-[२] विꣳशतिश्च ॥ १० ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे षष्ठप्रपाठके दशमोऽनुवाकः * ॥

---

प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत्स रिरिचानोऽमन्यत स यज्ञानाꣳ षोडशधेन्द्रियं वीर्यमात्मानमभि समक्खिदत्तत् षोडश्यभवन्न वै षोडशी नाम यज्ञोऽस्ति यद्वाव षोडशꣳ स्तोत्रꣳ षोडशꣳ शस्त्रं तेन षोडशी तत् षोडशिनः षोडशित्वं यत् षोडशी गृह्यत इन्द्रिय-

---

* इममनुवाकं १का० ६प्र० ४५अनु०-भाष्ये नवार्थं व्याख्यातवान् व्याख्यत।

मेव तद्वीर्यं यजमान आत्मन्धत्ते[१] देवेभ्यो वै सुवर्गो लोकः (१)

न प्राभवत्त एतꣳ षोडशिनमपश्यन् तमगृह्णन् ततो वै तेभ्यः सुवर्गो लोकः प्राभवद्यत् षोडशी गृह्यते सुवर्गस्य लोकस्याभिजित्या[२] इन्द्रो वै देवानामानुजावर आसीत्स प्रजापतिमुपाधावत्तस्मा एतꣳ षोडशिनं प्रायच्छत्तमगृह्णीत ततो वै सोऽग्रं देवतानां पर्यैद्यस्यैवं विदुषः षोडशी गृह्यते (२)

अग्रमेव समानानां पर्येति[३] प्रातःसवने गृह्णाति वज्रो वै षोडशी वज्रः प्रातःसवनꣳ स्वादेवैनं योनेर्निर्गृह्णाति[४] सवनेसवनेऽभि गृह्णाति सवनात्सवनादेवैनं प्र जनयति[५] तृतीयसवने पशुकामस्य गृह्णीयाद्वज्रो वै षोडशी पशवस्तृतीयसवनं वज्रेणैवास्मै तृतीयसवनात् पशूनव रुन्धे[६] नोक्थ्ये गृह्णीयात् प्रजा वै पशव उकथ्यानि यदुकथ्ये (३)

गृह्णीयात् प्रजां पशूनस्य निर्दहे[७]दतिरात्रे पशुकामस्य गृह्णीयाद्वज्रो वै षोडशी वज्रेणैवास्मै पशूनवरुध्य रात्रियोपरिष्टाच्छमय[८]त्यप्यग्निष्टोमे राजन्यस्य गृह्णीयाद् व्यावृत्कामो हि राजन्यो यजते[९] साह्न एवास्मै वज्रं गृह्णाति स एनं वज्रो भूत्या इन्धे निर्वा दहत्येक-

विंशः स्तोत्रं भवति प्रतिष्ठित्यै[१०] हरिवच्छस्यत इन्द्रस्य प्रियं धाम (४)

उपाप्नोति[११] कनीयाꣳसि वै देवेषु छन्दाꣳस्यासन् ज्यायाꣳस्यसुरेषु ते देवाः कनीयसा छन्दसा ज्याय-श्छन्दोभिर्व्यश्नुवन् ततो वै ते सुराणां लोकमवृञ्जत यत्कनीयसा छन्दसा ज्यायश्छन्दोभिर्विंशꣳसति भ्रातृव्यस्यैव तल्लोकं वृङ्क्ते[१२] षडक्षराण्यति रेचयन्ति षड्वा ऋतव ऋतूनेव प्रीणाति चत्वारि पूर्वाण्यव कल्पयन्ति (५)

चतुष्पद एव पशूनव रुन्धे द्वे उत्तरे द्विपद एवाव रुन्धे[१३]ऽनुष्टुभमभि सम्पादयति वाग्वा अनुष्टुप् तस्मात् प्राणानां वागुत्तमा[१४] समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोत्येतस्मिन्वै लोक इन्द्रो वृत्रमहन्त्साक्षादेव वज्रं भ्रातृव्याय प्र हर[१५]त्यरुणपिशङ्गोऽश्वो दक्षिणैतद्वै वज्रस्य रूपꣳ समृद्ध्यै[१६] ॥ ११ ॥

लोको[१] गृह्यत[२] उक्थ्ये[३]* धाम[४] कल्पयन्ति[५] सप्तचत्वारिꣳशच्च ॥ ११ ॥

इति तैत्तिरीयसंहितायां
षष्ठकाण्डे षष्ठप्रपाठके एकादशोऽनुवाकः† ॥

* विदुर्य षोडशी मह्यते [२] यदुक्थ्ये ३] '—इति क, ख, ग।

† इममनुवाकं १का० ७प्र० ४५पृष्ठादु० भाष्ये षोडशांश स्तोत्रादय व्याख्यत्।

(१)सुवर्गाय (२)स (३)मवभृथ यजूꣳषि (४)रुपेण (५)प्रजापति(६)रिन्द्रो (७)घ्नन्ति (८)देवा (९)देवा (१०)देवाः (११)प्रजापतिरेकादश * ॥ ११† ॥

(१)सुवर्गाय (२)यजति प्रजाः (३)सौम्येन (४)गृह्णीयात् प्रत्यञ्चं (५)गृह्णीयात् प्रजां पशून् चिचत्वारिꣳशत्‡ ॥६॥

## इति तैत्तिरीयसंहितायां षष्ठकाण्डे षष्ठः प्रपाठकः ॥ ६ ॥

श्रीगणेशाय नमः ।

यस्य निश्वसितं वेदा, यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥१॥
चयनब्राह्मणं काण्डे पञ्चमे स्फुटमीरितम् ।
षष्ठे तु काण्डे सोमस्य मन्त्राणां ब्राह्मणं क्रमात् ।
उक्तम्, मन्त्रास्तदाद्यकाण्डे द्वितीयादिप्रपाठके ।
त्रिभिरुक्ता, ब्राह्मणञ्च व्याख्यातं तच्च तैः सह ॥

---

* "(१)सुवर्गाय०—०यद्वाद्विशानि (२)समिष्टयजूꣳ(३)ष्यवभृथयजूꣳषि (४)रुपेण (५)प्रजापति(६)रिन्द्र पत्निया (७)घ्नन्ति (८)देवा वा इन्द्रिय (९)देवा वा यदाभ्ये (१०)देवा वै प्रयाजैक (११)प्रजापतिर्देवेभ्य०—०स रिरिचान स सोडशधैकादश ॥ ११ ॥"—इति क, ख, ग ।

† प्रपाठकेऽत्र य एकादशानुवाकास्तेषां मेतेमानि प्रतीकपदानि ।

‡ १२५पृ० ६प०, १२९पृ० ८प०, १३३पृ० ७प०, १३७पृ० ८प०, १४१पृ० १६प० । मु० पुस्तके तु नास्त्येतद्वाक्यम् ।

षट् स्युः प्रपाठकाः षष्ठे काण्डे प्रत्येकमेषु च।
एकादशानुवाकाः स्युस्तदर्थान् वच्म्यनुक्रमात् ॥

(१) प्राग्वंशं क्षुरकर्मादिसंस्कृतः प्रविशेदिति।
आद्ये प्रोक्तं, द्वितीये तु दीक्षाङ्गतय ईरिताः।
कृष्णाजिनेन वस्त्रेण दीक्षा मेखलया तथा।
कुर्यात् तृतीये तत्प्रोक्तं तथा कृष्णविषाणया।
चतुर्थे दण्डमादाय मुष्टीकरणवाग्यमौ।
छायायौ दीक्षितो भूत्वा नियमाननुतिष्ठति।
पञ्चमे प्रायणीया स्यात्, षष्ठे त्वरुणया क्रयः।
सप्तमे तत्प्रकारः स्यादष्टमे पदसङ्ग्रहः।
सोमोन्मानन्तु नवमे, दशमेऽन्येष तत्क्रयः।
एकादशे क्रीतसोमं शकटेन नयेदिति।
प्रपाठकेऽस्मिन् प्रथमेऽनुवाकार्थाः समीरिताः॥

(२) प्रपाठके द्वितीयेऽत्रानुवाकार्थान् क्रमाद् ब्रुवे॥
आतिथ्येष्टिरिहाद्ये स्यात्, तानूनप्त्रं द्वितीयके।
तथावान्तरदीक्षा च तृतीये ह्युपसद्भवेत्।
वेदिरुक्ता चतुर्थेऽथ पञ्चमे व्रतनिर्णयः।
षष्ठे काम्या यागभूमि', सप्तमे वेदिरुत्तरा।
व्याघारणं त्वष्टमे स्याद्धविर्द्धानमनन्तरे।
दशमे तु सदः प्रोक्तं, प्रोक्ता उपरवाः परे।
प्रपाठकेऽनुवाकार्था द्वितीयेऽस्मिन्नुदीरिताः॥

(३) तृतीयस्यादिमे सर्वे धिष्णिया स्यु,र्द्वितीयके ।
अग्नीषोमप्रणयनं, तृतीये यूपखण्डनम् ।
चतुर्थे स्थापयेद्यूपं, वह्निं मथ्नाति पञ्चमे ।
नियुनक्ति पशुं षष्ठे, सामिधेन्यस्तु सप्तमे ।
आघारौ च प्रयाजाश्च, ह्यष्टमे हिंसनं पशो.।
नवमे स्यादपाहोमो, ऽवदानानि त्वनन्तरे ।
एकादशे त्वनूयाजास्तृतीयोऽयं प्रपाठक ॥

(४) गृह्यागश्चतुर्थादौ, वसतीवर्य ईरिता ।
द्वितीये, ऽथ तृतीये सोमोपावहरणं श्रुतम् ।
सोमोन्मानं चतुर्थे स्यात्, पञ्चमादिषु सप्तसु ।
उपांशुप्रमुखा आग्रयणान्ता हि ग्रहा' श्रुता ।
उपांशुरन्तर्यामश्च तृतीयश्चैन्द्रवायव ।
मैत्रावरुणनामा स्यादाश्विनाख्यग्रहस्तथा ।
शुक्रामन्थिग्रहावाग्रयणस्त्वयं प्रपाठक ॥

(५) उक्थ्यग्रह पञ्चमाद्ये, द्वितीये ध्रुव ईरित ।
ऋतुग्रहास्तृतीये स्यु रैन्द्राग्नस्तु चतुर्थके ।
मरुत्वतीया माहेन्द्रश्चेत्येते पञ्चमे श्रुता ।
स्यादादित्यग्रह षष्ठे, सावित्र सप्तमे तथा ।
वैश्वदेवोऽथाष्टमे हि श्रुत पात्नीवतो ग्रह ।
हारियोजनसञ्ज्ञस्तु नवमे ग्रह ईरित ।
क्षये त्वाग्रयणादीनां दशमे स्यात् पुनर्ग्रह ।

सवनीयपुरोडाशविधिरेकादशे स्थित ।
प्रपाठके पञ्चमेऽनुवाकार्थां एवमीरिता * ॥

(६) षष्ठाद्ये दक्षिणाहोम, समिष्टयजुरुत्तरे ।
तृतीयेऽवभृथ,स्तुर्ये यूपैकादशिनी स्मृता ।
पञ्चैकादशिनी वृद्धिं, षष्ठे पात्नीवत पशु ।
सौम्यश्चरु सप्तमे स्या,दतिग्राह्यास्तथाष्टमे ।
अदाभ्यो नवमे, तद्वदंशुस्तु दशमे श्रुत ।
षोडश्येकादशे प्रोक्त एव षष्ठ समापित ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वर ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये 'वेदार्थ-प्रकाश'-नामकृष्णयजुस्तैत्तिरीयसंहिताभाष्ये षष्ठ काण्ड समाप्तम् ॥

## ॥ इति षष्ठं काण्डं सम्पूर्णम् ॥

---

* क पुस्तके तु सवनीयादिपद्यस्य स्थाने एतत् पद्यार्द्धं मस्ति—
"सोमपात्रस्तुतिश्चान्ते पञ्चमोऽयं प्रपाठक ॥"—इति । सङ्कल्पते चैतदपि ।

अथ तैत्तिरीयसंहितायां

सप्तमकाण्डे

प्रथम प्रपाठक ।

॥ हरिः ओम् ॥

प्रजननं ज्योतिरग्निर्देवतानां ज्योतिर्विराट् छन्दसां ज्योतिर्विराङ्वाचोऽग्नौ सन्तिष्ठते विराजमभि सम्पद्यते तस्मात् तज्ज्योतिरुच्यते[१] द्वौ स्तोमौ प्रातःसवनं वहतो यथा प्राणश्चापानश्च द्वौ माध्यन्दिनꣳ सवनं यथा चक्षुश्च श्रोत्रञ्च द्वौ तृतीयसवनं यथा वाक् च प्रतिष्ठा च पुरुषसम्मितो वा एष यज्ञोऽस्थूरिः[२] (१)

यं कामं कामयते तमेतेनाभ्यश्नुते सर्वꣳ ह्यस्थूरिणाभ्यश्नुते[३]ऽग्निष्टोमेन वै प्रजापतिः प्रजा असृजत ता अग्निष्टोमेनैव पर्यगृह्णात्तासां परिगृहीतानामश्वतरोऽत्यप्रवत तस्यानुहाय रेत आदत्त तद्गर्दभे न्यमार्ट् तस्माद्गर्दभो द्विरेता अथो आहुर्वडवायां* न्यमार्डिति तस्माद्वडवा द्विरेता अथो आहुरोषधीषु (२)

---

* वडवायामित्यत्र ख पुस्तके वर्ण्यादिर्वडवेति, घ पुस्तके तु वर्ण्योपधौ वडवेति ।

न्यमाडिति तस्मादोषधयोऽनभ्यक्ता रेभन्त्यथो आहुः प्रजासु न्यमाडिति तस्माद्यमौ जायेते तस्मादश्वतरो न प्र जायत आत्तरेता हि तस्माद्बर्हिष्यनवक्लृप्तः सर्ववेदसे वा सहस्रे वावक्लृप्तोऽति ह्यप्रवत्(४) य एवं विद्वानग्निष्टोमेन यजते प्राजाताः प्रजा जनयति परि प्रजाता गृह्णाति तस्मादाहुर्ज्येष्ठयज्ञ इति ( ३ )

प्रजापतिर्वाव ज्येष्ठः स ह्येतेनाग्रेऽयजत(५) प्रजापतिरकामयत प्र जायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवतान्वसृज्यत गायत्रीच्छन्दो रथन्तरꣳ साम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्त(६)उरसो बाहुभ्यां पञ्चदशं निरमिमीत तमिन्द्रो देवतान्वसृज्यत त्रिष्टुप्छन्दो बृहत् ( ४ )

साम राजन्यो मनुष्याणामविः पशूनां तस्मात्ते वीर्यावन्तो वीर्याद्ध्यसृज्यन्त(७) मध्यतः सप्तदशं निरमिमीत तं विश्वेदेवा देवता अन्वसृज्यन्त जगतीच्छन्दो वैरूपꣳ साम वैश्यो मनुष्याणां गावः पशूनां तस्मात्त आद्या अन्नधानाद्ध्यसृज्यन्त तस्माद्भूयाꣳसोऽन्येभ्यो भूयिष्ठा हि देवता अन्वसृज्यन्त(८) पत्त एकविꣳशं निरमिमीत तमनुष्टुप् छन्दः ( ५ )

अन्वसृज्यत वैराजꣳ साम शूद्रो मनुष्याणामश्वः पशूनां तस्मात्तौ भूतसङ्क्रामिणावश्वश्च शूद्रश्च तस्माच्छूद्रो यज्ञेऽनवक्लृप्तो न हि देवता अन्वसृज्यत तस्मात्पादावुप जीवतः पत्तो ह्यसृज्येतां(९) प्राणा वै त्रिवृदर्धमासाः पञ्चदशः प्रजापतिः सप्तदशस्त्रय इमे लोका असावादित्य एकविꣳश एतस्मिन् वा एते श्रिता एतस्मिन् प्रतिष्ठिताः ( ६ )

य एवं वेदैतस्मिन्नेव श्रयत एतस्मिन् प्रति तिष्ठति(१०) ॥ १ ॥

अस्थूरि[१]रोषधी[२]र्यति[३] बृह[४]च्छन्दः[५]* प्रतिष्ठिता[६] नव च ॥ १ ॥

श्रीगणेशाय नमः ।

यस्य निःश्वसितं वेदा, यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥१॥
एकाहाहीनसत्राणि सोमभेदा इमे त्रयः ।
वर्ण्यन्ते सप्तमे काण्डे मन्त्राः केऽप्यश्वमेधगाः ॥
ज्योतिष्टोमः सोमयागप्रकृतिः स तु सप्तधा ।

* "रोषधीषु[२] व्येऽयच्च इति[३] बृह[४] दनुष्टुप् छन्दः[५]"—इति क, ख, ग ।

अग्निष्टोमो ज्योतिर्भेदैर्मूलप्रकृतिरादिमः।
स्तोमा ज्योतींषि यस्यासौ ज्योतिष्टोमः स ईरितः।
त्रिवृत् पञ्चदशः सप्तदशः स्तोमास्त्रयो मताः।
तथैकविंश एतानि ज्योतींषीत्यभ्यधाच्छ्रुतिः।
सोऽयमेतादृशो ज्योतिष्टोम आदौ विधीयते॥

तमेतं ज्योतिष्टोमं विधातुं दृष्टान्तत्रयेण ज्योतिष्ट्वं तावद्दर्शयति— "प्रजननं ज्योतिरग्निर्देवतानां ज्योतिर्विराट् छन्दसां ज्योतिर्विराड् वाचोऽग्नौ सन्तिष्ठते विराजमभि सम्पद्यते तस्मात् तज्ज्योतिरुच्यते(१)" —इति। मनुष्याणां मध्ये प्रजोत्पादनत्वं ज्योतिः; अपत्यरहितास्तु म्लानमुखास्तमःसदृशा भवन्ति। देवतानां मध्ये ज्योतिरग्निः; अन्यासां देवतानां गृहमध्ये यथा दीपापेक्षा, नैवमग्नेरन्यापेक्षास्ति। छन्दसां मध्ये विराट्छन्दो ज्योतिः, दीप्तिवाचकेन 'राजति'-धातुना व्यवह्रियमाणत्वात्। तदेतत् त्रिविधमपि लोकप्रसिद्धं ज्योतिः सोमयागे सम्पादयितुं शक्यते। प्रजोत्पत्तिसाधनरूपत्वं तावदुच्यते— 'अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत'—इति (१४०पृ० १३पं०)। अग्निरूपत्वं विराड्रूपत्वञ्चैव सम्पाद्यते। या 'वाचः' 'विराट्' तदुपलक्षिता दशसङ्ख्या 'दशाक्षरा विराट्'—इतिश्रुतेः*, सेयं सङ्ख्या, 'अग्नौ' समाप्यते। तथाहि प्रातःसवने बहिष्पवमानाख्यस्तोत्रस्य त्रिवृत् स्तोमः। तत्र त्रिषु सूक्तेष्वेकैकस्मिन् तिस्र

* इहैवोपरिष्टात् ७. ३ ५, ब्राह्मणे च १. ८२. १; ता० ब्रा० १५. १. ५; शत० ब्रा० ८. ५. १. ५। 'त्रिष्ट्रशदक्षरा विराट् (०. ४. ४.)'—इत्यादि श्रुतिवाक्यं तु त्रिपदाभिप्रायम्।

त्यच इत्येवं नव स्तोत्रीयाः। तथा तस्मिन्नेव सवने चतुर्ष्वाज्यस्तोत्रेषु पञ्चदशस्तोमे सति षष्टि-स्तोत्रीयाः सम्पद्यन्ते। तथा माध्यन्दिनसवने माध्यन्दिनपवमानाख्यस्तोत्रस्य पञ्चदशस्तोमे सति पञ्चदश स्तोत्रीयाः सम्पद्यन्ते। तथास्मिन्नेव सवने चतुर्षु पृष्ठस्तोत्रेषु सप्तदशस्तोमे सत्यष्ट-षष्टिः स्तोत्रीयाः सम्पद्यन्ते। तथा तृतीयसवने आर्भवपवमानाख्य-स्तोत्रस्य सप्तदशस्तोमे सति सप्तदश स्तोत्रीयाः सम्पद्यन्ते। यद्यपि *माध्यन्दिनपवमानार्भवपवमानयोः सूक्तभेदादृचोऽत्यन्तं बह्वः सन्ति,* तथापि स्तोत्रगतस्तोमप्रयुक्त्या गणनेयमित्यविरोधः*। तथा तस्मि-न्नेव सवने यज्ञायज्ञियस्तोत्रस्यैकविंशस्तोमे सति एकविंशतिसङ्ख्याकाः स्तोत्रीयाः' सम्पद्यन्ते। तदेवं प्रातःसवने एकोनसप्ततिः, माध्यन्दिन-सवने त्र्यशीतिः, तृतीयसवनेऽष्टचिंशदिति मिलित्वा नवत्यधिकाः शतसङ्ख्याकाः स्तोत्रीया भवन्ति†। ताश्च दशभिः विभक्ताः सत्य एकोनविंशति-विराड्रूपाः सम्पद्यन्ते, सेयं सम्पद्यमाना स्तोत्रीयाख्या वाचः सम्बन्धिनी विराडुपलक्षिता दशसङ्ख्या अग्नौ समाप्यते; अन्तिमस्य यज्ञायज्ञियस्तोत्रस्याग्नेयत्वात्। अग्निर्हि तत्र प्रतिपाद्यते; 'यज्ञायज्ञा वो अग्नये'—इत्याम्नानात्‡। अतोऽग्निरूपत्वं विराड्-रूपत्वञ्च सोमयागस्य सिद्धम्। यस्मादयं सोमयागो विराड्-रूपमभि-सम्पद्यते, 'तस्माद्' विराड्-रूपत्वात् प्रजोत्पत्तिहेतुत्वाच्च सोमयाग-स्वरूपं ज्योतिरित्युच्यते॥

---

* कामनाभेदादित. सूक्तभेदेऽपि तद्गताना मृचा समसङ्ख्यत्वादिति भाव।

† स्तोत्रं नाम प्रगीतं सूक्तम्, तस्यावयवा ऋच एव स्तोत्रीयाः।

‡ उ० आ० १. १. २०. १, छ० आ० ११. ४. १; ऋ० सं० १. १६८ १।

तदेवं विधेयस्य सोमयागस्य सम्बन्धिनि ज्योतिष्टोमनाम्नि ज्योतिरित्ययमंशः प्रतिपादितः; अथावशिष्टमंशं प्रतिपादयति— "द्वौ स्तोमौ प्रातःसवनं वहतो यथा प्राणश्चापानश्च, द्वौ माध्यन्दिनः सवनं यथा चक्षुश्च श्रोत्रञ्च, द्वौ तृतीयसवनं यथा वाक् च प्रतिष्ठा च, पुरुषसम्मितो वा एष यज्ञोऽस्थूरिः(१)"—इति। तच त्रिवृत् स्तोमौ बहिष्पवमानाख्यं स्तोमं 'वहति' निष्पादयति। पञ्चदश-स्तोमः चत्वारि आज्यस्तोत्राणि वहति। एवं द्वौ स्तोमौ प्रातःसवनं निर्वहतः,—यथा लोके पुरुषस्य प्राणापानौ जीवनं निर्वहतस्तद्वत्। ततः पञ्चदशस्तोमो माध्यन्दिन पवमानस्तोत्रं वहति, सप्तदशस्तोमः चत्वारि पृष्ठस्तोत्राणि वहति। एवं द्वौ स्तोमौ माध्यन्दिनं सवनं वहतः;—यथा पुरुषस्य चक्षुःश्रोत्रे रूपदर्शनशब्दश्रवणव्यवहारं वहतः तद्वत्। सप्तदशस्तोम आर्भवपवमानं वहति, एकविंशस्तोमो यज्ञा-यज्ञियस्तोत्र वहति। एवं द्वौ स्तोमौ तृतीयसवनं वहतः,—यथा पुरुषस्य वागिन्द्रियं पादेन्द्रियञ्चाभिवदनगमनव्यवहारं वहतस्तद्वत्। प्रतितिष्ठन्ति मार्गे यया पादेन्द्रियप्रवृत्त्या, सेयं प्रतिष्ठा। तदेवं स्तोमैर्निष्पन्नोऽयं सोमयागः पुरुषसदृशः, न तु स्थूरिः, केनाप्यङ्गेन न्यूनः स्थूरिरित्युच्यते, न तथ न्यून, प्राणापानादिष्वतत्त्वपुरुषावयव-साम्यस्य प्रतिपादितत्वात्। एवं स्तोमरूपत्वे सिद्धे सति ज्योतीरूपा' स्तोमा अत्रेति व्युत्पत्त्या ज्योतिष्टोम इत्युच्यते। एतदेवाभिप्रेत्या-न्यत्राम्नातम्—"तदाहुः। कतमानि (वाव*) तानि ज्योतींषि। य एतस्य स्तोमा इति। त्रिवृत् पञ्चदशः सप्तदश एकविंशः। एतानि

* नास्त्येतत् पदं ए० सो० मु०, तै० ब्रा० पुस्तके।

वाव तानि ज्योतींष्यि । य एतस्य स्तोमाः"—इति (तै॰ब्रा॰ १. ५. ११.)। स्तोमानाञ्च स्वरूपविशेषः प्रथमकाण्डे राजसूयप्रकरणे "समिधमातिष्ठ"—इत्यनुवाके (८प्र॰१३अ॰) सामब्राह्मणोदाहरणेन विस्पष्टः प्रतिपादितः (२भा॰ १२९-१४२पृ॰) * ॥ तदेवं ज्योतिष्टोमनामव्युत्पादनमुखेन विधेयार्थप्रशंसा सम्पादिता; इदानीं तद्विधिमुन्नयति—"यं कामं कामयते, तमेतेनाभ्यश्नुते; सर्वꣳ ह्यसूरिणाभ्यश्नुते[१]"—इति । 'एतेन' ज्योतिष्टोमेन सर्वकामानां प्राप्तुं शक्यत्वादिमं ज्योतिष्टोमं कुर्यादित्यभिप्रायः। यस्मात् लोकेऽपि 'अस्सूरिणा' सर्वावयवसम्पूर्णेन साधनेन तत्फलं सर्वमश्नुते, तस्मादत्रापि स्तोमसम्पूर्णेनानेन सर्वकामप्राप्तिर्युक्ता ॥

इत्थं ज्योतिष्टोमं सर्वसोमयागप्रकृतिभूतं विधाय, तदीयासु सप्तसंस्थासु मध्ये प्रथमसंस्थारूपमग्निष्टोमं विधातुं प्रस्तौति—"अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत, ता अग्निष्टोमेनैव पर्यगृह्णात्, तासां परिगृहीतानामश्वतरोऽत्यप्रवत, तस्यानुहाय रेत आदत्त तद्गर्दभे न्यमार्ट्, तस्माद्गर्दभो द्विरेताः; अथो आहुर्वडवायां न्यमार्डिति, तस्माद्वडवा द्विरेताः, अथो आहुरोषधीषु न्यमार्डिति तस्मादोषधयोऽनभ्यक्ता रेभन्ति; अथो आहुः प्रजासु न्यमार्डिति,

* तत्र 'तिसृभ्यो हिङ्करोति'—इत्यादीनि त्रिवृदादिस्तोमस्वरूपप्रतिपादकवचनानि सर्वाण्येव ताण्ड्यमहाब्राह्मणीय-द्वितीय-तृतीयप्रपाठकयोः द्रष्टव्यानि; 'उपास्मै गायता नर'—इत्यादयः त्रिवृदादिप्रतिपादिकाः स्तोत्रीया ऋचस्तु उत्तरार्चिकस्य प्रथमे एव प्रपाठके प्रादितो द्रष्टव्याः; सामस्वरूपाणि त्वभित्वामूलकरथन्तरप्रभृतीनि तु ऊहाद्यप्रपाठके एव प्राप्यन्तेति सङ्क्षेपः ।

तस्मायमौ जायेते, तस्मादश्वतरो न प्र जायत आत्तरेता हि, तस्माद्बर्हिष्यनवक्लृप्तः सर्ववेदसे वा सहस्रे वावक्लृप्तोऽति ह्यप्रवत(१)" —इति। पुरा खिस्तु प्रजापतिः 'अग्निष्टोमेन' साधनेन प्रजा सृष्ट्वा तेनैव स्वाधीनतया परिगृहीतवान्। 'तासां परिगृहीतानां' प्रजानां मध्ये, गर्दभाश्वाभ्यामुत्पादितः सङ्कीर्णजातिः 'अश्वतरः', सोऽयं प्रजापतिपरिग्रहमुल्लङ्घ्यात्यन्तदूरङ्गतः। स च प्रजापतिः 'तस्य' अश्वस्य पृष्ठतो गत्वा तदीयं शरीरगतं सारभूतं रेत आदाय गर्दभशरीरे 'न्यमार्ट्' नितरां सृष्टवान्। अत एव गर्दभो द्विविधरेतोयुक्तः,—गर्दभजातेरश्वतरजातेश्चोत्पादने द्विविधत्वम्। अपि चान्ये केचिदभिज्ञा एवमाहुः,—'वडवायाम्*' अश्वयोषिति नितरां सृष्टवानिति। तस्मादियं वडवा रेतोद्वययुक्ता। साप्यश्वजातिमश्वतरजातिञ्चोत्पादयति। अपि चान्ये अभिज्ञा एवमाहुः,—ओषधीषु नितरां सृष्टवानिति। अत एवौषधयो मनुष्याणामिव घृततैलाभ्यङ्गाभावेऽपि साराधिक्येन वर्द्धन्ते, स्निग्धवद् दृश्यन्त इत्यर्थः। अपि चान्ये अभिज्ञा एवमाहुः,—'प्रजासु' मनुष्यादिजातिषु नितरां सृष्टवानिति। अत एव क्वचिदेकस्मिन् गर्भे शरीरद्वयमुत्पद्यते। यस्मादयमश्वतरः प्रजापत्यपहृतरेतस्कः, तस्मात् नपुंसकवदयं प्रजामुत्पादयितुमसमर्थः। यस्माच्चायं निःसारस्तस्मादेव यज्ञेऽप्ययोग्यः। यस्तु यज्ञविशेषः सर्वस्वदक्षिणाकः सहस्रदक्षिणाको वा, तत्राय नियमेन दानयोग्यः। रेतोराहित्येऽप्यतिलङ्घ्य गन्तुं समर्थत्वादतिलङ्घितप्राकृतदक्षिणाके यज्ञे योग्यो भवति "अश्वतरः साहस्रे सर्ववेदसे च

---

* 'वडवायाम्'—इति च, तथा ख नाममूलपुस्तकेऽपि। एवं सर्वत्र।

ददाति"—इति (आप० श्रौ० १३. ५. ३.)—सूत्रकारवचनात् ॥

इदानीं विधत्ते—"य एवं विद्वानग्निष्टोमेन यजते, प्राजाताः प्रजा जनयति परि प्रजाता गृह्णाति तस्मादाहुर्ज्येष्ठयज्ञ इति, प्रजापतिर्वाव ज्येष्ठः स ह्येतेनाग्रेऽयजत[४]"—इति। अग्निष्टोमयाजी, पूर्वमनुत्पन्नाः प्रजाः उत्पादयितुम्, उत्पन्नाश्च स्वाधीनत्वेन परिगृहीतुं समर्थो भवति। यस्मात् सर्वेषां देवानां मध्ये ज्येष्ठः प्रजापतिः सृष्टि-साधनत्वेनाग्र एतेनायजत, तस्मात् ज्येष्ठेनेष्टत्वात् प्रथममिष्टत्वाच्चाय-मग्निष्टोमो 'ज्येष्ठयज्ञः' सर्वेषामुक्थ्यादीनां मूलप्रकृतिभूत इत्यर्थः *। अग्निविषयेण "यज्ञायज्ञा वो अग्नये"—इतिमन्त्रेण सम्पाद्यमानो योऽयमेकविंशस्तोमः† तेन समाप्यमानत्वादयमग्निष्टोम इत्युच्यते॥

तस्य च प्रजोत्पादनसाधनत्वं यत्पूर्वमुक्तं "अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत"—इति (१४७ पृ०), तदिदं मुखादिस्थानचतुष्टयेन प्रप-ञ्चयितुं मुखजन्यां सृष्टिं दर्शयति—"प्रजापतिरकामयत प्र जायेयेति स मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवतान्वसृज्यत गायत्री च्छन्दो रथन्तरं साम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्त[५]"—इति। सिसृक्षुः प्रजापतिः तत्साधनत्वेना-ग्निष्टोममनुष्ठाय तत्सामर्थ्येन सत्यसङ्कल्पः सन् स्वकीयान्मुखात् त्रिवृदादय उत्पाद्यन्तामिति सङ्कल्प्य तथैव निर्मितः सन्, आदौ

* "ज्येष्ठयज्ञो वा एष यदग्निष्टोमः"—इति ताण्ड्यब्राह्मणेऽपि ६. ३. ८।

† "एकविंशं पुच्छं भवति। एकविंशो वै स्तोमानां प्रतिष्ठा, तस्माद् वयः पुच्छेन प्रतिष्ठायोत्पतति, पुच्छेन प्रतिष्ठाय निषीदति। यज्ञा-यज्ञीयं पुच्छं कार्यम्"—इति ता० ब्रा० ५. १. १६–१८।

त्रिवृत्स्तोमः* सृष्टः। तमनु देवतानां मध्येऽग्निः। तमप्यनु च्छन्दसां मध्ये गायत्री सृष्टा। तामप्यनु साम्नां मध्ये रथन्तरं सृष्टम्। तदप्यनु मनुष्याणां मध्ये ब्राह्मणः सृष्टः। तमप्यनु पशूनां मध्येऽजः सृष्टः। यस्मादेते मुखतः सृष्टाः, तस्मान्मुख्या वक्ष्यमाणेभ्यः श्रेष्ठाः॥

अथ द्वितीयस्थानादुत्पत्तिं दर्शयति—"उरसो बाहुभ्यां पञ्चदशं निरमिमीत, तमिन्द्रो देवतान्वसृज्यत त्रिष्टुप् छन्दो बृहत्साम राजन्यो मनुष्याणामविः पशूनां तस्मात्ते वीर्यावन्तो वीर्याद्ध्यसृज्यन्त(७)"—इति। पूर्ववद्व्याख्येयम्। वीर्ययुक्ताद्बाहुदेशादुत्पन्नत्वात्तेषामपि सामर्थ्याधिक्यम्॥

अथ तृतीयस्थानादुत्पत्तिं दर्शयति—"मध्यतः सप्तदशं निरमिमीत तं विश्वेदेवा देवता अन्वसृज्यन्त जगतीच्छन्दो वैरूपꣳ साम वैश्यो मनुष्याणां गावः पशूनां तस्मात् त आद्या अन्नधानाद्ध्यसृज्यन्त, तस्माद् भूयाꣳसोऽन्येभ्यो भूयिष्ठा हि देवता अन्वसृज्यन्त(८)" —इति। 'मध्यतः' उदरप्रदेशात्। यस्मादन्नाधारादुदरादसृज्यन्त तस्माद् 'आद्याः' भोग्याः। वैश्या वाणिज्येन धनसम्पादकत्वाद्भोग्या गावश्च क्षीरादिसम्पादनेन भोग्याः। यस्मादत्ति बहून् विश्वान् देवानन्वेते वैश्याः सृष्टाः, तस्माद् वाणिज्यकर्त्तारो लोके भूयांसः॥

अथ चतुर्थस्थानादुत्पत्तिं दर्शयति—"पत्त एकविꣳशं निरमिमीत तमनुष्टुप् छन्दोऽन्वसृज्यत वैराजꣳ साम शूद्रो मनुष्याणामश्वः पशूनां, तस्मात् तौ भूतसङ्क्रामिणावश्वश्च शूद्रश्च, तस्माच्छूद्रो यज्ञेऽनवक्लृप्तो न हि देवता अन्वसृज्यत, तस्मात् पादावुप जीवतः पत्तो

* त्रिवृत्स्तोमस्वरूपम् ता० ब्रा० २ १-३ द्रष्टव्यम्।

घ्यसृज्येताम्[९]"—इति। 'पत्तः' पादतः। भूतानां पूर्वोत्पन्नानां ब्राह्मणादीना 'सङ्क्रामः' सम्यगाक्रमणं तदधीनत्वेनावस्थानमित्यर्थः। सोऽयमभूतसङ्क्रामो ययोरश्वशूद्रयोस्तावुभौ 'भूतसङ्क्रामिणौ'। शूद्राणां वर्णत्रयपरिचर्यामुख्यत्वेन तदधीनत्वम्, अश्वादीनाञ्च वहनेन तदधीनत्वम्। अत्र पूर्वस्थानेभ्य इव पादतो न काचिद्देवता सृष्टा, तस्माद्देवतामनुसृज्यत्वाभावाच्छूद्रो यज्ञे प्रवर्त्तितुं न योग्यः। यस्मादश्वशूद्रौ पादत उत्पन्नौ, तस्मात् पादावेव तयोर्जीवनसाधनम्। शूद्रो हि ब्राह्मणाद्याज्ञया पद्भ्यां यत्र क्वापि गमनागमने कुर्वन् जीवति ; अश्वश्च ब्राह्मणादिवाही पादैर्यत्र क्वापि गच्छन् खाद्यं लभते॥

एवं सृष्टिसाधन मग्निष्टोमं प्रशंसितुं सृष्टिं प्रपञ्च्य तत्र प्रकृतोपयुक्तान् स्तोमान् विशेषतः प्रशंसति—"प्राणा वै त्रिवृदर्द्धमासाः पञ्चदशः प्रजापतिः सप्तदशस्त्रय इमे लोका असावादित्य एकविंश एतस्मिन् वा एते श्रिता एतस्मिन् प्रतिष्ठिता य एवं वेदैतस्मिन्नेव श्रयत एतस्मिन् प्रति तिष्ठति[१०]"—इति। बहिष्पवमानस्तोत्रे सूक्तानां त्रित्वादेकैकस्मिन् सूक्ते ऋचीनां त्रित्वाच्च तदीयस्तोमस्य त्रिवृत्त्वम् ; प्राणापानव्यानानां चोर्ध्वाधोमध्यवर्तिनां त्रित्वसाम्यम्, अर्धमासगतानां रात्रीणां सङ्ख्यया पञ्चदशस्तोमसाम्यम्, प्रजापतिरूपाणामाश्रावयेत्यादीनामक्षराणां सङ्ख्यया सप्तदशस्तोमसाम्यम्*। आदित्यस्य सङ्ख्ययैकविंशस्तोमसाम्यं वक्तुं 'त्रय इमे

* "आश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरं, यजेति द्व्यक्षरं, ये यजामह इति पञ्चाक्षरं, द्व्यक्षरो वषट्कारः, एष वै सप्तदशः प्रजापति "—इति तै० सं० १. ५. ११।

लोकाः'—इत्यनेन ब्राह्मणान्तरं प्रत्यभिज्ञाप्यते। तच्च ब्राह्मणान्तरमेवमाम्नातम्—"द्वादशमासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः"—इति (ता० ब्रा० ४.६.४.)*। एतस्मिन्नेकविंशस्तोमे पूर्वोक्तास्त्रिवृदादय आश्रिताः। अधिकसङ्ख्यायामल्पसङ्ख्यान्तर्भावात्। किञ्चैतस्मिन्नेव स्तोमाः 'प्रतिष्ठिता' समाप्ताः; न ह्येकविंशादूर्ध्वमग्निष्टोमे कश्चिदधिकः स्तोमो विद्यते। य एवमेतस्य महिमानं वेद, स एतस्मिन्नाश्रितः प्रतिष्ठितो भवति। अग्निष्टोमममनुष्ठातुं फलं प्राप्तुं च योग्यो भवतीत्यर्थः॥ १॥

इति श्रीसायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः॥

---

प्रातःसवने वै गायत्रेण च्छन्दसा त्रिवृते स्तोमाय ज्योतिर्दधदेति त्रिवृता ब्रह्मवर्चसेन पञ्चदशाय ज्योतिर्दधदेति पञ्चदशेनौजसा वीर्येण सप्तदशाय ज्योतिर्दधदेति सप्तदशेन प्राजापत्येन प्रजननेनैकविंशाय ज्योतिर्दधदेति स्तोम एव तत् स्तोमाय ज्योतिर्दधदेत्यथो स्तोम एव स्तोममभि प्र णयति[१] यावन्तो वै स्तोमास्तावन्तः कामास्तावन्तो लोकाः (१)

---

* ता० ब्रा० १० १ १०. अस्त्यत्रापि तथैव, कश्चिद् विशेषश्च।

तावन्ति ज्योतीꣳष्ये(२)तावत एव स्तोमानेतावतः कामानेतावतो लोकानेतावन्ति ज्योतीꣳष्यव रुन्धे(३) ॥ २ ॥

लोका(१)स्त्रयोदश च* ॥ २ ॥

प्रथमेऽनुवाके सोमयागानामाद्यो ज्योतिष्टोम,† तदीय सप्तसंस्थानामाद्यसंस्थारूपो‡ऽग्निष्टोमश्चेत्युभयं विहितम्। अथ तत्र स्तोमानां मुख्यत्वं दर्शयितुं द्वितीयेऽनुवाके स्तोमानां सम्भूयकारित्वं तावदादौ दर्शयति—"प्रातःसवने वै गायत्रेण च्छन्दसा त्रिवृते स्तोमाय ज्योतिर्दधदेति, त्रिवृता ब्रह्मवर्चसेन पञ्चदशाय ज्योतिर्दधदेति, पञ्चदशेनौजसा वीर्येण सप्तदशाय ज्योतिर्दधदेति, सप्तदशेन प्राजापत्येन प्रजननेनैकविꣳशाय ज्योतिर्दधदेति, स्तोम एव तत् स्तोमाय ज्योतिर्दधदेति; अथो स्तोम एव स्तोममभि प्र णयति(१)"—इति। आदौ प्रजापतिरग्निष्टोममनुतिष्ठन् प्रातःसवनकाले "उपास्मै गायता नरः"—इत्येतस्मिन् (उ० आ० १. १. १-३.) मन्त्रगतेन गायत्रेण छन्दसा युक्तः, तावता परितोषं प्राप्य त्रिवृत्-स्तोम-सिद्ध्यर्थं 'ज्योतिर्दधत्' तद्विषयप्रसारितां मनोवृत्तिं धारयन् 'एति' प्रवर्त्तते; त्रिवृत्-स्तोमः इत्थं प्रयोक्तव्य इति विचारयन्नेवास्ते इत्यर्थः। स च

* "तावन्तो लोका[१]स्त्रयोदश च"—इति क, ख, ग।

† द्वितीयो गोष्टोम, तृतीय आयुष्टोम। तै० ब्रा० ७. ४. ११;। ता० ब्रा० २५. १०. ७, ८।

‡ अग्निष्टोम, अत्यग्निष्टोम, उक्थ्य, षोडशी, वाजपेय, आप्तोर्यामः, अतिरात्रश्चेति सप्त संस्था। आश्व० श्रौ० ६. ११. १।

स्तोमो ब्रह्मवर्चसप्रदत्वात् तद्रूपः। तेन ब्रह्मवर्चसरूपेण त्रिवृत्-स्तोमेन तुष्टोऽपि अपरितुष्टः पञ्चदशस्तोमाय मनोवृत्तिं धारयन्नास्ते। स च पञ्चदशः शारीरबलस्येन्द्रियसामर्थ्यस्य च हेतुत्वात् तदुभयात्मकः। तेनापि युक्तः पुनः सप्तदशस्तोमानुष्ठानाय मनोवृत्तिं धारयन् प्रवर्त्तते। स च स्तोमः सङ्ख्यया आश्रावयेत्याद्यक्षरसाम्यात्* तदक्षरात्मकप्रजापतिसम्बन्धिः प्रजोत्पत्तिहेतुश्च। तादृशेन स्तोमेन युक्तोऽपि पुनरेकविंशस्तोमानुष्ठानाय मनोवृत्तिं धारयन् प्रवर्त्तते तदेवं 'स्तोम एव' पूर्वोक्तस्तोमरूप एव सन् उत्तरस्तोमाय तज्ज्योतिर्मनोवृत्तिरूपं धारयन् प्रवर्त्तते। अपि च तथा प्रवृत्तः सन् उत्तरस्तोमं साभिमुख्येन प्रणयति। इत्थं स्तोमानां सम्रूपकारित्वं दर्शितम्॥

अथ स्तोमान् प्रशंसति—"यावन्तो वै स्तोमास्तावन्तः कामास्तावन्तो लोकास्तावन्ति ज्योतींषि(१)"—इति। स्तोमाः 'यावन्तो' यावत्सङ्ख्याकाः, 'तावन्त एव कामाः' काम्यानि फलानि तैर्निष्पाद्यानि। तच्च पूर्वमेव सूचितम्—त्रिवृता ब्रह्मवर्चसं निष्पाद्यते, पञ्चदशेनौजोवीर्यञ्च, सप्तदशेन प्रजास्वामित्वं प्रजोत्पादकत्वम्। एतत् त्रयमत्रैव सूचितम्। एकविंशेन प्रतिष्ठोत्पाद्यते। तच्च पूर्वानुवाके (१४८ पृ०) 'एतस्मिन् प्रतितिष्ठति'—इति सूचितम्। एवं सति यावन्तः स्तोमाः तावन्तः कामाः सम्पद्याः। तत्फलभोगाधारभूता देहा लोकाः; तेऽपि तावन्त एव। तेषु देहेषु तत्फलानुभवा एव ज्योतींषि, तान्यपि तावन्त्येव॥

---

* १५७ पृष्ठे द्रष्टव्यम्। सामब्राह्मणे तु "संवत्सर एव सप्तदशस्त्वयतनम्;—द्वादश मासाः, पञ्चर्तवः, एतदेव सप्तदशस्यायतनमेषास्य बन्धुता"—इत्यादि ता० ब्रा० १०. १. ७।

इत्थं स्तोमान् प्रशस्य योऽग्निष्टोमेन यजते, तस्य फलं प्रशंसति —"एतावत एव स्तोमानेतावतः कामानेतावतो लोकानेतावन्ति ज्योतीꣳष्यवरुन्धे[६]"—इति ॥२॥

इति श्रीसायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥

---

ब्रह्मवादिनो वदन्ति सत्वै यजेत * योऽग्निष्टोमेन यजमानोऽथ सर्वस्तोमेन यजेतेति[१] यस्य त्रिवृतमन्तर्यन्ति प्राणाꣳस्तस्यान्तर्यन्ति प्राणेषु मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते[२] यस्य पञ्चदशमन्तर्यन्ति वीर्यं तस्यान्तर्यन्ति वीर्ये मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते[३] यस्य सप्तदशमन्तर्यन्ति (१)

प्रजां तस्यान्तर्यन्ति प्रजायां मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते[४] यस्यैकविꣳशमन्तर्यन्ति प्रतिष्ठां तस्यान्तर्यन्ति प्रतिष्ठायां मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते[५] यस्य त्रिणवमन्तर्यन्त्यृतूꣳश्च तस्य नक्षत्रियाञ्च विराजमन्तर्यन्त्यृतुषु मेऽप्यसन्नक्षत्रियायाञ्च विराजीति (२)

---

* "वदन्ति स तु वै यजेत"–इति क, पदपाठश्च ।

खलु वै यज्ञेन यजमानो यजते[६] यस्य चयस्त्रिंश-
मन्तर्यन्ति देवतास्तस्यान्तर्यन्ति देवतासु मेऽप्यसदिति
खलु वै यज्ञेन यजमानो यजते[७] यो वै स्तोमानामव-
मम्परमतां गच्छन्तं वेद परमतामेव गच्छति त्रिवृद्वै
स्तोमानामवमस्त्रिवृत्परमो य एवं वेद परमतामेव
गच्छति[८] ॥ ३ ॥

अन्तर्यन्ती[*]ति[९]* चतुश्चत्वारिंशच्च ॥ ३ ॥

प्रथमानुवाकविहिते ज्योतिष्टोमे पुरुषं मरोचयितुं द्वितीयेऽनु-
वाके स्तोमप्रशंसा कृता। अग्निष्टोमस्य प्राथम्यं (तत्सामर्थ्यं†) "तस्मा-
दाऊर्ध्वस्यज्ञ."—इतिवाक्येनोक्तम् (२४८ पृ०)। तत् प्राथम्यमति-
रात्रस्यापि वैकल्पिकमस्ति। अतएव सूत्रकारेणोक्तम्—"अग्निष्टोम
प्रथमयज्ञोऽतिरात्रमेके पूर्वं समामनन्ति"—इति (आप० श्रौ० १०.
२. ३, ४.)। तस्यैतस्यातिरात्रस्य तृतीयानुवाके विधिमुन्नयति—
"ब्रह्मवादिनो वदन्ति,—सत्वै यजेत योऽग्निष्टोमेन यज्मानोऽथ
सर्वस्तोमेन यजेतेति[१]"—इति। 'य.' पुरुषोऽग्निष्टोममनुतिष्ठति,
स पुन सर्वस्तोमेन चेद् यजेत, तदा स एव मुख्यो यष्टेति ब्रह्म
वादिन आहुः। तस्मात् सर्वस्तोममनुतिष्ठेदिति विधिरुन्नेयः। अग्नि-

---

* "सुमदुष्मन्तर्यन्ति[१] त्रिरात्रीति[२]"—इति क, ख, ग।
† सामर्थ्येतत्पदं ख पुस्तकादन्यत्र।

ष्टोमे चत्वार एव स्तोमास्त्रिवृतादयः*; अतिरात्रे तु त्रिणवत्रय-स्त्रिंशावपि स्तोमौ विद्येते†। तस्मादयं सर्वस्तोमः॥

तत्रान्वयव्यतिरेकाभ्यां प्रथमं स्तोमं प्रशंसति—"यस्य त्रिवृतमन्त-र्यन्ति, प्राणाꣳस्तस्यान्तर्यन्ति; प्राणेषु मेऽप्यसदिति खलु वै यज्ञेन य-जमानो यजते(१)"—इति। 'यस्य' यजमानस्य यागे वर्त्तमाना ऋत्विजः 'त्रिवृत्' स्तोममन्तरितं कुर्युः, तस्य स्तोमस्य प्राणरूपत्वात् त ऋत्विजः 'तस्य' यजमानस्य प्राणानेवान्तरितान् कुर्वन्ति। न त्वेतद्युक्तम्। अयं यजमानो हि प्राणेष्वपि मे भागित्वमस्त्वित्यभिप्रेत्य यज्ञमनुतिष्ठति। तस्मात् त्रिवृत् स्तोमोऽवश्यभावी। अथ द्वितीयं स्तोमं प्रशंसति—"यस्य पञ्चदशमन्तर्यन्ति, वीर्यं तस्यान्तर्यन्ति, वीर्ये मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते(२)"—इति। पञ्चदशस्य वीर्यसाधनत्वात्त-दन्तराये वीर्यस्यान्तरायः। अन्यत् पूर्ववत्। तृतीयं स्तोमं प्रशंसति—"यस्य सप्तदशमन्तर्यन्ति, प्रजां तस्यान्तर्यन्ति, प्रजायां मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते(३)"—इति। पूर्ववत्। अथ चतुर्थं स्तोमं प्रशंसति—"यस्यैकविꣳशमन्तर्यन्ति, प्रतिष्ठां तस्यान्तर्यन्ति; प्रतिष्ठायां मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते(४)"—इति। पूर्ववत्। अथ पञ्चमं स्तोमं प्रशंसति—"यस्य त्रिणवमन्तर्यन्त्यृतूꣳश्च, तस्य नक्षत्रियाञ्च विराजमन्तर्यन्त्यृतुषु मेऽप्यसन्नक्षत्रियायां च विराजीति खलु वै यज्ञेन यजमानो यजते(५)"—इति। ऋतुत्वेन

---

* "एष वाव यज्ञो यदग्निष्टोम· ०—० त्रिवृत् पञ्चदशः सप्तदश एकविंश ०—० चतुष्टोमो भवति"—इति ता० ब्रा० ६. ३।

† "सर्वस्तोमेनातिरात्रेण"—इत्यादि ता० ब्रा० २०. २, ११।

त्रिणवस्य स्तुतिः शाखान्तरे द्रष्टव्या*। अतस्त्रिणवस्यान्तराये सति ऋतूनामेवान्तरायो भवति। त्रिणवस्तोमे सप्तविंशतिसङ्ख्याकाः स्तोत्रीयाः; नक्षत्राणि च कृत्तिकादीनि सप्तविंशतिसङ्ख्याकानि; विराट्-छन्दोऽपि विविधराज्यवाची नक्षत्रेष्टिषु श्रूयमाणं फलसमूहमुपलक्षयति†। तथा सति त्रिणवान्तरायेण नक्षत्रसम्बन्धिन्या विराजो ऽन्तरायः। शेषं पूर्ववत्। अथ षष्ठं स्तोमं प्रशंसति—"यस्य त्रयस्त्रिंशमन्तर्यन्ति, देवतास्तस्यान्तर्यन्ति; देवतासु मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते(७)"—इति। त्रिष्वपि लोकेषु प्रत्येकमेकादशसङ्ख्याका देवताः। ताश्च "ये देवा दिव्येकादश स्थ"—इतिमन्त्रे (ऋ० सं०१. १३८. ११.) समाम्नाताः। तथा सति त्रयस्त्रिंशस्तोमान्तराये त्रयस्त्रिंशस्तोमाख्यसाम्यात् तासां देवतानामन्तरायो भवति। सोऽयमन्तरायोऽनुपपन्नः; देवतासु यत् फलं तदपि मे भूयादित्यभिप्रेत्य यजमानेन यष्टुं प्रवृत्तत्वात्। तदेवमतिरात्रविवक्षया सर्वे स्तोमाः प्रशस्ताः। सन्ति हि कस्मिंश्चिदतिरात्रे सर्वे स्तोमाः। अतएव ह्युपरिष्टाद् (१६५पृ० १४पं०) विधास्यति—"सर्वस्तोमोऽतिरात्र उत्तरम्"—इति॥

तथान्यमतिरात्रगतं विशेषं विधित्सया प्रशंसति—"यो वै स्तोमानामवमम्परमतां गच्छन्तं वेद, परमतामेव गच्छति; त्रिवृद्वै स्तोमानामवमस्त्रिवृत्परमो; य एवं वेद परमतामेव गच्छति(८)"—इति। स्तोमानां मध्ये न्यूनसङ्ख्याकस्तोत्रियोपेतस्त्रिवृत् स्तोमोऽवमः, (स

---

* ता० ब्रा० ४. १. १०।

† तै० ब्रा० २ ५. १, २, ३. १. १–६।

एवोत्तमः)* तस्य च परमत्वादन्ते प्रयोगः। अतिरात्रे हि तथा प्रयुज्यते त्रिवृदग्न्यन्तरमग्निरिति, चरमे सन्निस्तोत्रे त्रिवृतो विधानात्†। 'य एवं वेद' इति पुनर्वचनमुपसंहारार्थम् ॥३॥

इति श्रीसायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः॥

---

अङ्गिरसो वै सत्त्रमासत ते सुवर्गं लोकमायन् तेषाꣳ हविष्मांश्च हविष्कृच्चाहीयेतां तावकामयेताꣳ सुवर्गं लोकमियावेति तावेतं द्विरात्रमपश्यतां तमाहरतां तेनायजेतां ततो वै तौ सुवर्गं लोकमैतां य एवं विद्वान् द्विरात्रेण यजते सुवर्गमेव लोकमेति(१) तावैतां पूर्वेणाह्नागच्छतामुत्तरेण (१)

अभिप्लवः पूर्वमहर्भवति गतिरुत्तरं(२) ज्योतिष्टोमोऽग्निष्टोमः पूर्वमहर्भवति तेजस्तेनावरुन्धे सर्वस्तोमोऽतिरात्र उत्तरꣳ सर्वस्याप्त्यै सर्वस्यावरुध्यै(३) गायत्रं पूर्वेऽहन्त्साम भवति तेजो वै गायत्री गायत्री ब्रह्मवर्चसं तेज एव ब्रह्मवर्चसमात्मन् धत्ते त्रैष्टुभमुत्तर ओजो वै वीर्यं त्रिष्टुगोज एव वीर्यमात्मन् धत्ते(४) रथन्तरं पूर्वे (२)

* नास्त्येतद्वाक्य ख पुस्तकादन्यत्र।  † ता० ब्रा० ८. १ २८, २ ४।

अहन्त्साम भवतीयं वै रथन्तरमस्यामेव प्रति तिष्ठति बृहदुत्तरेऽसौ वै बृहदमुष्यामेव प्रति तिष्ठति[१] तदाहुः क्व जगती चानुष्टुप् चेति वैखानसं पूर्वेऽहन्त्साम भवति तेन जगत्यै नैति षोडश्युत्तरे तेनानुष्टुभो[१०] ऽथाहुर्यत्समानेऽर्द्धमासे स्यातामन्यतरस्याहो वीर्यं मनु (३)

पद्येतेत्यमावास्यायां पूर्वमहर्भवत्युत्तरस्मिन्नुत्तरं नानैवार्द्धमासयोर्भवतो नानावीर्ये भवतो[२०] हविष्मन्निधनं पूर्वमहर्भवति हविष्कृन्निधनमुत्तरं प्रतिष्ठित्यै[२८] ॥ ४ ॥

उत्तरेण[१] पूर्वे[१]ऽन्वे[१]* कविंशतिश्च ॥ ४ ॥

तृतीयानुवाके सर्वस्तोमोऽतिरात्र उक्त । स चैकाह इति सर्वेऽप्येकाहा एतेनोपलक्षिता । अथाहीना द्विरात्रादय क्रमेणोच्यन्ते। चत्वारो हि द्विरात्रभेदा। तत्र युधिष्ठिरात्रो राजा† विहितः, अथाङ्गिरसां द्विरात्रो विधीयते—"अङ्गिरसो वै सत्रमासत, ते सुवर्गं लोकमायन्, तेषाः हविष्माःश्च हविष्कृच्चाहीयेतां, तावकामयेताः सुवर्गं लोकमियावेति, तावेत द्विरात्रमपश्यतां, तमाहरतां, तेनायजेतां, ततो वै तौ सुवर्गं लोकमैतां, य एव

* "रथन्तरं पूर्वे[२]ऽन्वे[३]"—इति क, ख, ग।

† 'राजसूयान्ते'—इति ग।

विद्वान् द्विरात्रेण यजते सुवर्गमेव लोकमेति(१)—इति। 'अङ्गिरसः' महर्षयो यदा सत्र मनुष्ठाय स्वर्गं प्राप्ताः, तदानीं तेषां मध्ये हविष्मान्-हविष्कृदित्येतौ पुरुषावननुष्ठानेन स्वर्गतौ च हीनौ* स्याताम्। तौ पुनः स्वर्गप्राप्तिं कामयमानौ द्विरात्राख्यं यागं तत्साधनत्वेन निश्चित्य तदीयां सामग्रीं सम्पाद्य तदनुष्ठानेन स्वर्गं प्राप्तौ ; अतोऽन्योपि स्वर्गप्राप्तये द्विरात्रेण यजेत ॥

अथ हविर्विशेषं विधत्ते—"तावेतां पूर्वेणाह्नागच्छतामुत्तरेणाभिप्लवः पूर्वमहर्भवति गतिरुत्तरम्(२)—इति। 'तौ' हविष्मद्धविष्कृन्नामानौ ऋषी, द्विरात्रगतेन पूर्वेणाह्ना स्वर्गं प्रविष्टौ। अत्र सर्वत्राहःशब्देन एकदिनसाध्यः सोमप्रयोग उपलक्ष्यते। अभिप्लवाख्यः कश्चित् षडहयागविशेषः। तस्य च प्रथमदिने ज्योतिष्टोमप्रथमसंस्थारूपोऽग्निष्टोमो विहितोऽस्ति। स एवात्राभिप्लवशब्देनोपलक्ष्यते। सोऽत्र पूर्वमहर्भवति। पूर्वदिनेऽनुष्ठेय इत्यर्थः। गम्यते स्वर्गो येनातिरात्रेण सोऽयमतिरात्रविशेषो गतिः। स च गतिरुत्तरमहर्भवति। द्वितीयदिने सोऽतिरात्रोऽनुष्ठेय इत्यर्थः ॥

उक्तार्थस्पष्टीकरणद्वारेण स्तोमविशेषान् विधत्ते—"ज्योतिष्टोमोऽग्निष्टोमः पूर्वमहर्भवति, तेजस्तेनावरुन्धे, सर्वस्तोमोऽतिरात्र उत्तरं सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै(३)—इति। अभिप्लव इत्यस्य व्याख्यानं ज्योतिष्टोम इति। तत्र हि ज्योतिष्टोमेन निरूपितास्त्रिवृतादयः, चत्वारः स्तोमाः क्रियन्ते; तदनुष्ठानेन तेजः प्राप्नोति। सर्वस्तोमे-

---

* 'स्वर्गतौ रहितौ'—इति ख, 'स्वर्गतावपि हीनौ'—इति ग।

रुपेतोऽतिरात्र इत्यनेन त्रिणव-त्रयस्त्रिंश-स्तोमाभ्यां सहिता अग्निष्टोमा उक्ताः। तेन च सर्वमप्यप्राप्यं प्राप्यते, स्वाधीनश्च भवति। द्वादशभिः स्तोत्रैरुपेतोऽग्निष्टोमः*, एकोनत्रिंशद्भिः स्तोत्रैरुपेतोऽतिरात्र इति तयोर्भेदः॥

अथ होतारं प्रति प्रयोक्तव्ये स्तोत्रे दिनभेदेन सामविशेषं विधत्ते—"*गायत्रं पूर्वेऽहन् साम भवति, तेजो वै गायत्री, गायत्री ब्रह्मवर्चसं तेज एव ब्रह्मवर्चसमात्मन् धत्ते, त्रैष्टुभमुत्तर ओजो वै वीर्यं त्रिष्टुगोज एव वीर्यमात्मन् धत्ते*[§]"—इति। गायत्रीच्छन्दस्कायां ऋच्युत्पन्नं 'गायत्रम्' एतन्नामकं साम†, तदेतद्धोतुराभिमुख्येन पठनीये स्तोत्रे गायेत्। तदेतत् पूर्वेऽह्नि द्रष्टव्यम्। गायत्र्या अग्निना सहोत्पन्नत्वात् तेजस्त्वम्, ब्राह्मणैरनुष्ठेयत्वाद् ब्रह्मवर्चसत्वम्, तदुभयमनेन साम्ना स्वस्मिन् समापयन्ति। यद्यपि त्रैष्टुभाख्यं किञ्चित्साम नास्ति, तथापि त्रिष्टुप्छन्दस्कायामुत्पन्नत्वात् त्रैष्टुभमित्युच्यते‡। तदेतदुत्तरदिने गायेत्। तेन शारीरं बलमिन्द्रियसामर्थ्यञ्च प्राप्नोति॥

अथ पृष्ठस्तोत्रसामविशेषं§ चोदकप्राप्तविकल्पवारणाय नियमयति—"*रथन्तरं पूर्वेऽहन् साम भवतीयं वै रथन्तरमस्यामेव प्रति तिष्ठति, बृहदुत्तरेऽसौ वै बृहदमुष्यामेव प्रति तिष्ठति*[¶]"—

* "द्वादशस्तोत्राण्यग्निष्टोमः"—इति ता॰ ब्रा॰ ६. ३ ३।

† ता॰ ब्रा॰ ७ १. द्रष्टव्यम्। सामस्वरूपं तु पृथक् मुद्रितमस्ति।

‡ ता॰ ब्रा॰ ७ ४ ८, सा॰ भा॰ द्रष्टव्यम्।

§ ता॰ ब्रा॰ ७ ७। उह्य॰ गा॰ रथन्तरम् १. १ १, बृहत् १. १ ५।

इति। प्रकृतौ* तु बृहद्रथन्तरयोरैच्छिको विकल्प †, इह तु दिनभेदेन व्यवस्था ॥

पुनरपि दिनभेदेन व्यवस्थितं सामान्तरं विधत्ते—"तदाहुः क्क जगती चानुष्टुप् चेति वैखानसं पूर्वेऽहन् साम भवति, तेन जगत्यै नैति षोडश्युत्तरे तेनानुष्टुभ(६)"—इति। अत्र ब्रह्मवादिनश्चोद्यन्ति। अत्र विद्यमाने द्वे एवाहनी, तयोः पूर्वस्मिन् गायत्र्यामुत्पन्नं साम गीतम्, तदुत्तरस्मिंस्तु त्रिष्टुभ्युत्पन्नं साम गीतम्, न ह्यत्र तृतीयचतुर्थे अहनी विद्येते, ततो जगत्यनुष्टुभौ द्वाववतिष्ठेते इति। तत्राभिज्ञाः सामान्तरविधानमुखेनोत्तरमाहुः। यद् बृहत्यामृच्युत्पन्नं वैखानसाख्यं साम‡, तत्पूर्वदिने गायेत्। बृहती च षट्त्रिंशदक्षरा सती चतुर्वारमावर्त्यमाना जगतीत्रयं सम्पद्यते, अष्टाचत्वारिंशदक्षराणां जगतीनां तिसृणामक्षरसंख्यया बृहतीचतुष्टयसमानत्वात्। तेन वैखानससाम्नाऽयं द्विरात्रयागो जगत्याः सकाशान्नापैति। षोडशीशब्देन षोडशस्तोत्रे गीयमानं गौरिवीताख्यं§ सामोच्यते। तच्चोत्तरेऽहनि गायेत्। तदाधारभूतामृच-

* ज्योतिष्टोमस्याद्यसंस्थारूपेऽग्निष्टोमे।

† "रथन्तरसाम्ना बृहत्साम्नोभयसाम्ना वा प्रथमं यजेत। न रथन्तरसामानमकृत्वा बृहत्सामानमाहरेदित्येके"—इति आप० श्रौ० १० २ ६,७।

‡ छ० आ०३ २ १ १ यन्नोत्पन्नम् गे० गा०६ २ २०, उ०आ०४ २ ८ तृचे तदेव ऊ०गा०४ १ ६। विहितं च ता० ब्रा० १४ ४, १८११।

§ "अभि प्र गोपतिं गिरा"-इत्यत्र (छ० आ० २ २ ३ ४) उत्पन्नं तृतीयम् (गे० गा० २ ५ १ २२), अन्यत्रान्यत्र च ऊ० गा० ९ १ ८, २ २ ३ इत्यादि। विहितं च ता० ब्रा० ५ ७।

मवलम्ब्य पूर्ववदनुष्टुभं सम्पादयेत्। तेन षोडशीसाम्ना अयं विराजोऽनुष्टुभः मकाशात्रापैति ॥

अथ दिनद्वयस्य पक्षव्यवस्थां विधत्ते—"अथाऽऽर्धमासाने‌र्द्धमासे स्यातामन्यतरस्याह्नो वीर्यमनु पद्येतेत्यमावास्यायां पूर्वमहर्भवत्युत्तरस्मिन्नुत्तरं नानैवार्द्धमासयोर्भवतो नानावीर्ये भवत.(७)—इति। शुक्लकृष्णो वा एक एव पक्षः, समानोऽर्द्धमासः। तस्मिन्नेव यद्युभे अहनी स्यातां, तदानीमेकपक्षगतत्वादेकस्याह्नो यावद्वीर्यं तावदेव भवेत्। इतरस्य* वीर्यं तु लुप्येत. अतः कृष्णपक्षस्यान्तिमदिने प्रथममहः कर्तव्यम्, शुक्लपक्षस्य प्रथमदिने द्वितीयमहः। एवं सति भिन्नार्द्धमासवर्त्तित्वाद्भिन्नवीर्ये भवतः ॥

अथ दिनभेदेन निधनविशेष विधत्ते—"हविष्मन्निधनं पूर्वमहर्भवति, हविष्कृन्निधनमुत्तर प्रतिष्ठित्यै(८)"—इति। पञ्चधा विभक्तस्य साम्नः पञ्चमभागो निधनम्†। हविष्मच्छब्दरूपं निधनं यस्मिन्नहनि तद्धविष्मन्निधनम्; पूर्वदिने हविष्मदितिशब्दः प्रयोक्तव्य इत्यर्थः। एव मितरत्रापि। निधनयोर्द्वित्वात्पादद्वयस्थानेन प्रतिष्ठित्यै सम्पद्यते‡ ॥

* 'द्वितीयस्याह्नस्य'-इति क।

† "प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनानि साम्नः"-इति पञ्चविधसूत्रम् १. १। छा० उप० २. २—७। ऐ० ब्रा० ३. २ ११।

‡ हविष्मन्निधनं हाविष्मतं वा उ० ग्रा० १. १. १६. १—३ ग्राम गेयम् ऊ० गा० ११. २. ८, हविष्कृन्निधनं हाविष्कृतं वा उ० ग्रा० १ १. १३. १—३. ग्राम गेयम् ऊ० गा० ११ २ ७। विहिते चैते साम्नी ता० ब्रा० १०. ११. ३।

अत्र मीमांसा। दशमाध्यायस्य पञ्चमपादे (जै०सू०१२, १३. अधि० ४.) चिन्तितम्—

"द्विरात्रादौ द्वादशाहे प्रायणीयादिकः क्रमः।
आद्यन्तौ वर्जयित्वा वा विशेषाभावतोऽग्रिमः॥
द्वादशाहे द्वितीयस्य द्विरात्रे प्रथमत्वतः।
जागतस्यान्तरायाच्च विधयन्तो दशरात्रगः॥

अहीनरूपस्य द्वादशाहस्य विकृतयो द्विरात्र-त्रिरात्रादयः। तेषु किं द्वादशाहस्य प्रथममहः प्रायणीयमह्नकमारभ्य क्रमेण विधयन्तः प्रवर्त्तते, किं वा प्रायणीयोदयनीयावाद्यन्तौ वर्जयित्वा तन्मध्यगतस्य विधयन्तः प्रवर्त्तत इति संशयः। ईदृशमहरुपादेय मीदृशं वर्जनीयमिति विशेषनियामकाभावात् आदित आरभ्य प्रवर्तत इति पूर्वपक्षः। द्विरात्रं प्रकृत्यैवमाम्नायते— "यत्प्रथमं तद् द्वितीयं यद् द्वितीयं तत् तृतीयम्"—इति। अयमर्थः— द्विरात्रस्य यत्प्रथममहरनुष्ठेयम्, तद् द्वादशाहस्य द्वितीयमिति। एवमुत्तरत्रापि योज्यम्। तदेतत्प्रायणीयवर्जने लिङ्गम्। तथा "जगतीमन्तर्यन्ति"—इति जागतस्याह्नोऽन्तराय आम्नायते; तच्च वर्जने लिङ्गम्। एवमादिभिर्लिङ्गैरुभयं वर्जयित्वा अवशिष्टो विधयन्तो यत्र यावानपेक्षितः, तत्र तावान् प्रवर्त्तयितव्य इत्यवगन्तव्यम्"—इति॥

तत्रैव (जै०सू०५२,५४.अधि०१२.) अन्यच्चिन्तितम्—

"द्विरात्रेऽङ्गिरसां षोडशप्राप्तः किं विधीयते।
परिसङ्ख्यायते वाद्यः चोदकाच्छ्रीप्रवुद्धितः॥
अनारभ्यविधेः प्राप्तौ परिसङ्ख्यातिदेशतः।

विकल्पोऽन्यद् द्विरात्रेषु प्रोक्तं वृत्तिकृतो मतम्॥

सन्ति बहवो द्विरात्राः, तेषु अङ्गिरसां द्विरात्रे श्रूयते—"वैखानसम्पूर्वेऽहन्त्साम भवति०—०षोडशुत्तरे"—इति (१६६ पृ०) सोऽयं षोडशग्रहः सन् विधीयते। न च चोदकात्प्राप्तिः शङ्कनीया; प्रत्यक्षवचनस्य शीघ्रप्रवृत्तेश्चोदको ह्यानुमानिकत्वेन विलम्बित इति प्राप्ते, ब्रूमः,— मा भूच्चोदकः, अस्ति ह्यनारभ्याधीतं प्रत्यक्षं विधन्तरम्—"उत्तमेऽहन् द्विरात्रस्य गृह्यते"—इति। तेषु सर्वेषु द्विरात्रेषु प्राप्तः सन्नङ्गिरसां द्विरात्र एव नान्येषु द्विरात्रेष्विति परिसङ्ख्यायते। ततोऽङ्गिरसां द्विरात्रे नियमेन षोडशी गृह्यते, इतरेष्वतिरात्रविकृतित्वेनातिदेशादिकल्प्यते। तदेतद् वृत्तिकारमतम्"—इति॥

तत्रैव * भाष्यकारमतेनाऽऽरचयति—

"परिसङ्ख्या पूर्वपक्षे न सा युक्ता त्रिदोषतः।

प्राप्तस्यान्यानुवादेन विधेये सा न शक्यते॥

वृत्तिकारस्य सिद्धान्तरूपा या परिसङ्ख्या, सैव भाष्यकारमते पूर्वः पक्षः। सिद्धान्तस्तु नैव,— षोडशुत्तर इत्ययं विधिरेव न भवति। विधित्सितवैखानससामवाक्यशेषत्वेनार्थवत्त्वात्। अतः परिसङ्ख्या दोषत्रयोपेता नात्र कल्पनीया। प्राप्तस्य विध्यर्थस्य परित्यागः, अप्राप्तस्य निषेधार्थस्य स्वीकारः, अन्यत्र प्राप्तस्य बाध इति दोषत्रयम्"—इति ॥४॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः॥

* 'तदेवाधिकरणं'—इति क।

आपो वा इदमग्रे सलिलमासीत्तस्मिन् प्रजापति-र्वायुर्भूत्वाचरत्स इमामपश्यत्तां वराहो भूत्वाहरत्तां विश्वकर्मा भूत्वा व्यमार्ट् साप्रथत सा पृथिव्यभवत्तत् पृथिव्यै पृथिवित्वं[१] तस्यामश्राम्यत् प्रजापतिः स देवानसृजत वसून्रुद्रानादित्यान् ते देवाः प्रजापति-मब्रुवन् प्र जायामहा इति सोऽब्रवीत् ( १ )

यथाहं युष्मांस्तपसासृक्ष्येवं तपसि प्रजननमिच्छ-ध्वमिति तेभ्योऽग्निमायतनं प्रायच्छदेतेनायतनेन श्राम्यतेति तेऽग्निनायतनेनाश्राम्यन् ते संवत्सर एकां गामसृजन्त तां वसुभ्यो रुद्रेभ्य आदित्येभ्यः प्रायच्छ-न्नेतां रक्षध्वमिति तां वसवो रुद्रा आदित्या अर-क्षन्त सा वसुभ्यो रुद्रेभ्य आदित्येभ्यः प्राजायत त्रीणि च ( २ )

शतानि त्रयस्त्रिंशतञ्चाथ सैव सहस्रतम्यभवत्[२] ते देवाः प्रजापतिमब्रुवन्त्सहस्रेण नो याजयेति सोऽग्नि-ष्टोमेन वसूनयाजयत्त इमं लोकमजयन्तच्चाददुः स उक्थ्येन रुद्रानयाजयत्तेऽन्तरिक्षमजयन्तच्चाददुः सो-ऽतिरात्रेणादित्यानयाजयत्तेऽमुं लोकमजयन्तच्चाददु[३]-स्तदन्तरिक्षम् ( ३ )

व्यवैर्यत तस्माद्रुद्रा घातुका अनायतना हि तस्मा-

दाहुः शिथिलं वै मध्यममह्नस्त्रिरात्रस्य वि हि तद्-
वैर्यतेति चैष्टुभं मध्यमस्याह्न आज्यं भवति संयानानि
सूक्तानि शꣳसति षोडशिनꣳ शꣳसत्यह्नो धृत्या अशि-
थिलभावाय[७] तस्मात्त्रिरात्रस्याग्निष्टोम एव प्रथम-
मह्नः स्यादथोक्थ्योऽथातिरात्र एषां लोकानां विधृत्यै[८]
त्रीणि शतान्यनूचीनाहमव्यवच्छिन्नानि ददाति (४)
एषां लोकानामनुसन्तत्यै[९] दशतं न वि च्छिन्द्या-
द्विराजं नेद्विच्छिनदानी[१०]त्यथ या सहस्रतम्यासीत्तस्या-
मिन्द्रश्च विष्णुश्च व्यायच्छेताꣳ स इन्द्रोऽमन्यतानया
वा इदं विष्णुः सहस्रं वर्क्ष्यत इति तस्यामकल्पेतां
द्विभाग इन्द्रस्तृतीये विष्णुस्तद्वा एषाभ्यनूच्यत उभा
जिग्यथुरिति[८] तां वा एता मच्छावाकः (५)
एव शꣳस[९]त्यथ या सहस्रतमी सा होत्रे देयेति
होतारं वा अभ्यतिरिच्यते यदतिरिच्यते होतानाप-
स्यापयिता[१०]थाहुरुन्नेत्रे देयेत्यतिरिक्ता वा एषा सह-
स्रस्यातिरिक्त उन्नेतर्त्विजा[११]मथाहुः सर्वेभ्यः सदस्येभ्यो
देये[१२]त्यथाहुरुदाकृत्या सा वशम्चरेदि[१३]त्यथाहुर्ब्रह्मणे
चाग्नीधे च देयेति (६)
द्विभागं ब्रह्मणे तृतीयमग्नीध ऐन्द्रो वै ब्रह्मा वैष्ण-
वोऽग्नीधयथैव तावकल्पेतामि[१४]त्यथाहुर्या कल्याणी

बहुरूपा सा देये[१५]त्यर्थाहुर्या द्विरूपोभयत एनी सा देयेति सहस्रस्य परिगृहीत्यै[१६]तद्वा एतत् सहस्रस्यायनꣳ सहस्रꣳ स्तोत्रीयाः सहस्रं दक्षिणाः सहस्रसम्मितः सुवर्गो लोकः सुवर्गस्य लोकस्याभिजित्यै[१७] ॥ ५ ॥

अब्रवी[१]च्चा[२]न्तरिक्षं[३]ददा[४]त्यच्छावाक[५] इति[६]* सप्तचत्वारिꣳशच्च ॥ ५ ॥

चतुर्थे द्विरात्रोऽभिहितः, अथ त्रिरात्रं विधातुं काचिदाख्यायिकोच्यते। तस्यां चाख्यायिकायामादौ पृथिव्युत्पत्तिं दर्शयति—"आपो वा इदमग्रे सलिलमासीत्, तस्मिन् प्रजापतिर्वायुर्भूत्वाचरत्, स इमामपश्यत्, तां वराहो भूत्वाहरत्, तां विश्वकर्मा भूत्वा व्यमार्ट्, साप्रथत, सा पृथिव्यभवत्, तत् पृथिव्यै पृथिविलम्[१]"- इति। 'इदम्'—इति, इदानीं दृश्यमानं गिरिनदीसमुद्रादिकं जगत्, पृथिव्युत्पत्तेः पूर्वं सलिलमासीत्। 'तस्मिन्' एव सलिले केवला आप एव, न तु भूतान्तरम्, तत्कार्यं वा किञ्चिदपि नासीत्। तदानीं प्रजापतिर्मूर्त्तस्य शरीरस्यावस्थातुं स्थानाभावात् वायुरूपो भूत्वा तस्मिन्नेव सलिले सर्वत्र अचरत्। चरित्वा च सलिले निमग्नां भूमिं दृष्ट्वा स्वयं वराहो भूत्वा दंष्ट्राग्रेण तां भूमिं जलस्योपर्याहरत्। आहृत्य च वराहरूपमुत्सृज्य विश्वकर्मा भूत्वा विशेषेण मार्जनं कृत्वा तत्रत्यं द्रवमपनीय तां

* अब्रवी[१]च्च[२] तदन्तरिक्षं[३] ददा[४]त्यच्छावाक[५]स्य देयेति"[६] —इति क, ख, ग।

विस्तारितवान्। तत इयं दृश्यमाना सर्वप्राण्याधारभूता पृथिव्यभवत्। प्रथनादेव पृथिवीनाम सम्पन्नम्॥

अथ देवसृष्टिं गोसृष्टिं च क्रमेण दर्शयति—"तस्यामश्राम्यत् प्रजापतिः, स देवानसृजत वसून् रुद्रानादित्यान्; ते देवाः प्रजापतिमब्रुवन् प्र जायामहा इति, सोऽब्रवीद्यथाहं युष्माँस्तपसासृक्ष्येवं तपसि प्रजननमिच्छध्वमिति, तेभ्योऽग्निमायतनं प्रायच्छदेतेनायतनेन श्राम्यतेति, तेऽग्निनायतनेनाश्राम्यन्, ते संवत्सर एकां गामसृजन्त, तां वसुभ्यो रुद्रेभ्य आदित्येभ्य प्रायच्छन्नेताꣳ रक्षध्वमिति, तां वसवो रुद्रा आदित्या अरक्षन्त, सा वसुभ्यो रुद्रेभ्य आदित्येभ्य प्राजायत त्रीणि च शतानि त्रयस्त्रिꣳशतं चाथ सैव सहस्रतम्यभवत्(१)"—इति। 'तस्यां' भूमौ, सः प्रजापतिः स्वेनैव शरीरेणावस्थाय सिसृक्षुः 'अश्राम्यत्' तपः कृतवान्। तस्माच्च तपःसामर्थ्यात् चीन्वस्वादिदेवगणानसृजत। 'ते' च वस्वादय प्रजापतिं प्रति प्रजोत्पादनोपायं पप्रच्छुः। 'स' च प्रजापति' मद्वत्तपसि कृते सति पश्चाद्युष्मत्पादन मिच्छतेत्युक्त्वा होमाख्यस्य तपस आधारभूतमग्निं दत्त्वा तेनाग्निना होमलक्षणं तपः कुरुतेत्युक्तवान्। ते च संवत्सरं तत् कृत्वा तदन्ते सर्वेऽप्येकां गामसृजन्त। 'तां' च गां स प्रजापतिः वसुभ्यो रक्षणार्थं दत्तवान्। सा च रक्षिता सती, वस्वर्थं गवां शतत्रयं त्रयस्त्रिंशतं चोत्पादयामास। ततः प्रजापतिस्तामेव गां रुद्रेभ्यो दत्तवान्। रुद्रार्थमपि सा, तथैवोत्पादयामास। एव मादित्यार्थं मप्युत्पादयामास। तमिमं पर्यायत्रयं संगृह्य श्रुतिरेकेनैव वाक्येनोदाजहार। तत्र त्रेधा वाक्य

विभज्य योजयितव्यम्। एवं सत्येकोनसहस्रं गवां सम्पन्नम्। येयं 'सहस्रतमी' गौः, सेय सहस्रसङ्ख्यापूरण्यभवत्॥

अतः सहस्रदक्षिणाकेन त्रिरात्रयागेन याजनं दर्शयति—"ते देवाः प्रजापतिमब्रुवन्त्सहस्रेण नो याजयेति, सोऽग्निष्टोमेन वसूनयाजयत्, त इमं लोकमजयन्, तच्चाददुः, स उक्थ्येन रुद्रानयाजयत्, तेऽन्तरिक्षमजयन्, तच्चाददुः, सोऽतिरात्रेणादित्यानयाजयत्, तेऽमुं लोकमजयन्, तच्चाददु[(४)]"—इति। वसुरुद्रादित्याः सर्वे मिलित्वा गोसहस्रदक्षिणाकयज्ञार्थं प्रजापतिं प्रार्थयामासुः। 'सः' च प्रजापतिः, देवगणत्रयं विभज्य त्रिषु दिनेषु क्रमादग्निष्टोमोक्थ्यातिरात्रैर्याजितवान्। द्वादशस्तोत्रोऽग्निष्टोमः। पञ्चदशस्तोत्र उक्थ्यः। एकोनत्रिंशत्स्तोत्रोऽतिरात्र.*। ते च त्रैलोक्यत्रयमजयन्। स्वकीय (स्वकीयं†) तत्तल्लोधनञ्च दक्षिणार्थमृत्विग्भ्यो दत्तवन्तः॥

अथोक्थ्यरूपे मध्यमेऽहनि कांश्चिच्छंसनविशेषान् विधत्ते—"तदन्तरिक्षं व्यवैर्यत, तस्माद्रुद्रा घातुका अनायतना हि, तस्मादाहुः शिथिलं वै मध्यममहस्त्रिरात्रस्य वि हि तदवैर्यतेति. त्रैष्टुभं मध्यमस्याह्न आज्यं भवति, संयानानि सूक्तानि शंसति, षोडशिनश्

* "सर्वस्तोत्राणा मेष कल्प। उत्तर मुत्तरं स्तोमभागाना दधाति। द्वादशाग्निष्टोमे, पञ्चदशोक्थ्ये, षोडश षोडशिनि, सप्तदश वाजपेये, एकान्नत्रिंशतमतिरात्रे, त्रयस्त्रिंशतमप्तोर्यामे"—इति आप० श्रौ० १४. १०. २–४ सूत्राणि।

† नास्त्येतद् पुन' पद ख-ग-पुस्तकयो'।

ग्र८मत्यह्नो धृत्या अशिथिलं भावाय[४]"—इति। यदन्तरिक्षं रुद्रैर्जितं 'तदन्तरिक्षं', 'व्यवैर्यत' विशीर्णमभूत्, सुदृढरूपं लोकसंस्थानं भग्नमभूदित्यर्थः। यस्माद्रुद्राणामायतनमन्तरिक्षलोकस्थानं विशीर्णमभूत्, 'तस्मात्' आयतनाभावात् 'रुद्राः' कोपाविष्टाः सन्तः सर्वत्र प्राणिघातिनोऽभवन्। यस्मात् फलभूतमन्तरिक्षं विशीर्णमभूत् तस्मात्तत्साधनमात्रं त्रिरात्रयागस्य मध्यममहः केनापि वैकल्येन शिथिलमित्येवमभिज्ञा आहुः। तस्मान्मध्यमस्याह्नो दार्ढ्येन शैथिल्यपरिहाराय* कानिचिच्छस्त्राणि अनुष्ठेयानि। त्रिष्टुप्छन्दस्कायामृच्युत्पन्न 'त्रैष्टुभं' होतुराज्यशस्त्रं शंसनीयम्। तथा संयानाख्यानि दाशतय्यां प्रसिद्धानि 'सूक्तानि' शंसेत्। तथा षोडश्याख्यमपि शस्त्रं† शंसेत्॥

इत्यमाख्यायिकां प्रस्तुत्य मध्यमे विशेषांश्च विधाय त्रिरात्रयागस्याहर्विशेषान् विधत्ते— "तस्मात्त्रिरात्रस्याग्निष्टोम एव प्रथममहः स्यादथोक्थ्योऽथातिरात्र एषां लोकानां विधृत्यै[५]"—इति। यस्मादस्मादिभिरहस्त्रयेण लोकत्रयजयायाहस्त्रयसङ्घातरूपमनुष्ठितम्, 'तस्मात्' त्रिरात्रयागमनुतिष्ठेदित्यर्थः। यदुक्तं सूत्रकारेण— 'सहस्रं दक्षिणास्त्रीणि शतानि त्रयस्त्रिंशतञ्च प्रथमेऽहनि ददात्येवं द्वितीये तृतीये च साहस्रातिरिच्यते'—इति॥

---

* "तस्मान्मध्यमस्याह्नोऽर्थदार्ढ्यार्थं शैथिल्यपरिहाराय"—इति क।

† "अथ षोडशी। + + +। 'आ त्वा वहन्तु हरयः'—इति (ऋ० सं० १.१६.१–३.) तिस्रो गायत्र्य"—इत्यादीनि (आश्व० श्रौ० ६.२.) सूत्राणि द्रष्टव्यानि।

तदिदं विधत्ते— "त्रीणि शतान्यनूचीनाहमव्यवच्छिन्नानि ददात्येषां लोकानामनुसन्तत्यै[१]"—इति। अनुक्रमेणाञ्चति प्रवर्त्तते इत्यनूचीनम्, तादृशञ्च तदहश्च 'अनूचीनाहम्', प्रतिदिनमित्यर्थः; प्रतिदिनमविच्छिन्नानि यथा भवन्ति तथा त्रीणि त्रीणि शतानि ददाति। त्रयस्त्रिंशत्सङ्ख्याया अप्येतदुपलक्षणम्। तथा सत्येकैकस्मिन् दिने त्रयस्त्रिंशदधिकं गवां शतत्रयं दद्यादित्यर्थो भवति। एतच्च लोकानां भूरादीनां सन्तत्यै भवति। यदुक्तं सूत्रकारेण— 'दक्षिणानयने न्यूना दशधा नयेत्'—इति॥

तदेतद्विधत्ते— "दशत न वि च्छिन्द्याद्विराजन्नेदिच्छिनदानीति[७]"—इति। दशानां वर्गो दशत्*। तस्य वर्गस्य विच्छेदं न कुर्यात्। वेदेर्दक्षिणस्यां दिशि अवस्थिता गाः प्राग्वंशसदसोर्मध्येन यदोत्तरस्यां दिशि दक्षिणार्थं नयति, तदानीमेकैकं दशकं सहैव नयेत्, न तु दशतो न्यूनं नयेत्, दशसङ्ख्याया विराड्रूपत्वात्। विराजं नैव विच्छिन्नां करोमीति नेतुरभिप्रायः। यत्तु त्रिंशत उपरि त्रयमधिकं तदपि चरमेण दशकेन सह नयेत्, न्यूनत्वस्यैवात्र विधानात्। एवमेकोनसहस्रे त्रिषु दिनेषु दत्ते सति सहस्रतमी परिशिष्यते॥

तद्दानन्तु बहुधा विकल्पितं प्रदर्शयितुं प्रस्तौति— "अथ या सहस्रतम्यासीत्तस्यामिन्द्रश्च विष्णुश्च व्यायच्छेताꣳ स इन्द्रोऽमन्यतानया वा इदं विष्णुः सहस्रं वर्क्ष्यत इति, तस्यामकल्पेतां द्विभाग इन्द्रस्तृतीये विष्णुस्तदा एषाभ्यनूच्यत उभा जिग्यथुरिति[८]"—इति। क्लृप्तिः कल्पनम्, तथैव क्लृप्त्या 'तस्यां' सहस्रतम्यां गवि निमित्त-

* "पञ्चद्-दशतौ वर्गे वा"—इति पा० ५.१.६०।

भूतायां ममैवेयं भूयादित्येवमिन्द्रश्च विष्णुश्च परस्परं कलहं कुरुतः। तदानीमिन्द्रो मनस्येवमचिन्तयत्। तां गां गृहीत्वा विष्णुः 'अनया' गवा 'सहस्रम्' इदं सर्वं मां वर्जयित्वा स्वाधीनं करिष्यति, तस्मान्मयैवाधिकेन भागेन भवितव्यमिति। ततस्तावुभौ 'तस्यां' गवि 'अकल्पेतां' व्यवस्थां कृतवन्तौ,—इन्द्रो द्विभागे व्यवस्थितः, विष्णुस्तृतीये भागे व्यवस्थितः। 'तत्' एतदर्थमभिलक्ष्य काचिदृग्वेदे ऋगनूच्यते; सा च भागत्रयप्रतिपादिका। तस्याश्च प्रतीकम्—'उभा जिग्यथुरिति' एतत् (ऋ० सं० ६. ६९. ८.)। इयञ्चोपरितनेऽनुवाके समाम्नास्यते (१८४ पृ० ७पं०)॥

अथैतस्या ऋचः शंसननियमं विधत्ते—"तां वा एतामच्छावाक एव शंसति(९)"—इति॥

विकल्पितेषु दानपक्षेषु प्रथमं पक्षमाह—"अथ या सहस्रतमी, सा होत्रे देयेति; होतारं वा अभ्यतिरिच्यते, यदतिरिच्यते होताऽऽप्तस्यापयिता(१०)"—इति। प्रतिदिनं त्रयस्त्रिंशदधिकशतत्रये साम्येन दत्ते सति सेयं सहस्रतम्यतिरिच्यते, यत्तु द्रव्यं यागेऽतिरिक्तं भवति, तत्सर्वं होतारमभिलक्ष्यैवातिरिच्यते;—होता ह्यनाप्तस्य सर्वस्य फलस्य प्रापयिता। तस्माद्धोत्रे सहस्रतमी देयेत्याद्यः पक्षः। द्वितीयं पक्षं दर्शयति—"अथाहुरुन्नेत्रे देयेत्यतिरिक्ता वा एषा सहस्रस्यातिरिक्त उन्नेतर्त्विजाम्(११)"—इति। 'एषा' गौः सहस्रस्य मध्येऽतिरिक्तवीर्या; उन्नेताप्यृत्विजां मध्येऽप्यतिरिक्तवीर्यः। अतएव हि हारियोजनभक्षे श्रूयते "उन्नेतर्युपहवमिच्छन्ते" इति (तै० सं० ६. ५. ८. १.)। तस्मादियमुन्नेत्रे देयेत्येवं केचिदाहुः। तृतीयं

पचं दर्शयति—"अथाहुः सर्वेभ्यः सदस्येभ्यो देयेति[१२]"—इति। अत्रोपपत्तिर्बहिरेव द्रष्टव्या "यावन्तो वै सदस्यास्ते सर्वे दक्षिण्याः" —इत्यन्यत्राम्नातम् (तै॰ सं॰ ३.१.८.३.)। तस्मात् सदस्येभ्यो देया। चतुर्थं पचं दर्शयति—"अथाहुरुदाहृत्या सा वशग्धरेदिति[१३]"—इति। अत्राप्युपपत्तिर्बहिरेव द्रष्टव्या। दिनत्रये विभागसाम्येन दक्षिणा दत्ता, इयञ्चैका, भागवैषम्यञ्च न युक्तम्, अतो यज्ञभूमे-रुद्धृतां कृत्वा स्ववशत्वेन यथा चरति तथा कुर्यात्। पञ्चम पचं दर्शयति—"अथाहुर्ब्रह्मणे चाग्नीधे च देयेति, द्विभागं ब्रह्मणे, तृतीयमग्नीध ऐन्द्रो वै ब्रह्मा वैष्णवोऽग्नीधयथैव तावकल्पेतामिति[१४]" —इति। इन्द्रस्य विष्णोश्च या भागकॢप्तिः, तद्वत् तदीययोः* ब्रह्माग्नीध्रयोर्देया। षष्ठ पचं दर्शयति—"अथाहुर्या कल्याणी बहुरूपा सा देयेति[१५]"—इति। इयं वै सहस्रतमी न कस्मैचिद्देया, किं त्वेतत् प्रतिनिधिरूपा या काचित् 'कल्याणी' बहुचीरादिगुणवती विचित्रवर्णा सा दातव्या। सप्तम पचं दर्शयति—"अथाहुर्या द्विरूपो-भयतएनी सा देयेति सहस्रस्य परिगृहीत्यै[१६]"—इति। 'या' गौः शुक्लकृष्णवर्णाभ्यामुपेतत्वेन 'द्विरूपा'। पार्श्वद्वये शुक्लकेशोपेतत्वात् 'उभयत-एनी'। सहस्रसङ्ख्यापूर्त्त्यर्थं तादृशी काचिद्देया॥

तदिदं सहस्रदानोपेत कर्म प्रशंसति—"तद्वा एतत् सहस्र-स्यायनꣳ सहस्रꣳ स्तोत्रीया. सहस्रं दक्षिणाः सहस्रसम्मितः सुवर्गो लोकः सुवर्गस्य लोकस्याभिजित्यै[१७]"—इति। चिरात्राख्यं यत्

---

* "इन्द्रस्य विष्णोश्च भागयोर्ययो"—इति ख, "इन्द्रस्य विष्णोश्च या भागकॢप्ति, तयैव कॢप्या तदीययो"—इति ग।

कर्माक्तं तदेतत्सहस्रसङ्ख्याकफलस्य प्राप्तिहेतुः; यस्मादत्र त्रिषु दिनेषु मिलित्वा स्तोत्रीया ऋचः सहस्रं विद्यन्ते, दक्षिणाशोक्त-रीत्या सहस्रं गावः, स्वर्गलोकस्य सुखाधिक्याद्भूलोकसहस्रेण समानः, तादृशस्य स्वर्गस्याभिजयाय इदं कर्म योग्यम् ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥

---

सोमो॒ वै स॒हस्र॑मविन्द॒त्तमिन्द्रो॒ऽन्व॑विन्द॒त्तौ य॒मो न्या॑गच्छ॒त्ताव॑ब्रवी॒दस्तु॒ मेऽत्रापी॒त्यस्तु॒ ही३ इत्य॑ब्रूता॒ꣲ स य॒म एक॑स्यां वी॒र्ये॑ पर्य॑पश्यदि॒यं वा अ॒स्य स॒हस्र॑स्य वी॒र्यं॑ बिभ॒र्त्तीति॒ ताव॑ब्रवीदि॒यं ममा॒स्त्वेत॑द्युव॒योरिति॒ ताव॑ब्रूता॒ꣲ सर्वं॑ वा ए॒तदे॒तस्यां॑ वी॒र्य॑म् ( १ )

परि॑ पश्यामो॒ऽꣳशमा ह॑रामहा॒ इति॒ तस्या॒मꣳश॒माह॑रन्त॒[१] ताम॒प्सु प्रावे॑शयन्त्सोमा॒यो॒देही॒ति॒ सा रोहि॑णी पिङ्ग॒लैक॑हायनी रू॒पं कृ॒त्वा त्रय॑स्त्रिꣳशता च त्रि॒भिश्च॑ श॒तैः स॒होदै॑त् तस्मा॒द्रोहि॑ण्या पिङ्ग॒लयैक॑-हायन्या॒ सोमं॑ क्रीणीया॒द्य ए॒वं वि॒द्वान् रोहि॑ण्या पिङ्ग॒लयैक॑हायन्या॒ सोमं॑ क्री॒णाति॒ त्रय॑स्त्रिꣳशता चै॒वास्य॑ त्रि॒भिश्च॑ ( २ )

श॒तैः सोमः॑ क्री॒तो भ॑वति॒ सुक्री॑तेन यजते॒[२] ताम॒प्सु प्रावे॑शय॒न्निन्द्रा॒यो॒देही॒ति॒ सा रोहि॑णी लक्ष्म॒णा

पष्ठौही वार्त्रघ्नी रूपं कृत्वा त्रयस्त्रिꣳशता च त्रिभिश्च शतैः सहोदैत् तस्माद्रोहिणीं लक्ष्मणां पष्ठौहीं वार्त्रघ्नीं दद्याद्य एवं विद्वान् रोहिणीं लक्ष्मणां पष्ठौहीं वार्त्रघ्नीं ददाति त्रयस्त्रिꣳशच्चैवास्य त्रीणि च शतानि सा दत्ता (३)

भवति[3] तामप्सु प्रावेशयन् यमायोद्देहीति सा जरती मूर्खा तज्जघन्या रूपं कृत्वा त्रयस्त्रिꣳशता च त्रिभिश्च शतैः सहोदैत्तस्माज्जरतीं मूर्खां तज्जघन्या मनुस्तरणीं कुर्वीत य एवं विद्वान् जरतीं मूर्खां तज्जघन्यामनुस्तरणीं कुरुते त्रयस्त्रिꣳशच्चैवास्य त्रीणि च शतानि सामुष्मिन् लोके भवति[4] वागेव सहस्रतमी तस्माद् (४)

वरो देयः सा हि वरः सहस्रमस्य सा दत्ता भवति तस्माद्वरो न प्रतिग्राह्यः सा हि वरः सहस्रमस्य प्रतिगृहीतं भवतीयं वर इति ब्रूयादयान्यां ब्रूयादियं ममेति तथास्य तत् सहस्रमप्रतिगृहीतं भव[5]त्युभयतएनी स्यात्[6] तदाहुरन्यतएनी स्यात् सहस्रं परस्तादेतमिति[7] येव वरः (५)

कल्याणी रूपसमृद्धा सा स्यात्सा हि वरः समृद्ध्यै[8] ता मुत्तरेणाग्नीध्रं पर्याणीयाहवनीयस्यान्ते द्रोणक-

लुप्रमवं प्रापयेऽ(९)दा जिग्र वै नशं मह्युरधारा पयस्वत्या त्वां विशन्त्विन्दवः समुद्रमिव सि~ध्रवः सा मां सहस्र आ भंज प्रजयां पशुभिः सह पुनर्मा विशताद्रयि-रिति(१०) प्रजयैवैनं पशुभीं रय्या सम् ( ६ )

अर्द्धयति(११) प्रजावान् पशुमान रयिमान् भंवति य एवं वेद(१२) तयां सहाग्नीध्रं परेत्य पुरस्तात् प्रतीच्यां तिष्ठन्त्यां जुहुया(१३)द्भ्मा जिग्ययुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथामिति(१४) त्रेधा विभक्तं वै त्रिरात्रे सहस्रं साहस्रीमेवैनां करोति सहस्रस्यैवैनां मा-त्रांम् ( ७ )

करोति(१५) रूपाणि जुहोति रूपैरेवैनां सम॑र्द्ध-यति(१६) तस्या उपोत्थाय कर्णमा जपे(१७)दिडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि सुकृतं मा देवेषु ब्रूतादिति(१८) देवेभ्य एवैनमा वेदयत्यन्वेनं देवा बुध्यन्ते(१९) ॥ ६ ॥

वीर्य(१) च(२) दत्ता(३) तस्माद्(४) वरः(५) सम्(६) मात्राम्(७) * एकान्नचत्वारिंशश्च ॥ ६ ॥

---

* "एतदेतस्यां वीर्य[१]मस्य विभिद्य[२] दत्ता[३] संवत्सरमी तस्माद[४] यैव वरः[५] सम[६] मात्राम्[७]"—इति क, ख, ग।

पञ्चमेऽनुवाके त्रिरात्रोऽभिहितः; अथ षष्ठे तत्रत्यां सहस्रतमीं प्रपञ्चयितुमुपाख्यानं दर्शयति—"सोमो वै सहस्रमविन्दत्; तमिन्द्रोऽन्वविन्दत्; तौ यमो न्यागच्छत्; तावब्रवीदस्तु मेऽत्रापीत्यस्तु हीऽ३ इत्यब्रूताम्; स यम एकस्यां वीर्यं पर्यपश्यदियं वा अस्य सहस्रस्य वीर्यं बिभर्त्तीति; तावब्रवीदियं ममास्त्वेतद्युवयोरिति तावब्रूताम्; सर्वं वा एतदेतस्यां वीर्यं परि पश्यामोऽंशमस्या हरामहा इति तस्यामंशमाहरन्त(१)"—इति। पुरा कदाचित् सोमो गोसहस्रमलभत। तदनुगम्येन्द्रोऽपि तदेव गोसहस्रमलभत, 'तौ' सोमेन्द्रौ प्रति यमोऽपि भागं निकामयमान आगच्छत्। आगत्य चाच गोसहस्रे ममापि कश्चिद्भागोऽस्त्वित्यब्रवीत्। तावपि तथास्त्वित्यङ्गीकुरुतः। आदरार्थः प्लुतः*। ततः स यमः परीक्ष्य तस्मिन् सहस्रे 'एकस्याम्' उत्तमायां गवि सामर्थ्यमपश्यत्। तत इयमेकैवास्य गोसहस्रस्य वीर्यं बिभर्त्तीति मनसा निश्चित्य इयमेव ममास्तु युवयोरितरत् सहस्रमित्यब्रवीत्। ततस्तौ सोमेन्द्रावेवमुक्तवन्तौ सर्वेऽपि वयं मिलिला 'एतस्याम्' उत्तमायां गवि वीर्यं परीक्ष्य तस्यामंशमेकैक स्वीकुर्म इति विचार्य तथैव कृतवन्तः॥

तत्र सोमस्य प्रथमसंग्रहरणप्रकारं दर्शयति—"तामप्सु प्रावेशयन्त्सोमायोदेहीति; सा रोहिणी पिङ्गलैकहायनी रूपं कृत्वा त्रयस्त्रिंशता च त्रिभिश्च शतैः सहोदैत्, तस्माद्रोहिण्या पिङ्गलयैकहायन्या सोमं क्रीणीयात्;—य एवं विद्वान् रोहिण्या पिङ्गलयैकहायन्या सोमं क्रीणाति, त्रयस्त्रिंशता चैवास्य त्रिभिश्च शतैः

* पा० ८ २. १०७. वा० १।

सोमः क्रीतो भवति, सुक्रीतेन यजते[१]"—इति। ते चयोऽपि मिलिता 'ताम्' उत्तमां गां सोमायोदेहीत्येवं ब्रुवन्तोऽप्सु प्रावेशयन्। सोमस्य यद् यावद्रूपं योग्यं तत्तावद्रूपं गृहीत्वा जलादुद्गच्छेदित्यर्थः। ततः 'सा' गौरप्सु प्रविष्टा, जलादुद्गमनवेलायां तत्प्रार्थितं रूपं कृत्वोदगच्छत्। तदेव रूपं स्पष्टीक्रियते—'रोहिणी' शरीरे लोहितवर्णा, 'पिङ्गला' पिङ्गलाक्षी, 'एकहायनी' एकसंवत्सरवयस्का; ईदृशी सती लावण्योपेतं रूपञ्च कृत्वा गवामन्यासां चयस्त्रिंशत्सङ्ख्यया शतचयसङ्ख्यया च सह जलादुदगच्छत्। यस्मात् सोमार्थे रोहिण्यादिरूपं धृतवती, तस्माद्रोहिण्या एकहायन्या पिङ्गलाक्ष्या सोमं क्रीणीयात्। तथा क्रीतः सोमस्त्रयस्त्रिंशदधिकेन शतत्रयेण क्रीतो भवति। ततः सुक्रीतेन सोमेनायं यजते॥

अथेन्द्रस्य तदीयांशहरणप्रकारं दर्शयति—"तामप्सु प्रावेशयन्निन्द्रायोदेहीति; सा रोहिणी लक्ष्मणा पष्ठौही वार्त्रघ्नी रूपं कृत्वा चयस्त्रिंशता च त्रिभिश्च शतैः सहोदैत्; तस्माद्रोहिणीं लक्ष्मणां पष्ठौहीं वार्त्रघ्नीं दद्याद्, य एवं विद्वान् रोहिणीं लक्ष्मणां पष्ठौहीं वार्त्रघ्नीं ददाति, चयस्त्रिंशच्चैवास्य त्रीणि च शतानि च सा दत्ता भवति[१]"—इति। पूर्ववद्व्याख्येयम्। 'लक्ष्मणा' शृङ्गपुच्छाद्यवयवसौष्ठवयोग्यलक्षणोपेता, 'पष्ठौही' चतुर्वर्षा, 'वार्त्रघ्नी' दर्शनमात्रेण मानसक्लेशापहन्त्री; यस्मादिन्द्रस्येदृशी प्रिया, 'तस्मात्' ईदृशीमेव दक्षिणात्वेन दद्यात्॥

अथ यमस्य तदीयांशहरणप्रकारं दर्शयति—"तामप्सु प्रावेशयन् यमायोदेहीति; सा जरती मूर्खा, तज्जघन्या रूपं कृत्वा चयस्त्रिंश-

शता च त्रिभिश्च शतैः सहोदेत्; तस्माज्जरतीं मूर्खां तज्जघन्या-मनुस्तरणीं कुर्वीत; य एवं विद्वान् जरतीं मूर्खां तज्जघन्यामनु-स्तरणीं कुरुते, त्रयस्त्रिंशच्चैवास्य त्रीणि च शतानि सामुष्मिन् लोके* भवति(७)"—इति। 'जरती' वृद्धा, 'मूर्खा' रोषणशीला, सैव जघन्या 'तज्जघन्या' इयमेवात्यन्तकुरूपा नान्येत्यर्थः। 'अनुस्तरणीं' मृतं पुरुषमनु यां गां हत्वा तदवयवान् प्रेतपुरुषावयवेष्वास्तृणन्ति सेय-मनुस्तरणी। सा च जरादिगुणयुक्ता कार्या। तस्यास्तरणेन परलोके त्रयस्त्रिंशदधिकगोशतत्रयं सम्पद्यते। शेषं पूर्ववत्। अत्र क्रयदा-नानुस्तरणीविधयः प्रासङ्गिकाः॥

एवमाख्यायिकया सहस्रतमीं प्रशस्याथ प्रकारान्तरेण प्रशं-सति—"वागेव सहस्रतमी, तस्माद्वरो देयः, सा हि वरः सहस्रमस्य सा दत्ता भवति, तस्माद् वरो न प्रतिग्राह्यः; सा हि वरः सहस्र-मस्य प्रतिगृहीतं भवतीयं वर इति ब्रूयादथान्यां ब्रूयादियं ममेति; तथास्य तत्सहस्रमप्रतिगृहीतं भवति(८)"—इति। येयं सहस्रतमी सोमार्थं रूपत्रयं स्वीकृत्य जलादुद्गता, सा वाग्देवतैव; यस्माद् वाग्देवतैव रूपं, तस्मात् साहस्रदक्षिणे यागे वाग्देवतात्व-सम्पादनाय श्रेष्ठ एव गोविशेषो देयः†। यस्मात् सहस्रतमी श्रेष्ठो गोविशेषः, तस्माच्छ्रेष्ठे दत्ते सत्यस्य यजमानस्य सहस्रस्वरूपा 'सा' सहस्रतमी दत्ता भवति। यस्माच्छ्रेष्ठो गोविशेषः सहस्रसदृशः, तस्माच्छ्रेष्ठं गोविशेषं न प्रतिगृह्णीयात्। तत्प्रतिपक्षे सति गोसहस्र-

* "सामुष्मिंल्लोके"—इति मू० क, ख, टी० क, ग।

† "गौर्वै वरः"—इत्यादि आप० श्रौ० सू० ५. १९. ४।

प्रतिग्रहदोषो भवेत्। अथ कथञ्चित् प्रतिगृह्णीयात्, तदा तामेवं निर्दिशेत्,—योऽयं वरः, सेयं सहस्रतमीति। एवं निर्दिश्यायान्यां प्रत्येवं ब्रूयात्,—'इयं' वरव्यतिरिक्ता ममेति। एवं निर्देशे सति वरप्रतिग्रहेऽपि सहस्रप्रतिग्रहदोषो न भवति॥

इत्थं सहस्रतमीं बहुधा प्रशंस्य तस्या दातव्याया लक्षणं विधत्ते—"उभयतएनी स्यात्[१]"—इति। उभयोः पार्श्वयोः शुक्लरेखा यस्याः, सेयम् 'उभयतएनी'॥

अथ प्रकारान्तरेण लक्षणं विधत्ते— "तदाहुरन्यतएनी स्यात् सहस्रं परस्तादेतमिति[७]"—इति। तस्मिन् सहस्रतमीविषये अभिज्ञा एवमाहुः,— अन्यतरस्मिन्नेव पार्श्वे शुक्लरेखा पर्याप्ता। तत्रोपपत्तिञ्चैवमाहुः,— 'एतं परस्तात् सहस्रम्' एतस्य गोविशेषस्य परभागे गोसहस्रं तिष्ठति, अतो न तत्र शुक्लरेखापेक्षितेति॥

अथ सहस्रतमीप्रतिनिधित्वेन पक्षान्तरं विधत्ते— "यैव वरः कल्याणी रूपसमृद्धा सा स्यात्, सा हि वरः समृद्ध्यै[८]"—इति। 'या' गौः 'कल्याणी' बहुक्षीरादिगुणवती, रूपसमृद्धा समीचीनशृङ्गपुच्छाद्युपेता, सैवात्र 'वरः' दातव्यो गोविशेषः स्यात्। तद्दानेनैव समृद्धिर्भवति॥

दातव्यायास्तस्या गोराघ्रापणं विधत्ते— "तामुत्तरेणाग्नीध्रं पर्याणीयाहवनीयस्यान्ते द्रोणकलशमव घ्रापयेत्[९]"—इति। अग्नीधः शरणम् 'आग्नीध्रम्', तस्योत्तरभागे 'तां' दातव्यां गां प्रदक्षिणत्वेनानीयाहवनीयस्य समीपे द्रोणकलशस्थितं सोममवघ्रापयेत्॥

तस्मिन्नाघ्रापणे मन्त्रमुत्पादयति— "आ जिघ्र कलशं मह्युरु-

धारा पयस्वत्या त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः सा मा सहस्र आ भज प्रजया पशुभिः सह पुनर्मा विशताद्रयिरिति*(१०)" —इति । मह्रीति गोर्नाम लक्ष्यते† । हे महि! त्वं द्रोणकलशं सर्वतो जिघ्र। कीदृशी त्वम्? 'उरुधारा' दीर्घक्षीरधारोपेता, 'पयस्वती' बहुलक्षीरोपेता । तादृशीं त्वाम् 'इन्दवः' सोमबिन्दवः आविशन्तु;—यथा समुद्रं सिन्धवः प्रविशन्ति, तद्वत् । सा त्वं माम् अस्मिन् गोसहस्रे 'आ भज' सर्वतः प्रापय । तथा 'रयिः' धनम्, प्रजया पशुभिश्च सह मां पुनः आविशतु । आघ्रापणस्य फलं दर्शयति— "प्रजयैवैनं पशुभी रय्या समर्द्धयति(११)"—इति ॥

वेदनं प्रशंसति— "प्रजावान् पशुमान् रयिमान् भवति य एवं वेद(१२)"—इति ॥

अथ तदङ्गभूतं कञ्चिद्धोमं विधत्ते— "तया सहाग्नीध्रं परेत्य पुरस्तात्प्रतीच्यां तिष्ठन्त्यां जुहुयाद्(१३)"—इति । आहवनीयसमीपे स्थितया तया गवा सह पुनराग्नीध्रसमीपे प्रत्यागत्य तस्य आग्नीध्रस्य पूर्वभागे प्रत्यङ्मुखत्वेन गवि स्थितायां जुहुयात् ॥

होमाङ्गभूतं मन्त्रं दर्शयति— "उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः। इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथामिति‡(१४)"—इति । हे इन्द्राविष्णू! युवाम् 'उभा' उभौ 'जिग्यथुः' सर्वत्र जितवन्तौ, 'न परा जयेथे' क्वापि पराजयं

---

* य० वा० सं० ८. ४२. मन्त्र मस्ति पाठभेदो महान् ।
† निघ० २. ११. ५। "गोर्नाम वक्ष्यति (१९० पृ० १९पं०)"— इति ग ।
‡ ऋ० सं० ६. ६९. ८।

न प्राप्नुयः। 'एनो.' एनयोरुभयोर्मध्ये 'कतरश्चन' एकोऽपि 'न पराजिग्ये' पराजयं न प्राप्तवान्। हे विष्णो! त्वमिन्द्रश्चोभौ 'यदपस्पृधेथां' यदा परस्परं स्पर्द्धितवन्तौ, 'तत्' तदा गोसहस्रं 'त्रेधा' विभज्य 'ऐरयेथाम्' इन्द्रस्य द्वौ भागौ, विष्णोरेको भागः, इत्येवं प्राप्तवन्तौ॥

त्रेधा सहस्रमिति मन्त्रभागस्य तात्पर्यं दर्शयति—"त्रेधा विभक्तं वै त्रिरात्रे सहस्रꣳ साहस्रीमेवैनां करोति,— सहस्रस्यैवैनां मात्रा करोति[१४]"—इति। त्रिरात्राख्ये यागे गोसहस्रं दिनत्रयार्थं त्रेधा विभक्तव्यमिति यत्, तेन 'एनां' सहस्रतमीमेव गां 'साहस्रीं' सहस्रोपेतां करोति,— न केवलं सहस्रोपेता, किन्तु तस्य सहस्रस्य यावती मात्रा, तावन्मात्रामेवैनां करोति॥

अथैतदङ्गभूतं होमान्तरं विधत्ते—"रूपाणि जुहोति रूपैरेवैनाꣳ समर्द्धयति[१५]"—इति। 'रोहिणी पिङ्गलैकहायनी'—इत्यादीनि यानि रूपाण्युक्तानि (१८२पृ० १५पं०), तानि जुहुयात्। "रोहिण्यै स्वाहा"—इत्यादयो मन्त्रास्तत्रोन्नेयाः। एतस्मिन् होमे कृते सत्यपेक्षितैः रूपैरेव 'एनां' गां समृद्धां करोति॥

अथैतदङ्गभूतं जपं विधत्ते—"तस्या उपोत्थाय कर्णमा जपेद्[१७]"—इति। 'तस्याः' गोः कर्णसमीपं प्रत्युपस्थितो भूत्वा वक्ष्यमाणं मन्त्रं जपेत्। तमिमं मन्त्रं दर्शयति—"इडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि सुकृतं मा देवेषु ब्रूतादिति*[१८]"—इति। केनापि न हन्यत इत्यघ्निया

---

* य० वा० सं० ८. ४३ अस्ति चात्र महान् पाठभेद ।

गौः*। हे अघ्निये! इडादीनि तव नामानि, अतस्तैर्नामभिरिह सम्बोध्यते; एतादृशी त्वं देवेषु मध्ये 'मां' यजमानं 'सुकृतं' पुण्यकृतं ब्रूहि। मन्त्रस्य तात्पर्यं दर्शयति—"देवेभ्य एवैनमा वेदयत्यन्वेनं देवा बुध्यन्ते(१८)"—इति। एतन्मन्त्रपाठेन इयं गौः देवेभ्य एव 'एनं' यजमानमावेदयति; ते च देवाः 'एनं' यजमानं पुण्यकारिणं जानन्ति ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥

---

स॒ह॒स्र॒त॒म्या॑ वै यज॑मानः सुव॒र्गं लो॒कमे॑ति सैनं॑ सुव॒र्गं लो॒कं ग॑मयति॒ सा मा॑ सुव॒र्गं लो॒कं ग॑म॒येत्या॑ह सुव॒र्ग मे॒वैनं॑ लो॒कं ग॑मयति॒(१) सा मा॒ ज्योति॑ष्मन्तं लो॒कं ग॑म॒येत्या॑ह॒ ज्योति॑ष्मन्त मे॒वैनं॑ लो॒कं ग॑मयति॒ सा मा॒ सर्वा॑न् पु॒ण्यान् लो॒कान्† ग॑म॒येत्या॑ह॒ सर्वा॑ने॒वैन॑ पु॒ण्या॑न् लो॒कान्‡ ग॑मयति॒ सा (१)

मा॒ प्र॒ति॒ष्ठां ग॑मय प्र॒जया॑ प॒शुभिः॑ स॒ह पुन॒र्मा वि॑श॒ताद्र॒यिरिति॑ प्र॒जयै॒वैनं॑ प॒शुभी॑ र॒य्यां प्रति॑ ष्ठाप॒यति॒(१) प्र॒जावा॑न् पशु॒मान् र॑यि॒मान् भ॑वति॒ य ए॒वं

---

* निघण्टौ १. ११. १. निरुक्ते ११. ४. ६।

†, ‡ "पुण्यालोकान्"—इति क, "पुण्यांल्लोकान्"—इति टी० क०, "पुण्याल्लोकान्"—इति टी० ग०।

वेद[६] तामग्नीधे वा ब्रह्मणे वा होत्रे वोद्गात्रे वाध्वर्यवे वा दद्यात् सहस्रमस्य सा दत्ता भवति[४] सहस्रमस्य प्रतिगृहीतं भवति यस्तामविद्वान् ( २ )

प्रतिगृह्णाति तां प्रति गृह्णीयादेकासि न सहस्रमेकां त्वा भूतां प्रति गृह्णामि न सहस्रमेका मा भूता विश मा सहस्रमि[५]त्येकामेवैनां भूतां प्रति गृह्णाति न सहस्रं य एवं वेद[६] स्योनासि सुषदा सुशेवा स्योना मा विश सुषदा मा विश सुशेवा मा विश ( ३ )

इत्याह स्योनैवैनꣳ सुषदा सुशेवा भूता विशति नैनꣳ हिनस्ति[७] ब्रह्मवादिनो वदन्ति सहस्रꣳ सहस्रतम्यन्वेती३ सहस्रतमीꣳ सहस्रा३मिति यत् प्राचीमुत्सृजेत् सहस्रꣳ सहस्रतम्यन्वियात्तत् सहस्रमप्रज्ञात्रꣳ सुवर्गं लोकं न प्रजानीयात् प्रतीचीमुत्सृजति ताꣳ सहस्रमनु पर्यावर्त्तते सा प्रजानती सुवर्गं लोकमेति[८] यजमानम् ( ४ )

अभ्युत् सृजति क्षिप्रे सहस्रं प्र जायत उत्तमा नीयते प्रथमा देवान् गच्छति[९] ॥ ७ ॥

सा[१] ऽविद्वान्[२] विश[३] यजमानं[४]* द्वादश च ॥ ७ ॥

---

* 'लोकान् गमयति सा[१]विद्वान[२] सुशेवा मा विश[३]' –इति क, ख, ग।

षष्ठेऽनुवाके सहस्रतमीं प्रशस्य तदङ्गभूतं होमादिकमुक्तम्, अथ सप्तमे तद्दानं विधीयते। तत्र यदुक्तं सूत्रकारेण—'तां यजमानोऽभिमन्त्रयते सा मा सुवर्गं लोकं गमयेति'—इति। तानेतान् सहस्रतम्या अनुमन्त्रणमन्त्रांश्चतुरो श्रुत्याद्य व्याचिख्यासुः प्रथममन्त्रतात्पर्यं दर्शयति—"सहस्रतम्या वै यजमानः सुवर्गं लोकमेति; सैनꣳ सुवर्गं लोकं गमयति, सा मा सुवर्गं लोकं गमयेत्याह,—सुवर्गमेवैनं लोकं गमयति[१]"—इति। 'यजमानः' अयं 'सहस्रतम्या' गवा स्वर्गं लोकं प्राप्नोति; सा ह्येनं प्रापयति। तस्मात् सा मेत्यादिमन्त्रं पठ त्वम्। हे सहस्रतमि! सा त्वं मां स्वर्गं लोकं प्रापयेति तस्यार्थः। तेन सा स्वर्गं प्रापयत्येव॥

एवमुत्तरेषां त्रयाणामपि मन्त्राणां क्रमेण तात्पर्यं दर्शयति—"सा मा ज्योतिष्मन्तं लोकं गमयेत्याह, ज्योतिष्मन्तमेवैनं लोकं गमयति; सा मा सर्वान् पुण्यान् लोकान् गमयेत्याह, सर्वानेवैनं पुण्यान् लोकान् गमयति; सा मा प्रतिष्ठां गमय प्रजया पशुभिः सह· पुनर्मा विशताद्रयिरिति, प्रजयैवैनं पशुभी रय्यां प्रति ष्ठापयति[२]"—इति। 'ज्योतिष्मान्' आदित्यलोकः। इन्द्रलोकादयः 'पुण्याः'। 'प्रतिष्ठां' स्थिरावस्थानम्। प्रजया पशुभिश्च सह 'रयिः' धनं पुनर्मां प्रविशतु॥ वेदनं प्रशंसति—"प्रजावान् पशुमान् रयिमान् भवति य एवं वेद[३]"—इति॥

तस्याः सहस्रतम्या दानं विधत्ते—"ता मग्नीधे वा ब्रह्मणे वा होत्रे वोद्गात्रे वाध्वर्यवे वा दद्यात्, सहस्रमस्य सा दत्ता भवति[४]"—इति॥

अथ प्रतिग्रहदोषपरिहाराय तत्प्रतिग्रहमन्त्रं विधत्ते—"सहस्र-

मस्य प्रतिगृहीतं भवति, यस्तामविद्वान् प्रतिगृह्णाति; तां प्रति गृह्णीयादेकासि न सहस्रमेकां त्वा भूतां प्रति गृह्णामि न सहस्रमेका मा भूता विश मा सहस्रमिति[५]"—इति। योऽमन्त्रमविद्वान् सहस्रतमीं प्रतिगृह्णीयात्, अस्य गोसहस्रं प्रतिगृहीतं भवति: तावान् प्रत्यवाय इत्यर्थः। अत एकासीत्यादिमन्त्रेण 'तां' सहस्रतमीं प्रतिगृह्णीयात्। मन्त्रार्थस्तु,— सहस्रतमी त्वमेकैव गौरसि, न तु सहस्रम्, अतस्त्वामेकामेवभूतां प्रतिगृह्णामि, न तु सहस्रं त्वमप्येकैव भूता मां प्रविश, सहस्र भूत्वा मा प्रविश। 'इति'-शब्दो मन्त्रसमाप्त्यर्थः॥ मन्त्रवेदनं प्रशंसति— "एकामेवैनां भूतां प्रति गृह्णाति, न सहस्रं, य एवं वेद[६]"—इति॥

अथ प्रतिग्रहादूर्द्धं जप्यं मन्त्रमुत्पाद्य तात्पर्यं दर्शयति— "स्योनासि सुषदा सुशेवा स्योना मा विश सुषदा मा विश सुशेवा मा विशेत्याह*, स्योनैवैनꣳ सुषदा सुशेवा भूता विशति,—नैनꣳ हिनस्ति[७]"—इति। हे सहस्रतमि! त्वं 'स्योना' सुखप्रदा, 'सुषदा' दोहनादिकाले सुखेन प्राप्तुं शक्या, 'सुशेवा' कण्डूयनादिना सुखेन सेवितुं शक्या चासि। अतस्तथाविधैव भूत्वा मां प्रविश। एतन्मन्त्रपाठेन तथैव भूत्वा प्रविश्य सर्वप्रकारेणाप्येन न हिनस्ति॥

अथान्वयव्यतिरेकाभ्यां प्रत्यङ्मुखत्वेन उत्सर्जनं विधत्ते— "ब्रह्मवादिनो वदन्ति,—सहस्रꣳ सहस्रतम्यन्वेती३ सहस्रतमीꣳ सहस्रा३मिति; यत् प्राचीमुत्सृजेत्, सहस्रꣳ सहस्रतम्यन्वियात्, तत् सहस्रमप्रज्ञात्यꣳ सुवर्गं लोकं न प्रजानीयात्, प्रतीचीमुत्सृजति, ताꣳ

* "विश इत्याह"—इति ख।

सहस्रमनु पर्यावर्त्तते, सा प्रजानती सुवर्गं लोकमेति(८)"—इति। किं गोसहस्रस्य पुरतो गमनं किं वा सहस्रतम्याः पुरतो गमनमिति ब्रह्मवादिनां विचारः। तत्र यदि प्राङ्मुखीमेनामुत्सृजेत्, तदानीं पुरतो गोसहस्रे गच्छति सति पश्चादियं गच्छेत्, तदानीं प्रज्ञानरहितं गोसहस्रं स्वर्गं न जानीयात्, तस्मात् तत्परिहाराय प्रत्यङ्मुखीमेनामुत्सृजेत्,—तदानीं पुरतो गच्छन्तीं 'तां' सहस्रतमीम् 'अनु' पृष्ठतो गोसहस्रं गच्छति, 'सा' च सहस्रतमी मार्गाभिज्ञा सती स्वर्गं प्राप्नोति॥

यदुक्तं सूत्रकारेण—"तां शतमानेन हिरण्येन निष्क्रीय यजमानस्य गोष्ठे विसृजति"—इति, तदेतद् विधत्ते—"यजमानमभ्युत् सृजति, क्षिप्रे सहस्रं प्र जायत, उत्तमा नीयते, प्रथमा देवान् गच्छति(९)"—इति। ऋत्विग्भ्यो निष्क्रीतां तां सहस्रतमीं यजमानगृहाभिमुख्ये(खे)नोत्सृजेत्। तथा सति यजमानगृहे स्वल्प एव काले सहस्रमुत्पद्यते। इयञ्च सहस्रतमी दक्षिणानयनकाले चरमा सती नीयते, स्वर्गप्राप्तिकाले प्रथमा सती यजमानेन सह देवान् गच्छति॥ ७॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः॥

---

अ॒त्रि॑रददा॒दौर्वा॑य प्र॒जां पु॒त्रका॑माय॒ स रि॑रिचा॒नो॑ऽमन्यत॒ निर्वी॑र्यः शिथि॒लो या॒तया॑मा॒ स ए॒तं च॑तु॒-

रात्रमपश्यत्तमाहरत्तेनायजत ततो वै तस्य चत्वारो वीरा आजायन्त सुहोता सूद्गाता स्वध्वर्युः सुसभेयो य एवं विद्वाꣳश्चतूरात्रेण यजत आस्य चत्वारो वीरा जायन्ते सुहोता सूद्गाता स्वध्वर्युः सुसभेयो(१) ये चतुर्विꣳशाः पवमाना ब्रह्मवर्चसं तत्(२) ( १ )

य उद्यन्त स्तोमा श्रीः सा(३)चिꣳ श्रद्धादेवं यजमानं चत्वारि वीर्याणि नोपानमन् तेज इन्द्रियं ब्रह्मवर्चसमन्नाद्यꣳ स एताꣳश्चतुरश्चतुष्टोमान्त्सोमानपश्यत् तानाहरत्तैरयजत तेज एव प्रथमेनावारुन्धेन्द्रियं द्वितीयेन ब्रह्मवर्चसं तृतीयेनान्नाद्यं चतुर्थेन(४) य एवं विद्वाꣳश्चतुरश्चतुष्टोमान्त्सोमानाहरति तैर्यजते तेज एव ( २ )

प्रथमेनाव रुन्ध इन्द्रियं द्वितीयेन ब्रह्मवर्चसं तृतीयेनान्नाद्यं चतुर्थेन यामेवाचिर्श्रीमाश्नोत्तामेव यजमान ऋश्नोति(५) ॥ ८ ॥

त(५)द्देवा(६)ष्टादश च* ॥ ८ ॥

सप्तमे सहस्रतमीदानमुक्तम्, तावता पञ्चममारभ्य चिष्वनुवाकेषु 'गर्गत्रिरात्र' समापित.। अथाष्टमनवमयोः द्वौ चतूरात्रावुच्येते। तत्राद्यचतूरात्रमष्टमेऽभिधत्ते— "ऋषिरददादौर्वाय प्रजां

* "तत्[१] तेज[२] एवाष्टादश च"–इति क, ख, ग।

पुत्रकामाय, स रिरिचानोऽमन्यत,— निर्वीर्यः शिथिलो यातयामा स एतं चतूरात्रमपश्यत्, तमाहरत्, तेनायजत, ततो वै तस्य चत्वारो वीरा अजायन्त,— सुहोता सूद्गाता स्वध्वर्युः सुसभेयो; य एवं विद्वांश्चतूरात्रेण यजत आस्य चत्वारो वीरा जायन्ते सुहोता सूद्गाता स्वध्वर्युः सुसभेयः[1]"—इति। ऊर्वस्य पुत्रः और्वः, स च पुत्रकामोऽत्रिं याचितवान्, तस्मै सोऽत्रिः स्वकीयां प्रजां ददौ। ततः प्रजाराहित्येन रिक्तः सन् मनस्येवममन्यत,— अहं 'निर्वीर्यः' प्रजोत्पादनसामर्थ्यरहितः, 'शिथिलः' कार्येष्वक्षमः, 'यातयामा' गतसारश्चास्मीति विचार्य प्रजोत्पादनसाधनं 'चतूरात्रं' निश्चित्य, तत्सामग्रीमाहृत्य, तेनायजत। तस्य सुहोत्रादयश्चत्वारः पुत्रा उत्पन्नाः। ते च हौत्रे, औद्गात्रे, आध्वर्यवे, यज्ञप्रयोगोपदेशे च कुशलाः। अतोऽन्योऽपि चतूरात्रेणेष्ट्वा तादृशान् पुत्रान् लभन्ते॥

अत्र बहिष्पवमानमाध्यन्दिनपवमानार्भवपवमानेषु त्रिष्वपि स्तोमविशेषं विधत्ते—"ये चतुर्विंशाः पवमाना ब्रह्मवर्चसं तत्[2]"—इति। चतुर्विंशतिसंख्यया यत्र स्तोत्रिया ऋच आवृत्ताः, स स्तोमश्चतुर्विंशः*। तादृशेन स्तोमेन युक्ता ये पवमानास्ते कर्त्तव्याः। तथा सति तत् पवमानत्रयं सर्वं ब्रह्मवर्चसस्वरूपं भवति। चतुर्विंशतिसङ्ख्याया गायत्र्या† ब्रह्मवर्चसहेतुत्वात्॥

अथ पवमानव्यतिरिक्तस्तोत्रेषूत्तरोत्तरस्तोमवृद्धिं‡ विधत्ते—"य

---

* य० वा० सं० १४. २३, २५, लाट्या० सू० ४. ४ १, ६. ८. ६।

† "गायत्रीच्छन्दसा च"—इति क, "गायत्र्या समादिना"—इति ख, "गायत्रीद्वारा"—इति ग। ‡ "स्तोमविशेषं"—इति ख।

उद्यन्त स्तोमा* श्री सा(१)—इति। उत्तरोत्तरमुत्कर्षं गच्छन्त स्तोमा उद्यत्स्तोमा, तादृशा ये सन्ति, सैव श्री, तद्धेतुत्वेन तेषां श्रीत्वम्। अभिवृद्धिप्रकार सूच्यते (ये स्तोमा ते†) सन्ति त्रिवृत्-पञ्चदश सप्तदशैव विंश त्रिणव चयस्त्रिंशाख्या षट् स्तोमा‡। तत्र प्रथमेऽह्नि प्रात सवन त्रिवृत्स्तोमयुक्तम्, माध्यन्दिन सवन§ पञ्चदश-स्तोमयुक्तम्, तृतीयसवन सप्तदशस्तोमयुक्तम् — अथ द्वितीयेऽह्नि त्रिवृत परित्यज्यैकविंशस्तोम स्वीकृत्य पञ्चदशसप्तदशैकविंशै सवनत्रय निष्पाद्यम् — तृतीयेऽह्नि सप्तदशैकविंशत्रिणवै, — चतुर्थे-ऽह्नि एकविंशत्रिणवत्रयस्त्रिंशै। तदिदमुद्यत्स्तोमत्वम्॥

तमिम चतूरात्रविकार प्रशसति—'अचिं श्रद्धादेव यजमान चत्वारि वीर्याणि नोपानमन् तेज इन्द्रिय ब्रह्मवर्चसमन्नाद्यं स एतांश्चतुरश्चतुष्टोमान्स्तोमानपश्यत् तानाहरत्तैरयजत तेज एव प्रथमेनावारुन्धेन्द्रिय द्वितीयेन ब्रह्मवर्चस तृतीयेनान्नाद्य चतुर्थेन(४)' —इति। श्रद्धा देवो यस्यासौ 'श्रद्धादेव'। यथा देवतायां-मादरस्तथा श्रद्धायामित्यर्थ। तादृशोऽत्रिर्यजमान सर्वदा यागान् करोति। तथाविध यजमान तेजआदीनि न प्राप्नुवन। तेज शरीरकान्ति, इन्द्रिय चक्षुरादिसामर्थ्यम्, ब्रह्मवर्चस श्रुताध्ययन-सम्पत्ति, अन्नाद्य स्वादन्नसम्पत्ति। एकैकस्मिन्नह्नि पवमानेषु

* "उद्यन्त स्तोमा"—इति ख "उद्यन्त स्तोमा"—इति।

† बन्धनीचिह्नान्तर्गतानीमानि पदानि क पुस्तकादन्यत्र न दृश्यन्ते।

‡ ता० ब्रा० द्वितीयाध्यायीयादिखण्डत तृतीयाध्यायीयसप्तमखण्डान्त द्रष्टव्य।

§ "माध्यन्दिन पवमान —इति क।

चतुर्विंशस्तोमः। पवमानत्रयार्थमुक्तरीत्या त्रिवृदादयस्त्रयः स्तोमाः। एवं चतुर्ष्वपि दिनेषु चतुष्टोमास्त्वत्वारः सोमयागास्तदनुष्ठानेनात्रिः तेजआदिकमलभत ॥

पूर्वं चतूरात्रेणायजत इति कृत्स्नः क्रतुर्विहितः, इदानीं क्रतवयवान् चतुरहर्विशेषान् विधत्ते—"य एवं विद्वाꣳश्चतुरश्चतुष्टोमान्त्सोमानाहरति, तैर्यजते, तेज एव प्रथमेनाव रुन्ध इन्द्रियं द्वितीयेन ब्रह्मवर्चसं तृतीयेनान्नाद्यं चतुर्थेन; यामेवात्रिर्ऋद्धिमार्ध्नोत्तामेव यजमान ऋध्नोति[१]"—इति। तेज एव प्रथमेनेत्यादेरुक्तस्यैव सङ्ग्रहार्थं यामेवेत्यादि पुनर्वचनम् ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके अष्टमोऽनुवाकः ॥

---

ज॒मद॑ग्निः पु॒ष्टिका॑मश्चतूरा॒त्रेणा॑यजत॒ स ए॒तान् पोषा॑ꣳ अपुष्यत् तस्मा॑त् पलि॒तौ जाम॑दग्नि॒यौ न स॑ञ्जा॒नाते[१] ए॒ताने॒व पोषा॑न् पुष्यति॒ य ए॒वं वि॒द्वाꣳश्च॑तूरा॒त्रेण॒ यज॑ते[२] पु॒रो॒डा॒शिन्य॑ उप॒सदो॑ भवन्ति प॒शवो॒ वै पु॑रो॒डाशः॑ प॒शूने॒वाव॑ रुन्धे॒ऽन्नं॒ वै पु॑रो॒डाशो॒ऽन्नमे॒वाव॑ रुन्धे[३]ऽन्ना॒दः प॑शु॒मान् भ॑वति॒ य ए॒वं वि॒द्वाꣳश्च॑तूरा॒त्रेण॒ यज॑ते[४] ॥ ९ ॥

ज॒मद॑ग्निर॒ष्टाच॑त्वारिꣳशत् ॥ ९ ॥

अष्टमेऽनुवाके चतूरात्र आर्चेयो निरूपितः, अथ नवमे जामदग्न्यश्चतूरात्रो निरूप्यते। तमेतं विधातु प्रस्तौति—"जमदग्निः पुष्टिकामश्चतूरात्रेणायजत, स एतान् पोषाꣳ अपुष्यत्, तस्मात् पलितौ जामदग्नियौ न सञ्जानाते[१]"—इति। 'एतान्' लोकप्रसिद्धान् प्रजापशुधनपोषान् 'अपुष्यत्' सम्पादितवान्। यस्मादेव जमदग्निः पुष्टिहेतुयागप्रवर्त्तक, तस्मात् 'जामदग्नियौ' तद्वंशोत्पन्नौ द्वौ पितृपुत्रौ, पुष्टिमन्तरेण वृथैव 'पलितौ' दरिद्रौ 'न जानाते' नोत्पद्येते। यद्वा वृथैव पलितं स्वकीयं देहं न जानाते। अयमर्थः,—पुष्टिसम्प्रदायस्य जमदग्निना प्रवर्त्तितत्वात् तद्वंशे कोऽपि दरिद्रो नास्ति; यदि कश्चित् प्रमादात् स्यात्, तथापि नैरन्तर्येण द्वौ पुरुषौ पुष्टिमन्तरेण वृथा पलितौ न स्त एवेति॥

अथ विधत्ते—"एतानेव पोषान् पुष्यति य एवं विद्वाꣳश्चतूरात्रेण यजते[२]"—इति॥

अत्रोपसत्सु कञ्चिद्विशेषं विधत्ते—"पुरोडाशिन्य उपसदो भवन्ति, —पशवो वै पुरोडाश, पशूनेवाव रुन्धेऽन्नं वै पुरोडाशोऽन्नमेवावरुन्धे[३]—इति। पुरोडाश आसूपसत्सु अस्तीति 'पुरोडाशिन्यः'। द्वादशसूपसत्सु द्वादशपुरोडाशविशेषान् सूत्रकारो दर्शयति—"आग्नेय एककपाल आश्विनो द्विकपालो वैष्णवस्त्रिकपालः सौर्यश्चतुष्कपालः सावित्रः पञ्चकपालो धात्रः षट्कपालो मारुतः सप्तकपालो बार्हस्पत्योऽष्टाकपालो मैत्रो नवकपालो वारुणो दशकपाल ऐन्द्र एकादशकपालो वैश्वदेवो द्वादशकपालो दर्विहोमा भवन्ति"—इति। पुरोडाशानां पशुहेतुत्वादन्नहेतुत्वादन्नरूपत्वाच्च तदुभयप्राप्तिः॥

एतद्वेदनपूर्वकमनुष्ठानं प्रशंसति—"अन्नादः पशुमान् भवति य एवं विद्वांश्चतूरात्रेण यजते(४)—इति ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः ॥

---

संवत्सरो वा इदमेक आसीत्सोऽकामयतर्तून्त्सृजेयेति स एतं पञ्चरात्रमपश्यत्तमाहरत्तेनायजत ततो वै स ऋतूनसृजत य एवं विद्वान् पञ्चरात्रेण यजते प्रैव जायते(१) त ऋतवः सृष्टा न व्यावर्तन्त त एतं पञ्चरात्रमपश्यन् तमाहरन् तेनायजन्त ततो वै ते व्यावर्तन्त ( १ )

य एवं विद्वान् पञ्चरात्रेण यजते वि पाप्मना भ्रातृव्येणा वर्तते(२) सार्वसेनिः शौचेयोऽकामयत पशुमान्त्स्यामिति स एतं पञ्चरात्रमाहरत्तेनायजत ततो वै सहस्रं पशून् प्राप्नोद्य एवं विद्वान् पञ्चरात्रेण यजते प्र सहस्रं पशूनाप्नोति(३) बबरः* प्रावाहणिरकामयत वाचः प्रवदिता स्यामिति स एतं पञ्चरात्रमा ( २ )

---

* "बबर"-इति क, टी॰ ग।

अहरुत्तेनायजत ततो वै स वाचः प्रवदिताभवद्य एवं विद्वान् पञ्चरात्रेण यजते प्रवदितैव वाचो भवत्यथो एनं वाचस्पतिरित्याहु[४]रनाप्तश्चतूरात्रोऽतिरिक्तः षड्रात्रोऽथवा एष सम्प्रति यज्ञो यत् पञ्चरात्रो य एवं विद्वान् पञ्चरात्रेण यजते सम्प्रत्येव यज्ञेन यजते[५] पञ्चरात्रो भवति पञ्च वा ऋतवः संवत्सरः (३)

ऋतुष्वेव संवत्सरे प्रति तिष्ठत्यथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे[६] त्रिवृदग्निष्टोमो भवति तेज एवाव रुन्धे पञ्चदशो भवतीन्द्रिय मेवाव रुन्धे सप्तदशो भवत्यन्नाद्यस्यावरुध्या अथो प्रैव तेन जायते पञ्चविंशोऽग्निष्टोमो भवति प्रजापतेराप्त्यै महाव्रतवानन्नाद्यस्यावरुध्यै विश्वजित्सर्वपृष्ठोऽतिरात्रो भवति सर्वस्याभिजित्यै[७] (४) ॥ १० ॥

व्यावर्त्तन्ता[१, २]* संवत्सरो[५]ऽभिजित्यै[४] ॥ १० ॥

नवमेऽनुवाके जामदग्न्यचतूरात्र उक्तः, अथ दशमे पञ्चरात्रोऽभिधीयते। तमिमं विधत्ते— "संवत्सरो वा इदमेक आसीत्;

* "ते व्यावर्त्तन्त[१] प्रवदिता स्यामिति स एतं पञ्चरात्रमा[२]" —इति क, ख, ग।

सोऽकामयतर्त्तूनस्सृजेयेति; स एतं पञ्चरात्रमपश्यत्तमाहरत्तेनायजत; ततो वै स ऋतूनसृजत, य एवं विद्वान् पञ्चरात्रेण यजते प्रैव जायते[१]"—इति। 'इदं' वसन्ताद्यृतुभेदोपेतं कालस्वरूपमृतूत्पत्तेः पूर्वं संवत्सरात्मक एक एव प्रजापतिरासीत्। स ऋतून् सिसृक्षुस्तत्साधनत्वेन पञ्चरात्रयागमनुष्ठाय सृष्टवान्;—एवमन्योऽपि प्रजाकामस्तेन यागेन प्रजामुत्पादयति॥

अथ व्यावृत्तिकामस्य तमेव विधत्ते—"त ऋतवः सृष्टा न व्यावर्त्तन्त, त एतं पञ्चरात्र मपश्यन्, तमाहरन्, तेनायजन्त; ततो वै ते व्यावर्त्तन्त, य एवं विद्वान् पञ्चरात्रेण यजते वि पाप्मना भ्रातृव्येण वर्त्तते[२]"—इति। प्रजापतिना सृष्टा वसन्ताद्यृतुदेवास्तत्तदृतुलिङ्गविशेषैर्व्यावृत्तिमलभमानास्तत्साधनत्वेन पञ्चरात्रमनुष्ठाय तत्तदृतुलिङ्गैर्व्यावृत्तिं प्राप्ताः;—एवमन्येऽप्यनुष्ठाय पाप्मना भ्रातृव्येन च वियोगं प्राप्नोति॥

अथ पशुप्राप्त्यर्थं त मेव विधत्ते—"सार्वसेनिः शौचेयोऽकामयत पशुमान्त्स्यामिति, स एतं पञ्चरात्रमाहरत्, तेनायजत; ततो वै सहस्रं पशून् प्राप्नोद्; य एवं विद्वान् पञ्चरात्रेण यजते प्र सहस्रं पशूनाप्नोति[३]"—इति। सर्वसेनाख्यस्य पुरुषस्यापत्यं 'सार्वसेनिः' शुच्याख्यायास्स्त्रिया अपत्यं 'शौचेयः'॥

अथ सभायां वक्तृत्वविशेषं कामयमानस्य तमेव पञ्चरात्रं विधत्ते—"बबरः प्रावाहणिरकामयत वाचः प्रवदिता स्यामिति; स एतं पञ्चरात्रमाहरत्, तेनायजत; ततो वै स वाचः प्रवदिताभवद्; य एवं विद्वान् पञ्चरात्रेण यजते प्रवदितैव वाचोऽभवत्यथो एनं वाचस्पति-

रित्याहुः(४)"—इति। बबरो नामतः, प्रवाहणस्यापत्यं 'प्रावाहणिः'*। बबरवदन्योऽपि पञ्चरात्रेण सभायां प्रकर्षेण वक्ता भवति,—तदीयं वक्तृत्वमनुमोदमानाः सर्वे सभ्यास्तं वाचस्पतिरित्येव व्यवहरन्ति॥

एवं बहुविधफलसाधनत्वेन पञ्चरात्रं विधाय न्यूनातिरेकाभावेन तं प्रशंसति—"अनाप्तश्चतूरात्रोऽतिरिक्तः षड्रात्रोऽथवा एष सम्प्रति यज्ञो यत् पञ्चरात्रो, य एवं विद्वान् पञ्चरात्रेण यजते सम्प्रत्येव यज्ञेन यजते(५)"—इति। एकेनाह्ना न्यूनत्वाच्चतूरात्रो नोक्तेभ्यः फलेभ्यः पर्याप्तः; पञ्चभिरेवाहोभिस्तत्फलनिर्वृत्तेरेकेनाह्ना षड्रात्रोऽतिरिक्तः, 'एषः' पञ्चरात्रः 'सम्प्रति समीचीनः' न्यूनातिरेकाभावेन योग्यः। अत एतदनुष्ठायी योग्येनैव यज्ञेनेष्टवान् भवति॥

अथाहर्गतां पञ्चसङ्ख्यां प्रशंसति—"पञ्चरात्रो भवति;—पञ्च वा ऋतवः संवत्सरः ऋतुष्वेव संवत्सरे प्रति तिष्ठत्यथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे(६)"—इति। हेमन्तशिशिरयोः समासादृतूनां पञ्चत्वम्†॥

अथ पञ्चरात्रावयवभूतानि पञ्चाहानि विधत्ते—"त्रिवृदग्निष्टोमो भवति, तेज एवाव रुन्धे, पञ्चदशो भवतीन्द्रियमेवाव रुन्धे;

* "यच्च प्रावाहणिरिति, तत्र प्रवाहणस्य पुरुषस्यासिद्धत्वात् न प्रवाहणस्यापत्यं प्रावाहणिः। प्रशब्दः प्रकर्षे सिद्धः, वहतिश्च प्रापणे (न तस्य समुदायः क्वचित् सिद्धः), इकारस्तु यथैवापत्ये सिद्धः, तथा क्रियायामपि कर्त्तरि; तस्मात् यः प्रवाहयति स प्रावाहणिः। 'बबरः'-इति शब्दानुकृतिः"—इत्याह मीमांसाभाष्यकृत् शबरस्वामी (जै० सू० १.१.३१.)

† ऐत० ब्रा० १.१.१। शत० ब्रा० ४.५.५.१२। निरु० ४.४.६।

सप्तदशो भवत्यन्नाद्यस्यावरुध्या; अथो प्रैव तेन जायते; पञ्चविꣳशो-ऽग्निष्टोमो भवति, प्रजापतेराप्त्यै; महाव्रतवानन्नाद्यस्यावरुध्यै; विश्वजित्सर्वपृष्ठोऽतिरात्रो भवति, सर्वस्याभिजित्यै(७)"—इति। प्रकृतौ हि त्रिवृत्-पञ्चदश-सप्तदशैकविꣳशैश्चतुर्भिः स्तोमैरग्निष्टोमगतानि द्वादशस्तोत्राणि निष्पाद्यन्ते*। अत्र त्वेकेनैव त्रिवृत्-स्तोमेन सर्व-स्तोत्रनिष्पत्तिः। तादृशोऽग्निष्टोमः प्रथममहः। त्रिवृदग्न्योरुभयो-र्मुखेन सहोत्पन्नत्वात्† त्रिवृता तेजः-प्राप्तिः। पञ्चदशेनैकेनैव स्तोमेन युक्त उक्थ्यो द्वितीयमहः। पञ्चदशस्तोमस्येन्द्रस्य‡ चोरौ बाह्वोश्च सहोत्पन्नत्वात्§ पञ्चदशेनेन्द्रियप्राप्तिः। सप्तदशेनैकेन स्तोमेन युक्त उक्थ्यः तृतीयमहः। सप्तदशस्यान्नाधारे मध्यप्रदेशे उत्पन्नत्वात्¶ तेनान्नप्राप्तिः। अपि च सप्तदशस्य प्राजापत्यत्वात्तेन प्रजोत्पादनत्व-मपि भवति।

यद्यप्यत्रोभयत्रोक्थ्यो न श्रुतः, तथाप्यहीनानामेतेषां द्वादशाह-विकृतित्वाद्,—द्वादशाहे च प्रायणीयानन्तरभाविनः पृष्ठ्य-षडहस्य पञ्चरात्रप्रवृत्तत्वात्,—पृष्ठ्य-षडहे च द्वितीयतृतीययोरुभयोरुक्थ्य-त्वात् तद्विकृतिरूपयोरनयोरप्यह्नोरुक्थ्यत्वं लभ्यते। एतदेवाभिप्रेत्य बौधायनेनोक्तम्। "तस्याहानि त्रिवृदग्निष्टोमः, पञ्चदश उक्थ्यः,

---

* "द्वादशस्तोत्राण्यग्निष्टोम"—इति ता० ब्रा० ८.१.२४।

† तै० सं० ७.१.१.४। ता० ब्रा० ६.१.६।

‡ "०स्येन्द्रियस्य"—इति क।

§ तै० सं० ७.१.१.५। ता० ब्रा० ६.१.८।

¶ तै० सं० ७.१.१.६। ता० ब्रा० ६.१.१०।

सप्तदश उक्थ्यः, पञ्चविंशोऽग्निष्टोमो महाव्रतवान् विश्वजित्सर्वपृष्ठोऽतिरात्रः"–इति। चोदकप्राप्तानामपि त्रयाणामेतेषामह्नां विस्पष्टार्थं पुनर्विधानम्। पञ्चविंशेनैकेनैव स्तोमेन युक्तोऽग्निष्टोमः चतुर्थमहः।

यद्यपि त्रिवृदादिस्तोमवत्साममब्राह्मणे पञ्चविंशस्तोमो नाम्नातः*, तथापि सूत्रकारोक्तप्रकारेण स स्तोम उन्नेयः। अस्य च स्तोमस्य प्रजापतिदेवताकत्वात्तेन तत्प्राप्तिः। स चाग्निष्टोमो महाव्रतधर्मवान्। गवामयने महाव्रताख्यमेकमहः†। तस्मिन्नहनि यानि स्तोत्राणि, तान्यत्र प्रयोक्तव्यानीत्यर्थः। महाव्रतस्यान्नसाधनत्वात्‡ तेनान्नप्राप्तिः। विश्वजिन्नामाग्निष्टोमविकारः कश्चिदेकाहः; सोऽत्रातिरात्रविकृतित्वमापादितः पञ्चममहर्भवति। स पुनः सर्वपृष्ठः, रथन्तर-बृहद्-वैरूप-वैराज-शाक्वर-रैवताख्यानि पृष्ठस्तोत्रगतानि सामानि§ सर्वाण्यपि यस्यासौ 'सर्वपृष्ठः', स च सर्वस्य फलस्याभिजित्यै सम्पद्यते॥

---

* ताण्ड्यनामके सामवेदीये महाब्राह्मणे द्वितीयतृतीयाध्यायो त्रिवृत्, पञ्चदश, सप्तदश, एकविंश, त्रिणव, त्रयस्त्रिंश, चतुर्विंश, चत्वारिंश, अष्टचत्वारिंशश्चेति नवैव स्तोमाः समाम्नाताः। तत्र त्रिवृदादयः षट् एकस्य षडहस्य, ततोऽन्ये त्रयश्छन्दोमानामिति व्यवस्थिति।

† "दशमस्याह्न उर्द्ध्वम् महाव्रताख्यं गवामयनस्योपान्त्यमहः"–इति ता० ब्रा० ४ १० १ सा० भा०। तत्रैव ४. १. १. भाष्यस्य द्रष्टव्यम्।

‡ "प्रजापतिर्वाव महाँस्तस्यैतद् व्रतमन्नमेव"–इत्यादि ता० ब्रा० ४.१०.२।

§ रथन्तरम्–आर० गा० २. १. २१, तत्स्तोत्रीयम् ऊह्यगा० १.१ १। बृहत्–आर० गा० १. १. २७, स्तो० ऊह्यगा० १ १. ४। वैरूपम्–आर० गा० १. १. ५; स्तो० ऊह्यगा० १. १. ७। वैराजम्–आर० गा० २. १. ३१; ऊह्यगा० १.१. १०। शाक्वरम्–आरण्यगानान्ते श्रुतं महानाम्नीसाम। रैवतम्–आ० गा० २. १. १०, ऊह्यगा० २. २. ७।

अत्र मीमांसा। अष्टमाध्यायस्य प्रथमपादे (जै० सू० १७. अधि० १०.) चिन्तितम्—

"अहर्गणेषु सोमस्य द्वादशाहस्य वाथिमः।
पूर्ववद्दिनसम्पादिविशेषैरन्तिमो भवेत्॥

द्विरात्रमारभ्य शतरात्रपर्यन्तेषु* अहर्गणेषु, गवामयने† च पूर्ववद्व्यक्तलिङ्गेन सोमस्य धर्मा इति चेत्, न, विशेषलिङ्गसद्भावात्। द्वादशाहपदान्तर्गताहःशब्दः षष्टिघटिकात्मकदिनपरः। द्विरात्रादिपदान्तर्गतो रात्रिशब्दस्तु तादृशः। एतदेकं विशेषलिङ्गम्। अह.सङ्गो द्वितीयम्। द्वादश दीक्षास्तृतीयम्। तदेतत् गवामयने विद्यते। तत्र हि "अभीन्धत एव दीक्षाभिः"—इत्युक्त्वा दीक्षायुग्मानि षडुपन्यस्तानि— "द्वाभ्यां लोमावद्यन्ति, द्वाभ्यां त्वचं, द्वाभ्यामसृङ्, द्वाभ्यां मा॒ꣳसं, द्वाभ्यामस्थि, द्वाभ्यां मज्जानमात्मदक्षिणं वै सत्रम्"—इति (तै० सं० ७ ५. ८. १.)‡। तस्मादहर्गणेषु द्वादशाहस्य धर्माः"—इति॥

प्रथमाध्यायस्य तृतीयपादे (जै० सू० ८,९. अधि ५.§) चिन्तितम्—

---

* "अङ्गिरसो वै सत्र मासत (१६५ पृ० ७ पं०)"—इत्यारभ्य द्रष्टव्यम्। 'अथाहीना'—इत्यारभ्य 'शतरात्र मायुष्कामा ।× × ×। इति रात्रिसत्राणि'—इत्यन्तञ्च आश्व० श्रौ० १०. १. ११.—११. ६. १६।

† "गावो वा एतत् सत्र मासत"—इत्यादिक मित्रैवोपरिष्टात् (७. ५. ११), ता० ब्रा० ४. १. आश्व० श्रौ० ११. ७ द्रष्टव्यम्।

‡ ताण्ड्यब्राह्मणे च "आत्मदक्षिणम्"—इत्याद्येव मेव (४. ९. १९—२३.)।

§ पञ्चमाधिकरणस्यान्तिमे वर्णके विचारित।

"लौकिको वाक्यगो वार्थस्त्रिवृदादे. समत्वत' ।
उभौ विध्यर्थवादैकवाक्यत्वादृग्विहाग्निमः ॥

"त्रिवृद्बहिष्पवमानम्"—इतिश्रुतौ (ता० ब्रा० २०. ८. १.) त्रिवृच्छब्दस्य त्रैगुण्यं लोके प्रसिद्धोऽर्थः, वाक्यशेषादृक्‌त्रयात्मकेषु सूक्तेषु अवस्थितानां बहिष्पवमानस्तोत्रनिष्पादनक्षमाणाम् "उपास्मै गायता नरः"—इत्यादीनामृचां (उ० आ० १. १. १—८.*) नवकमर्थः, तत्र धर्मनिर्णये वेदस्य प्रबलत्वेऽपि पदपदार्थनिर्णये लोकवेदयोः समानबलत्वात् उभावर्थौ विकल्पेन गृहीतव्याविति चेत्, मैवम् ; लौकिकार्थस्वीकारपक्षे विधिवाक्ये अर्थ. त्रैगुण्यम्, अर्थवादवाक्ये† स्तोत्रियाणामृचां नवकमित्येव विध्यर्थवादवाक्ययोर्वैय्यधिकरण्यादेकवाक्यत्वं न स्यादत एक वाक्यत्वाय स्तोत्रियाणां नवकमेव विधिवाक्ये नियतोऽर्थ."—इति ॥

दशमाध्यायस्य षष्ठपादे (जै०सू० २२,२३.अधि०७.) चिन्तितम्—

"त्रिवृदग्निष्टुदित्येतत् सर्वत्र स्तोम एव वा ।
आद्यस्त्रैगुण्यवाचित्वादन्त्य स्तोमेऽस्य रूढितः ॥

एवं हि श्रूयते—"त्रिवृदग्निष्टुदग्निष्टोम"—इति (७. १. ५ ५.‡) किं त्रिवृत्त्वमग्निष्टुति क्रतौ सर्वेषु क्रतुसाधनेषु सम्पद्यते, कि वा स्तोममात्रसम्बन्धी? तत्र त्रिवृद्रज्जुरित्यादौ त्रिवृच्छब्दस्य त्रैगुण्यवाचित्वदर्शनाद्यापि क्रतुसाधनेषु या सङ्ख्या श्रूयते, सा सर्वा त्रित्वेन

---

* ता० ब्रा० ६. ८—७ १. यत्यो द्रष्टव्य ।

† "नवभि स्तुवन्ति"—इत्यादि ता० ब्रा० ६ ८।

‡ "अथ पञ्चभि' (ता० ब्रा० ८ ५-६) व्यग्निष्टुतो विधि "—इति सा० भा०।

क्रियत इति प्राप्ते ब्रूमः,—यद्यपि त्रिवृच्छन्दोऽवयवप्रसिद्धा लोके त्रैगुण्यं ब्रूते, तथापि वेदे रूढ्या स्तोमवाची, "त्रिवृद्वहिष्पवमानम्"—इत्युक्ता (ता० ब्रा० १०. २. १.) स्तोत्रियाणां नवानामृचामनुक्रमणात् अत्र स्तोमविषयमेव त्रिवृत्त्वम्"—इति ॥

सप्तमाध्यायस्य तृतीयपादे (जै०सू०६-११.अधि०३.) चिन्तितम्—

"विश्वजित् सर्वपृष्ठः किमनुवादो रथन्तरम्।
बृहता वा समुच्चेय, यद्वा षाडहिकानि षट्।
अतिदेश्यानि, तत्राद्यो महेन्द्रादिचतुष्टये।
पृष्ठशब्दाच्चोदकेन सर्वेषामिह सम्भवात्।
समुच्चयो वा विधये सर्वत्र बह्वपेक्षया।
न तु द्वयोरतः षण्णां पृष्ठानामतिदेशनम्॥

"विश्वजित्सर्वपृष्ठो भवति"—इति श्रूयते (२०२ पृ० ११ पं०)। तत्र सर्वपृष्ठशब्दोऽनुवादः। कुत ? प्राप्तत्वात्। तथाहि—ज्योतिष्टोमे माध्यन्दिनपवमानानन्तरभावीनि माहेन्द्रादीनि चत्वारि स्तोत्राणि सन्ति। "अभि त्वा शूर नोनुम", "कया नश्चित्र आ भुवत्", "तं वो दस्म मृतीषहम्", "तरोभिर्वो विदद्वसुम्"—इत्येतेषु चतुर्षु सूक्तेषु (उ० आ० १. १. ११-१४) तानि स्तोत्राणि सप्तदशस्तोमतामापाद्य गीयन्ते। एकस्मिन् सूक्ते विद्यमानानां तिसृणामृचां ब्राह्मणोक्तविधानेन* सप्तदशधाभ्यास. सप्तदशस्तोम.। तादृशेषु स्तोत्रेषु पृष्ठशब्दः श्रूयते—"सप्तदशानि पृष्ठानि"—इति (ता० ब्रा०२०.५.१.)।

---

* "पञ्चभ्यो हिङ्करोति"—इत्याद्या ता० ब्रा० समखण्डा (२ ७-१३.) द्रष्टव्या।

तानि चत्वारि पृष्ठानि विश्वजिति चोदकप्राप्तत्वात् सर्वपृष्ठशब्देनानूद्यन्त इत्याद्यः पक्षः। रथन्तरपृष्ठ-बृहत्पृष्ठयोर्ज्योतिष्टोमे विकल्पितयोरिहापि चोदकेन विकल्पप्राप्तौ सर्वशब्देन समुच्चयो विधीयते। तथा सत्यनुवादकृतं वैयर्थ्यं न भवतीति द्वितीयः पक्षः। सर्वत्वं बहुषु मुख्यं न तु द्वयोः। तस्मादनेन सर्वपृष्ठशब्देन षट्सङ्ख्याकानि पृष्ठान्यतिदिश्यन्ते। षडहे प्रतिदिनमेकैकं पृष्ठं विहितम्*। तानि च षट् पृष्ठानि,—रथन्तर-बृहद्-वैरूप-वैराज-शाक्वर-रैवतसामभिर्निष्पाद्यानि†। यद्यपि विश्वजित एकाहत्वात् ज्योतिष्टोमविकृतित्वमेव, न तु षडहविकृतित्वम्, तथापि सर्वपृष्ठोक्तिबलात्तानि षट् पृष्ठान्यतिदिश्यन्ते"—इति॥

दशमाध्यायस्य षष्ठे पादे (जै० सू०१३,१४. अधि० ५.) चिन्तितम्—

"किं सर्वपृष्ठे सर्वाणि पृष्ठदेशे यथोक्ति वा।
पृष्ठशब्दात् पृष्ठदेशे वचनात्तु व्यवस्थितिः॥

इदमाम्नायते— "विश्वजित्सर्वपृष्ठः"—इति (२०२पृ० पं०१२)। षडहे षट्स्वहःसु क्रमेण रथन्तरबृहद्वैरूपमित्यादिभिः षड्भिः सामभिः पृष्ठस्तोत्रं निष्पादितम् (ता० ब्रा० ८. ९.)। तानि सर्वाणि पृष्ठसामानि यस्मिन् विश्वजिति, सोऽयं सर्वपृष्ठः। तत्र माध्यन्दिनपवमाने मैत्रावरुणसाम्नोरन्तरालभूते पृष्ठस्तोत्रदेशे किं सर्वाणि पृष्ठसामानि कार्याणि, किं वा यथावचनं देशव्यवस्थेति संशयः। पृष्ठकार्यगमकेन पृष्ठशब्देन पृष्ठदेशे प्राप्ते वचनेन देशविशेषो व्यवस्थाप्यते। वचनं

---

* ता० ब्रा० १०. ६—११ ख०, २०. २ ३।

† पूर्वम् २०६पृ० ६ टीप्पन्या ज्ञापितानि। तेषाञ्च रूपाणि ता० ब्रा० ८. ९।

चैवमाम्नायते,– "पवमाने रथन्तरं करोत्यार्भवे बृहत्, मथत इतराणि,–वैरूपं होतुः पृष्ठं वैराजं ब्रह्मसाम, शाक्वरं मैत्रावरुण-साम, रैवतमच्छावाकसाम"–इति*, वचनं हि न्यायाद्बलीयः। तस्माद्देशविशेषे व्यवस्थिति."–इति ॥ १० ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके दशमोऽनुवाक. ॥

---

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा ददे[१] इमामगृभ्णन् रशनामृतस्य पूर्व आयुषि विदथेषु कव्या तया देवाः सुतमा बभूवु-र्ऋतस्य सामन्त्सरमारपन्ती[२] अभिधा असि भुवन-मसि यन्तासि धर्त्तासि सोऽग्निं वैश्वानरꣳ सप्रथसङ्गच्छ स्वाहाकृतः पृथिव्यां यन्ता राड् यन्तासि यमनो धर्त्तासि धरुणः ( १ )

कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा सते त्वासते त्वाद्भ्यस्त्वौ-षधीभ्यस्त्वा विश्वेभ्यस्त्वा भूतेभ्यः[३] ॥ ११ ॥

धरुणः[१] पञ्चविꣳशतिश्च ॥ ११ ॥

दशमेऽनुवाके पञ्चरात्रो वर्णित', अथात्राहीनविशेषानवक्ष्याप्य

* "स तु वै एठि स्तुवीत"–इत्यादि च ता० ब्रा० १९. ५ १३।

एकादश मारभ्य प्रपाठकसमाप्तिपर्यन्तं मश्वमेधमन्त्रा उच्यन्ते। तेषां यथासम्भवं ब्राह्मणग्रन्थोक्ता विनियोगा उदाह्रियन्ते। तत्र ब्राह्मणवाक्य मेवं पठ्यते—"देवस्य त्वा सवितुः प्रसव इति रशना-मादत्ते प्रसूत्यै"—इति (३.८.३.१.)। मन्त्रपाठस्तु—"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा ददे[१]"—इति। हे रशने! सवितुर्देवस्य प्रेरणे सति, अश्विसम्बन्धिभ्यां बाहुमूलाभ्यां, पूषसम्बन्धिभ्यां हस्ताग्राभ्यां, त्वामाददे॥

अथ ब्राह्मणम्—"इमामगृभ्णन् रशनामृतस्येत्यधिवदति यजु-ष्कृत्यै"—इति (३.८.३.१.)। पाठस्तु—"इमा मगृभ्णन् रशना-मृतस्य पूर्वं आयुषि विदथेषु कव्या तया देवाः सुतमा बभूवुर्ऋतस्य सामन्त्सरमारपन्ती[२]"—इति। 'विदथेषु' यज्ञेषु, 'आयुषि' यजमा-नायुर्निमित्ते, 'पूर्वे' 'कव्या' कवयो विद्वांसः ऋत्विजः 'ऋतस्य' यज्ञस्य सम्बन्धिनीम् 'इमां रशनाम्' 'अगृभ्णन्' स्वीकृतवन्तः। 'तया' रशनया 'देवाः' सर्वे 'सुतमा बभूवुः' अश्वबन्धनद्वारा तस्मिन् अश्वमेधे प्रधानभूतं चिराचाख्य सोमयागमभितः प्राप्ताः। कीदृशी रशना? 'ऋतस्य' यज्ञस्य 'सामन्' सामनि समाप्तौ निमित्तभूतायां सत्यां 'सरं' सरणं प्रवृत्तिम् 'आरपन्ती' कथयन्ती। हे ऋत्विग्-यजमानाः! शीघ्रं यज्ञं समापयतेति वदन्ती चेयं रशना लक्ष्यते; स्वकीयदार्ढ्येन* अश्वबन्धनयोग्यत्वदर्शनात्†॥

* "स्वकीयदोर्घत्वेन"—इति क।

† "द्वादशारत्नी रशना भवति। × × ×। मौञ्जी भवति"—इत्यादि, "दर्भमयी रशना भवति"—इत्यादि, "अयोदशमरत्निं रशनाया-मुपदधाति"—इति च ब्रा० ३ ८ १.१, २.३, ३.१।

कल्पः—"अभिधा असीत्यश्वमभिदधाति"—इति। पाठस्तु—"अभिधा असि, भुवनमसि, यन्तासि, धर्त्तासि ; सोऽग्निं वैश्वानरꣳ सप्रथसङ्गच्छ स्वाहाकृतः ; पृथिव्यां यन्ता राड्, यन्तासि यमनो, धर्त्तासि धरुणः ; कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा ; पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा, सते त्वासते त्वाद्भ्यस्त्वौषधीभ्यस्त्वा विश्वेभ्यस्त्वा भूतेभ्यः[१]"—इति। अभिधीयते धार्यते बध्यत इति 'अभिधा'। हे अश्व। त्वं तादृशो बध्यमानोऽसि, तथा भुवनादि-रूपोऽसि। तव प्राजापत्यत्वात् प्रजापतिगुणाः सर्वेऽपि त्वय्यवस्थिताः। प्रजापतिश्च भुवनकारणत्वाद्भुवनरूप', अन्तर्यामित्वाच्च यन्ता, पोषकत्वाच्च धर्त्ता, तद्द्वारा त्वमपि तथाविधोऽसि। स तादृशः त्वं 'वैश्वानरं' सर्वपुरुषहितकारिणम्, 'सप्रथसं' विस्तारेण सहितम्, 'अग्निम्' आहवनीयं 'गच्छ', आहवनीये ह्यश्वाङ्गानि हूयन्ते। तत्र गत्वा च 'स्वाहाकृतः' स्वाहाकारेणास्माभिर्देवेभ्यो दत्तो भव। ततो कृतः सन् नृपो भूत्वा पृथिव्यां 'यन्ता राट् भव' नियामको राजा भव। ततोऽनन्तरभाविन्यन्तरिक्षे च ग्रहनक्षत्रादीनां 'यन्ता यमनः' चापि। नियन्तुमुद्युक्तो 'यन्ता', नियन्तुं समर्थो 'यमनः'; तादृशो भव। ततोऽप्युपरितने द्युलोके 'धर्त्ता धरुणः' असि। स्वर्गस्थितानां पुरुषाणां 'धर्त्ता' पोषयितु मुद्युक्तः, 'धरुणः' पोषयितुं समर्थः; तादृशो भव। तथाविधं त्वां 'कृष्यै' सर्वनिष्पत्तये, बध्नामीति शेषः। एव मुभयत्रापि योज्यम्। 'क्षेमः' प्राप्तस्य धनस्य रक्षणम्। 'रयिः' आपणीयं धनम्। 'पोषः' तज्जन्या भोगपुष्टिः। पृथिव्यादयस्त्रयः प्राप्तव्या लोकाः। तेषु लोकेषु पूर्वं विद्यमानं द्रव्यं 'सत्', इतः

परं सम्पादनीयं द्रव्यम् 'अयत्'। एतत्सर्वं भाविजन्मविषयम्। अस्मिन् जन्मन्यपेक्षिता आप ओषधय सर्वप्राणिनश्च। तस्य सर्वस्य सिद्ध्यर्थं त्वामिह बध्नामि। एतच्च सर्वं यागद्वारेणोपपद्यते* ॥ ११॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके एकादशोऽनुवाकः ॥

---

विभूर्मात्रा प्रभूः पित्राश्वोऽसि हयोऽस्यत्योऽसि नरोऽस्यर्वासि सप्तिरसि वाज्यसि वृषासि नृमणा असि ययुर्नामास्यादित्यानां पत्वान्विहि[1]अग्नये स्वाहा स्वाहेन्द्राग्निभ्याꣳ स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा सर्वाभ्यो देवताभ्य[2] इह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहा (१)

इह रमतिः स्वाहा[3] भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वा विश्वेभ्यस्त्वा भूतेभ्यो[4] देवा आशापाला एतं देवेभ्योऽश्वं मेधाय प्रोक्षितं गोपायत[5] ॥ १२ ॥

रन्तिः स्वाहा[1] द्वाविꣳशतिश्च ॥ १२ ॥

---

* "पूर्व आयुषि"—इत्यादि "सोमाय त्वा"—इत्यन्तस्य मन्त्रस्य प्रतिवाक्यं व्याख्यानं ब्राह्मणे द्रष्टव्यम् (३ ८ ३ ४—६)।

कल्पः—"विभूर्मात्रा प्रभूः पित्रेत्यश्वस्य दक्षिणे कर्णे यजमानं वाचयित्वा"—इति* । पाठस्तु—"विभूर्मात्रा प्रभूः पित्राश्वोऽसि, हयोऽस्यत्योऽसि, नरोऽस्यर्वासि, सप्तिरसि, वाज्यसि, वृषासि, नृमणा असि, ययुर्नामास्यादित्यानां पत्वान्विहि[1]"—इति । हे अश्व! त्वं 'मात्रा' त्वदीयया पृथिवीरूपया 'विभूरसि' व्याप्तिमानसि। 'पित्रा' द्युलोकरूपेण 'प्रभूः' प्रभुत्वशक्तिमानसि । "इयं वै माता, असौ पिता"—इति ब्राह्मणम् (३.८.९.१.) । पृथिव्या विभुत्वात् द्युलोकस्य भोगप्रदत्वाच्च तदुभयमस्मिन्नुपचर्यते । तथा त्वम् 'अश्वोऽसि' मुख्याश्वजातिमानसि ; न तु तव गर्दभसादृश्यम् । 'हि'-धातोः क्रमणार्थकात् (निघ०१.१४.९) उत्पन्नो हयशब्दः; अतो 'हयोऽसि' समीचीनक्रमणवानसि । खुरसौकर्येण भूमावाक्रमणं त्वदीयं स्थिरमित्यर्थः । 'अत्योऽसि' सततगमनशीलोऽसि । 'नरोऽसि' उपर्यारूढानां नेतासि । 'अर्वासि' समीचीनगतिमानसि । 'सप्तिरसि' सर्वेष्वपि युद्धादिकार्येषु सम्बद्धोऽसि । 'वाजी' वेगवानसि । 'वृषा' पुंस्त्वसामर्थ्यवानसि । 'नृमणाः' नृभिर्मननीयोऽसि । 'ययुर्नामासि' स्वर्गप्रापक इत्येतदेव तव प्रियं नाम । अतएव ब्राह्मणम्—"ययुर्नामेत्याह, एतद्वा अश्वस्य प्रियं नामधेयम्"—इति (३.८.९.२.)। इदृशस्त्वम् 'आदित्यानां' प्रतिमासवर्त्तिनां द्वादशसङ्ख्यानां 'पत्वा' पतनं यदन्तरिक्षगमनम्, तत् 'अनु' अन्तरिक्षमार्गेण 'इहि' गच्छ ॥

---

* "विभूर्मात्रा प्रभूः पित्रेत्यश्वनामानि जुहोति; उभयोरेवैनं लोकयोर्नामधेयं गमयति"—इति ब्रा० ३.८.१०.१।

कल्प.—"अग्नये स्वाहा स्वाहेन्द्राग्निमिति पूर्वहोमान् हुत्वा" —इति। पाठस्तु—"अग्नये स्वाहा, स्वाहेन्द्राग्निभ्याꣳ, स्वाहा प्रजापतये, स्वाहा विश्वेभ्यो देवेभ्यः, स्वाहा सर्वाभ्यो देवताभ्यः[१]"—इति। अत्र प्रथममन्त्रः स्वाहान्तः, उत्तरे चत्वारो मन्त्राः स्वाहादयः॥

कल्पः—"रथकारगृहे वसतिर्भवतीह धृतिरिति; मायमश्वस्य पत्सु पत्सु चतस्रो धृतीर्जुहोति"—इति। पाठस्तु—"इह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहा[२]"—इति। 'इह' अस्मिन् दक्षिणपूर्वपादे 'धृतिः' धरणं स्थैर्यं भवतु। तदर्थमिदं स्वाहुतमस्तु। 'इह' अस्मिन् दक्षिणपृष्ठपादे 'विधृतिः' विशेषेण स्थैर्यमस्तु। 'इह' अस्मिन् उत्तरपृष्ठपादे 'रन्तिः' स्थैर्येण रमणमस्तु। 'इह' अस्मिन् उत्तरपूर्वपादे 'रमतिः' अत्यन्तं स्थिरं रमणमस्तु॥

कल्पः—"भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वेत्यश्वमुत्सृज्य" —इति। (पाठस्तु—"भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वा)* विश्वेभ्यस्त्वा भूतेभ्य[४]"—इति मन्त्रशेषपाठः†। हे अश्व! त्वं 'भूरसि' अतीतानामनागतानां वर्तमानानां भावयितासि। भूशब्दोऽतीतमाचष्टे, भव्यशब्दो वर्त्तमानम्, भविष्यच्छब्द आगामि, तस्य त्रिविधस्य श्रेयस सिध्यर्थं त्वा मुत्सृजामि,—तथा 'विश्वेभ्यो भूतेभ्यः' सर्वप्राणिस्वाधीनत्वार्थं त्वामुत्सृजामि॥

कल्प.—"देवा आशापाला इति रक्षिभ्यः परिददाति"—इति। पाठस्तु—"देवा आशापाला एत देवेभ्योऽश्वं मेधाय प्रोक्षितं गोपा-

---

* बन्धनीचिह्नान्त पाठस्तु क-पुस्तकादन्यत्र न विद्यते।

† "मन्त्रशेषेण पाठ"—इति क, ख।

यत[५]"—इति। 'आशापालाः' दिक्षु पालकाः हे 'देवाः' देवतामूर्त्तिधारिणो रत्नाद्याभरणभूषिताः शतसङ्ख्याका राजपुत्राः। 'मेधाय' यज्ञाय प्रोक्षितमेतमश्वं 'देवेभ्यः' देवार्थं 'गोपायत' रक्षत* ॥ १२॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके द्वादशोऽनुवाकः ॥

---

आयनाय स्वाहा प्रायणाय स्वाहोद्द्रावाय स्वाहोद्द्रुताय स्वाहा भूकाराय स्वाहा भूकृताय स्वाहा पलायिताय स्वाहापलायिताय स्वाहावल्गते स्वाहा परावल्गते स्वाहायते स्वाहा प्रयते स्वाहा सर्वस्मै स्वाहा[१] ॥ १३ ॥

आयनाय† षड्विंशतिः ॥ १३ ॥

कल्पः—"आयनाय स्वाहा प्रायणाय स्वाहेत्युद्द्रावन्"—इति‡। पाठस्तु—"आयनाय स्वाहा, प्रायणाय स्वाहोद्द्रावाय स्वाहोद्द्रुताय

---

* विभुर्मात्रेत्यस्यानुवाकस्य प्रतिपदं व्याख्यानं "विभुर्मात्रा प्रभुः पित्रेत्याह"—इत्यादिना "पतुं जुहोति"—इत्यन्तेनाम्नातम् (ब्रा०३ ८. ९ १-३)।

† "आयनायोत्तरमापलायिताय"—इति क, ख, ग।

‡ "आयनाय स्वाहा प्रायणाय स्वाहेत्युद्द्रावा जुहोति; सर्वमेवैनमस्त्रात्र्य सुवर्गं लोकं गमयति"—इति ब्रा० ३ ८ १७ ९।

स्वाहा, भूकाराय स्वाहा, भूकृताय स्वाहा, पलायिताय स्वाहा, ऽपलायिताय स्वाहा, ऽऽवल्गते स्वाहा, परावल्गते स्वाहा, ऽऽयते स्वाहा, प्रयते स्वाहा, सर्वस्मै स्वाहा[१]"—इति। आभिमुख्येनायनं गमनं यस्यासावायनस्तस्मै अश्वाय, तत्प्रीत्यर्थ मिदं स्वाहुतम्। आभिमुख्यगमनमपि द्विविधम्— मन्दगमनम्, तीव्रगमनञ्च। तत्राद्यं पूर्वमन्त्रेऽभिहितम्, द्वितीयं प्रायणमन्त्रेऽभिधीयते। केचन धूर्त्ता अश्वा गन्तुमनिच्छन्तः ताडिताः सन्त, पूर्वपादावुन्नमयन्ति, अन्ये चापरौ पादावुन्नमयन्ति, तदुभयमुद्द्रावोद्दुतशब्दाभ्यामभिधीयते। कशया आघातितेनोद्द्रवणार्थं क्रियमाणस्य शब्दविशेषस्यानुकरणार्थं भूकार इति प्रयुक्तम्। भूकृतमेतदेव पूर्वापरपादविषयत्वेन द्वेधाभिधानम्। पुरतो वेगेन धावनं पलायनम्। आभिमुख्येन धावनमापलायनम्। चतुर्णामपि पादानां सकृदुन्नमनमाभिमुख्यविषयमावल्गनम्। पराङ्मुखत्वविषयं परावल्गनम्। पूर्वमायनप्रायणशब्दाभ्यां योरर्थोऽभिहित', सोऽतीतविषयः। इह त्वायत्-प्रयच्छब्दाभ्यां वर्त्तमानविषयः स एवार्थोऽभिधीयते। अतो यथोक्ततत्तद्गुणयुक्ताय अश्वाय, तत्तत्-प्रीत्यर्थं, 'स्वाहा' सुहुतमिदमस्तु। किं बहुना 'सर्वस्मै' सर्वप्रकारगमनविशेषयुक्ताश्वप्रीत्यर्थम् इदं 'स्वाहा' सुहुतमस्तु। उत्कृष्टगमनविषयत्वादेतेषां होमानाम् "उद्द्रावः"—इति नामधेयम् ॥ १ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके त्रयोदशोऽनुवाकः॥

---

अग्नये॒ स्वाहा॒ सोमा॑य॒ स्वाहा॑ वा॒यवे॒ स्वाहा॒पाम्मो-दा॑य॒ स्वाहा॑ सवि॒त्रे स्वाहा॒ सर॑स्वत्यै॒ स्वाहेन्द्रा॑य॒ स्वाहा॒ बृह॒स्पत॑ये॒ स्वाहा॑ मि॒त्राय॒ स्वाहा॒ वरु॑णाय॒ स्वाहा॒ सर्व॑स्मै॒ स्वाहा॑[१] ॥ १४ ॥

अग्नये॒* त्रयो॑विꣳशतिः ॥ १४ ॥

कल्पः—"अग्नये स्वाहा सोमाय स्वाहेति पूर्वहोमान्"—इति†। पाठस्तु—"अग्नये स्वाहा, सोमाय स्वाहा, वायवे स्वाहा, ऽपाम्मोदाय स्वाहा, सवित्रे स्वाहा, सरस्वत्यै स्वाहेन्द्राय स्वाहा, बृहस्पतये स्वाहा, मित्राय स्वाहा, वरुणाय स्वाहा, सर्वस्मै स्वाहा[१]"—इति। 'अपामोदः' पर्जन्यः। अनुक्तानां पूर्वहोमाङ्गानां देवानां सङ्ग्रहार्थं सर्वशब्दः‡ ॥ १४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके चतुर्दशोऽनुवाकः ॥

---

पृ॒थि॒व्यै स्वाहा॒न्तरि॑क्षाय॒ स्वाहा॑ दि॒वे स्वाहा॒ सूर्या॑य॒ स्वाहा॑ च॒न्द्रम॑से॒ स्वाहा॒ नक्ष॑त्रेभ्यः॒ स्वाहा॒ प्राच्यै॑ दि॒शे स्वाहा॒ दक्षि॑णायै दि॒शे स्वाहा॑ प्रती॒च्यै॑ दि॒शे स्वाहो॑-

---

* "अग्नये॒ वा॒यवे॒ऽपाम्मोदा॒येन्द्रा॑य॒"—इति क, ख, ग।

† "अग्नये स्वाहा सोमाय स्वाहेति पूर्वदीक्षां जुहोति, पूर्वं एव दियन्तं भ्रातृव्यमतिक्रामति"—इति ब्रा० ३. ८. १७. १।

‡ एतस्याप्यनुवाकस्य प्रतिवाक्यं व्याख्यानं ब्राह्मणे श्रुतम् (३. ८. ७. ३—५.)।

दीच्यै दिशे स्वाहोर्द्धायै दिशे स्वाहा दिग्भ्यः स्वाहा-वान्तरदिशाभ्यः स्वाहा समाभ्यः स्वाहा शरद्भ्यः स्वाहा-होरात्रेभ्यः स्वाहार्द्धमासेभ्यः स्वाहा मासेभ्यः स्वाहु-र्तुभ्यः स्वाहा संवत्सराय स्वाहा सर्वस्मै स्वाहा(१)॥ १५ ॥

पृथिव्यै* सप्तचत्वारिंशत् ॥ १५ ॥

कल्प —"पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्येत कृत्वा"—इति†। एतमनुवाकं पूर्वनामकहोमान्तपातितेनैव कृतेत्यर्थः। पाठस्तु— "पृथिव्यै स्वाहा, ऽन्तरिक्षाय स्वाहा, दिवे स्वाहा, सूर्याय स्वाहा, चन्द्रमसे स्वाहा, नक्षत्रेभ्यः स्वाहा, प्राच्यै दिशे स्वाहा, दक्षिणायै दिशे स्वाहा, प्रतीच्यै दिशे स्वाहोदीच्यै दिशे स्वाहोर्द्धायै दिशे स्वाहा, दिग्भ्यः स्वाहा, ऽवान्तरदिशाभ्यः स्वाहा, समाभ्यः स्वाहा, शरद्भ्यः स्वाहा, ऽहोरात्रेभ्यः स्वाहा, ऽर्द्धमासेभ्यः स्वाहा, मासेभ्यः स्वाहर्तुभ्यः स्वाहा, संवत्सराय स्वाहा, सर्वस्मै स्वाहा(१)"—इति। प्राच्यादिशब्दा विशेषवाचिनः, दिक्शब्दः सामान्यवाची। समा-शरत् संवत्सर शब्दाः सौर-चान्द्र नाक्षत्र-विषयाः। सर्वशब्दोऽनुक्त-कालविषयः‡॥ १५॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके पञ्चदशोऽनुवाकः॥

---

* "पृथिव्यै सूर्याय नक्षत्रेभ्यः प्राच्यै"—इति क, ख ग।

† "पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्येकविंशतिमेर्नों दीक्षा जुहोति" —इत्यादि ब्रा० ३ ८ १० १।

‡ एतस्याप्यनुवाकस्य व्याख्यानं ब्राह्मणे द्रष्टव्यम् (३ ८ १० २)।

अ॒ग्नये॒ स्वाहा॒ सोमा॑य॒ स्वाहा॑ सवि॒त्रे स्वाहा॒ सर॑स्वत्यै॒ स्वाहा॑ पू॒ष्णे स्वाहा॒ बृह॒स्पत॑ये॒ स्वाहा॒पाम्मोदा॑य॒ स्वाहा॑ वा॒यवे॒ स्वाहा॑ मि॒त्राय॒ स्वाहा॒ वरु॑णाय॒ स्वाहा॒ सर्व॑स्मै॒ स्वाहा॑ ॥ १६ ॥

अ॒ग्नये॒ (सवि॒त्रे पू॒ष्णेऽपाम्मोदा॑य वा॒यवे॒)* त्रयो॑वि॑श॒तिः ॥ १६ ॥

कल्प'—"अग्नये स्वाहा सोमाय स्वाहेति पूर्वदीक्षाम्"—इति। पाठस्तु—"अग्नये स्वाहा, सोमाय स्वाहा, सवित्रे स्वाहा, सरस्वत्यै स्वाहा, पूष्णे स्वाहा, बृहस्पतये स्वाहा, ऽपाम्मोदाय स्वाहा, वायवे स्वाहा, मित्राय स्वाहा, वरुणाय स्वाहा, सर्वस्मै स्वाहा"—इति†। पूर्वहोमानुवाकवदयमनुवाको व्याख्येयः ॥ १६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके षोड़शोऽनुवाकः ॥

---

पृ॒थि॒व्यै स्वाहा॒न्तरि॑क्षाय॒ स्वाहा॑ दि॒वे स्वाहा॒ग्नये॒ स्वाहा॒ सोमा॑य॒ स्वाहा॒ सूर्या॑य॒ स्वाहा॑ च॒न्द्रम॑से॒ स्वाहाह्ने॒ स्वाहा॒ रात्रि॑यै॒ स्वाह॒र्जवे॒ स्वाहा॑ सा॒धवे॒ स्वाहा॑ सुक्षि॒त्यै क्षु॒धे स्वाहा॑शिति॒म्ने स्वाहा॒ रोगा॑य॒ स्वाहा॑ हि॒माय॒

---

* बन्धनीचिह्नान्त पाठोऽधिक' क-ख-ग-पुस्तकेषु ।

† एतस्यानुवाकस्य च प्रतिपद व्याख्यान ब्राह्मणे द्रष्टव्यम् ३ ८ ६.३–४ ।

स्वाहा शीताय स्वाहा तपाय स्वाहारण्याय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा ॥ १७ ॥

पृथिव्यै चतुश्चत्वारिंशत्* ॥ १७ ॥

कल्प —"पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्येकविंशिनी दीक्षाम्" —इति। पाठस्तु— "पृथिव्यै स्वाहा, ऽन्तरिक्षाय स्वाहा, दिवे स्वाहा, ऽग्नये स्वाहा, सोमाय स्वाहा, सूर्याय स्वाहा, चन्द्रमसे स्वाहा, ऽह्ने स्वाहा, रात्रियै स्वाहा, ऽर्जवे स्वाहा, माधवे स्वाहा, सुचित्यै स्वाहा, क्षुधे स्वाहा, ऽऽशितिम्ने स्वाहा, रोगाय स्वाहा, हिमाय स्वाहा, शीताय स्वाहा, तपाय स्वाहा, ऽरण्याय स्वाहा, सुवर्गाय स्वाहा, लोकाय स्वाहा, सर्वस्मै स्वाहा"—इति। अत्र ऋच्चादयस्त्रय पृथिव्यादिलोका। तथा च ब्राह्मणम्—"इय वा ऋजु। अन्तरिक्षं साधु। असौ सुचिति"—इति। आशितिमशब्देन क्षुन्निवारकमाशितशब्दत्वमभिधीयते। स्वर्ग पुण्यफलभूत। लोकशब्द सामान्यवाची। अत्रातीतावग्नये स्वाहा पृथिव्यै स्वाहेत्यनुवाकौ (२१८४०) पूर्वहोमविषयौ। तथा च ब्राह्मणम्— "अग्नये स्वाहा सोमाय स्वाहेति पूर्वहोमान् जुहोति। पूर्व एव द्विषन्त भ्रातृव्यमतिक्रामति। पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्याह। यथायजुरेवैतत्"—इति (३८ १७ १)। उत्तरो त्वनुवाको दीक्षाविषयौ। तत्रापि ब्राह्मणम्— "अग्नये स्वाहा सोमाय स्वाहेति पूर्वदीक्षा जुहोति। पूर्व एव द्विषन्त

* "पृथिव्या अग्नयेऽह्ने चतुश्चत्वारिंशत्"—इति क, ख, ग।

भ्रातृव्यमतिक्रामति । पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्येकविंशतिनीं दीक्षां जुहोति"—इति (३. ८. १७. १, २.) ॥१७॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके सप्तदशोऽनुवाकः ॥

---

भुवो देवानां कर्मणापसर्त्तस्य पथ्यासि वसुभिर्देवेभिर्देवतया गायत्रेण त्वा छन्दसा युनज्मि वसन्तेन त्वर्त्तुना हविषा दीक्षयामि[१] रुद्रेभिर्देवेभिर्देवतया त्रैष्टुभेन त्वा छन्दसा युनज्मि ग्रीष्मेण त्वर्त्तुना हविषा दीक्षयाम्या[२]दित्येभिर्देवेभिर्देवतया जागतेन त्वा छन्दसा युनज्मि वर्षाभिस्त्वर्त्तुना हविषा दीक्षयामि[३] विश्वैभिर्देवतयानुष्टुभेन त्वा छन्दसा युनज्मि (१)
शरदा त्वर्त्तुना हविषा दीक्षयाम्य[४]ङ्गिरोभिर्देवेभिर्देवतया पाङ्क्तेन त्वा छन्दसा युनज्मि हेमन्तशिशिराभ्यां त्वर्त्तुना हविषा दीक्षयाम्या[५]हं दीक्षामरुहमृतस्य पत्नीं गायत्रेण छन्दसा ब्रह्मणा चर्तꣳ सत्येऽधाꣳ सत्यमृतेऽधां[६] महीमू षु सुत्रामाणमिह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहा ॥ १८ ॥

(आनुष्टुभेन त्वा छन्दसा)* युनज्म्येकान्नपञ्चाशच्च ॥ १८ ॥

---

* बन्धनीचिह्नान्त पाठोऽधिकः क ख-ग पुस्तकेषु ।

कल्प—"भुवो देवानां कर्मणेत्यृतुदीक्षाभिः कृष्णाजिनमारोहन्तमभिमन्त्रयते"-इति। तत्र प्रथमं मन्त्रमाह—"भुवो देवानां कर्मणापसर्त्तस्य पथ्यासि वसुभिर्देवेभिर्देवतया गायत्रेण त्वा छन्दसा युनज्मि वसन्तेन त्वर्तुना हविषा दीक्षयामि[१]"-इति। हे दीक्षे! त्वं देवानां सम्बन्धिना कर्मणा 'ऋतस्य' यज्ञसम्बन्धी 'अपसा' व्यापारेण भुवं युक्ता भव। त्वं 'पथ्यासि' देवानां यज्ञस्य वहितासि। अहं 'वसुभि देवेभिः' वसुसञ्ज्ञकैर्देवैः 'देवतया' दीक्षाभिमानिन्या, गायत्रेण छन्दसा च 'त्वा युनज्मि' त्वां युक्तां करोमि। तथा वसन्तेनर्तुना सहितोऽहं त्वां हविषा 'दीक्षयामि' संस्कृतां करोमि॥

अथोत्तरांश्चतुरो मन्त्रानाह—"रुद्रेभिर्देवेभिर्देवतया त्रैष्टुभेन त्वा छन्दसा युनज्मि, ग्रीष्मेण त्वर्तुना हविषा दीक्षयामि[२], आदित्येभिर्देवेभिर्देवतया जागतेन त्वा छन्दसा युनज्मि, वर्षाभिस्त्वर्तुना हविषा दीक्षयामि[३], विश्वेभिर्देवेभिर्देवतयानुष्टुभेन त्वा छन्दसा युनज्मि, शरदा त्वर्तुना हविषा दीक्षयामि[४], अङ्गिरोभिर्देवेभिर्देवतया पाङ्क्तेन त्वा छन्दसा युनज्मि, हेमन्तशिशिराभ्यां त्वर्तुना हविषा दीक्षयामि[५]"-इति। एतेषु चतुर्ष्वपि मन्त्रेषु भुवो देवानामित्यादिभागमनुषज्य पूर्ववद्व्याख्येयम्॥

अथ षष्ठं मन्त्रमाह—"आहं दीक्षामरुहमृतस्य पत्नीं गायत्रेण छन्दसा ब्रह्मणा चर्तं सत्येऽधां सत्यमृतेऽधाम्[६]"-इति। 'अहं' यजमानो गायत्रेण छन्दसा 'ब्रह्मणा' छन्दोरहितेन मन्त्रेण चानुगृहीत सन् 'ऋतस्य पत्नीं' यज्ञस्य पालयित्रीं 'दीक्षां' नियमविशेषरूपाम् 'आ अरुहम्' आरूढोऽस्मि। मदीयमृतं सत्ये स्थापयामि

सत्यमृते स्थापयामि। चिन्त्यमानं वस्तुतत्त्वम् 'ऋतम्'; उच्यमानं वस्तुतत्त्वं 'सत्यम्'। अहं सर्वदा मनसा वस्तुतत्त्वं विचार्य पश्चाद्वक्ष्यामि, वाचापि वस्तुतत्त्वमुच्चार्य पश्चादन्यद्वस्तुतत्त्वं चिन्तयामीत्यर्थः॥

अथ सप्तमाष्टमयोर्मन्त्रयोः प्रतीके दर्शयति—"मही मू षु सुत्रामाणम्(७,८)"-इति। "महीमू षु मातरम्"-इत्येको मन्त्रः, "सुत्रामाणं पृथिवीं द्याम्"-इत्यपरो मन्त्रः। तौ च मन्त्रौ "वैश्वानरो न."-इत्यनुवाके (१.५.११.) व्याख्यातौ (१ भा० ८४४ पृ०)॥

कल्पः—"सायं धृतिषु ह्यमानासु राजन्यो वीणागाथी गायति"—इति। तानेतान् धृतिमन्त्रानाह—"इह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहा(९-१२)"-इति। एतच्चतुष्टयं पूर्ववद् (२१६ पृ०) व्याख्येयम्॥१८॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठकेऽष्टादशोऽनुवाकः॥



ईङ्काराय स्वाहेङ्कृताय स्वाहा क्रन्दते स्वाहावक्रन्दते स्वाहा प्रोथते स्वाहा प्रप्रोथते स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा प्राणाय स्वाहा व्यानाय स्वाहापानाय स्वाहा सन्दीयमानाय स्वाहा सन्दिताय स्वाहा विचृत्यमानाय स्वाहा विचृत्ताय स्वाहा पलायिष्यमाणाय स्वाहा पलायिताय स्वाहोपरꣳस्यते स्वाहोपर-

ताय स्वाहा निवेक्ष्यते स्वाहा निविशमानाय स्वाहा निविष्टाय स्वाहा निपत्स्यते स्वाहा निषीदते स्वाहा निषण्णाय स्वाहा (१)

आसिष्यते स्वाहासीनाय स्वाहासिताय स्वाहा निपत्स्यते स्वाहा निपद्यमानाय स्वाहा निपन्नाय स्वाहा शयिष्यते स्वाहा शयानाय स्वाहा शयिताय स्वाहा सम्मीलिष्यते स्वाहा सम्मीलते स्वाहा सम्मीलिताय स्वाहा स्वप्स्यते स्वाहा स्वपते स्वाहा सुप्ताय स्वाहा प्रभोत्स्यते स्वाहा प्रबुध्यमानाय स्वाहा प्रबुद्धाय स्वाहा जागरिष्यते स्वाहा जाग्रते स्वाहा जागरिताय स्वाहा शुश्रूषमाणाय स्वाहा शृण्वते स्वाहा श्रुताय स्वाहा वीक्षिष्यते स्वाहा (२)

वीक्षमाणाय स्वाहा वीक्षिताय स्वाहा संहास्यते स्वाहा सञ्जिहानाय स्वाहोज्जिहानाय स्वाहा विवर्त्स्यते स्वाहा विवर्तमानाय स्वाहा विवृत्ताय स्वाहोत्थास्यते स्वाहोत्तिष्ठते स्वाहोत्थिताय स्वाहा विधविष्यते स्वाहा विधून्वानाय स्वाहा विधूताय स्वाहोत्क्रंस्यते स्वाहोत्क्रामते स्वाहोत्क्रान्ताय स्वाहा चङ्क्रमिष्यते स्वाहा चङ्क्रम्यमाणाय स्वाहा चङ्क्रमिताय स्वाहा कण्डूयिष्यते स्वाहा कण्डूयमानाय स्वाहा

कण्डूयिताय स्वाहा निकषिष्यते स्वाहा निकषमाणाय स्वाहा (३)

निकषिताय स्वाहा यदश्नाति तस्मै स्वाहा यत्पिबति तस्मै स्वाहा यन्मेहति तस्मै स्वाहा यच्छकृत्करोति तस्मै स्वाहा रेतसे स्वाहा प्रजाभ्यः स्वाहा प्रजननाय स्वाहा सर्वस्मै स्वाहा[१] ॥ १९ ॥

निपन्नाय स्वाहा[१] वीक्षिष्यते स्वाहा[२] निकर्षमाणाय स्वाहा[३] सप्तविꣳशतिश्च ॥ १९ ॥

कल्प—"ईङ्काराय स्वाहेङ्कृताय स्वाहेत्यश्वचरितानि"—इति। पाठस्तु—"ईङ्काराय स्वाहा, ईङ्कृताय स्वाहा, क्रन्दते स्वाहा, ऽवक्रन्दते स्वाहा, प्रोथते स्वाहा, प्रप्रोथते स्वाहा, गन्धाय स्वाहा, घ्राताय स्वाहा, प्राणाय स्वाहा, व्यानाय स्वाहा, ऽपानाय स्वाहा, सन्दीयमानाय स्वाहा, सन्दिताय स्वाहा, विचृत्यमानाय स्वाहा, विचृत्ताय स्वाहा, पलायिष्यमाणाय स्वाहा, पलायिताय स्वाहा, उपरꣳस्यते स्वाहा, उपरताय स्वाहा, निवेक्ष्यते स्वाहा, निविशमानाय स्वाहा, निविष्टाय स्वाहा, निपत्स्यते स्वाहा, निषीदते स्वाहा, निषण्णाय स्वाहा, ऽऽसिष्यते स्वाहा, ऽऽसीनाय स्वाहा, ऽऽसिताय स्वाहा, निपत्स्यते स्वाहा, निपद्यमानाय स्वाहा, निपन्नाय स्वाहा, शयिष्यते स्वाहा, शयानाय स्वाहा, शयिताय स्वाहा, सम्मीलिष्यते स्वाहा, सम्मीलते स्वाहा, सम्मीलिताय स्वाहा, स्वप्स्यते

स्वाहा, स्वप्स्यते स्वाहा, सुप्ताय स्वाहा, प्रभोत्स्यते स्वाहा, प्रबुध्यमानाय स्वाहा, प्रबुद्धाय स्वाहा, जागरिष्यते स्वाहा, जाग्रते स्वाहा, जागरिताय स्वाहा, शुश्रूषमाणाय स्वाहा, शृण्वते स्वाहा, श्रुताय स्वाहा, वीक्षिष्यते स्वाहा, वीक्षमाणाय स्वाहा, वीक्षिताय स्वाहा, संहास्यते स्वाहा, सञ्जिहानाय स्वाहा, उज्जिहानाय स्वाहा, विवर्त्स्यते स्वाहा, विवर्त्तमानाय स्वाहा, विवृत्ताय स्वाहा, उत्थास्यते स्वाहा, उत्तिष्ठते स्वाहा, उत्थिताय स्वाहा, विधविष्यते स्वाहा, विधून्वानाय स्वाहा, विधूताय स्वाहा, उत्क्रंस्यते स्वाहा, उत्क्रामते स्वाहा, उत्क्रान्ताय स्वाहा, चङ्क्रमिष्यते स्वाहा, चङ्क्रम्यमाणाय स्वाहा, चङ्क्रमिताय स्वाहा, कण्डूयिष्यते स्वाहा, कण्डूयमानाय स्वाहा, कण्डूयिताय स्वाहा, निकषिष्यते स्वाहा, निकषमाणाय स्वाहा, निकषिताय स्वाहा, यदत्ति तस्मै स्वाहा, यत्पिबति तस्मै स्वाहा, यन्मेहति तस्मै स्वाहा, यच्छकृत् करोति तस्मै स्वाहा, रेतसे स्वाहा, प्रजाभ्यः स्वाहा, प्रजननाय स्वाहा, सर्वस्मै स्वाहा(१)"

—इति। स्वादमु दृष्ट्वा पातुं य मन्दशब्दं करोति, तदनुकरणं तत् 'ईम्'-इत्यनेनोच्यते। स च शब्दो वर्त्तमान ईङ्कारः, अतीतस्त्वीङ्कृतः। वडवां दृष्ट्वोच्चैर्घोषेण उत्साहजनितं क्रन्दनम्, विरोधिनमश्वं दृष्ट्वा क्रोधेनोच्चैर्घोषणमवक्रन्दनम्। गमनकाले नासापुटयोः श्वासशब्दः प्रोथनम्, स एवानुवर्त्तमानः प्रप्रोथनम्, तृणभक्षणे वा श्वासशब्दः प्रप्रोथनम्। अश्वान्तराघ्राणं गन्धः, स एवातीतो घ्रातः। प्राणापानव्याना ऊर्ध्वाधोमध्यवृत्तयः। सन्दीयमानो बध्यमानः, सन्दितो बद्धः। विवृत्यमानो मुच्यमानः, विवृत्तो मुक्तः।

पलायितुमुद्यतः पलायिष्यमाणः; निर्वर्तितपलायनः पलायितः। पलायनपरित्याग उपरमः; स च भावी भूतश्च। शालाप्रवेशो निवेशनम्; तच्च भावि वर्त्तमान मतीतञ्चेति त्रिविधम्। प्रविश्य शालायां स्थितिर्निषदनम्; तदपि पूर्ववत् त्रिविधम्। एतच्च त्रैविध्यं सर्वत्र द्रष्टव्यम्। क्षणमात्रं पादसङ्कोच आसनम्। पार्श्वस्य-भूमिसर्गो निपतनम्। पादप्रसारणं शयनम्। चक्षुषोर्निमीलनं सम्मीलनम्। स्वापो निद्रा, तत्परित्यागः प्रबोधः। बाह्यावलोकनं जागरणम्। अश्वपालकानामुत्थापनशब्दानुसन्धानं श्रवणम्। तृणखाद्यान्वेषणं वीक्षणम्। शालाया बहिर्निर्गमनं संहानम्। निर्गत्य भूमौ विलुण्ठनं विवर्त्तनम्। तदनन्तरमूर्ध्वं स्थितिरुत्थानम्। उत्थितस्य धूलिमपनेतुं शरीरचालनं विधूननम्। पादस्योन्नमनमुत्क्रमणम्; मन्दगमनं च क्रमणम्। दन्तपङ्क्तिभ्यां पृष्ठभागे दंशनं कण्डूयनम्। कुड्यस्तम्भादौ शरीरघर्षणं निकषणम्। अदनादयः प्रसिद्धाः। प्रजा अश्वस्यापत्यानि। प्रजननं तदुत्पादनम्। सर्वशब्देनावशिष्टान्यश्वचरितानि सङ्गृह्यन्ते ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके एकोनविंशोऽनुवाकः॥



अ॒ग्नये॒ स्वाहा॑ वा॒यवे॒ स्वाहा॑ सूर्या॑य॒ स्वाहा॑(१) ऋ॒तम॑-सि॒ ऋ॒तस्य॑ ऋ॒तम॑सि स॒त्यम॑सि स॒त्यस्य॑ स॒त्यम॑(२) ऋ॒तस्य॒ पन्था॑ असि दे॒वानां॑ छा॒याम॒ृत॑स्य॒ नाम॒ तत्स॒त्यं यत्त्वं प्र॒जाप॑ति-

रस्य(६)धि यदस्मिन् वाजिनीव शुभः स्पर्धन्ते दिवः सूर्येण विशोऽपो वृणानः पवते काव्यन् पशुं न गोपा इर्यः परिज्मा(७) ॥ २० ॥

अग्नये *ऽष्टाचत्वारिंशत् ॥ २० ॥

कल्पः—"अग्नये स्वाहा, वायवे स्वाहेत्येतं हुत्वा"—इति। एतस्मिन्ननुवाके, त्रीन्मन्त्रानाह— "अग्नये स्वाहा, वायवे स्वाहा, सूर्याय स्वाहा(१)"—इति। अथ चतुर्थपञ्चममन्त्रावाह—"ऋतमस्यृतस्यर्तमसि; सत्यमसि, सत्यस्य सत्यमसि(२)"—इति। हे अश्व! त्वम् 'ऋतं' यन्मानसं सत्यं, तदसि; यागरक्षितानां पुरुषाणां यदृतं तस्याप्युत्तमं त्वम्; सत्यमसि, तव यागसाधनत्वात्। एवं †सत्यवाक्यमपि वाचकविषयत्वेन व्याख्येयम्। अथ षष्ठमन्त्रमाह—"ऋतस्य पन्था असि, देवानां छाया ऽमृतस्य नाम तत्सत्यं यत् त्वं प्रजापतिरसि(१)"—इति। 'ऋतस्य' यज्ञस्य 'पन्था' मार्गोऽसि, तद्द्वारेण हि यागो निवर्त्यते। तथा 'देवानां छायासि' यथा घर्मकाले वृक्षस्य छाया सुखप्रदा, तथा त्वं सुखप्रदोऽसि; अत एव त्वम् 'अमृतस्य नामासि' देवा हि त्वदीयं हविः पीयूषमित्येव स्वीकुर्वन्ति। त्वं 'प्रजापतिरूपोऽसि'—इति यत्तत्सत्यम्, नात्र कश्चिदुपचारोऽस्ति; प्रजापते रश्वेव हि तदाकारेण निष्पन्ना‡। अथ सप्तममाह—"अधि यदस्मिन् वाजिनीव

* "अग्नये वायवे"—इति क, ख, ग।

† "एवं सत्ये वाक्यमपि"—इति क, ख।

‡ "प्रजापतेरश्वेव हि तदाकारेण निष्पन्नम्"—इति क, ख।

शुभ स्पर्द्धन्ते दिवः सूर्येण विशोऽपो वृणानः पवते कव्यन् पशुं न गोपा इर्यः परिज्मा[५]"—इति। 'यद्' यस्मात् कारणात् 'वाजिनि' अस्मिन् अश्वे 'शुभः' शोभनो गुणसङ्घः 'अधीव' देवेभ्योऽप्यधिक इव दृश्यते, तस्मात् कारणाद् 'दिवः' सम्बन्धिनो 'विशः' मरुद्गणाः 'सूर्येण' सूर्यसमानेनाश्वेन सार्द्धं 'स्पर्द्धन्ते',—वयं गुणाधिकाः, अश्वो न गुणाधिकः, इत्येवं स्पर्द्धां कुर्वन्ति; तादृशोऽयमश्वः। किञ्चायम् 'अपो वृणानः' इदं कर्म प्रवर्तयितुमिच्छन् 'पवते' विश्वं पुनाति। तत्र दृष्टान्तः—'कव्यन् पशुं न'। यथा यागेषु स्तुतिमिच्छन् देवः पशुं वृणीते, तथायमश्वः कर्मेदं वृणीते; देवो हि नानाविधाभिः स्तुतिभिः स्तूयमानः पशुरूपं हविरिति प्रीतिपूर्वकमिच्छति, एव मश्वोऽप्यनेकैर्होमैस्तावकैर्मन्त्रैश्च परितुष्टः कर्मेदं समापयितुं मिच्छतीत्यर्थः। कीदृशोऽश्वः? 'गोपाः' ऋत्विग्यजमानानां रक्षकः। 'इर्यः' कर्मद्वाराक्षहेतुः। 'परिज्मा' परितः स्वर्गलोकादौ गन्तुं समर्थः। एतैः सप्तभिर्मन्त्रैर्होमो बौधायनेनापि दर्शितः—"सावित्राणि जुहोत्यग्नये स्वाहा वायवे स्वाहेति सप्त"—इति॥

अथ विनियोगसङ्ग्रहः—

उच्यन्ते ह्यनुवाकार्थाः सप्तमाद्यप्रपाठके।
अग्निष्टोमविधिस्त्वाद्ये, द्वितीये स्तोमसंस्तवः।
सर्वस्तोमस्तृतीये स्याच्चतुर्थे तु द्विरात्रकः।
त्रिरात्रः पञ्चमे, षष्ठे स्युः सहस्रतमीगताः।
होमाद्याः; सप्तमे दानं, चतूरात्रोऽग्निमोऽष्टमे।
द्वितीयो नवमे, पञ्चरात्रो दशम ईरितः। (१-१०)

अत ऊर्द्धं त्वश्वमेधमन्त्राणां विनियोजनम्।
उच्यते, रशनामेवं गृहीत्वा मन्त्रयेदिमाम्।
अभिधेत्यश्वमाबध्य चयो मन्त्रा इहेरिताः। (११)
विभूः कर्णे वाचयीत, अग्नये पूर्वहोमकान्।
पञ्चेह पत्नु जुहुयाच्चतुर्भिर्भूरसीत्यतः।
अश्वमुत्सृजते देवरक्षिभ्योऽश्व प्रयच्छति।
अनुवाके द्वादशेऽस्मिन् मन्त्रा द्वादश वर्णिताः। (१२)
आयनोद्द्रावहोमस्तु तत्र मन्त्रास्त्रयोदश। (१३)
अग्नये पूर्वहोमाः स्युर्मन्त्रा एकादश स्मृताः। (१४)
पृथिव्या इति ते होमा मन्त्रा अथैकविंशतिः। (१५)
अग्नये पूर्वदीक्षार्था होमा एकादश स्मृता। (१६)
पृथ्वीत्यपि तथा होमा द्वाविंशतिरुदीरिता। (१७)
भुव इत्युदीचाख्यमन्त्रैश्चर्माधिरोहणम्।
मन्त्रयेदष्टभि पत्नु जुहुयादिह पूर्ववत्।
अष्टादशानुवाकेऽस्मिन् मन्त्रा द्वादश वर्णिता। (१८)
ईमश्वचरितैर्होममन्त्राश्चत्वार ईरिताः। (१९)
अग्नये सप्तभिर्मन्त्रैर्होमः साविच ईरित॥ (२०)

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयात् विद्यातीर्थमहेश्वरः॥७॥१॥

इति श्रीमायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके विंशोऽनुवाकः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये 'वेदार्थ-प्रकाश'-नामकृष्णयजुस्तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डीयव्याख्याने प्रथमः प्रपाठकः समाप्तः ॥

(१)प्रजननं (२)प्रातस्सवने (३)ब्रह्मवादिनो (४)ऽङ्गिरस (५)आपः (६)सोमः (७)सहस्रतम्या (८)ऽर्चि(९)र्जमदग्निः (१०)संवत्सरो (११)देवस्य (१२)विभू(१३)रायनाया(१४)ग्नये (१५)पृथिव्या (१६)अग्नये (१७)पृथिव्यै (१८)भुव (१९)ईङ्का-राया(२०)ग्नये विंशतिः* ॥ १† ॥

(१)प्रजननम् (२)मङ्गिरसः (३)सोमो वै (४)प्रतिगृह्णाति (५)विभू(६)र्वीं समाणाय द्विपञ्चाशत् ॥ १‡ ॥

इति तैत्तिरीयसंहितायां
सप्तमकाण्डे प्रथमः प्रपाठकः ॥ १ ॥

---

* प्रपाठकेऽत्र ये विंशतिरनुवाकास्तेषामेवेमानि प्रतीकपदानि ।

† "(१)प्रजननं (२)प्रातस्सवने वै (३)ब्रह्मवादिन ०—० स त्वा (४)अङ्गिरस (५)आपो वै (६)सोमो वै (७)सहस्रतम्या(८)ऽर्चि(९)र्जमदग्नि (१०)संवत्सरो (११)देवस्य (१२)विभू(१३)रायनाया(१४)ग्नये (१५)पृथिव्या (१६)अग्नये (१७)पृथिव्यै (१८)भुव (१९)ईङ्काराया(२०)ग्नये वायवे सूर्याय विंशति ॥ १ ॥" —इति क, ख, ग ।

‡ १४० पृ० ६ पं०, १६५ पृ० ७ पं०, १८२ पृ० ८ पं०, १९२ पृ० ४ पं, २१४ पृ० ७ पं०, २२६ पृ० १३ पं० । मु०-पुस्तके तु नास्त्येतद्वाक्यम् ।

अथ तैत्तिरीयसंहितायां

सप्तमकाण्डे

द्वितीय प्रपाठकः ।

॥ हरिः ओम् ॥

साध्या वै देवाः सुवर्गकामा एतꣳ षड्रात्रमपश्यन्तमाहरन्तेनायजन्त ततो वै ते सुवर्गं लोकमायन्य एवं विद्वाꣳसः षड्रात्रमासते सुवर्गमेव लोकं यन्ति[1] देवसत्रं वै षड्रात्रः प्रत्यक्षꣳ ह्येतानि पृष्ठानि य एवं विद्वाꣳसः षड्रात्रमासते साक्षादेव देवता अभ्यारोहन्ति[2] षड्रात्रो भवति षड् वा ऋतवः षट् पृष्ठानि (१)

पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संवत्सरं ते संवत्सर एव प्रति तिष्ठन्ति[3] बृहद्रथन्तराभ्यां यन्तीयं वाव रथन्तरमसौ बृहदाभ्यामेव यन्त्यनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति[4] त्रिवृदग्निष्टोमो भवति तेज एवाव रुन्धते पञ्चदशो भवतीन्द्रियमेवाव रुन्धते सप्तदशः (२)

भवत्यन्नाद्यस्यावरुध्या अथो प्रैव तेन जायन्त एक-
विꣳशो भवति प्रतिष्ठित्या अथो रुचमेवात्मन् दधते
त्रिणवो भवति विजित्यै त्रयस्त्रिꣳशो भवति प्रतिष्ठित्यै(५)
सदोहविर्धानिन एतेन षड्रात्रेण यजेरन्नाश्वत्थी
हविर्धानं चाग्नीध्रश्च भवतस्तद्धि सुवर्ग्यं(६) चक्रीवती
भवतः सुवर्गस्य लोकस्य समष्ट्या(७) उलूखलबुध्नो यूपो
भवति प्रतिष्ठित्यै(८) प्राञ्चो यान्ति प्राङिव हि सुवर्गः
(३)

लोकः(९) सरस्वत्या यान्त्येष वै देवयानः पन्थास्त-
मेवान्वारोहन्त्या(१०)क्रोशन्तो यान्त्यवर्त्तिमेवान्यस्मिन्
प्रतिषज्य प्रतिष्ठां गच्छन्ति(११) यदा दश शतं कुर्वन्त्यथैक-
मुत्थानꣳ शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये
प्रति तिष्ठन्ति(१२) यदा शतꣳ सहस्रं कुर्वन्त्यथैकमुत्था-
नꣳ सहस्रसम्मितो वा असौ लोकोऽमुमेव लोकमभि
जयन्ति(१३) यदा (४)

एषां प्रमीयेत यदा वा जीयेरन्नथैकमुत्थानं तद्धि
तीर्थम्(१४) ॥ १ ॥

पृष्ठानि[१] सप्तदशः[२] सुवर्गो[३] यदै[४]कादश* च ॥१॥

---

* "सुवर्गो[३] जयन्ति यदै[४]कादश"—इति क, ख, ग।

श्रीगणेशाय नमः।

यस्य निःश्वसितं वेदा, यो वेदेभ्योऽखिलं जगत्।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥१॥
अहीनाः पञ्चरात्रान्ताः प्रथमे समुदीरिताः।
षड्रात्राद्या द्वितीयेऽथ वक्ष्यन्तेऽस्मिन् प्रपाठके ॥२॥

तत्र प्रथमेऽनुवाके षड्रात्रं विधत्ते—"साध्या वै देवाः सुवर्गकामा एतꣳ षड्रात्रमपश्यन्, तमाहरन्, तेनायजन्त, ततो वै ते सुवर्गं लोकमायन्, य एवं विद्वाꣳसः षड्रात्रमासते, सुवर्गमेव लोकं यन्ति[1]"—इति। साध्यशब्दो देवगणविशेषवाची। अत्र सर्वत्र दर्शनं शास्त्रीयनिश्चयः। आहरणं सामग्रीसम्पादनम्। यजनमनुष्ठानम्। यद्यप्ययं षड्रात्रोऽहीनत्वाद्यजतिचोदनाया विषयः, तथाप्यत्र केषाञ्चित् सारस्वतसत्रधर्माणां सद्भावमभिप्रेत्य 'विद्वांस आसते'—इत्यपि चोदनया विहितः। ते च धर्माः "आयत्यां हविर्धानञ्च"—इत्यादिना वक्ष्यन्ते* ॥

एतमेव सत्रलोपचारमभिप्रेत्य प्रशंसति—"देवसत्रं वै षड्रात्रं, प्रत्यक्षꣳ ह्येतानि पृष्ठानि य एवं विद्वाꣳसः षड्रात्रमासते, साक्षादेव देवता अभ्यारोहन्ति[2]"—इति। देवानां सत्रत्वप्रियत्वादिदं 'देवसत्रम्'। तदेव सत्रत्वप्रियत्वं स्पष्टीक्रियते। सत्ररूपे द्वादशाहे यः पृष्ठ्यः षडहः, तस्मिन् षट्सु दिनेषु यानि पृष्ठस्तोत्राणि, रथन्तर-बृहद्-वैरूप-वैराज-शाक्वर-रैवताख्यानि† सामभिर्निष्पाद्यानि। एता-

* अस्मिन्नेवानुवाके, २४८पृ० १७पं० द्रष्टव्यम्।
† २०६ पृ० '६' द्रष्टव्यम्।

न्यत्रापि षट्सु दिनेषु क्रमेण विशिष्ट*मुपलभ्यन्ते। यस्मादेवं तस्माद्देवानां सत्रवत्प्रियत्वमुचितम्। एवं देवप्रियत्वं विदित्वानुष्ठानेन बहुकालव्यवधानमन्तरेणैव देवताः प्राप्नोति॥

अथाहर्गतां षट्सङ्ख्यां प्रशंसति—"षड्रात्रो भवति, षड्वा ऋतवः, षट् पृष्ठानि, पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संवत्सरं, ते संवत्सर एव प्रति तिष्ठन्ति[3]"—इति। ऋतवो यथा षट्सङ्ख्याकाः, एवं पृष्ठान्यपि षट्सङ्ख्याकानि, अतः पृष्ठैः ऋतुद्वारा सवत्सरं प्राप्य तत्र प्रतितिष्ठन्ति॥

एतेषु षट्सु पृष्ठस्तोत्रेषु प्रथमद्वितीययोरह्नोरनुष्ठेये रथन्तर-बृहत्-पृष्ठे ये स्तोत्रे, ते विशेषेण प्रशंसति—"बृहद्रथन्तराभ्यां यन्तीयं वाव रथन्तरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती, ताभ्यामेव सुवर्गं लोकं यन्ति[4]"—इति। शब्दशास्त्रप्रोक्त एवात्र बृहच्छब्दस्य पूर्वनिपात†, अनुष्ठानन्तु रथन्तरस्यैव प्रथमम्। 'यन्ति' स्तोत्र मनुतिष्ठेयुरित्यर्थः। अनयोः साम्नोर्लोकद्वयरूपत्वाल्लोकाभ्यामेव तदनुष्ठित भवति। अपि चानुष्ठातारो लोकयोर्द्वयोः प्रतितिष्ठन्त्येव। किञ्चैते सामनी यज्ञस्यार्जवेन समाप्तिप्रापकौ मार्गौ, अतस्ताभ्यामेव स्वर्गं प्राप्नुवन्ति॥

अथ षट्सङ्ख्याकान्यहानि चोदकप्राप्तानि विस्पष्टं दर्शयति—"त्रिवृदग्निष्टोमो भवति, तेज एवाव रुन्धते, पञ्चदशो भवतीन्द्रियमेवाव रुन्धते, सप्तदशो भवत्यन्नाद्यस्यावरुध्या अथो प्रैव तेन जायन्त; एकविंशो भवति प्रतिष्ठित्या अथो रुचमेवात्मन् दधते, त्रिणवो

---

* "प्रत्यक्ष"—इति क.।

† "अन्याचतरम्"—इति पा० सू० २. २. ३४. द्रष्टव्यम्।

भवति विजित्यै, त्रयस्त्रिंशो भवति प्रतिष्ठित्यै(५)"—इति । त्रिवृदा-दय शब्दाः पूर्वोक्तपञ्चरात्रानुवाकवदत्रापि व्याख्येयाः* । तत्र सत्र-धर्मातिदेशाभावेन बहुयजमानकल्पनियमाभावादेकवचनेन निर्देशः, इह तु तन्नियमसद्भावाद्बहुवचनेन निर्देशः । प्रकृतिरूपे पृष्ठ्यषडहे† त्रिवृदग्निष्टोमो रथन्तरसामा प्रथममहः, पञ्चदश उक्थ्यो बृहत्-सामा द्वितीयं, सप्तदश उक्थ्यो वैरूपसामा तृतीयं, एकविंशः षोडशी वैराजसामा चतुर्थं, त्रिणव उक्थ्यः शाक्वरसामा पञ्चमं, त्रयस्त्रिंश उक्थ्यो रैवतसामा षष्ठं । तदिदं द्वादशाहान्तर्गतस्य पृष्ठ्यषडहस्य स्वरूपम् । तद्विकृतित्वादत्रापि तथाविधान्येव अहानि द्रष्टव्यानि ॥

अथ सारस्वतसत्रधर्माननुवाकसमाप्तिपर्यन्तमतिदिदिक्षुस्ताव-देकं धर्मं विधत्ते—"सदोहविर्द्धानिन एतेन षड्रात्रेण यजेर-न्नाश्वत्थे हविर्द्धानेऽग्नीध्रश्च भवतस्तद्धि सुवर्ग्यम्(६)"—इति । ये यजमानाः सदोहविर्द्धानाभ्यां मण्डपाभ्यां युक्ताः षड्रात्रे प्रवर्त्तन्ते,

* पञ्चरात्रानुवाके ७ १ १० । तत्र २०५—२११ पृ० द्रष्टव्यम् ।

† ता० ब्रा० १० ६ द्रष्टव्य । किञ्च द्वादशाहस्य आद्यन्तावतिरात्रौ, तौ च ज्योतिष्टोमीयातिरात्रान्न विशिष्येते । मध्ये दशाहानि,—पृष्ठ्यषडहः, त्रयश्छन्दोमाः, अविवाक्यञ्चेति । तेषु प्रथमेऽहनि अग्निष्टोमसंस्थे सर्वेष्वपि स्तोत्रेषु त्रिवृदेव स्तोमः, द्वितीयादीन्यष्टौ अहानि पञ्चदश-सप्तदशैकविंशत्रिणवत्रयस्त्रिंशचतुर्विंशचतुश्चत्वारिंशाष्टचत्वारिंशत्स्तोमकानि तत्र चतुर्थमहः षोडशिसंस्थमन्यान्युक्थसंस्थानि, दशममहस्तु चतुर्विंश-स्तोमकमग्निष्टोमसंस्थम् । तदेतत्सर्वं ता० ब्रा० ११—१५ अ०—पर्यालोचनतोऽवगन्तव्यम् ।

तेषां हविर्द्धानमाग्नीध्रञ्चेति मण्डपद्वयम् 'आश्वत्थौ' भवतः, अश्वत्थ-काष्ठनिर्मिते उभे कार्ये। तत्राश्वत्थकाष्ठं स्वर्गसाधनम् ॥

धर्मान्तरं विधत्ते—"चक्रीवती भवतः सुवर्गस्य लोकस्य समष्ट्यै(७)" —इति। यथा रथस्य शकटस्य वा चक्रम्, तथा चक्रं ययोराग्नीध्र-हविर्द्धानमण्डपयोः, ते 'चक्रीवती'। अयमर्थः—चक्रयोः रथं प्रक्षिप्य शकटाकारं कृत्वा तस्योपरि फलकान्यास्तीर्य तेषामुपरि भूमाविव *मण्डपं निर्मातव्यमिति। ईदृश च स्वर्गप्राप्तौ भवति, रथेनेव चक्र-*युक्तेन मण्डपेन गन्तुं शक्यत्वात् ॥

धर्मान्तरं विधत्ते—"उलूखलबुध्नो यूपो भवति प्रतिष्ठित्यै(८)"—इति। यथा काष्ठमयस्योलूखलस्य मूलमतिस्थूलं समतलं भवति, तथा यूपमूलं कर्त्तव्यम्। एतच्च यत्र यत्र यूपो नीयते, तत्र तत्र भूमौ खननमन्तरेणैव प्रतिष्ठापनार्थम् ॥

धर्मान्तरं विधत्ते—"प्राञ्चो यान्ति, प्राङिव हि सुवर्गो लोकः(९)" —इति। चक्रयुक्ताग्नीध्रादिभिः सह प्राङ्मुखा गच्छेयुः। स्वर्गलोकस्य प्राग्वर्त्तित्वेन प्रतिभानात्। एतच्चोक्तं सूत्रकारेण—"तस्मिन् संस्थिते-ऽध्वर्युः शम्यां प्राचः प्रास्यति, स यत्र निपतति, तद्गार्हपत्यम्। तस्मिन् षड्त्रिंशतं प्राचः प्रक्रमान् प्रक्रामति, तदाहवनीयः। चक्रीवन्ति सदोहविर्द्धानान्याग्नीध्रश्चाश्वत्थौ हविर्द्धानमाग्नीध्रश्चोलूखलबुध्नो यूपः प्रकृत्येदुप्तोप्त एव नोपरवान् खनन्ति"—इति। एकस्मिन्नह्नि समाप्ते सति परेद्युः प्रातः शम्याक्षेपमात्रं गत्वा, तत्राहरन्तरमनुष्ठेयम्*, तस्मिन्नपि समाप्ते ततः परेद्युरपि तथेत्यर्थः ॥

* "तत्राहरन्तमनुष्ठाय"—इति क, "तत्राहरन्तरमनुष्ठाय"—इति ख।

भवति विजित्यै; त्रयस्त्रिंशो भवति प्रतिष्ठित्यै[५]”—इति । त्रिवृदा-दयः शब्दाः पूर्वोक्तपञ्चरात्रानुवाकवदत्रापि व्याख्येयाः* । तत्र सत्र-धर्मातिदेशाभावेन बहुयजमानकत्वनियमाभावादेकवचनेन निर्देशः; इह तु तन्नियमसद्भावाद्बहुवचनेन निर्देशः । प्रकृतिरूपे पृष्ठ्यषडहे त्रिवृदग्निष्टोमो रथन्तरसामा प्रथममहः, पञ्चदश उक्थ्यो बृहत्-सामा द्वितीयः, सप्तदश उक्थ्यो वैरूपसामा तृतीयः, एकविंशः षोडशी वैराजसामा चतुर्थः, त्रिणव उक्थ्यः शाक्वरसामा पञ्चमः, त्रयस्त्रिंश उक्थ्यो रैवतसामा षष्ठः । तदिदं द्वादशाहान्तर्गतस्य पृष्ठ्यषडहस्य स्वरूपम्† । तद्विकृतित्वादत्रापि तथाविधान्येव अहानि द्रष्टव्यानि ॥

अथ सारस्वतसत्रधर्माननुवाकसमाप्तिपर्यन्तमतिदिदिक्षुस्तावद-देकं धर्मं विधत्ते—“सदोहविर्द्धानिन एतेन षड्रात्रेण यजेर-न्नाश्वत्थे हविर्द्धानञ्चाग्नीध्रञ्च भवतस्तद्धि सुवर्ग्यम्[६]”—इति । ये यजमानाः सदोहविर्द्धानाभ्यां मण्डपाभ्यां युक्ताः षड्रात्रे प्रवर्त्तन्ते,

---

* पञ्चरात्रानुवाक ७. १. १० । तत्र २०५–२११ पृ० द्रष्टव्यम् ।

† ता० ब्रा० १०. ६. द्रष्टव्य । किञ्च द्वादशाहस्य आद्यन्तावतिरात्रौ, तौ च ज्योतिष्टोमीयातिरात्रान्न विशिष्येते । मध्ये दशाहानि,—पृष्ठ्यः षडहः, त्रयश्छन्दोमाः, अविवाक्यश्चेति । तेषु प्रथमेऽहनि अग्निष्टोमसंस्थे सर्वेष्वपि स्तोत्रेषु त्रिवृदेव स्तोमः, द्वितीयादीन्यष्टौ अहानि पञ्चदश-सप्तदशैकविंशत्रिणवत्रयस्त्रिंशच्चतुर्विंशचतुश्चत्वारिंशदष्टचत्वारिंशत्स्तोमकानि, तत्र चतुर्थमहः षोडशिसंस्थमन्यान्युक्थ्यसंस्थानि; दशममहस्तु चतुर्विंश-स्तोममग्निष्टोमसंस्थम् । तदेतत्सर्वं ता० ब्रा० ११–१५ अ०—पर्यालोच-नतोऽवगन्तव्यम् ।

तेषां हविर्द्धानमाग्नीध्रञ्चेति मण्डपद्वयम् 'आश्वत्थी' भवतः, अश्वत्थ-काष्ठनिर्मिते उभे कार्ये। तत्राश्वत्थकाष्ठं स्वर्गसाधनम् ॥

धर्मान्तरं विधत्ते—"चक्रीवती भवतः सुवर्गस्य लोकस्य समष्ट्यै(७)"—इति। यथा रथस्य शकटस्य वा चक्रम्, तथा चक्रं ययोराग्नीध्र-हविर्द्धानमण्डपयोः, ते 'चक्रीवती'। अयमर्थः—चक्रयो रथं प्रक्षिप्य शकटाकारं कृत्वा तस्योपरि फलकान्यास्तीर्य तेषामुपरि भूमाविव मण्डपं निर्मातव्यमिति। ईदृशं च स्वर्गप्राप्त्यै भवति; रथेनेव चक्र-युक्तेन मण्डपेन गन्तुं शक्यत्वात् ॥

धर्मान्तरं विधत्ते—"उलूखलबुध्नो यूपो भवति प्रतिष्ठित्यै(८)"—इति। यथा काष्ठमयस्योलूखलस्य मूलमतिस्थूलं समतलं भवति, तथा यूपमूलं कर्त्तव्यम्। एतच्च यत्र यत्र यूपो नीयते, तत्र तत्र भूमौ खननमन्तरेणैव प्रतिष्ठापनार्थम् ॥

धर्मान्तरं विधत्ते—"प्राञ्चो यान्ति, प्राङिव हि सुवर्गो लोकः(९)"—इति। चक्रयुक्ताग्नीध्रादिभिः सह प्राङ्मुखा गच्छेयुः। स्वर्गलोकस्य प्रागवर्त्तित्वेन प्रतिभानात्। एतच्चोक्तं सूत्रकारेण—"तस्मिन् संस्थितेऽध्वर्युः शम्यां प्राचः प्रास्यति, स यत्र निपतति, तद्गार्हपत्यम्। तस्मिन् षट्त्रिंशतं प्राचः प्रक्रमान् प्रक्रामति, तदाहवनीयः। चक्रीवन्ति सदोहविर्द्धानान्याग्नीध्रञ्चाश्वत्थौ हविर्द्धानमाग्नीध्रञ्चोलूखलबुध्नो यूपः प्रकृत्येदुपोप्त एव नोपरवान् खनन्ति"—इति। एकस्मिन्नह्नि समाप्ते सति परेद्युः प्रातः शम्याक्षेपमात्रं गत्वा, तत्राहरन्तरमनुष्ठेयम्*, तस्मिन्नपि समाप्ते ततः परेद्युरपि तथेत्यर्थः ॥

* "तत्राहरन्तमनुष्ठाय"—इति क, "तत्राहरन्तरमनुष्ठाय"—इति ख।

धर्मान्तरं विधत्ते— "सरस्वत्या यान्त्येष वै देवयानः पन्थास्तमे-वान्वारोहन्ति[१०]"—इति । या सरस्वत्याख्या नदी, तया सह तत्तीरे प्रतिदिनं गच्छेयुः । एष सरस्वतीतीरगतो मार्गो 'देवयानः' देवान् प्रापयितुं क्षमः, अतस्तमेव प्राप्नुवन्ति ।

धर्मान्तरं विधत्ते— "आक्रोशन्तो यान्त्यवर्त्तिमेवान्यस्मिन् प्रतिषज्य प्रतिष्ठां गच्छन्ति[११]"—इति । उत्साहातिशयेन क्रियमाण उच्चतमो ध्वनिः 'आक्रोशः', तं कुर्वन्तो गच्छेयुः । धनसङ्कोचमन्तरेण जीवनं 'वर्त्तिः', तद्वैपरीत्येन दारिद्र्यम् 'अवर्त्तिः' । अवर्त्तिरेवावर्त्तिः* । ताम्अवर्त्तिम् 'अन्यस्मिन्' वैरिणि 'प्रतिषज्य' प्रतिष्ठितत्वेन संयुक्तां कृत्वा स्वयं धनसम्पन्नां 'प्रतिष्ठां' गच्छन्ति ॥

एव मनुतिष्ठतः कालावधिरूपं धर्मान्तरं विधत्ते— "यदा दश शतं कुर्वन्त्यथैकमुत्थानꣳ ; शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठन्ति[१२]"—इति । एकेन वृषभेण सहिताः 'दश' गावो यावति काले अपत्यप्रसवेन गवां 'शतं' सम्पादयन्ति, तावन्तं कालं पौनःपुन्येनानुष्ठाय तदनुष्ठानात् 'उत्थानं' कर्त्तव्यम्, अनुष्ठानं समापयेदित्यर्थः । सोऽयमेकः समाप्तिकालः । गोशते सति पुरुषस्य शतसंवत्सरायुषोऽभागकत्वात् शतकसञ्चारेण† शतेन्द्रियत्वादायुषीन्द्रिये च प्रति तिष्ठन्ति ॥

कालावधौ पक्षान्तरं विधत्ते— "यदा शतꣳ सहस्रं कुर्वन्त्यथैकमुत्थानꣳ; सहस्रसम्मितो वा असौ लोकोऽमुमेव लोकमभिजयन्ति[१३]"—

* "ध्यावर्त्ति"—इति पाठश्चमेवैवं वा व्याख्यानं स्याद् भाष्यकारस्य ?
† "पुरुषस्य शतसंवत्सरायुष्ट्वाभागाढोशतकसञ्चारेण"—इति च, ञ ।

—इति। शतं गावो यदा पूर्ववत् सहस्रं सम्पादयन्ति, सोऽयमेक उत्थानकालः। न चातीतपक्षेण साङ्कर्यं शङ्कनीयम्, पक्षवैचित्र्येण न्यूनाधिककालसम्भवात्। गवां सहस्रसम्पत्तौ सत्यां सहस्रसङ्ख्याकैर्भोग्यजातैः समृद्धः स्वर्गः प्राप्तो भवति॥

कालावधावेवापरं पक्षद्वयं विधत्ते—"यदैषां प्रमीयेत, यदा वा जीयेरन्नथैकमुत्थानं तद्धि तीर्थम्[१४]"—इति। 'एषां' यजमानानां मध्ये कश्चिद्यदा प्रमीयेत, सोऽयमेक उत्थानकालः। यदा वा राष्ट्रक्षोभादिना शत्रुभिरेते यजमाना जिताः अपहृतसर्वस्वा भवन्ति, सोऽयमेक उत्थानकालः। उक्तविधं यदुत्थानं 'तत् तीर्थम्' पापेभ्यस्तारकम्। तस्मात् तत्पर्यन्तं षड्रात्र आवर्त्तनीयः॥ १॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः॥

---

कुसुरुबिन्द औद्दालकिरकामयत पशुमान्त्स्यामिति स एतꣳ सप्तरात्रमाहरत्तेनायजत तेन वै स यावन्तो ग्राम्याः पशवस्तानवारुन्ध य एवं विद्वान्त्सप्तरात्रेण यजते यावन्त एव ग्राम्याः पशवस्तानेवाव रुन्धे[१] सप्तरात्रो भवति सप्त ग्राम्याः पशवः सप्तारण्याः सप्त छन्दाꣳस्युभयस्यावरुध्यै[२] त्रिवृदग्निष्टोमो भवति तेजः (१)

बृहद्भ्यामेव न यन्त्यथो अनयोरेव प्रति तिष्ठन्ति यत् प्रत्यक्षं विश्वजिति पृष्ठान्युपयन्ति यथा प्रत्तां दुहे तादृगेव तत्[४]"—इति। सप्तमादह्नः पूर्वाण्यहानि यानि सन्ति, तेष्वहःसु रथन्तरबृहद्वैरूपवैराजशाक्वररैवतानि पृष्ठानि यदि 'प्रत्यक्षमुपेयुः' अविकृतानि तथैव प्रयुञ्जन्त इत्यर्थः, तथा सति सर्वपृष्ठ इति विधानाद् 'विश्वजिति' अपि सप्तमेऽह्नि यत् प्रत्यक्षमविकृतं यथा भवति तथा पृष्ठस्तोत्राणि प्रयोक्तव्यानि। एवमुभयत्रापि कृतप्रयोगे सति यथा लोके सकृद् दुग्धां गां पुनरपि दोग्धुं भ्रान्तः पुरुष उपसीदति, एवमिदम् 'उत्तमं' सप्तममहः स्यात्। तथा सत्ययं विश्वजिद् दुग्धगोवन्निःसारत्वेन कदाचिदेकरात्रयागोऽपि न भवेत्, सप्तरात्रयागान्तर्भावोऽपि न सम्भवतीति किमु वक्तव्यम्। तस्माद् विश्वजितः सारत्वाय वैरूपादीनि पृष्ठान्यवस्थाप्य पूर्वेषु षट्स्वहःसु बृहद्रथन्तरे उभे एव पृष्ठे पर्यायेणावर्त्तनीये। इयं वावेत्यादि पूर्ववत् (२२७ पृ०)। पूर्वानुवाके निषेधकस्य नकारस्याभावात् 'आभ्यामेव यन्ति'—इत्यत्र लोकाभ्यामनुष्ठानं निर्वर्त्तयन्तीति व्याख्यातम्, इह तु नः नकारस्य सद्भावात् आभ्यां नापगच्छन्तीति व्याख्येयम्। पूर्वेष्वहःसु बृहद्रथन्तरे द्वे एवानुष्ठाय विश्वजित्यविकृतानां सर्वेषां पृष्ठानामनुष्ठाने सति यथा लोके 'प्रत्तां' क्षीरं दातुं प्रदत्तां प्रसूतां गां पुरुषो दुग्धे तादृगेव तद्भवति ॥ २ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके द्वितीयोऽनुवाकः॥

---

बृहस्पतिरकामयत ब्रह्मवर्चसी स्यामिति स एतमष्टरात्रमपश्यत्तमाहरत्तेनायजत ततो वै स ब्रह्मवर्चस्यभवद्य एवं विद्वानष्टरात्रेण यजते ब्रह्मवर्चस्येव भवत्यष्टरात्रो भवत्यष्टाक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैव ब्रह्मवर्चसमव रुन्धेऽष्टरात्रो भवति चतस्रो वै दिशश्चतस्रोऽवान्तरदिशा दिग्भ्य एव ब्रह्मवर्चस मव रुन्धे[१] ( १ )

त्रिवृदग्निष्टोमो भवति तेज एवाव रुन्धे पञ्चदशो भवतीन्द्रियमेवाव रुन्धे सप्तदशो भवत्यन्नाद्यस्यावरुध्या अथो प्रैव तेन जायत एकविंशो भवति प्रतिष्ठित्या अथो रुचमेवात्मन्धत्ते त्रिणवो भवति विजित्यै त्रयस्त्रिंशो भवति प्रतिष्ठित्यै पञ्चविंशोऽग्निष्टोमो भवति प्रजापतेराप्त्यै महाव्रतवानन्नाद्यस्यावरुध्यै विश्वजित्सर्वपृष्ठोतिरात्रो भवति सर्वस्याभिजित्यै[२] ( २ )

(दिग्भ्य एव ब्रह्मवर्चस मव*)रुन्धे[१]ऽभिजित्यै[२] ॥३॥

द्वितीये सप्तरात्रोऽभिहित', अथ तृतीयेऽष्टरात्रोऽभिधीयते—"बृहस्पतिरकामयत ब्रह्मवर्चसी स्यामिति, स एतमष्टरात्रमपश्यत्, तमाहरत्, तेनायजत, ततो वै स ब्रह्मवर्चस्यभवद्, य एव विद्वा-

* नास्त्येष पाठो मु०-पुस्तके।

नष्टरात्रेण यजते, ब्रह्मवर्चसेव भवति; अष्टरात्रो भवत्यष्टाक्षरा गायत्री, गायत्री ब्रह्मवर्चसं, गायत्रियैव ब्रह्मवर्चसमव रुन्धे; ऽष्टरात्रो भवति, चतस्रो वै दिशश्चतस्रोऽवान्तरदिशा, दिग्भ्य एव ब्रह्मवर्चसमव रुन्धे(१)"—इति। पूर्वत्र कुरुविन्देन याज्ञ एवाध्ययनकाले सप्तरात्रस्य गुरुमुखेन निश्चितत्वात् कामनाया ऊर्द्ध्वं दर्शनं नापेक्षितमिति नोक्तम्, इह तु तदभावादपेक्ष्यदिलुक्तम्। गायत्र्या अष्टाक्षरत्वाद्दिशामवान्तरदिशाञ्च मिलित्वाष्टसङ्ख्योपेतत्वात् सङ्ख्याद्वारा तदुभयमुखेन ब्रह्मवर्चसप्राप्तिः॥

अथाहर्विशेषान् विधत्ते—"त्रिवृदग्निष्टोमो भवति तेज एवाव रुन्धे; पञ्चदशो भवतीन्द्रियमेवाव रुन्धे, सप्तदशो भवत्यन्नाद्यस्याव-रुध्या अथो प्रैव तेन जायत, एकविंशो भवति प्रतिष्ठित्या अथो रुचमेवात्मन्धत्ते, त्रिणवो भवति विजित्यै, त्रयस्त्रिंशो भवति प्रतिष्ठित्यै; पञ्चविंशोऽग्निष्टोमो भवति प्रजापतेराप्त्यै, महाव्रतवान-न्नाद्यस्यावरुध्यै, विश्वजित् सर्वपृष्ठोऽतिरात्रो भवति सर्वस्याभि-जित्यै(१)"—इति। पूर्वत्र षडेव पृष्ठ्यषडहगतान्यहानि, षष्ठः पञ्चविंशोऽग्निष्टोमः, इह तु तस्य सप्तमत्वात् षाडहिकानि सर्वा-ण्यहानि क्रमेणैवानुष्ठेयानि। अतिरात्रोऽष्टमः॥३॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः।

---

प्रजापतिः प्रजा असृजत ताः सृष्टाः क्षुधं न्यायन्त्स एतं नवरात्रमपश्यत् तमाहरत् तेनायजत ततो वै प्रजाभ्योऽकल्पत यर्हि प्रजाः क्षुधं निगच्छेयुस्तर्हि नवरात्रेण यजतेमे हि वा एतासां लोका अक्लृप्ता अथैताः क्षुधं नि गच्छन्तीमानेवाभ्यो लोकान् कल्पयति तान् कल्पमानान् प्रजाभ्योऽनु कल्पते कल्पन्ते (१)

अस्मा इमे लोका ऊर्जं प्रजासु दधाति[१] त्रिरात्रेणैवेमं लोकं कल्पयति त्रिरात्रेणान्तरिक्षं त्रिरात्रेणामुं लोकं यथा गुणे गुणमन्वस्यत्येवमेव तल्लोके लोकमन्वस्यति धृत्या अशिथिलम्भावाय[२] ज्योतिर्गौरायुरिति ज्ञाताः स्तोमा भवन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरेष्वेव लोकेषु प्रति तिष्ठन्ति ज्ञात्रं प्रजानाम्(२)

गच्छति[३] नवरात्रो भवत्यभिपूर्वमेवास्मिन्तेजो दधाति[४] यो ज्योगामयावी स्यात्स नवरात्रेण यजेत प्राणा हि वा एतस्मादपक्रान्ता अथैतस्य ज्योगामयति प्राणानेवास्मिन् दाधारोत यदीतासुर्भवति जीवत्येव[५] (३)

कल्पन्ते[६] प्रजानां[७] त्रयस्त्रिंशच्च ॥ ४ ॥

तृतीयेऽनुवाकेऽष्टरात्रोऽभिहितः; अथ चतुर्थे नवरात्रोऽभि-यते। तमेतं विधत्ते—"प्रजापतिः प्रजा असृजत, ताः सृष्टाः क्षुधं न्यायन्त्स एतं नवरात्रमपश्यत्, तमाहरत्, तेनायजत, ततो प्रजाभ्योऽकल्पत; यर्हि प्रजाः क्षुधं निगच्छेयुस्तर्हि नवरात्रेण यजेरन् हि वा एतासां लोका अक्लृप्ता अथैताः क्षुधं नि गच्छन्तीमानेवाभ्यो लोकान् कल्पयति; तान् कल्पमानान् प्रजाभ्योऽनुकल्पते, कल्पन्तेऽस्मा इमे लोका, ऊर्जं प्रजासु दधाति[1]"—इति। 'न्यायन्' नितरां प्राप्नुवन्। 'प्रजाभ्योऽकल्पत' प्रजानां क्षुन्निवारणाय समर्थोऽभूत्। अतो यस्मिन् काले प्रजा अन्नाभावेन क्षुधं नितरां प्राप्नुवन्ति, तदा नवरात्रेण यजेत। 'इमे' भूम्यादयो लोकाः सस्य-निष्पत्त्यभावेनैतासां प्रजानां क्षुन्निवारणार्थमसमर्था यदा भवन्ति, तदानीमेताः क्षुधं नितरां प्राप्नुवन्ति। नवरात्रयागेनेमान् लोकान् 'एतासां' प्रजानां क्षुन्निवारणसमर्थान् करोति, लोकेषु सस्यं बहु-निष्पद्यत इत्यर्थः। तान् समर्थान् लोकाननु यजमानोऽपि प्रजानां रक्षणे समर्थो भवति। ते च लोका यजमानार्थं समर्था भवन्ति, यजमानस्येच्छानुसारेण सस्यं निष्पादयन्तीत्यर्थः। ततो यजमानः प्रजासु सारसं स्थापयति॥

अथ नवरात्रं विभज्य तदवयवैस्त्रिभिर्लोकत्रयसामर्थ्यं दर्शयन् दृष्टान्तपुरःसरं प्रशंसति—"त्रिरात्रेणैवेमं लोकं कल्पयति, त्रिरात्रेणान्तरिक्षं, त्रिरात्रेणामुं लोकं, यथा गुणे गुणमन्यस्यत्येवमेव तल्लोके लोकमन्यस्यति धृत्या अशिथिलभावाय[२]"—इति। नवरात्र-मध्ये योऽयमाद्यस्त्रिरात्रः, तेन भूलोकं क्षुन्निवारणसमर्थं करोति।

तीयवारमावर्त्यते, तदा तेनान्तरिक्षं समर्थ
,रमावर्त्यते, तेन तदा स्वर्गं समर्थं करोति ।
लोके चिवृद्भ्र्मु सिसृच्चु पुरुष एकस्मिन्
जयति, ततस्तृतीयमपि योजयति, एवमेतेन
भ्यस्तेन एतस्मिन् लोके प्रथम समर्थे सति ततो
ो लोक समर्थं करोति । एतच्च सर्वासां प्रजानां
ामभिविख्याय च सम्पद्यते ॥

मानस्य चिराचस्यावयवभूतान्यहानि विधत्ते—
(ति ज्ञाताः स्तोमा भवन्तीय वाव ज्योतिरन्तरिक्ष
त्र लोकेषु प्रति तिष्ठन्ति, ज्ञाच प्रजाना गच्छति[१]"—
दिशब्दत्रयपूर्वकाः स्तोमशब्देनाभिधीयमानाः सामगैः
द्योऽहर्विशेषा विद्यन्ते*, अत एवाचाहर्विशेषा कर्त्त-
ोमः प्रथममह, गोष्टोमो द्वितीयमह, आयुष्टोम-
एते चाहर्विशेषा अत्रापि गवामयनप्रसङ्गे स्पष्टो-
ज्योतिष्टोमं प्रथममुपयन्ति ०—०, गोष्टोम द्वितीय-
, आयुष्टोम तृतीयमुपयन्ति ०—०"—इति स्रुभि-
११.१.) । एतेषा च स्तोत्रियवैषम्येण भेद, अत
आम्नायते—"एकया गौरतिरिक्त एकयायुरून"
(१.२.) । ज्योतिष्टोमे यावत्य. स्तोत्रीया, गोष्टोमे

---

ायुस्तम्भ पुरस्ताद् भवति प्रज्ञाता९ स्तोमानुपैति"—इति
३.२ ।

तावतीभ्योऽप्येकाधिका आयुष्टोमेऽप्येका न्यूना। एवमस्यामपि शाखायां 'ज्ञाताः' प्रसिद्धा। सामशाखायां तु 'चिकद्रुकाः'-इति 'ज्ञाताः' प्रसिद्धाः*, त एतेऽत्रानुष्ठेयाः। ज्योतिरादीनां लोकत्रयरूपत्वात्तेष्वय प्रतितिष्ठति, किञ्च प्रजानां मध्ये यद् 'ज्ञात्रं गच्छति' पुनिवर्त्तकोऽयमित्येव सर्वैर्ज्ञातत्व 'ज्ञात्र' ख्याति प्राप्नोतीत्यर्थ॥

ज्योतिर्गौरायुरित्ययमेव त्रिरात्र आवर्त्त्यमानो नवरात्रः सम्पद्यते। अत एव सूत्रकारेणोक्तम्—"शललीपिशङ्गेनाद्यकामो ज्योतिर्गौरायुर्गौर्ज्योतिरतिरात्र."—इति। चतुर्विधेषु नवरात्रयागेष्विदानीमुच्यमानस्य 'शललीपिशङ्ग'-इत्येतन्नाम†॥

नवरात्रक्रतु प्रशंसति—"नवरात्रो भवत्यभिपूर्वमेवास्मिन् तेजो दधाति(४)"—इति। योऽयं ज्योतिरादिकस्त्रिरात्रः, स एवावर्त्त्यमानो, नवरात्रो भवति। तदनुष्ठानेन 'अभिपूर्वमेव' आनुक्रमेणैव यजमाने तेज सम्पादयति। सकृदनुष्ठितस्त्रिरात्र., द्विरनुष्ठितः षड्रात्र, त्रिरनुष्ठितो नवरात्र, एवं तेजोऽप्युत्तरोत्तर वर्द्धत इत्यर्थः॥

तदेवमन्नसम्पादनद्वाराक्षुन्निवारणार्थं नवरात्रो विहित., अथ दीर्घरोगनिवृत्त्यर्थमपि तमेव विधत्ते—"यो ज्योगामयावी स्यात्, स नवरात्रेण यजेत, प्राणा हि वा एतस्मादपक्रान्ता., अथैतस्य ज्योगा-

* "सर्वा वा एत्रे स्तोमा•—•एते वै त्रिकद्रुका स्तोमा"—इति ता• ब्रा• १६ ३।

† साम ब्राह्मणे द्वौ नवरात्रौ विहितौ। तत्र प्रतायुष्यसाधन प्रथम, पशुसाधनो द्वितीय। ता• ब्रा• २२ प्र• १२, १३ खण्डयोर्द्रष्टव्यौ।

मयति प्राणानेवास्मिन् दाधारोत यदीतासुर्भवति जीवत्येव[१]"— इति। 'ज्योगामयावी' चिरकालीनरोगयुक्तः। तस्य पुरुषस्य प्राणा' यदा धातुवैषम्याद् 'अस्ता' धारयितुमशक्या भवन्ति, तदानीमेतस्य पुरुषस्य 'ज्योगामयति' दीर्घरोग उत्पद्यते। नवरात्रानुष्ठानेन प्राणान् अस्मिन् धारयत्येव। अपि च रोगाधिक्यान्मूर्च्छया पूर्वं मुहूर्त्तमात्र याममात्र वा गतप्राणो भवति, तदप्येतत्क्रतुसामर्थ्यादय पुनर्जीवत्येव ॥ ४ ॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥

---

प्रजापतिरकामयत प्र जायेयेति स एत दशहोतारमपश्यत्तमजुहोत्तेन दशरात्रमसृजत तेन दशरात्रेण प्राजायत दशरात्राय दीक्षिष्यमाणो दशहोतारं जुहुयाद्दशहोत्रैव दशरात्रः सृजते तेन दशरात्रेण प्र जायते[१] वैराजो वा एष यज्ञो यद्दशरात्रो य एवं विद्वान् दशरात्रेण यजते विराजमेव गच्छति[२] प्राजापत्यो वा एष यज्ञो यद्दशरात्रः ( १ )

य एवं विद्वान् दशरात्रेण यजते प्रैव जायत[३] इन्द्रो वै सदृङ् देवताभिरासीत्स न व्यावृत*मगच्छत्स

---

* इह खण्डे सर्वत्रैव 'व्यावृत्त'—इति क, टी० क।

आदौ तत्साधनभूतं दशरात्रक्रतुमुत्पादयितुम्, तत्रापि साधनभूतं दशहोताख्य "चित्ति स्रुक्, चित्तमाज्यम्"—इत्यादिकं मन्त्रमारण्यकाण्डोक्त (३.१.१.) निश्चित्य, तेन मन्त्रेण हुत्वा क्रतुञ्च सृष्ट्वा, प्रजा असृजत। तस्मिन् मन्त्रे चित्तिस्रुगित्यारभ्य सामाध्वर्युरित्यन्तैर्वाक्यैर्होमनिष्पादकानां स्रुगादीनां दशानामभिधानादयं मन्त्रो 'दशहोता'*। यद्वा तस्मिन्मन्त्राभिमानी पुरुषः† दशवारमाहुतः प्रत्यशृणोत्, तस्मादयं 'दशहोता'। तथाच होतृब्राह्मणे‡ समाम्नायते—"आत्मन्नात्मन्नित्यामन्त्रयत, तस्मै दशमꣳ हुतः प्रत्यशृणोत्, स दशहुतोऽभवत्, दशहुतो ह वै नामैष, तं वा एतं दशहुतꣳ सन्तं दशहोतेत्याचक्षते परोक्षेण, परोक्षप्रिया इव हि देवाः"—इति (तै॰ब्रा॰ २.२.११.१.)। तमेत मन्त्रं दशरात्रदीक्षार्थं जुहुयात्। तेन होमेन दशरात्रक्रतु सृष्ट्वा तेन दशरात्रेण प्रजा मुत्पादयति॥

* "चित्ति स्रुक। चित्तमाज्यम्। वाग् वेदि। आधीतं वर्हि। केतो अग्नि। विज्ञातमग्नि। वाकपतिर्होता। मन उपवक्ता। प्राणो हवि। सामाध्वर्यु."—इति तै॰ आ॰ ३ १ १। 'आदौ सिसृक्षु प्रजापति· दृष्ट्वार्थं केन विधानेन आध्यात्मिकेनेष्टवान्? तद्यागवर्त्तिन· स्रुगादय एतेषु मन्त्रेषु प्रतिपाद्यन्ते'—इत्यादि तत्र सा॰ भा॰।

† "ब्राह्मण एकहोता॰—॰, अग्निर्द्विहोता॰—॰, पृथिवी त्रिहोता॰—॰, अन्तरिक्षं चतुर्होता॰—॰, वायु पञ्चहोता॰—॰, चन्द्रमा षड्ढोता॰—॰, अन्नꣳसप्तहोता॰—॰, द्यौरष्टहोता॰—॰, आदित्यो नवहोता॰—॰, प्रजापतिर्दशहोता॰—॰"—इति तै॰ आ॰ ३. ७. १—१०।

‡ एतच्छाखीये एवेति ध्येयम्।

अथ दशसङ्ख्यामुपजीव्य क्रमं प्रशंसति—"वैराजो वा एष यज्ञो यद्दशरात्रो य एवं विद्वान् दशरात्रेण यजते विराजमेव गच्छति[१]"—इति। दशसङ्ख्याया विराट्सम्बन्धित्वाद् विराट्छन्द'साध्यमन्नं प्राप्नोतीत्यर्थः॥

प्रजापतिसृष्टत्वेन क्रतोस्तत्सम्बन्धमुपजीव्य प्रशंसति—"प्राजापत्यो वा एष यज्ञो यद्दशरात्रो य एवं विद्वान् दशरात्रेण यजते प्रैव जायते[२]"—इति॥ प्रजोत्पादनलक्षणं फलमभिधाय पापक्षयलक्षणं फलमभिधत्ते—"इन्द्रो वै सदृङ् देवताभिरासीत्, स न व्यावृतमगच्छत्, स प्रजापति मुपाधावत् तस्मा एतं दशरात्रं प्रायच्छत्; तमाहरत्, तेनायजत, ततो वै सोऽन्याभिर्देवताभिर्व्यावृतमगच्छद्, य एवं विद्वान् दशरात्रेण यजते, व्यावृतमेव पाप्मना भ्रातृव्येण गच्छति[३]"—इति। पुरा कदाचिदिन्द्रोऽन्याभिर्देवताभिः समान एवासीत्, न तु व्यावृत्तिं प्राप्तवान्,—'भो इन्द्र! गच्छगच्छ'-इत्येवमेव सर्वे देवा व्यवहरन्ति, न तु कश्चित् 'राजन्! स्वामिन्!' इति व्यवहरति। ततः प्रजापतिमुपसेव्य तन्मुखाद्दशरात्रं क्रतुमवगत्य तदनुष्ठानेन व्यावृत्तिं प्राप्तवान्। एव मन्येऽप्येतदनुष्ठाय पाप्मना भ्रातृव्येण च वियोगं गच्छन्ति॥

विधास्यमानेषु दशस्वहःसु त्रयाणामह्नां वृषभसम्बन्धिककुत्साम्येनौन्नत्यं सम्पाद्य प्रशंसति—"त्रिककुद्वा एष यज्ञो यद्दशरात्र',—ककुत्पञ्चदशः, ककुदेकविंश', ककुत्त्रयस्त्रिंशः, य एवं विद्वान् दशरात्रेण यजते, त्रिककुदेव समानानां भवति, यजमानः पञ्चदशो यजमान एकविंशो यजमानस्त्रयस्त्रिंशः पुर इतराः[४]"—इति।

त्रीणि ककुत्सदृशानि उन्नतस्तोमयुक्तान्यहानि यस्य दशरात्रस्य, सोऽयं 'त्रिककुत्'। किं तदुन्नतमहस्त्रयमिति तदुच्यते,— यः पञ्चदश उक्थ्यो द्वितीयमहः, तदेकं ककुत्-स्थानीयम्; प्रथमतृतीययोस्त्रिवृदग्निष्टोमयोरह्नोर्नीचस्तोमयुक्तत्वात्। यथा वृषभस्य त्रिककुदः पुरोवर्त्ती गलभागः पश्चाद्वर्त्ती पृष्ठभागश्चेत्युभौ निम्नौ, तद्वत्। तथा एकविंश उक्थ्यः पञ्चममहः, तदेकं ककुत्-स्थानीयम्; चतुर्थषष्ठयोः सप्तदशोक्थ्यरूपयोरह्नोर्निम्नस्थानीयत्वात्। तथा त्रयस्त्रिंश उक्थ्योऽष्टममहः, तदप्येकं ककुत्-स्थानीयम्; त्रिणवाग्निष्टोमरूपयोः सप्तमनवमयोरह्नोर्निम्नस्थानीयत्वात्। एत महिमानमभिज्ञायानुष्ठाने यजमानः समानानां मध्ये त्रिगुणेनौन्नत्येन प्रजापशुधनादिकृतेन युक्तो भवति। य एते पञ्चदशैकविंशत्रयस्त्रिंशाः, तत्-स्थानीयो यजमानः; इतराह-स्थानीयाः प्रजा यजमानस्य पुरस्थानीया भवन्ति। यथा पुरां सर्वासां राजा स्वामी, एवमन्यासां प्रजानां यजमान स्वामी भवतीत्यर्थः॥

पूर्वं दशरात्रस्यान्नप्राप्तिः पापव्यावृत्तिश्चेति फलद्वयं दर्शितम्; अथाभिचारबाधनिवृत्तिरूपं फलं दर्शयितुं विधत्ते—"अभिचर्यमाणो दशरात्रेण यजेत, देवपुरा एव पर्यूहते, तस्य न कुतश्चनोपाव्याधो भवति, नैनमभिचरन्स्तृणुते(९)"—इति। यमुद्दिश्य शत्रुरभिचारं करोति, सोऽयम् 'अभिचर्यमाणः'। स चाभिचारबाधपरिहाराय दशरात्रेण यजेत। तस्मिन् अनुष्ठिते सति देवानां यानि पुराणि बहुविधशूरभटभृत्यपरिपूर्णानि, तानि सर्वाणि स्वरक्षार्थं परितः स्थापयति। यः शत्रुरभि चरति, सोऽप्येनं न हिनस्ति;

तस्य हिंसितुमचमत्वात्। न कुतोऽप्यभिचारादेर्बाधः एतस्य यजमानस्य सम्भवति॥

अभिचारबाधनिवृत्तिं फलमुक्त्वा शत्रुजयरूप फलमभिधातुं विधत्ते—"देवासुराः संयत्ता आसन्, ते देवा एता देवपुरा अपश्यन्,—यद्दशरात्रस्ताः पर्यौहन्त, तेषां न कुतश्चनोपाव्याधोऽभवत्; ततो देवा अभवन् परासुरा; यो भ्रातृव्यवान्स्यात्स दशरात्रेण यजेत, देवपुरा एव पर्यूहते, तस्य न कुतश्चनोपाव्याधो भवति, भवत्यात्मना *पराऽस्य भ्रातृव्यो, भवति स्तोमः, स्तोमस्योपस्तिर्भवति भ्रातृव्यमेवोपस्तिङ्कुरुते*[७]"—इति। देवाश्चासुराश्च यदा युद्धोद्यताः, तदानीं देवा विजयोपायं विचार्य यो दशरात्रस्तद्रूपाणि देवपुराण्युपायत्वेन निश्चित्य परितस्तानि स्थापितवन्तः। 'तेषां' वैरिणां कुतोऽपि भ्रातृव्याभिबाधो न भवति। ततो देवा विजयं प्राप्ताः, असुराश्च पराजिताः। ततो भ्रातृव्यवान् यजमानोऽपि दशरात्रेण विजयी भवति। तदीयो भ्रातृव्यश्च परा भवति। किञ्चात्र ककुद्रूपस्य पञ्चदशस्तोमस्य समीपवर्त्ती त्रिवृदादिस्तोमः 'उपस्तिः' क्षीणो भवति; तेन *भ्रातृव्यमेव* क्षीणं करोति॥

अथास्मिन् दशरात्रे कञ्चिद्विशेषं विधत्ते—"जामि वा एतत्कुर्वन्ति यज्ज्यायाꣳसꣳ स्तोममुपेत्य कनीयाꣳसमुपयन्ति; यदग्निष्टोमसामान्यवस्ताच्च परस्ताच्च भवन्त्यजामित्वाय[८]"—इति। यथा लोके कश्चिद्राजामात्यादिः महतीं सम्पदमनुभूय पश्चाद्दारिद्र्यमनुभवन् अत्यन्तमलसः क्लिष्टो भवति; तथात्रापि द्वितीयेऽह्नि 'ज्यायांसं' पञ्चदशस्तोमं ककुद्रूपमनुष्ठाय ततस्तृतीयेऽह्नि 'कनी-

यांसं' निषभागस्थानीयं चित्रत्स्तोममनुतिष्ठन्तीति 'यत्', तत् 'एतत्' 'जामि कुर्वन्ति' आलस्ययुक्तं कुर्वन्तीत्यर्थः। अत आलस्य-परिहाराय पञ्चदशोकथ्यरूपाद् द्वितीयस्मादह्नः 'अवस्तात्' प्रथमेऽहनि 'उपरिष्टाद्' तृतीयेऽहनि 'अग्निष्टोमसामानि' यज्ञायज्ञीयाख्यानि* कुर्यात्; तेनालस्यं परिहृतं भवति। एवमेकविंशोक्थ्यरूपात् पञ्च-मादह्नः पूर्वोत्तरदिनयोः, त्रयस्त्रिंशोक्थ्यरूपादष्टमादह्नः पूर्वोत्तर-दिनयोरप्यग्निष्टोमसंस्थाप्रयोजिकानि यज्ञायज्ञीयसामानि कुर्यात्, तेन सर्वालस्यं परिहृतं भवति† ॥

अथास्य दशरात्रस्य प्रथममहर्विधत्ते—"चित्रदग्निष्टोमोऽग्निष्टु-दाग्नेयीषु भवति तेज एवाव रुन्धे(९)"—इति। अग्निविषयो यज्ञा-यज्ञीयसामसाध्योऽन्तिमस्तोत्रगतस्तोमो यस्य सोऽयम् 'अग्निष्टोमः'। तस्यैवावान्तरविशेषः कश्चिदग्निष्टुदित्युच्यते। यत्र सर्वेष्वपि स्तोत्रेष्वग्नि-रेव स्तूयते, स च सर्वोऽपि चित्रत्-स्तोमेनैव युक्तः; सर्वत्राग्नेरेव स्तुत्यत्वादाग्नेयीष्वृक्षु सः 'अग्निष्टुत्' भवति। तदिदं प्रथममहः; तेन तेजः प्राप्नोति ॥

अथ द्वितीयमहर्विधत्ते—"पञ्चदश उक्थ्य ऐन्द्रीष्विन्द्रियमेवाव रुन्धे(१०)"—इति। सर्वासामृचामिन्द्रविषयत्वादिन्द्रियप्राप्तिः ॥

---

* "यज्ञायज्ञीयमग्निष्टोमसाम कार्यम्"—इति ता० ब्रा० ५ ३ ६. तथा ८. ६, ७, ९. ५, ११. ५। तच्च साम गे० गा० १. २. २५। तदीया योन्यृक् छ० आ० १. १. ४ १। तत्स्तोत्रीया प्रगाथमूलास्तिस्र ऋच उ० आ० १. १. २०. १—२। तासु सामानि ऊ० गा० १. १. १४।

† सामब्राह्मणे चत्वारो दशरात्रा विहिताः। तत्र त्रिककुदाख्यः प्रथमः, कुसुरुबिन्दाख्यो द्वितीयः, पशुसाधनस्तृतीयः, देवपुराख्यश्चतुर्थः। ते च ता० ब्रा० २२प्र० १४–१७ खण्डेषु द्रष्टव्याः।

अथ तृतीयमहर्विधत्ते—"त्रिवृदग्निष्टोमो वैश्वदेवीषु पुष्टिमेवाव रुन्धे[११]"—इति। सर्वासामृचां वैश्वदेवत्वेन पुष्टिप्राप्तिः ॥

अथ चतुर्थमहर्विधत्ते—"सप्तदशोऽग्निष्टोमः प्राजापत्यासु तीव्रसोमोऽन्नाद्यस्यावरुध्या अथो प्रैव तेन जायते[१२]"—इति। 'तीव्रसोमः' नाम कश्चिदुक्थ्यावान्तरविशेषः, यस्मिन्नाशिरार्थं गवां शतं दुहन्ति; तमुक्थ्यमग्निष्टोमरूपतामापाद्यानुतिष्ठन्ति। पञ्चदशस्तु स्तोत्रेष्वन्तिमस्तोत्र-त्रये परित्यक्ते सति द्वादशस्तोत्रत्वेनाग्निष्टोमता सम्पद्यते। स्तोत्राणि च सर्वाणि प्राजापत्यास्वृक्षु प्रयोक्तव्यानि। तीव्रसोमत्वादन्नप्राप्तिः, ऋचां प्राजापत्यत्वात्प्रजोत्पत्तिश्च भवति ॥

अथ पञ्चममहर्विधत्ते—"एकविꣳश उक्थ्यः सौरीषु प्रतिष्ठित्या अथो रुचमेवात्मन् धत्ते[१३]"—इति। स्तोमस्यैकविंशत्वेन प्रतिष्ठाप्राप्तिः, ऋचां सौरीत्वाद् दीप्तिधारणम् ॥

अथ षष्ठमहर्विधत्ते—"सप्तदशोऽग्निष्टोमः प्राजापत्यासूपहव्य उपहवमेव गच्छति[१४]"—इति। 'उपहव्यः' नाम कश्चिदेकाहविशेषः; तदनुष्ठानेनात्र 'उपहवं' सर्वेषामनुज्ञां पूजाविषयां प्राप्नोति ॥

अथ सप्तम-नवमे अहनी विधत्ते—"त्रिणवावग्निष्टोमावभित ऐन्द्रीषु विजित्यै[१५]"—इति। वक्ष्यमाणस्य त्रयस्त्रिंशाख्यस्याह्नः पूर्वोत्तरयोर्दिनयोस्त्रिणवस्तोमयुक्तावग्निष्टोमौ कार्यौ। तत्र सर्वा अप्यृच ऐन्द्र्यः; तेन विजयो भवति ॥

तयोरह्नोर्मध्यममष्टममहर्विधत्ते—"त्रयस्त्रिꣳश उक्थ्यो वैश्वदेवीषु प्रतिष्ठित्यै[१६]"—इति। ऋचां सर्वासां वैश्वदेवत्वेन प्रतिष्ठासिद्धिः ॥

अथ दशममहर्विधत्ते—"विश्वजित् सर्वपृष्ठोऽतिरात्रो भवति सर्वस्याभिजित्यै(१०)"—इति। गतम् ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥

---

ऋतवो वै प्रजाकामाः प्रजां नाविन्दन्त तेऽकामयन्त प्रजाः सृजेमहि प्रजामव रुन्धीमहि प्रजां विन्देमहि प्रजावन्तः स्यामेति त एतमेकादशरात्रमपश्यन् तमाहरन् तेनायजन्त ततो वै ते प्रजामसृजन्त प्रजामवारुन्धत प्रजामविन्दन्त प्रजावन्तोऽभवन् त ऋतवोऽभवन् तदार्त्तवानामार्त्तवत्वमृतूनां वा एते पुत्रास्तस्मात् (१)

आर्त्तवा उच्यन्ते य एवं विद्वाꣳस एकादशरात्रमासते प्रजामेव सृजन्ते प्रजामव रुन्धते प्रजां विन्दन्ते प्रजावन्तो भवन्ति(१) ज्योतिरतिरात्रो भवति ज्योतिरेव पुरस्ताद्दधते सुवर्गस्य लोकस्यानुख्यात्यै(२) पृष्ठ्यः षडहो भवति षड् वा ऋतवः षट् पृष्ठानि पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संवत्सरं ते संवत्सर एव प्रति तिष्ठन्ति(३) चतुर्विꣳशो भवति चतुर्विꣳशत्यक्षरा गायत्री (२)

गायत्रं ब्रह्मवर्चसं गायत्रियामेव ब्रह्मवर्चसे प्रति तिष्ठन्ति[४] चतुश्चत्वारिꣳशो भवति चतुश्चत्वारिꣳशदक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुप् त्रिष्टुभ्येवेन्द्रिये प्रति तिष्ठ[५]न्त्यष्टाचत्वारिꣳशो भवत्यष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यामेव पशुषु प्रति तिष्ठन्त्ये[६]कादशरात्रो भवति पञ्च वा ऋतव आर्त्तवाः पञ्चर्त्तुष्वेवार्त्तवेषु संवत्सरे प्रतिष्ठाय प्रजामवरुन्धते[७]ऽतिरात्रावभितो भवतः प्रजायै परिगृहीत्यै[८] ॥ ६ ॥

(एते पुंचास्*) तस्मात्[१] गायत्र्ये[१]कान्नपञ्चाशच्च ॥६॥

पञ्चमे दशरात्रोऽभिहितः, अथ षष्ठे एकादशरात्रोऽभिधीयते। तमेतं विधत्ते—"ऋतवो वै प्रजाकामाः प्रजां नाविन्दन्त, तेऽकामयन्त प्रजाꣳ सृजेमहि, प्रजामव रुन्धीमहि, प्रजां विन्देमहि, प्रजावन्तः स्यामेति, त एतमेकादशरात्रमपश्यन्, तमाहरन्, तेनायजन्त, ततो वै प्रजामसृजन्त, प्रजामवारुन्धत, प्रजामविन्दन्त, प्रजावन्तोऽभवन्; त ऋतवोऽभवन्, तदार्त्तवानामार्त्तवत्वम्, ऋतूनां वा एते पुत्रास्तस्मादार्त्तवा उच्यन्ते, य एवं विद्वाꣳस एकादशरात्रमासते प्रजामेव सृजन्ते, प्रजामव रुन्धते, प्रजां विन्दन्ते, प्रजावन्तो भवन्ति[१]"—इति। वसन्ताद्यृतभिमानिनो देवाः पुरा प्रजामिच्छन्तोऽपि नालभन्त; ते चतुर्विधां कामनामकुर्वत,— प्रजां स्रष्टुं समर्थाः स्यामेत्येका कामना, ततोऽवरोद्धुं नियन्तुं समर्थाः स्यामेति

---

* एषोऽधिक पाठ क ख-ग-पुस्तकेषु।

द्वितीया कामना, तत उत्पादनेन प्रजां लभेमहीति तृतीया कामना, ततो वह्वीभिः प्रशस्ताभिश्च प्रजाभिर्युक्ता अवतिष्ठेमेति चतुर्थी कामना। तेषामृतूनामेकादशरात्रेण तत् सर्वं सिद्धम्। तत ते वसन्ताद्या ऋतवोऽभवन्, प्रजारूपा भूतिमैश्वर्यं प्राप्ता। यस्मादेते सर्वे प्राणिन ऋतूना पुत्रास्तस्मादार्त्तवा इत्युच्यन्ते। ऋतुवदन्येषामपि यजमानानामेतत् सर्वं सिध्यति। अस्य चैकादशरात्रस्य सत्रलक्षणभूतयापि चोदनया विधानात् सत्रत्व द्रष्टव्यम्। न ह्यत्र साध्याना षड्रात्र इव धर्मातिदेशार्थयमासत्तिचोदना, तद्वदत्रातिदेशानां धर्मविशेषाणामभावात्*। तस्मादयमृतूनामेकादशरात्र सत्रम्, इतोऽन्ये शाखान्तरविहिता एकादशरात्रा अहीना ॥

एतस्मिन् ऋतूना मेकादशरात्रे प्रथममहर्विधत्ते—"ज्योतिरतिरात्रो भवति, ज्योतिरेव पुरस्ताद्धत्ते, सुवर्गस्य लोकस्यानुख्यात्यै(१)" —इति। पूर्वं ज्योतिर्गौरायुरिति ज्योतिशब्दाभिधेयो य एकाह उक्त, तमेकाहमत्रातिरात्रसंस्थारूप कुर्यात्। तथा सति प्रथममेव ज्योतिर्विधानात् स्वर्गं जिगमिषोर्यजमानस्य पुरस्तादेव प्रकाश कृतो भवति। तच्च स्वर्गलोकप्रकाशनाय भवति ॥

अथ द्वितीयादिसप्तमान्यहानि विधत्ते—"पृष्ठ्य षडहो भवति, षड्वा ऋतव, षट् पृष्ठानि, पृष्ठैरेवर्त्तूनन्वारोहन्ति ऋतुभि संवत्सर, ते संवत्सर एव प्रति तिष्ठन्ति(१)"—इति। द्वादशाहे द्वितीयदिनमारभ्य सप्तमान्तेषु दिनेषु रथन्तरादिभि षड्भि पृष्ठैर्युक्तानि षडहानि विहितानि, तानि चास्माभि साध्याना षड्रात्रप्रसङ्गेनो-

* "सत्रवत्त्वात्"—इति ग।

दाहृतानि*। तेषां सप्तः पृष्ठ्यः षडहः, सोऽत्र कर्त्तव्यः। तथा सति षट्सङ्ख्याद्वारेणर्तुप्राप्तिः, तद्द्वारा संवत्सरप्राप्तिः॥

अथाष्टममहर्विधत्ते—"चतुर्विंशो भवति ; चतुर्विंशत्यक्षरा गायत्री ; गायत्रं ब्रह्मवर्चसं, गायत्रियामेव ब्रह्मवर्चसे प्रति तिष्ठन्ति(४)"—इति। चतुर्विंशस्तोमयुक्तो रथन्तरसामा य उक्थ्यः, सोऽयमत्राष्टममहः। तथा सति चतुर्विंशतिसङ्ख्याद्वारा गायत्रीप्राप्तिः, तद्द्वारा ब्रह्मवर्चसप्राप्तिः॥

अथ नवममहर्विधत्ते—"चतुश्चत्वारिंशो भवति ; चतुश्चत्वारिंशदक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुप्, त्रिष्टुभ्येवेन्द्रिये प्रति तिष्ठन्ति(५)"—इति। चतुश्चत्वारिंशस्तोमयुक्तो बृहद्रथन्तरसामा य उक्थ्यः, सोऽयमत्र नवममहः। तदनुष्ठानेन सङ्ख्याद्वारा त्रिष्टुप्प्राप्तिः, तद्द्वारा चेन्द्रियप्राप्तिः॥

अथ दशममहर्विधत्ते—"अष्टाचत्वारिंशो भवत्यष्टाचत्वारिंशदक्षरा जगती, जागताः पशवो जगत्यामेव पशुषु प्रति तिष्ठन्ति(६)"—इति। अष्टाचत्वारिंशस्तोमयुक्तो बृहत्सामा य उक्थ्यः, सोऽयमत्र दशममहः। तेन सङ्ख्याद्वारा जगतीं प्राप्य, तद्द्वारा पशुषु प्रति तिष्ठन्ति इति॥

तान्येतानि त्रीण्यहानि सूत्रकारेण स्पष्टमुदाहृतानि—"ततस्त्रींश्छन्दोमानुक्थ्यानन्वहमुपयन्ति चतुर्विंशं चतुश्चत्वारिंशमष्टाचत्वारिंशमिति। रथन्तरसामा प्रथमो बृहद्रथन्तरसामा द्वितीयो बृहत्सामा तृतीयः"—इति। छन्दोभिर्गायत्रीत्रिष्टुब्जगतीभिरक्षर-

* 'तत्र प्रथमेऽनुवाके सत्राणं विधत्ते'—इत्यादि (२३६ पृ०) द्रष्टव्यम्।

सङ्ख्यादारा मीयन्ते परिच्छिद्यन्त इति चतुर्विंशादिस्तोमाश्छन्दोमाः। तत्र चतुर्विंशस्तोमस्य विष्टुतिः सामब्राह्मणे एव माम्नायते—"अष्टाभ्यो हिङ्करोति स तिसृभिः स चतसृभिः स एकया, अष्टाभ्यो हिङ्करोति स एकया स तिसृभिः स चतसृभिः, अष्टाभ्यो हिङ्करोति स चतसृभिः स एकया स तिसृभिः; पशवो वै छन्दोमा यदष्टाभ्यो हिङ्करोत्यष्टाशफाः पशवः"—इति*। स एकस्मिंस्तृचे प्रथमपर्याये प्रथमामृचं त्रिः पठेत्, द्वितीयां चतुः पठेत्, तृतीयां सकृत्पठेत्; द्वितीयपर्याये सकृत्, त्रिः, चतुश्चेति क्रमः; तृतीये पर्याये चतुः, सकृत्, त्रिश्चेति क्रमः। चतुश्चत्वारिंशस्तोमस्य विष्टुतिरेवमाम्नायते—"पञ्चदशभ्यो हिङ्करोति स तिसृभिः स एकादशभिः स एकया, चतुर्दशभ्यो हिङ्करोति स एकया स तिसृभिः स दशभिः, पञ्चदशभ्यो हिङ्करोति स एकादशभिः स एकया स तिसृभिः"—इति†। अत्र प्रथमपर्याये त्रिः, एकादशकृत्वः, सकृदिति क्रमः; द्वितीयपर्याये सकृत्, त्रिः, दशकृत्वः; तृतीयपर्याये एकादशकृत्वः, सकृत्, त्रिः। अष्टाचत्वारिंशस्तोमस्य विष्टुतिरेवमाम्नायते—"षोडशभ्यो हिङ्करोति स तिसृभिः स द्वादशभिः स एकया, षोडशभ्यो हिङ्करोति स एकया स तिसृभिः स द्वादशभिः, षोडशभ्यो हिङ्करोति स द्वादशभिः स एकया स तिसृभिः; अन्तो वा अष्टाचत्वारिंशः; पशवश्छन्दोमाः"—इति‡। अत्र प्रथमे पर्याये त्रिः, द्वादशकृत्वः, सकृत्; द्वितीयपर्याये सकृत्, त्रिः, द्वादशकृत्वः; तृतीयपर्याये द्वादशकृत्वः, सकृत्, त्रिः। एवंविधैश्छन्दोमैरष्टमनवमदशमान्यहानि निष्पाद्यानि॥

* ता० ब्रा० ३.८.१,२। † ता० ब्रा० ३ ८.१। ‡ ता० ब्रा० ३.१३.१,२।

वक्ष्यमाणमेकादशमयहर्हृदि निधाय तेन सहितमेकादशरात्रं प्रशंसति—"एकादशरात्रो भवति; पञ्च वा ऋतव आर्त्तवाः, पञ्चर्त्तुष्वेवार्त्तवेषु संवत्सरे प्रतिष्ठाय प्रजामवरुन्धते(७)"—इति। अस्य क्रतोर्द्दशरात्रो वसन्तादृतुदेवताः पञ्चसङ्ख्याकाः; तैर्द्देवैः सम्पादिताः पुष्पोद्गमादय ऋतुसम्बन्धिनः स्वभावाः पञ्चसङ्ख्याकाः; एवं मिलिता दश सम्पन्नाः, संवत्सर एकादशः। एतेन सर्व्वेषु एकादशरात्रानुष्ठानेन प्रतिष्ठां प्राप्य पश्चात्प्रजां प्राप्नुवन्ति॥

अथैकादशमहर्विधत्ते—"अतिरात्रावभितो भवतः प्रजायै परिगृहीत्यै(८)"—इति। एकोनत्रिंशस्तोमयुक्तो योऽयमतिरात्र एकाहविशेषः, सोऽयमत्रैकादशमहः। ज्योतिरतिरात्रो भवतीत्युक्तेन प्रथमेनाह्ना सह निर्द्देशादतिरात्राविति द्विवचननिर्द्देशः। सचलिङ्गस्तोभयतोऽतिरात्रत्वस्य ख्यापनाय प्रजासाधनस्य क्रतोरुभयतोऽतिरात्रत्वे सति फलभूतायाः प्रजाया उपायतो रक्षा परिगृहीता भवति॥ ६॥

इति श्रीसायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः॥

---

ऐन्द्रवायवाग्रान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति यज्ञस्य वै क्लृप्तिमनु प्रजाः कल्पन्ते यज्ञस्याक्लृप्तिमनु न कल्पन्ते यथापूर्वमेव प्रजाः कल्पयति न ज्यायांसं कनीयानति क्राम(१)त्यैन्द्र-

वायवाग्रान् गृह्णीयादामयाविनः प्राणेन वा एष व्यृध्यते यस्यामयति प्राण ऐन्द्रवायवः प्राणेनैवैनꣳ समर्द्धयति[२] मैत्रावरुणाग्रान् गृह्णीरन् येषां दीक्षितानां प्रमीयेत (१)

प्राणापानाभ्यां वा एते व्यृध्यन्ते येषां दीक्षितानां प्रमीयते प्राणापानौ मित्रावरुणौ प्राणापानावेव मुखतः परि हरन्त[३] आश्विनाग्रान् गृह्णीतानुजावरोऽश्विनौ वै देवानामानुजावरौ पश्चेवाग्रं पर्यैतामश्विनावेतस्य देवता य आनुजावरस्तावेवैनमग्रं परि णयतः[४] शुक्राग्रान् गृह्णीत गतश्रीः प्रतिष्ठाकामोऽसौ वा आदित्यः शुक्र एषोऽन्तोऽन्तं मनुष्यः (२)

श्रियै गत्वा नि वर्त्ततेऽन्तादेवान्तमा रभते न ततः पापीयान् भवति[५] मन्थ्यग्रान् गृह्णीताभिचरन्नार्त्तपात्रं वा एतद्यन्मन्थिपात्रं मृत्युनैवैनं ग्राहयति ताजगार्त्तिमार्च्छे[६]त्याग्रयणाग्रान् गृह्णीत यस्य पिता पितामहः पुण्यः स्यादथ तन्न प्राप्नुयाद् वाचा वा एष इन्द्रियेण व्यृध्यते यस्य पिता पितामहः पुण्यः (३)

भवत्यथ तन्न प्राप्नोत्युर इवैतद्यज्ञस्य वागिव यदाग्रयणो वाचैवैनमिन्द्रियेण समर्द्धयति न ततः पापीयान् भव[७]त्युक्थ्याग्रान् गृह्णीताभिचर्यमाणः सर्वेषां वा

एतत्याचाणामिन्द्रियं यदुक्थ्यपाचꣳ सर्वेणैवैनमिन्द्रि-येणाति प्र युङ्क्ते(८) सरस्वत्यभि नो नेषि वस्य इति पुरोरुचं कुर्याद्वाग्वै (४)

सरस्वती वाचैवैनमति प्र युङ्क्ते(९) मा त्वत् क्षेत्रा-ण्यरणानि गन्मेत्याह मृत्योर्वै क्षेत्राण्यरणानि तेनैव मृत्योः क्षेत्राणि न गच्छति(१०) पूर्णान् ग्रहान् गृह्णीया-दामयाविनः प्राणान्वा एतस्य शुग्र्च्छति यस्यामयति प्राणा ग्रहाः प्राणानेवास्य शुचो मुञ्चत्युत यदीतासु-र्भवति जीवत्येव(११) पूर्णान् ग्रहान् (५)

गृह्णीयाद्यर्हि पर्जन्यो न वर्षेत् प्राणान्वा एतर्हि प्रजानाꣳ शुग्र्च्छति यर्हि पर्जन्यो न वर्षति प्राणा ग्रहाः प्राणानेव प्रजानाꣳ शुचो मुञ्चति ताजक् प्र वर्षति(१२) ॥ ७ ॥

प्रमीयेत[१] मनुष्यः[२] (ऋध्यते यस्य पिता पिता-महः*) पुण्यो[३] (वाग्†) वै[४] (एव पूर्णान्‡) ग्रहान्[५] पञ्चविꣳशतिश्च ॥ ७ ॥

षष्ठेऽनुवाके एकादशरात्रोऽभिहितः, अथ सप्तममारभ्य दशमा-न्तेषु चतुर्ष्वनुवाकेषु द्वादशरात्रोऽभिधीयते। तत्रास्मिन् सप्तमे काम्यग्रहानुष्ठानप्रकारा उच्यन्ते। तत्र प्रथममेकं प्रकारं विधत्ते—

*, †, ‡ इमे पाठाः क-ख-ग-पुस्तकेष्वधिकाः।

अथ प्रतिष्ठार्थं प्रकारान्तर विधत्ते—"शुक्रायान् गृह्णीत गतश्रीः प्रतिष्ठाकामोऽसौ वा आदित्यः शुक्र एषोऽन्तोऽन्तं मनुष्य. श्रियै गत्वा नि वर्त्ततेऽन्तादेवान्तमा रभते न ततः पापीयान् भवति[५]"—इति। यो नष्टश्रीकः सन् पुन' प्रतिष्ठां कामयते, सोऽयं शुक्रमादौ गृह्णीयादिति। दीप्तिमत्त्वादसावादित्यः शुक्र', एष एव प्रकाशानाम् 'अन्त'' काष्ठा, अन्तिम , न ह्यादित्यादधिकः प्रकाशोऽस्ति। अत' शुक्रायत्वेन मनुष्यश्रिय' 'अन्त' काष्ठां प्राप्य पूर्वस्माद्दारिद्र्यात् 'नि वर्त्तते' प्रकाशपरमकाष्ठारूपादादित्यादेव सम्पत्परमकाष्ठां प्राप्नोति, तत ऊर्द्ध्वं कदाचिदपि दरिद्रो न भवति॥

अभिचारहेतु प्रकारं विधत्ते—"मन्थ्यग्रान् गृह्णीताभिचरन्नार्त्तपात्रं वा एतद्यन्मन्थिपात्रं, मृत्युनैवैनं ग्राहयति, ताजगार्त्तिमार्च्छति[६]"—इति। अभिचरन् मन्थिनमादौ गृह्णीयात्। परस्यार्त्तत्वप्रापणादिदम् 'आर्त्तपात्रम्' तदग्रत्वेन वैरिणं मृत्युगृहीतं करोति, स च वैरी तदानीमेव मृत्युं प्राप्नोति॥

स्वकीयपित्रादिसमानोत्कर्षप्राप्त्यर्थं प्रकारान्तर विधत्ते—"आग्रयणाग्रान् गृह्णीत, यस्य पिता पितामह' पुण्यः स्यादथ तन्न प्राप्नुयाद्, वाचा वा एष इन्द्रियेण व्यृध्यते यस्य पिता पितामहः पुण्यो भवत्यथ तन्न प्राप्नोत्युर इवैतद् यज्ञस्य वागिव यदाग्रयणो वाचैवैन मिन्द्रियेण समर्द्धयति, न ततः पापीयान् भवति[७]"—इति। 'यस्य' यजमानस्य पितृपितामहौ धनविद्यादिभिर्गुणैरुत्कृष्टौ, स्वयन्तु तमुत्कर्षं यदि नाप्नोति, तादृश. आग्रयणं प्रथम गृह्णीयात्। पित्रादेरुत्कर्षे सति स्वयमुत्कर्षहीन. सभामध्ये वाक्पाण्डित्येनेतर-

व्यवहारेष्विन्द्रियसामर्थ्येन वियुक्त, आग्रयणस्तु यज्ञस्योर प्रदेश-वत्सामर्थ्याधारो वागिन्द्रियवदुत्कर्षहेतुश्च। अत तद्ग्रहेन 'एनं' यजमान सदा पाण्डित्यरूपया 'वाचा' व्यवहारान्तरसामर्थ्यरूपेण 'इन्द्रियेण' च समृद्धं करोति। 'तत' ऊर्द्ध्वं कदाचिदपि तदुभय-हीनो न भवति॥

परकीयाभिचारनिवृत्त्यर्थं प्रकारान्तरं विधत्ते —"उक्थ्याग्रान् गृह्णीताभिचर्यमाण, सर्वेषां वा एतत्पात्राणामिन्द्रियं यदुक्थ्यपात्रꣳ सर्वेणैवैनमिन्द्रियेणाति प्र युङ्क्ते(८)"—इति। यान्येतानि सोमपात्राणि सन्ति, तेषां मध्ये यदुक्थ्यपात्रम्, तदिन्द्रियसामर्थ्योपेतम्, अत-स्तस्याग्रत्वे सत्यभिचारकर्त्तारम् 'एनं' सर्वेणापि सामर्थ्येनातिक्रम्य स्वयमनुतिष्ठति॥

अथ मन्त्रविशेषं विधत्ते— "सरस्वत्यभि नो नेषि वस्य इति पुरोरुचं कुर्यात् वाग्वै सरस्वती, वाचैवैनमति प्र युङ्क्ते(९)"—इति। सोमरसग्रहणात्पूर्वं पठितव्या 'पुरोरुक्' तास्च पुरोरुचमत्र सर-स्वतीत्यादिका पठेत्। मन्त्रोक्ता 'सरस्वती', 'वाक्' देवता, अतो वाचैव 'एनम्' अभिचरितारम् 'अति' क्रम्यानुतिष्ठति। इयमृक् ब्राह्मणग्रन्थे द्वितीयकाण्डे उपहोमाख्ये प्रपाठके* एवमाम्नाता—

"सरस्वत्यभि नो नेषि वस्य। मा पस्फरी पयसा मा न आधक्।
जुषस्व न सख्या वेश्या च। मा त्वत् क्षेत्राण्यरणानि गन्म"—इति
(तै॰ ब्रा॰ २ ४ १. २)॥

---

* 'चतुर्थे उपहोमानाम्'—इति तै॰ ब्रा॰ २ ४ १ सा॰ भा॰।

वै द्वितीयस्त्रिरात्रो जागत आग्रयणो यच्चतुर्थेऽहन्नाग्रयणो गृह्यते स्व एवैनमायतने गृह्णात्यथो स्वमेवच्छन्दोऽनु पर्यावर्त्तन्ते[४] राथन्तरो वा ऐन्द्रवायवो राथन्तरं पञ्चममहस्तस्मात् पञ्चमेऽहन् ( २ )

ऐन्द्रवायवो गृह्यते स्व एवैनमायतने गृह्णाति[६] बार्हतो वै शुक्रो बार्हतः षष्ठमहस्तस्मात् षष्ठेऽहञ्छुक्रो गृह्यते स्व एवैनमायतने गृह्णा[७]त्येतद्वै द्वितीयं यज्ञमापद्यच्छन्दाःस्याप्नोति यच्छुक्रः श्वो गृह्यते यत्रैव यज्ञमदृशन् तत एवैनं पुनः प्र युङ्क्ते[८] त्रिष्टुङ्मुखो वै तृतीयस्त्रिरात्रस्त्रैष्टुभः ( ३ )

शुक्रो यत्सप्तमेऽहञ्छुक्रो गृह्यते स्व एवैनमायतने गृह्णात्यथो स्वमेवच्छन्दोऽनु पर्यावर्त्तन्ते[९] वाग्वा आग्रयणो वागष्टममहस्तस्मादष्टमेऽहन्नाग्रयणो गृह्यते स्व एवैनमायतने गृह्णाति[१०] प्राणो वा ऐन्द्रवायवः प्राणो नवममहस्तस्मान्नवमेऽहन्नैन्द्रवायवो गृह्यते स्व एवैनमायतने गृह्णा[११]त्येतद्द ( ४ )

वै तृतीयं यज्ञमापद्यच्छन्दाःस्याप्नोति यदैन्द्रवायवः श्वो गृह्यते यत्रैव यज्ञ मदृशन् तत एवैनं पुनः प्र युङ्क्तेऽथो स्वमेवच्छन्दोऽनु पर्यावर्त्तन्ते[१२] पथो वा एतेऽध्यपथेन यन्ति येऽन्येनैन्द्रवायवात् प्रतिपद्यन्तेऽन्तः

खलु वा एष यज्ञस्य यद् दशममहर्दशमेऽहन्नैन्द्रवायवो गृह्यते यज्ञस्य (५)

एवान्तं गत्वापथात्पन्थामपि यन्त्यथो यथा वहीयसा प्रतिसारं वहन्ति तादृगेव त[१३]च्छन्दांस्यन्योऽन्यस्य लोकमभ्यध्यायन् तान्येतेनैव देवा व्यवाहय[१४] न्नैन्द्रवायवस्य वा एतदायतनं यच्चतुर्थमहस्तस्मिन्नाग्रयणो गृह्यते तस्मादाग्रयणस्यायतने नवमेऽहन्नैन्द्रवायवो गृह्यते[१५] शुक्रस्य वा एतदायतनं यत्पञ्चमम् (६)

अहस्तस्मिन्नैन्द्रवायवो गृह्यते तस्मादैन्द्रवायवस्यायतने सप्तमेऽहञ्छुक्रो गृह्यत[१६] आग्रयणस्य वा एतदायतनं यत् षष्ठमहस्तस्मिञ्छुक्रो गृह्यते तस्माच्छुक्रस्यायतनेऽष्टमेऽहन्नाग्रयणो गृह्यते[१७] छन्दांस्येव तद्विवाहयति प्र वस्यसो विवाहमाप्नोति य एवं वेदाथो देवताभ्य एव यज्ञे संविदं दधाति तस्मादिदमन्योऽन्यस्मै (७)

ददाति[१८] ॥ ८ ॥

वा[१] अहः[२] स्त्रैष्टुभ[३] एतद्[४] यज्ञस्य[५]* पञ्चम[६] मन्यस्मा[७] एकञ्च ॥ ८ ॥

* "एतद्वै पञ्चमेऽहन् त्रैष्टुभ एतत् गृह्यते यज्ञस्य"—इति क, ख, ग।

सप्तमेऽनुवाके द्वादशाहगताः काम्यग्रहप्रकारा उक्ताः। स च द्वादशाहो द्विविधः,—समूढो व्यूढश्च। तत्र समूढप्रकारः सूत्रकारेण दर्शितः—"अनीकां व्याख्यास्यामः। ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमश्चाहः, अथेतरेषां नवानामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रमथाग्रयणाग्रमेवं विहिता त्रिरुयनीका परिवर्त्तते यद्यव्यूढः"—इति। एवं समूढप्रकारमुक्त्वा व्यूढप्रकारोऽपि तेनैव दर्शितः,—"व्यूढे त्वैन्द्रवायवाग्रौ प्रायणीयोदयनीयावथेतरेषां दशानामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रमथद्वे आग्रयणाग्रे अथैन्द्रवायवाग्रमथद्वे शुक्राग्रे अथाग्रयणाग्रमथद्वे ऐन्द्रवायवाग्रे"—इति। तत्रास्मिन्नष्टमेऽनुवाके व्यूढप्रकारोऽभिधीयते। तत्र प्रायणीयोदयनीयौ परित्यज्य यानीतराण्यहानि मध्यवर्त्तीनि दशसङ्ख्याकानि, तेषु प्रथमेऽहन्यैन्द्रवायवाग्रत्वं विधत्ते—"गायत्रो वा ऐन्द्रवायवो गायत्रं प्रायणीयमहस्तस्मात् प्रायणीयेऽहन्नैन्द्रवायव गृह्यते, स्व एवैन मायतने गृह्णाति[१]"—इति। यानि मुख्यानि छन्दांसि गायत्री-त्रिष्टुब्-जगतीरूपाणि, तेषां मध्ये गायत्री प्रथमा, अग्रत्वेन चात्रैन्द्रवायवशुक्राग्रयणा विकल्प्यन्ते। तेषां च मध्ये ऐन्द्रवायवः प्राथम्येन प्रकृतावाम्नातः। ततः प्राथम्यसाम्यादैन्द्रवायवो गायत्रः; निरूपणीयानां दशानामह्नां मध्ये यत्प्रायणीयं प्रथमभाव्यह', तदपि प्राथम्यस्य साम्याद् गायत्रम्। एवं च सति तस्मिन् प्रायणीये दशानां मध्ये प्रथमेऽहन्यैन्द्रवायव आदौ गृहीतव्यः; ऐन्द्रवायवस्य गायत्रत्वमाम्नात्। एवञ्च सति स्वमस्मिन्न्येवायतने प्रथमाह स्वरूपस्थाने तमैन्द्रवायवं गृह्णाति॥

अथ दशस्वहःसु द्वितीयेऽहनि शुक्राग्रत्वं विधत्ते—"त्रैष्टुभो वै

शुक्रस्त्रैष्टुभं द्वितीयमहस्तस्मात् द्वितीयेऽहञ्छुक्रो गृह्यते, स्व एवैनमायतने गृह्णाति(६)"—इति। त्रिष्टुप्-छन्दसः शुक्रस्य द्वितीयस्याह्नश्च पूर्वन्यायेन द्वितीयत्वसाम्यं योजयित्वा व्याख्येयम् ॥

अथ तृतीयेऽहन्याग्रयणग्रहं विधत्ते—"जागतो वा आग्रयणो जागतं तृतीयमहस्तस्मात् तृतीयेऽहन्नाग्रयणो गृह्यते, स्व एवैनमायतने गृह्णाति(७)"—इति। पूर्ववद्योजनीयम् ॥

एतदेवाग्रयणग्रहं प्रशंसति—"एतद्वै यज्ञमापद्यच्छन्दांस्याप्नोति यदाग्रयणः श्वो गृह्यते; यत्रैव यज्ञमदृशन्; तत एवैनं पुनः प्र युङ्क्ते(८)"—इति। 'यद्' आग्रयणग्रहं 'छन्दांस्याप्नोति' गायत्र्यादिच्छन्दोरूपाणि चीणि हानि व्याप्नोति; त्रयाणामह्नामनेनाग्रयणग्रहेण समाप्तत्वात्। एतदेवाग्रयणग्रहं 'यज्ञमापत्' प्रथमत्र्यनीकारूपं त्रिरात्रं यज्ञं प्राप्नोति। त्रीण्यनीकान्यग्रहाणि ऐन्द्रवायवग्रहशुक्राग्रहाग्रयणग्रहरूपाणि यस्यां क्रियायां सा क्रिया 'त्र्यनीका', तद्रूपत्रिरात्रयज्ञोऽनेनाग्रयणग्रहेण समाप्यते। किञ्च उत्तरस्मिन् चतुर्थेऽहन्याग्रयण एवादौ गृह्यते। यस्मादेवं तस्माद्यत्रैवाग्रयणग्रहे 'यज्ञमदृशन्' त्रिरात्रसमाप्तिं दृष्टवन्तः, तत एवाग्रयणग्रहात् 'एनं' यज्ञं पुनः प्रयुक्तवान् भवति। तस्मादिदं प्रशस्तम् ॥

अथ चतुर्थेऽहन्याग्रयणग्रहमेव विधत्ते—"जगन्मुखो वै द्वितीयस्त्रिरात्रो जागत आग्रयणो यच्चतुर्थेऽहन्नाग्रयणो गृह्यते, स्व एवैनमायतने गृह्णात्यथो स्व मेवच्छन्दोऽनु पर्यावर्त्तन्ते(९)"—इति। समूढे द्वादशाहे त्र्यनीका त्रिरावृत्ता। तत्रैकावृत्तिः प्रथमस्त्रिरात्रः; द्वितीयावृत्तिर्द्वितीयस्त्रिरात्रः। स च यद्यपि समूढे द्वादशाहे

ऐन्द्रवायवोपक्रमत्वादैन्द्रवायवस्य च गायत्रत्वाद्गायत्रीमुखो भवति, तथाऽत्र 'जगन्मुख' जगत्युपक्रम कर्त्तव्यः। आग्रयणाग्रस्य आगत इति पूर्वमेवोपपादितम् (२७७पृ०४पं०)। तस्मात् चतुर्थेऽहन्याग्रयणाग्रत्वे गृहीते सति स्वकीय एव स्थाने तद् गृहीतं भवति। अपि चाग्रयणाग्रत्वं स्वकीयमेव जगतीच्छन्दोऽनुसृत्य पुनरावृत्तं भवति ॥

अथ पञ्चमेऽहन्यैन्द्रवायवाग्रत्वं विधत्ते— "राथन्तरो वा ऐन्द्रवायवो राथन्तरं पञ्चममहस्तस्मात् पञ्चमेऽहन्नैन्द्रवायवो गृह्यते, स्व एवैनमायतने गृह्णाति(८)"—इति। प्रकृतिरूपे ज्योतिष्टोमे "यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् गृह्णीयात्"-इत्यैन्द्रवायवाग्रत्वं प्रति रथन्तरसाम्नो निमित्तत्वश्रवणात् (आप० श्रौ०१२.१४.१.) ऐन्द्रवायवस्य राथन्तरत्वम्; पञ्चमस्याह्नो रथन्तरसम्बन्धस्य शाखान्तरे* प्रसिद्धत्वाद्राथन्तरत्वम्। तस्मादैन्द्रवायवस्याह्नश्च राथन्तरत्वसाम्यात् पञ्चमेऽहन्यैन्द्रवायवः प्रथम गृह्यते। तथा सति 'एनम्' ऐन्द्रवायव स्वकीय एव स्थाने गृह्णाति ॥

अथ षष्ठेऽहनि शुक्राग्रत्वं विधत्ते— "बार्हतो वै शुक्रो बार्हतः षष्ठमहस्तस्मात् षष्ठेऽहञ्छुक्रो गृह्यते, स्व एवैनमायतने गृह्णाति(९)" —इति। शुक्रग्रहस्य षष्ठस्याह्नश्च बृहत्सामसम्बन्धः शाखान्तरे प्रसिद्धः†। शेषं पूर्ववद्व्याख्येयम् ॥

तदेतच्छुक्राग्रत्वं प्रशंसति— "एतद्वै द्वितीयं यज्ञमापद्यच्छन्दांस्याप्नोति यच्छुक्र श्वो गृह्यते, यत्रैव यज्ञमदृशन्, तत एवैनं पुन

* ता० ब्रा० १२ १—६ खण्डेषु द्रष्टव्यम्।
† ता० ब्रा० १२ ७—१२ खण्डेष्वन्वेष्यम्।

प्र युङ्क्ते(८)"—इति। अनीकाया द्वितीयावृत्तिरूपत्रिरात्रो द्वितीयो यज्ञः। शेषमाग्रयणवाक्यवद्व्याख्येयम् (२७७ पृ० ७पं०)॥

अथ सप्तमेऽहन्यपि शुक्रग्रहत्वमेव विधत्ते—"त्रिष्टुम्मुखो वै तृतीयस्त्रिरात्रस्त्रैष्टुभः शुक्रो यत्सप्तमेऽहञ्छुक्रो गृह्यते, स्व एवैनमायतने गृह्णात्यथो स्वमेवच्छन्दोऽनु पर्यावर्त्तन्ते(९)"—इति। यद्यपि समूढे तृतीयस्य त्रिरात्रस्याद्येऽहन्यैन्द्रवायवग्रहत्वाद्गायत्रीमुख एवायं त्रिरात्रः, तथाप्यत्र त्रिष्टुम्मुखः कर्त्तव्यः, शुक्रश्च त्रैष्टुभ इति पूर्वमेवोपपादितम् (२७६ पृ० २९पं०)। तस्मात् सप्तमेऽहनि शुक्रः प्रथमो गृह्यते। शेषं पूर्ववद्व्याख्येयम्॥

अथाष्टमेऽहन्याग्रयणग्रहत्वं विधत्ते—"वाग्वा आग्रयणो वागष्टममहस्तस्मादष्टमेऽहन्नाग्रयणो गृह्यते, स्व एवैनमायतने गृह्णाति(१०)"—इति। षष्ठकाण्डे आग्रयणग्रहब्राह्मणे (६ का०४.११.२.) "वाग्वै देवेभ्योऽपाक्रामत्"—इत्युपक्रम्य "आग्रयणे प्रत्यागच्छत्"—इत्युक्तत्वादाग्रयणस्य वाग्रूपत्वमर्थवादान्तरे द्रष्टव्यम्। अतो वाग्रूपत्वसामान्यादष्टमेऽहन्याग्रयणः प्रथमं प्रयोक्तव्यः॥

अथ नवमेऽहन्यैन्द्रवायवग्रहत्वं विधत्ते—"प्राणो वा ऐन्द्रवायवः प्राणो नवममहस्तस्मान्नवमेऽहन्नैन्द्रवायवो गृह्यते, स्व एवैनमायतने गृह्णाति(११)"—इति। प्रकृतौ ग्रहब्राह्मणे "वाग्वा एषा यदैन्द्रवायवः"—इत्युक्तत्वाद् (६का० ४.७.१.) वागिन्द्रियस्य च प्राणावान्तरभेदत्वादैन्द्रवायवस्य प्राणत्वम्; नवमस्याह्नोऽपि प्राणत्वेन स्तुतिरन्यत्र द्रष्टव्याः। अतः प्राणत्वसामान्यान्नवमेऽहन्यैन्द्रवायवः प्रथमं ग्रहीतव्यः॥

तदेतदैन्द्रवायवाग्रत्वं प्रशंसति—"एतद्वै तृतीयं यज्ञमापद्य च्छन्दाꣳस्याप्नोति, यदैन्द्रवायवः श्वो गृह्यते ; यत्रैव यज्ञमदृशन्, तत एवैन पुनः प्र युङ्क्ते; ऽथो स्वमेवच्छन्दोऽनु पर्यावर्त्तन्ते[१२]"—इति। अनीकायास्तृतीयावृत्तिरूपस्त्रिरात्रस्तृतीयो यज्ञः। शेषमाग्रयण-वाक्यवद्व्याख्येयम् (२७७पृ० ७पं०)॥

अथ दशमेऽहन्यैन्द्रवायवाग्रत्वं विधत्ते—"पथो वा एतेऽध्य-पथेन यन्ति, येऽन्येनैन्द्रवायवात्प्रतिपद्यन्ते; ऽन्तः खलु वा एष यज्ञस्य यद्दशममहर्दशमेऽहन्नैन्द्रवायवो गृह्यते, यज्ञस्यैवान्तं गत्वापथात्पन्था-मपि यन्त्यथो यथा वहीयसा प्रतिसारं वहन्ति, तादृगेव तत्[१३]"—इति। द्वादशाहस्य प्रायणीयोदयनीययोर्मध्यवर्त्ती योऽयं दशरात्रस्तं दशरात्रं 'ये' यजमानाः ऐन्द्रवायवाग्रत्वात् 'अन्येन' शुक्राग्रत्वादिना 'प्रतिपद्यन्ते' प्रारभन्ते, ते 'एते' यजमानाः 'पथः' सकाशाद् भ्रष्टाः 'अधिकेनापथा' कुमार्गेण गच्छन्ति। तस्मादैन्द्रवायवाग्रत्वेनैव दशरात्र उपक्रान्तव्य.। तथैव ह्यनुवाकादौ वर्णितम् (२७६पृ०११पं०)। यदेत-' द्दशममहरस्ति, स एव ऐन्द्रवायवाग्रत्वेनोपक्रान्तस्य दशरात्राख्यस्य यज्ञस्य 'अन्तः खलु वै' समाप्तिभूमिरेव। तत प्रथमदिनवदन्तिम-दिनेऽपि ऐन्द्रवायव एव प्रथमं ग्रहीतव्यः। तथा सति यज्ञस्य परिसमाप्तिपर्यन्तं कुमार्गं परित्यज्य सम्यङ्मार्गमेव प्राप्नुवन्ति। अपि च यथा लोके 'वहीयसा' प्रौढभारवाहिना बलीवर्दसमूहेन युक्ता वणिजः 'प्रतिसारं वहन्ति' पार्श्वद्वयगतान् क्षुद्रमार्गान् परित्यज्य प्रसिद्ध एव राजमार्गे बलीवर्दः पङ्क्त्याकारो यथा भवति तथा नयन्ति। तद्वदत्राप्यैन्द्रवायवोपक्रमोपसंहारौ द्रष्टव्यौ॥

तमिममैन्द्रवायवाग्रत्वादिरूपं व्यूढप्रकारं लोकप्रसिद्धविवाह-साम्येन प्रशंसति— "छन्दांस्यन्योऽन्यस्य लोकमभ्यध्यायन्, तान्येतेनैव देवा व्यवाहयन्(१४)"—इति। यथा लोके काश्यपगोत्रोत्पन्नाः पुरुषा विवाहार्थं भारद्वाजगोत्रोत्पन्नां कन्यकामभितो विचारयन्ति, भारद्वाजगोत्रोत्पन्नाश्चेतरां विचार्य तद्वदेव विवाहं कुर्वन्ति; एवमत्रापि छन्दोऽभिमानिनो देवाः स्वकीयानामैन्द्रवायवाग्रत्वादीनामन्योऽन्यस्य स्थानमभिध्यायन्तः 'तानि' सर्वाण्यैन्द्रवायवत्वादीनि 'एतेनैव' पूर्वोक्तप्रकारेण विवाहयन्ति, विवाहं कारयन्ति, स्थान-विपर्यासेन प्रापयन्तीत्यर्थः ॥

तथैन्द्रवायवाग्रयणयोरन्योऽन्यस्थानविपर्यासं दर्शयति— "ऐन्द्र-वायवस्य वा एतदायतनं यच्चतुर्थमहस्तस्मिन्नाग्रयणो गृह्यते, तस्मा-दाग्रयणस्यायतने नवमेऽहन्नैन्द्रवायवो गृह्यते(१५)"—इति। समूढो हि द्वादशाहो व्यूढस्य प्रकृतिः। समूढे हि प्रायणीयोदयनीयदशमाहानि परित्यज्यावशिष्टेषु नवसु दिनेषु त्र्यनीका त्रिरावृत्ता। तत्र द्वितीयायास्त्र्यनीकायाः मध्यवर्त्ति-नवरात्रस्य* चतुर्थेऽहन्युपक्रान्त-त्वात्तदहरैन्द्रवायवस्यायतनम्, तस्मिन्नहनि पूर्वोक्तव्यूढप्रकारेण द्वितीय आग्रयणो गृहीत.। नवमञ्चाहः समूढे आग्रयणस्यायतनम्; तत्र व्यूढप्रकारेण द्वितीय ऐन्द्रवायवो गृहीतः। सोऽयमैन्द्रवायवा-ग्रयणयोः परस्परं विवाहः ॥

अथ शुक्रैन्द्रवायवयोः परस्पर विवाहं दर्शयति—"शुक्रस्य वा एतदायतन यत्पञ्चममहस्तस्मिन्नैन्द्रवायवो गृह्यते, तस्मादैन्द्रवायव-

---

* "मध्यवर्त्तितिरात्रस्य"—इति क।

स्यायतने सप्तमेऽहञ्छुक्रो गृह्यते(१६)"—इति। समूढगते नवरात्रे यत् पञ्चममहः, तदेतद्द्वितीयायास्त्र्यनीकाया: मध्यवर्त्तित्वाच्छुक्र-स्यायतनम्; तस्मिन्नहनि व्यूढप्रकारेणैन्द्रवायवो गृहीतः। यत्तु सप्तममहः तदेतत् तृतीयायास्त्र्यनीकायाः प्रथमत्वादैन्द्रवायव-स्यायतनम्, तस्मिन्नहनि द्वितीयवारमावर्त्यमानः शुक्रो गृहीतः। सोऽयं शुक्रैन्द्रवायवयोर्विवाहः॥

अथ शुक्राग्रयणयोः परस्परं विवाहं दर्शयति—"आग्रयणस्य वा एतदायतनं यत् षष्ठमहस्तस्मिञ्छुक्रो गृह्यते, तस्माच्छुक्र-स्यायतनेऽष्टमेऽहन्नाग्रयणो गृह्यते(१७)"—इति। यदेतत् षष्ठमहस्त-देतद्द्वितीयायास्त्र्यनीकाया अन्तिमत्वादाग्रयणस्यायतनम्, तस्मिन्न-हनि व्यूढप्रकारेणावर्त्यमानः प्रथम शुक्रो गृहीतः। यत्त्वष्टम-महस्तदेतत् तृतीयायास्त्र्यनीकाया मध्यवर्त्तित्वाच्छुक्रस्यायतनम्; तस्मिन्नहनि व्यूढप्रकारेणाग्रयणो गृहीतः। सोऽय शुक्राग्रयणयो-र्विवाहः॥

एतद्वेदनं प्रशंसति—"छन्दाꣳस्येव तद्विवाहयति प्र वस्यसो विवाह-माप्नोति य एवं वेदाथो देवताभ्य एव यज्ञे संविदं दधाति, तस्मा-दिदमन्योऽन्यस्मै ददाति(१८)"—इति। यः पुमानेवमैन्द्रवायवायत्वा-दीनां विवाहं जानाति, स तेन वेदनेन छन्दोदेवतानामेव विवाहं कृतवान् भवति। स्वयञ्च धनिकतमात् कुलाद्विवाहं प्राप्नोति। अपि च यज्ञानुष्ठानकाले देवताविषयमभिज्ञानं 'दधाति' धारयति। यस्मादेव छन्दसां विवाहः प्रवृत्तः, 'तस्मात्' लोकेऽपि 'इदं' कन्यका-रूपमपत्यम् 'अन्य' पिता 'अन्यस्मै' जामात्रे ददाति॥

अथ मीमांसा। दशमाध्यायस्य पञ्चमपादे (जै० सू०३७, ३८; अधि० २१.) चिन्तितम्—

"व्यनीकादावैन्द्र*वायवशुक्राग्रयणानुवादता।
परिसंख्या वार्थवादो वा विधिर्वा न हि त्रयः॥
वैयर्थ्येन त्रिदोषत्वाल्लक्षणापत्तितस्तथा।
विधिराग्रयणाग्रत्व इवानैमित्तिको हि सः॥"

अस्ति द्वादशाहे व्यनीका†। ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमश्चाहः; अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रमथाग्रयणाग्रमथैन्द्रवायवाग्रमथ शुक्राग्रमथाग्रयणाग्रमथैन्द्रवायवाग्रमथ शुक्राग्रमथाग्रयणाग्रमिति‡। तत्र द्वादशाहगतेषु द्वितीयतृतीयचतुर्थेषु त्रिष्वहःसु क्रमेणैन्द्रवायवाग्रत्वशुक्राग्रत्वाग्रयणाग्रत्वानि विहितानि। तेष्वाद्यं रथन्तरनिमित्तम्, द्वितीयं बृहन्निमित्तम्। एतच्च प्रकृतौ व्यवस्थितम्। तदुभयमत्र चोदकेन प्राप्तम्। तत्र चतुर्धा संशयः। अनुवादो वा, परिसंख्या वा, अर्थवादो वा, विधिर्वेति। तत्र प्राप्तत्वादनुवाद इति चेत्, न; वैयर्थ्यापत्तेः। तर्हि गुणान्तरपरिसंख्याऽस्त्विति चेत्, न, दोषत्रयापत्तेः। चतुर्थेऽहन्यप्राप्तस्याग्रयणाग्रत्वस्य विधित्सितस्य प्रशंसार्थोऽयमर्थवाद इति

---

* 'व्यनीकायामैन्द्र'—इति क।

† त्रीणि व्यनीकानि ऐन्द्रवायवाग्रशुक्राग्राग्रयणाग्ररूपाणि यस्यां सा व्यनीका। तथा च त्रिरावृत्तितया द्वादशाहगतयोः प्रायणीयोदयनीययोरन्तर्मध्ये वर्तमानेषु दशसु अहःसु दशमव्यतिरिक्तानि नवसंख्याकान्यहानि, तैः पूरितानि भवन्ति। २७६ पृ० ३पं० द्रष्टव्य।

‡ प्रथमकाण्डपञ्चमे स्पष्टमिदम्। २७६ पृ० द्रष्टव्यम्।

चेत्, न; लवणाद्वृत्तिप्रसङ्गात्। तस्मादाग्रयणाग्रत्वे यथाविधिस्तथेतरयोरपि द्रष्टव्यः। न च प्राप्तत्वादविधिरिति वाच्यम्; तस्य विधेर्नैमित्तिकत्वाभ्युपगमात्। रथन्तरादिनिमित्तकयोरेव हि चोदकेन प्राप्तिः, प्रयोजनन्तु द्वादशाहविकृतिषु यत्र क्वापि रथन्तरादिनिमित्तत्वाभावेऽप्यैन्द्रवायवाग्रत्वसिद्धिः"—इति॥

तत्रैवान्यच्चिन्तितम् (जै० सू० ७६—८२; अधि २४.)—

"व्यूढोऽपि प्रकृतिः किं वा विकृतिः स्याद् द्विपृष्ठवत्।
विधिसाम्यादादिमोऽन्त्यो लिङ्गात्कामविधेरपि॥

द्विविधो हि द्वादशाहः,—समूढो व्यूढश्च। तत्र समूढः पूर्वमुदाहृतः; अथ व्यूढ उदाह्रियते,—ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रमथ द्वे आग्रयणाग्रे, अथैन्द्रवायवाग्रमथ द्वे शुक्राग्रे, अथाग्रयणाग्रमथ द्वे ऐन्द्रवायवाग्रे इति (२७६पृ० ६पं०)। तत्र समूढस्य तावत्प्रकृतित्वमविवादम्। तद्वद् व्यूढोऽपि किं प्रकृतिः, किं वा विकृतिरिति संशये प्रकृतिरिति प्राप्तम्; कुतः? विधिसाम्यात्,—यथा समूढप्रकारः फलार्थो विहितः, तथा व्यूढप्रकारोऽपि; न चात्र कश्चिद्विशेषोऽस्ति, येन तयोः प्रकृतिविकृतिभावो निश्चीयेत। न च प्रकारद्वयस्य प्रकृतित्वमदृष्टचरम्; रथन्तरबृहत्पृष्ठयोर्ज्योतिष्टोमप्रकारयोस्तद्दर्शनादिति पूर्वपक्षः॥

व्यूढः समूढस्य विकृतिः, कुतः? लिङ्गदर्शनात्। "ऐन्द्रवायवस्य वा एतदायतनं यच्चतुर्थमहः"—इति व्यूढे श्रूयते (२७५पृ० ६पं०)। एतच्च विकृतित्वे सति भवति, नान्यथा। तथाहि। व्यूढे प्रायणी-

चोदनीयव्यतिरिक्तेषु दशस्वहःसु यच्चतुर्थम्, तदाग्रयणाग्रत्वादैन्द्र-वायवस्यायतनम्, समूढे तु तदहर्नवानामह्नां मध्ये द्वितीयचिकादित्वादैन्द्रवायवाग्रम्। तत्र व्यूढस्य विकृतितायां चोदकेन प्राप्यमाणं विधित्सिताग्रयणाग्रत्वस्तुतयेऽनूद्यत इति युक्तम्। किञ्च "यः कामयेत (बहुः स्यां) प्र जायेय"—इति (२८७पृ०२पं०) कामाय व्यूढो विधीयते; तथा च समूढवत् क्रत्वर्थे विध्यभावाद्रथन्तरवृहत्पृष्ठवैषम्येण विकल्पितप्रकृतित्वं नास्ति। तत समूढस्य द्वादशाहस्य विकृतिषु ग्रह-गणेष्वनयोरन्यतरस्यातिदेशः पूर्वपक्षिणः प्रयोजनम्; समूढस्यैवातिदेशः सिद्धान्त."—इति॥

तत्रैवान्यच्चिन्तितम् (जै०सू०८८, अधि०२६)—

"व्यूढे भचादिमन्त्राणामर्थानाञ्च व्यतिक्रमः।
मन्त्राणामेव बाध' स्यादविशेषेण कीर्त्तनात्॥
छन्दसां व्यत्यय प्रोक्तो नार्थानां तेन मन्त्रगाः।
गायत्र्याद्या विपर्यास्या अर्थयुक्तिः प्रशस्तये॥

व्यूढे द्वादशाहे भचपवमानतदुभयमन्त्रपरिधिकपालानि चोदकप्राप्तानि। तत्र भचमन्त्रेषु सवनत्रयगतेषु गायत्रीच्छन्दसस्त्रिष्टुप्छन्दसो जगतीच्छन्दश्च इति पदत्रयं श्रुतम्। तथा पवमानत्रयविषयेष्वनारोहमन्त्रेषु गायत्रीच्छन्दास्त्रिष्टुप्छन्दा जगतीच्छन्दा इति श्रुतम्। तथा परिधिस्तावके अर्थवादे पठ्यते—"गायत्रो मध्यमः परिधिस्त्रैष्टुभो दक्षिणो जागत उत्तरः"—इति। तथा कपालविषय वाक्य पठ्यते—"अष्टाकपाल' प्रातस्सवनीय', एकादशकपालो माध्यन्दिनीयो द्वादशकपालस्तृतीयसवनिकः"—इति। अचा-

ष्टलादिभिस्त्रिभिः सङ्ख्याभिर्गायत्र्यादिच्छन्दांसि तत्तत्पादाक्षरसङ्ख्याति-द्वारेणोपस्थाप्यन्ते। एवं स्थिते सति व्यूढप्रकरणे छन्दोव्यतिक्रमः पठ्यते—"छन्दाꣳसि वा अन्योऽन्यस्य लोकमभ्यध्यायन् (गायत्री-त्रिष्टुभस्त्रिष्टुब् जगत्या जगती गायत्र्या)"—इति (२७५पृ० ४पं०)। तत्र संशयः। सोऽयं छन्दोव्यतिक्रमो भचपवमानपरिधिकपालरूपा-णामर्थानामुभयविधमन्त्रगतच्छन्दोवाचिशब्दानां कर्त्तव्यः, किं वा तेषां शब्दानामेव? इति ॥

तत्र मन्त्रगतानामेवेति विशेषाश्रवणात्सर्वत्र व्यतिक्रमः इत्याद्यः पक्षः। तेन गायत्रशब्दनिर्दिष्टः प्रातःसवनीयो भचः, त्रिष्टुप्-शब्दितस्य माध्यन्दिनीयस्य भचस्य स्थाने; माध्यन्दिनीयो जागतस्य तृतीयसवनीयस्य स्थाने, जागतो गायत्रस्य प्रातस्सवनीयस्य स्थाने। तथा बहिष्पवमानो माध्यन्दिनपवमाने, माध्यन्दिनपवमानस्तृतीय-सवने, आर्भवपवमानः प्रातस्सवने। तथा मध्यमः स्थविष्ठः परिधि-र्दक्षिणतः, अणीयान् द्राघीयानुत्तरतः, अणिष्ठो ह्रसिष्ठो मध्यतः। तथाष्टाकपालो माध्यन्दिने सवने, एकादशकपालस्तृतीयसवने, द्वादशकपालः प्रातस्सवने। सोऽयमर्थव्यतिक्रमः। मन्त्रद्वयशब्देष्व-प्येवं योजनीयम्। इति प्राप्ते, ब्रूमः;—छन्दांसीति वाक्यार्थानां व्यतिक्रमो नोक्तः, अतो मन्त्रगतानां गायत्र्यादिशब्दानामेव व्यतिक्रमः। यस्त्वर्थेषु गायत्र्यादिशब्दप्रयोगः, स प्रशंसार्थः; भचा-द्यर्थानां मुख्यच्छन्दस्त्वाभावादिति राद्धान्तः"—इति ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठकेऽष्टमोऽनुवाकः॥

प्र॒जाप॑तिरकामयत॒ प्र जा॑येये॒ति॒ स ए॒तं द्वा॑दशरा॒त्र मं॑पश्यत्तमाह॑रत्तेना॑यजत॒ ततो॑ वै स प्राजा॑यत॒ यः का॒मये॑त॒ प्र जा॑येये॒ति॒ स द्वा॑दशरा॒त्रेण॑ यजेत॒ प्रैव जा॑यते[१] ब्रह्मवा॒दिनो॑ वद॒न्त्यग्नि॒ष्टोम॒प्रा॑यणा य॒ज्ञा अथ॒ कस्मा॑दतिरा॒त्रः पूर्वः॑ प्रयु॑ज्यत॒ इति॒ चक्षु॑षी वा ए॒ते य॒ज्ञस्य॒ यद॑तिरा॒त्रौ क॒नीनि॑के अग्नि॒ष्टोमौ॒ यत् (१)

अ॒ग्नि॒ष्टो॒मं पूर्वं॑ प्रयु॒ञ्जी॒रन् ब॑हि॒र्धा क॒नीनि॑के दध्यु॒स्तस्मा॑दतिरा॒त्रः पूर्वः॒ प्र यु॑ज्यते॒ चक्षु॑षी ए॒व य॒ज्ञे धि॒त्वा म॑ध्य॒तः क॒नीनि॑के॒ प्रति॑ दधति॒[२] यो वै गा॑य॒त्रीं ज्योति॑ःपक्षां॒ वेद॒ ज्योति॑षा भा॒सा सु॑व॒र्गं लो॒कमे॑ति॒ याव॑ग्नि॒ष्टोमौ॒ तौ प॒क्षौ येऽन्त॒रेऽष्टावु॒क्थ्याः॑ स आ॒त्मैषा वै गा॑य॒त्री ज्योति॑ःपक्षा॒ य ए॒वं वेद॒ ज्योति॑षा भा॒सा सु॑व॒र्गं लो॒कम् ( २ )

ए॒ति॒[३] प्र॒जाप॑ति॒र्वा ए॒ष द्वा॑दश॒धा विहि॑तो॒ यद् द्वा॑दशरा॒त्रो याव॑तिरा॒त्रौ तौ प॒क्षौ येऽन्त॒रेऽष्टावु॒क्थ्याः॑ स आ॒त्मा प्र॒जाप॑ति॒र्वावैष सन्त्सद्ध॒ वै स॒त्रेण॑ स्पृणोति प्रा॒णा वै सत् प्रा॒णाने॒व स्पृ॑णोति॒[४] सर्वा॑सां॒ वा ए॒ते प्र॒जानां॑ प्रा॒णैरा॑सते॒ ये स॒त्रमास॑ते॒ तस्मा॑त् पृच्छन्ति॒ किमे॒ते स॒त्रिण॒ इति॑[५] प्रि॒यः प्र॒जाना॑म् ( ३ )

उत्थितो भवति य एवं वेद[1] ॥ ८ ॥
य[1]ल्लोकं[2] प्रजानां[3] * पञ्च च ॥ ९ ॥

अष्टमेऽनुवाके द्वादशाहस्य व्यूढप्रकारो निरूपितः; अथ नवमे द्वादशाहस्याहर्विशेषा उच्यन्ते। तत्रादौ द्वादशाहं विधत्ते— "प्रजापतिरकामयत प्रजायेयेति, स एतं द्वादशरात्र मपश्यत्, तमाहरत्, तेनायजत, ततो वै स प्राजायत, यः कामयेत प्र जायेयेति, स द्वादशरात्रेण यजेत, प्रैव जायते(१)"—इति ॥

अथ प्रश्नोत्तरमुखेन प्रथममहर्विधत्ते— "ब्रह्मवादिनो वदन्त्य-ग्निष्टोमप्रायणा यज्ञा अथ कस्मादतिरात्रः पूर्वः प्रयुज्यत इति, चक्षुषी वा एते यज्ञस्य यदतिरात्रौ, कनीनिके अग्निष्टोमौ, यद-ग्निष्टोम पूर्वं प्रयुञ्जीरन् बहिर्धा कनीनिके दध्युस्तस्मादतिरात्रः पूर्वः प्र युज्यते, चक्षुषी एव यज्ञे धित्वा मध्यतः कनीनिके प्रति दधति(२)"—इति। अग्निष्टोम प्रायणं प्रथमभावि येषां सोम-यागानाम्, ते 'अग्निष्टोमप्रायणा.'। अत एवास्य काण्डस्याद्यानु-वाकेऽभिहितम्— "तस्मादाऊर्ज्योष्टयज्ञ इति"—इति (२४८ पृ० ६ प०)। एवं सति तमग्निष्टोम परित्यज्य द्वादशाहस्य प्रथमेऽह्नि कस्मात् कारणादतिरात्र' प्रयुज्यते? इति ब्रह्मवादिनां प्रश्न'। तत्राभिज्ञा उत्तरमेव माहुः। पुरुषस्थानीयस्य द्वादशाहयज्ञस्य चक्षुर्गोलकस्था-नीयावतिरात्रौ, कनीनिकास्थानीयावग्निष्टोमौ। कृष्णमण्डलस्य मध्ये यदवान्तरं पृथङ्मण्डलमतिकृष्णम्, तद्दर्शनशक्तिस्थानम्; सेय

* "अग्निष्टोमो यत्[१] सुवर्गं लोक[२] प्रिय प्रजानाम्"—इति क, ख, ग।

कनीनिकेत्युच्यते। एवं सति यदि यजमानाः प्रथममग्निष्टोमं प्रयुञ्जीरन्, तदानीमाधारभूतं गोलकं विना बहिरेवाकाशप्रदेशे कनीनिके स्थापयेयुः। तस्मात्कारणादतिरात्र एव प्रथमेऽह्नि प्रयोक्तव्यः। तथा सति पुरुषरूपे द्वादशाहयज्ञे गोलकद्वयं प्रथमं स्थापयित्वा तन्मध्ये कनीनिकाद्वयं स्थापयन्ति॥

तदेवं प्रथममहर्विधायानन्तरभावीनि दशाहानि पक्षरूपं परिकल्प्य विधत्ते—"यो वै गायत्रीं ज्योतिःपक्षां वेद, ज्योतिषा भासा सुवर्गं लोकमेति, यावग्निष्टोमौ तौ पक्षौ, येऽन्तरेऽष्टावुक्थ्याः स आत्मैषा वै गायत्री ज्योतिःपक्षा य एवं वेद ज्योतिषा भासा सुवर्गं लोकमेति[१]"—इति। अष्टाक्षरपादा गायत्रीमष्टसङ्ख्योपेतमुक्थ्यरूपमहरष्टकं पक्षिरूपत्वेन परिकल्प्य तद्रूपा गायत्रीत्युच्यते। ज्योतीरूपौ पक्षौ यस्या गायत्र्याः सा 'ज्योतिःपक्षा'। तादृशीं यो यजमानो वेद, स यजमानः पक्षरूपं ज्योतिरेव स्वर्गमार्गप्रदर्शनाय भासकं दीपकं कृत्वा, तेनानुष्ठितज्योतिराख्येन प्रकाशेन स्वर्गं प्राप्नोति। कौ तौ पक्षौ? किं तस्याः पक्षिरूपाया गायत्र्याः स्वरूपम्? इति, तदुभयमुच्यते—द्वादशाहस्य प्रायणीयोदयनीयाख्ये प्रथमोत्तमे अहनी विहाय मध्यवर्त्तिनो दशरात्रस्याद्यन्तयोरह्नोरनुष्ठेयौ यावग्निष्टोमौ तौ पक्षस्थानीयौ, ये च तयोरग्निष्टोमयोरभ्यन्तरेऽष्टसङ्ख्याकेष्वहस्स्वनुष्ठेया अष्टावुक्थ्याः, सोऽयमुक्थ्यसङ्घः पक्षिरूपाया गायत्र्याः 'आत्मा' शरीरम्। एतादृशानि दशाहानि कुर्यादित्यर्थः। 'एषा वै'-इत्यादिः प्रतिपादितस्यार्थस्योपसंहारः॥

सोऽयं द्वादशरात्रो द्विविधः,—सत्ररूपोऽहीनरूपश्च। तत्र सत्र-

रूपं तावद्विधातुं प्रस्तौति—"प्रजापतिर्वा एष द्वादशधा विहितो यद् द्वादशरात्रो; यावतिरात्रौ तौ पक्षौ, येऽन्तरेऽष्टावुक्थ्याः स आत्मा; प्रजापतिर्वावैष सन्त्सद्ध वै सत्रेण स्पृणोति, प्राणा वै सत्प्राणानेव स्पृणोति(४)"—इति। योऽयं द्वादशरात्रोऽस्ति, सोऽयं द्वादशभिः प्रकारैराविर्भूतः प्रजापतिरेव। तस्य च प्रजापतेः पक्षिरूपत्वं परिकल्प्यते। पूर्वपक्षत्वेन निरूपितयोरग्निष्टोमयोः समीपवर्त्तिनौ प्रथमद्वादशयोरह्नोरनुष्ठेयौ प्रायणीयोदयनीयाख्यौ यावतिरात्रौ*, तावपि पक्षस्थानीयत्वात्पक्षावेव। अग्निष्टोमसहितयोरतिरात्रयोः पक्षयोर्मध्ये येऽष्टावुक्थ्याः, सोऽयमुक्थ्यमङ्गः पक्षिरूपस्य प्रजापतेः शरीरमात्मा। 'एषः' एवंविधो द्वादशरात्रो यथोक्तकल्पनया द्वादशविधः†। प्रजापतिरेव स्वकीयेन सत्ररूपप्रयोगेण 'सद्ध स्पृणोति' सच्छब्दवाच्यं यदस्ति, तत्प्रीणयत्येव। किं तद्वाच्यमिति, तदुच्यते—प्रजानां प्राणा एव सच्छब्दवाच्याः; जन्मान्तरेऽप्यनपायेन सद्भावात्। अतः सच्छब्दवाच्यान् प्राणानेव प्रीणयति॥

अथ प्रस्तुतं सत्ररूपं विधत्ते—"सर्वासां वा एते प्रजानां प्राणैरासते, ये सत्रमासते; तस्मात् पृच्छन्ति किमेते सत्रिण इति(५)"—इति। 'ये' यजमाना द्वादशाहरूपं 'सत्रम्' 'आसते' अनुतिष्ठन्ति। आसिधातुः सत्रविषयेऽनुष्ठानमुपलक्षयति§। ते यजमानाः सर्वासां प्रजानां प्राणैरेव निमित्तभूतैरनुतिष्ठन्ति। एत-

* "उभयतोऽतिरात्रम्"—इति कात्या० श्रौ० १२ १. ६।

†, ‡ ऐ० ब्रा० ४. १. १. (ए० सो० सु० २मा० ३६६ ए०) मष्टव्यम्।

§ "आसत उपयन्तीति सत्रलिङ्गम्"—इति कात्या० श्रौ०१२. १. ५।

दनुष्ठानेनैव जगन्निर्वाहहेतुना प्राणाः प्रीता भवन्तीत्यर्थः। यस्मात् सत्रानुष्ठानं प्राणानां प्रीतिहेतुः, 'तस्मात्' सर्वे जना अनुष्ठातॄन् दृष्ट्वा किमेते सत्रिणः? इत्येवमादरेण साश्चर्याः पृच्छन्ति। अतः प्रशस्तमिदं सत्रमनुष्ठेयमित्यर्थः॥

अथ वेदनं प्रशंसति—"प्रियः प्रजानामुत्थितो भवति य एवं वेद[1]"—इति। सत्रस्य वेदिता सर्वासां प्रजानां प्रियो भूत्वा जगत्युत्कृष्टोऽवतिष्ठते॥ ९॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः॥

---

न वा एषोऽन्यतोवैश्वानरः सुवर्गाय लोकाय प्राभवदूर्ध्वो ह वा एष आतत आसीत्ते देवा एतं वैश्वानरं पर्यौहन्त्सुवर्गस्य लोकस्य प्रभूत्या[1] ऋतवो वा एतेन प्रजापतिमयाजयन् तेष्वार्ध्नोदधि तदृध्नोति ह वा ऋत्विक्षु य एवं विद्वान् द्वादशाहेन यजते[2] तेऽस्मिन्नैच्छन्त स रसमह वसन्ताय प्रायच्छद् (१)

यवं ग्रीष्मायौषधीर्वर्षाभ्यो व्रीहीञ्छरदे माषतिलौ हेमन्तशिशिराभ्यां[3] तेनेन्द्रं प्रजापतिरयाजयत्ततो वा इन्द्र इन्द्रोऽभवत्तस्मादाहुरानुजावरस्य यज्ञ इति स ह्येतेनाग्रेऽयजते[4]ष ह वै कुणपमत्ति यः सत्रे प्रति-

गृह्णाति पुरुषकुणपमश्वकुणपं गौर्वा अन्नं येन पात्रेणान्नं बिभ्रति यत्तन्न निर्णेनिजति ततोऽधि (२)

मलं जायत[४] एक एव यजेतैको हि प्रजापतिराभ्नोद्[६] द्वादशरात्रीर्दीक्षितः* स्याद् द्वादश मासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापतिर्वावैष एष ह त्वै जायते यस्तपसोऽधि जायते[७] चतुर्धा वा एतास्तिस्रस्तिस्रो रात्रयो यद् द्वादशोपसदो याः प्रथमा यज्ञं ताभिः सम्भरति या द्वितीया यज्ञं ताभिरा रभते (३)

यास्तृतीयाः पात्राणि ताभिर्निर्णेनिक्ते याश्चतुर्थीरपि ताभिरात्मानमन्तरतः शुन्धते[८] यो वा अस्य पशुमत्ति मांसꣳ सोऽत्ति यः पुरोडाशं मस्तिष्कꣳ स यः परिवापं पुरीषꣳ स य आज्यं मज्जानꣳ स यः सोमꣳ स्वेदꣳ सोऽपि ह वा अस्य शीर्ष्ण्या निष्पदः प्रति गृह्णाति यो द्वादशाहे प्रति गृह्णाति तस्माद् द्वादशाहेन (४)

न याज्यं पाप्मनो व्यावृत्त्यै[९] ॥ १० ॥

अयंच्छ[१]दधि[२] रभते[३] द्वादशाहेन[४] च्त्वारि च ॥ १० ॥

---

* "दीक्षित" – इति निर्विसर्गपाठ क ख-पुस्तकयो ।

नवमेऽनुवाके द्वादशाहगतान्येकादशाहानि विहितानि; अथ दशमे द्वादशमहर्विधत्ते —"न वा एषोऽन्यतोवैश्वानरः सुवर्गाय लोकाय प्राभवदूर्ध्वो ह वा एष आतत आसीत्ते देवा एतं वैश्वानरं पर्यौहन्त्सुवर्गस्य लोकस्य प्रभूत्यै"(१)– इति । वैश्वानराख्येनाग्निना दृष्टत्वादतिरात्रो 'वैश्वानरः'। 'अन्यतः' एकस्मिन्नेव भागे वैश्वानर-शब्दवाच्योऽतिरात्रो यस्य द्वादशाहस्य, सोऽयम् 'अन्यतोवैश्वानरः'। आदावेवातिरात्रयुक्तो न त्ववसान इत्यर्थः। एतादृशः 'एषः' द्वाद-शाहः स्वर्गलोकं सम्पादयितुं न समर्थः। कुतो न समर्थ इति, तदुच्यते —'एषः' द्वादशाह ऊर्ध्वाभिमुखः अतिविस्तृत आसीत्; तस्यावसाननियामकाभावात्। अतोऽयमपर्यवसितः सन् स्वर्गस्य प्रभु-र्नासीत्। तदानीं देवाः 'एतं' वैश्वानरशब्दवाच्यमतिरात्रं 'पर्यौहन्' परितोऽवसानस्थाने नियामकत्वेन स्थापितवन्तः। अतोऽतिरात्रेण नियमितत्वादेतावानयं द्वादशाह इति तत्परिमाणस्य पर्यवसित-त्वात् स्वर्गलोकं सम्पादयितुमयं प्रभुर्भवति । तस्मादुपरिष्टादति-रात्रः कर्तव्य इति विध्युन्नयः ॥

अथैतस्य द्वादशाहस्याहीनरूपतां विधत्ते —"ऋतवो वा एतेन प्रजापतिमयाजयन् तेष्वार्ध्नोदधि तदृध्नोति ह वा ऋत्विक्षु य एवं विद्वान् द्वादशाहेन यजते(२)"– इति। पुरा कदाचिदस्मादृतवो देवा ऋत्विजो भूत्वा 'प्रजापतिं' यजमानम् 'एतेन' द्वादशाहेन अयाजयन्। तेन द्वादशाहेन स प्रजापतिः 'तेषु' ऋतुषु मध्येऽधिकां समृद्धिं प्राप्नोत्। तद्वदन्योऽप्यृत्विक्षु मध्ये द्वादशाहयागेन समृद्धिं प्राप्नोति। पूर्वत्र (२८॰ पृ॰ १४ पं॰) दशमाहपक्षादामिषोदमया

विधानाच्च द्वादशाहस्य सत्त्वम्; इह तु यजमानैकत्वाद्यजतिचोदनया विधानाच्चाहीनत्वमिति विशेषः* ॥

तमिमं द्वादशाहं प्रशंसितुं पूर्वोक्तामेव प्रजापतेः समृद्धिं प्रपञ्चयति —"तेऽस्मिन्नैच्छन्त, स रसमह वसन्ताय प्रायच्छद्, यवं ग्रीष्मायौषधीर्वर्षाभ्यो व्रीहीञ्छरदे, माषतिलौ हेमन्तशिशिराभ्याम्(१)"– इति। 'ते' वसन्ताद्या ऋतवः 'अस्मिन्' समृद्धे प्रजापतौ भागमैच्छन्। 'स' च प्रजापतिर्वसन्ताय 'रसम् अह' सर्वमपि भोग्यवस्तुगतं सारं दत्तवान्, वसन्तकाले हि भोगातिशयः प्रसिद्धः। तथा यवादीन् धान्यविशेषान् ग्रीष्मादिभ्यः प्रायच्छत्, ते हि तत्तत्काले प्रभूता भवन्ति। एवमुत्कर्षहेतुत्वेन द्वादशाहः प्रशस्तः॥

अथापकर्षनिवारकत्वेन द्वादशाहं प्रशंसति —"तेनेन्द्रं प्रजापतिरयाजयत्, ततो वा इन्द्र इन्द्रोऽभवत्, तस्मादाहुरानुजावरस्य यज्ञ इति स ह्येतेनाग्रेऽयजत(४)"– इति। इन्द्र उत्तमत्वेनाग्रजत्वाद्ववत् पूज्योऽपि सन्, पुरा कदाचित् अनुजवदवरः, सर्वैर्देवैस्तिरस्क्रियमाणो भूत्वा तत्परिहारोपायं वेदितुं प्रजापतिमुपसेवितवानित्येतावदत्र बहिरेव द्रष्टव्यम्। अत एवान्यत्राम्नातम् —"इन्द्रो वै देवानामानुजावर आसीत्, स प्रजापतिमुपाधावत्"– इति (६. ६. ११. २.)। 'स' च प्रजापतिः 'तेन' द्वादशाहेनेन्द्रमयाजयत्। ततो द्वादशाहप्रभावादयमिन्द्रस्तदानीम् 'इन्द्रोऽभवत्' स्वकीयपरमैश्वर्यलक्षणमिन्द्रत्वं प्राप्तवान्†। तस्माद् याज्ञिकाः "आनुजा-

---

* "यजत इत्यहीनस्य"– इति कात्या० श्रौ० १२. १. ५।

† ऐ० ब्रा० ४ ३ ३. (ए० सो० मु० २ भा० ४७३ पृ०) द्रष्टव्यम्।

वरस्य यज्ञः”- इति द्वादशाहमाचष्टे। यस्मादिन्द्र आनुजावरो भूत्वा तन्निवृत्तये प्रथममेतेन द्वादशाहेनायजत, तस्मादानुजावरयज्ञत्वमस्योपपन्नम्।

इदानीं सत्ररूपे द्वादशाहप्रयोगे दक्षिणानिषेधं* निन्दयोन्नयति —“एष ह वै कुणपमत्ति, यः सत्रे प्रतिगृह्णाति ; पुरुषकुणपमश्वकुणपं ; गौर्वा अन्न, येन पात्रेणान्नं बिभ्रति, यत्तन्न निर्णिनिजति, ततोऽधि मलं जायते[४]”- इति। सत्रे हि ये यजमानास्त ऋत्विज इत्येवं यजमानत्वव्यवहारवदृत्विक्त्वव्यवहारोऽप्यस्ति। अत एव शाखान्तरे —“अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति”— इत्यादावध्वर्युब्रह्मादिशब्दैर्व्यवह्रियन्ते। एवं सति ऋत्विक्त्वबुद्ध्या यागान्तरवदत्र यो दक्षिणां प्रतिगृह्णाति, स प्रतिग्रहीता शवभक्षणेन यः प्रत्यवायस्तं प्राप्नोति। नात्र पशुनखशवो विवक्षितः, किन्तु पुरुषाश्वादिशवः। किञ्चानेन यदन्नं भक्ष्यते, तद्गौरेव भवति ; गोमांसभक्षणसमः प्रत्यवायो भवतीत्यर्थः। किञ्चैनं प्रतिग्रहीतारमुद्दिश्य यस्मिन् कांस्यपात्रे भाण्डे वा[illegible] धारयन्ति, तत्पात्रं यदि शास्त्रोक्तमार्गेण शोधितं न कुर्वन्तु, तदा शोधनाभावात्तद्युक्तघटेऽधिकं मलं जायते ; [illegible]मधिकः प्रत्यवायो भवतीत्यर्थः॥

एवं दक्षिणानिषेधेन सत्रप्रयोगं दृढी[illegible]प्रयोगमपि दृढीकरोति —“एष [illegible]

राझीत्[६]"—इति। प्रजापतेरेकस्यैव समृद्धिरभूत्, न तु याजकानामृत्विजाम्। तस्मादेकस्य कर्तृत्वात् फलभाक्त्वाचाहीनत्वं सिद्धम्॥

अथ दीक्षाविशेषं विधत्ते—"द्वादशरात्रीर्दीक्षितः स्यात्, द्वादश मासाः संवत्सरः, संवत्सरः प्रजापतिः, प्रजापतिर्वावैष; एष ह त्वै* जायते यस्तपसोऽधि जायते[७]"—इति। द्वादशसङ्ख्योपेतानां मासानां संवत्सररूपत्वात्, संवत्सरस्य च प्रजापतिसृष्टत्वेन प्रजापतिरूपत्वात्, 'एषः' यजमानो द्वादशदीक्षायोगात् प्रजापतिरेव भवति। किञ्च यत् पूर्वं मातापितृभ्यां जननं न तन्मुख्यम्, किन्तु 'यः' यजमानो दीक्षारूपात् 'तपसः' अधिजायते, एष एव हि 'जायते' मुख्यजन्मवानित्यर्थः॥

अथोपसद्विशेषं विधत्ते—"चतुर्धा वा एतास्तिस्रस्तिस्रो रात्रयो, यद् द्वादशोपसदो, याः प्रथमा यज्ञं ताभिः सम्भरति, या द्वितीया यज्ञं ताभिरा रभते, यास्तृतीयाः पात्राणि ताभिर्निर्णेनिक्ते, याश्चतुर्थीरपि ताभिरात्मानमन्तरतः शुन्धते[८]"—इति। अत्रानुष्ठेया द्वादशदिनसाध्या उपसदो याः सन्ति, तास्तिस्रस्तिस्रः एकैकराशिरूपेण चतुर्धा विभज्यन्ते। तत्र प्रथमराशिगताभिस्तिसृभिर्यज्ञसाधनसम्पादनं भवति, द्वितीयराशिगताभिस्तिसृभिर्यज्ञमुपक्रमते, तृतीयराशिगताभिस्तिसृभिर्यज्ञपात्राणि शोधयति, चतुर्थराशिगताभिस्तिसृभिः स्वात्मनोऽन्तःशुद्धिं करोति॥

पुनरपि सत्रे दक्षिणाप्रतिग्रहलोभातिशयेन प्रसक्तिं निन्दति —"यो वा अस्य पशुमत्ति मांसमु स सोऽत्ति, यः पुरोडाश

* पदपाठदर्शनादवगम्यतेऽत्र "तु वै"—इत्यवग्रहः कार्य इति।

मस्तिष्कᳲ स, यः परिवापं पुरीषᳲ स, य आज्यं मज्जानᳲ स, यः सोमᳲ स्वेदᳲ सोऽपि ह वा अस्य शीर्षण्या निष्पदः प्रति गृह्णाति, यो द्वादशाहे प्रतिगृह्णाति, तस्माद् द्वादशाहेन न याज्यं पाप्मनो व्यावृत्त्यै(९)– इति। 'यः' पुमान् द्वादशाहसत्रे दक्षिणां प्रतिगृह्णाति, सोऽयं यदा स्वयं सोमयागं करोति, तदा तदीय-यागे योऽन्य ऋत्विक् भूत्वा तस्य प्रतिग्रहीतुः सम्बन्धिनमग्नीषोमी-यादिपशुहविःशेषम् 'अत्ति', 'सः' ऋत्विक् पुरुषादिमांसभक्षणसमं प्रत्यवायं प्राप्नुयात्। यस्तदीययागे पुरोडाशशेषमत्ति, सः 'मस्तिष्कं' पुरुषादिशिरोगतमांसं भक्षितवान् भवति। यः 'परिवापं' लाजरूप-हविःशेषमत्ति, सः पुरीषमेव भक्षितवान् भवति। यस्तदीययागे 'आज्यम्' इडाभागं भक्षयति, स मज्जानं भक्षितवान् भवति। यस्तदीययागे सोमशेषं भक्षयति, स स्वेदं भक्षितवान् भवति। किञ्च 'सः' प्रतिग्रहीता स्वयमपि 'अस्य' द्वादशाहकर्तुः 'शीर्षण्याः' शिरस्युत्पन्नाः 'निष्पदः'* द्वारैर्निर्गच्छन्तीर्मलिनजातीः प्रतिगृह्णाति॥

अथ वैतद्वाक्यं सर्वमहीनद्वादशाहविषयं व्याख्येयम्। तदानीं "यो वा अस्य पशुम्"– इत्यादेरयमर्थः— 'यः' कश्चिदृत्विग्भूत्वा अहीन-रूपद्वादशाहे पशुहविःशेषमत्ति, सोऽयम् 'अस्य' यजमानस्यैव मांस-मत्ति। एवमुत्तरत्रापि योज्यम्। यस्मादहीनद्वादशाहे दक्षिणाप्रति-ग्रहोऽनिषिद्धः, तस्मात्कारणादृत्विग्भूत्वा द्वादशाहेन यजमानं न याजयेत्; तदेतदयाजनं पाप्मनो व्यावृत्त्यै सम्पद्यते†; याजने तु

---

* 'निष्पदः' निर्गच्छन्त'– इति ऋ० सं० १०. १०२. ६. सा० भा०। 'निष्पत् निःसृतम्'– इति तै० ब्रा० ४. ३. १. सा० भा०।

† "निवृत्त्यै"– इति क।

शास्त्रोक्तं प्रायश्चित्तं कर्त्तव्यम्। सत्राहीनयोरेतावान् विशेषः,—सत्रे तु स्वयमपि यजमानत्वात् प्रतिग्रह एव नास्ति, अहीने तु विद्यमानस्य प्रतिग्रहस्य दुष्टत्वात् प्रतिगृह्य प्रायश्चित्तं कर्त्तव्य मिति॥

अत्र मीमांसा। दशमाध्यायस्य षष्ठपादे (जै० सू० ५८, ६०; अधि० १६.) चिन्तितम्—

"अहीनसत्रयोर्लक्ष्मभेदो नास्त्यस्ति वा? न हि।

आवृत्तिसाम्यादाद्यः स्यादिच्छाभिर्धा तयोर्भिदा॥

अस्ति द्वादशाहस्याहीनत्वं सत्रत्वं च*। तत्रैवं चिन्त्यते—किमहीनसत्रयोर्लक्षणभेदो नास्ति, उतास्ति? इति। तत्र नास्तीति तावत् प्राप्तम्। कुतः? ज्योतिष्टोमावृत्तिरूपस्य समानत्वात्; यथा द्विरात्रादीनामेकादशरात्रान्तानामहीनानाम्† आवृत्तौ ज्योतिष्टोमस्वरूपम्, तथा त्रयोदशरात्रादीनां‡ सत्राणामिति प्राप्ते, ब्रूमः—"आसीरन्", "उपेयुः" इति चोदनादयं यजमानबहुत्वञ्च सत्रलक्षणम्§, यजतिचोदना यजमानबहुत्वनियमाभावश्च¶ अहीनलक्षणम्**; वैदिकप्रयोगेषु तयोरव्यभिचारादिति राद्धान्तः"—इति॥

---

* "अथ द्वादशाहा भवेयु, सत्राण्यहीना वा"—इति आप० श्रौ० १०.५.१,२। "द्वादशाह सत्रमहीनश्च"—इत्यादि कात्या० श्रौ० १२.१.४।

† तानि चाष्टोमागेष १६५-२६५ पृष्ठेषु विहितानि द्रष्टव्यानि।

‡ तानि चैतोपरिष्टात्तृतीयचतुर्थप्रपाठकयोर्विधास्यमानानि।

§ तद्यथा—"त्रयोदशरात्रमासते", "चतुर्दशरात्र मासते"—इत्यादि ३ प्र० ५, ६। "द्वादशाहमृद्धिकामा उपेयुरिति तथा त्रयोदशरात्र मासीरन्निति सत्रलिङ्गम्"—इति कात्या० श्रौ०१२ १.५ व०या०।

¶ "यजमानबहुत्वचोदनाभावश्च"—इति ग-पाठ।

** "द्विरात्रेण यजते", "अग्निष्टोमेन यज्ञनयाजयत् ("त्रिरात्रस्याग्निष्टोम एव प्रथमम ")"—इत्यादि १६५, १६३ (१०४) पृ०।

तत्रैव (जै० सू० ४५–५०; अधि०१४.) अन्यच्चिन्तितम्—

"सत्रमेकः करोत्याहो बहवः? प्रकृताविव ।

एकः कुर्यादिहायीरन्नित्युक्त्या बहवो मताः ॥

द्वादशाहादिसत्रस्य ज्योतिष्टोमः प्रकृतिः*; तत्र कर्त्रैक्यात् चोदकेन सत्रेऽपि कर्त्रैक्ये प्राप्ते, प्रत्यक्षवचनात्† बहवोऽभ्युपेयाः"–इति ॥

तत्रैव (जै०सू०५१–५८; अधि०१५.) अन्यच्चिन्तितम्—

"ऋत्विजोऽन्येऽत्र यष्टृभ्यः स्युस्त एवोत? चोदकात् ।

अन्ये; यष्टार एव स्युः प्रत्यक्षवचनादिभिः ॥

अत्र सत्रे किं यजमानेभ्यो व्यतिरिक्ता ऋत्विजः कर्त्तव्याः, किं वा यजमाना एवर्त्विजः? ज्योतिष्टोमे यजमानादन्येषामृत्विक्त्वादत्राप्यन्ये स्युरिति प्राप्ते, ब्रूमः—"ये यजमानास्त ऋत्विजः"–इति प्रत्यक्षवचनात्‡, "अदक्षिणानि सत्राणीत्याहुः"–इति दक्षिणाराहित्यश्रवणात्§, "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारम्"–इत्यादिना‖ ब्रह्मोद्गात्रादिसमाख्यासंयोगदीक्षासंयोगयोरार्त्विज्ययजमानद्योतकयोः प्रतिभानाच्च, यजमाना एव ऋत्विजः"–इति ॥

---

* ज्योतिष्टोमस्य प्रकृतित्वं मी० जै० सू० ८. १. ३–१०. अधि० ३. द्वितीयवर्णके वर्णितम्; उद्धृतञ्च तत् पुरस्तादिहैव (२भा० २४५, २५३ पृ०)।

† "अङ्गिरसो वै सत्र मासत", "ये सत्र मासते" १९५, २८७ पृ०।

‡ "यजमानाः सर्वे सत्रेषु"–इति कात्या० श्रौ० १२. १. ७। ऐ० ब्रा० ४. ४. ४. सा० भा० (३ भा० ३८७ पृ०)।

§ "अदक्षिणानि च स्वामियोगात्"–इति कात्या० श्रौ०१२. १. ८। अपि शत० ब्रा ३. ४. २. १५. द्रष्टव्यम्।

‖ शत० ब्रा० १२. १. १. १–१०; कात्या० श्रौ० १२. २. १५।

तत्रैव द्वितीयपादे (जै० सू० ३४; अधि० १०.) चिन्तितम्—

"ऋत्विजां वरणं सत्रे कार्यं नो वा ? ऽत्र सोमवत्।
कार्यम्, मैवं स्वकर्मत्वात् क्रयार्था* प्रकृतौ वृतिः॥

"अग्निर्मे होता"– इत्यादिमन्त्रै† सोमे ऋत्विजां वरणमाम्नातम्, सोमवत् सत्रेऽपि तत्कार्यम्, अन्यथा वरणरहितानामृत्विक्त्वाभावात्सत्रं न सिध्येत्। अत एव तत्सिद्धये सत्रप्रकरणे "ये यजमानास्त ऋत्विज."– इति स्वत.प्रवृत्तानपि यजमानाननूद्य वरणरहितानामृत्विक्त्वं‡ तेष्वाधातव्यमिति विदधाति। तस्मादृत्विग्वरणं सत्रे कार्यम्। मैवम्, सत्रं ह्यनुष्ठातॄणां सर्वेषां स्वकर्म, न हि स्वकर्मणि क्रयार्थं वरणमपेक्ष्यते, क्रयार्थं§ हि प्रकृतौ वरणम्। दानमेव क्रयार्थम्, वरणं त्वदृष्टार्थमिति चेन्न, वरणस्य भविष्यद्दानसूचनेनोत्साहजननार्थत्वात्। अन्यथा वरणकाले "कश्चित् कल्याणी दक्षिणा."– इति|| ऋत्विजां प्रश्नः कथं सङ्गच्छेत। न च ऋत्विक्त्वासिद्धिः¶ शङ्कनीया। तत्र वक्तव्यम्— ऋत्विक्त्वं नाम किं कर्मकरत्वमुत यागकर्तृत्वमिति। आद्ये कर्मकराणां स्वामित्वाभावेन "ये यजमानास्त ऋत्विज."– इति वचन विरुध्येत, द्वितीये तु स्वत एव

* "क्रियार्था"– इति ख।

† "आप० श्रौ० १०. १ १४, सा० षड्० ब्रा० २ १०।

‡ "वरणसाध्यमृत्विक्त्वम्"– इति घ।

§ "क्रियार्थे"– इति ख।

|| "स पृच्छति क ऋत्विज ? के याजयन्ति ? कच्चिन्माह्वैन ? कच्चिन्न न्यस्त मार्त्विज्यं ? कच्चित् कल्याणी दक्षिणा"– इति आप० श्रौ० १०. १ ३।

¶ "सत्रासिद्धि"– इति ग, घ।

यागं कर्तुं प्रवृत्तत्वाद् वरणमन्तरेणाप्यृत्विक्त्वं सिध्यतीति ईदृग्रमेवा- र्त्विज्यं वचनेन विधीयते। तस्मात्प्राग्वद् वरणं सत्रे लुप्यते"—इति॥

तत्रैव (जै० सू० ३५-३८, अधि० ११.) अन्यच्चिन्तितम्—

क्रयः कार्यो न वा सत्रे? निषेधात् क्रीतिकल्पनम्*।

नित्यानुवादे नाक्लृप्तेर्नो† क्रयो वरणं तथा॥

यथासत्कारपुरस्सरम् "अग्निर्होता"—इत्यादिमन्त्रैर्या प्रार्थना-वरणम्। तच्च वरणं चिकीर्षुर्यजमानो वरणीयेभ्यो ब्राह्मणेभ्यः सोमं ब्रूयात्, "तेभ्यः सोमं प्राह"—इत्यापस्तम्बवचनात् (श्रौ० १०. १. २.)। सोमाभिधानप्रकारश्चान्य कल्पे दर्शितः—"ज्योतिष्टोमेनाग्निष्टोम-संस्थेन रथन्तरपृष्ठेन गवां द्वादशशतदक्षिणेनाहं यक्ष्ये, तत्र मे त्वमु-द्गाता भव"—इति। तत्र देयदक्षिणाद्रव्यनिश्चयेन ब्राह्मणाः स्वकीयाः कर्मविशेषे नियोक्तुं योग्या भवन्ति। सोऽयं क्रय‡। स च प्रकृताविव सत्रे कार्यः। न च दक्षिणादानस्य निराकृतत्वेन देय-द्रव्यनिश्चये लुप्ते सति, तत्साध्यः क्रयोऽपि लुप्येतेति शङ्कनीयम्; निषेधमुपजीव्य क्रयानुष्ठानस्य कल्पयितुं शक्यत्वात्। तथाहि—"न ह्यत्र गौर्दीयते, न वासो, न हिरण्यम्"—इति सत्रे गवादिदानं निषिध्यते; स च निषेधः सत्यां प्रसक्तौ सम्भवति§, ततः सोमे देयद्रव्याणां सत्रे दानप्रसक्तिरभ्युपेया। सोमे च देयद्रव्याण्येवं श्रूयन्ते—"गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च

* "क्षतिकल्पनम्"—इति ख, ग, घ।

† "नाप्राप्तेर्न"—इति ग। "नालुप्तेर्न"—इति घ।

‡ आप० श्रौ० १०. १. २। सा० यज्ञ० शा० २. १०।

§ "स च निषेधोऽसत्या प्रसक्तौ न सम्भवति"—इति क।

तिलाश्च माषाश्च०——०तस्य द्वादशं शतं दक्षिणा."– इति (ता० ब्रा० १६.१.१०.)। तत्र गोहिरण्यादीनां विशेषतो निषेधेन द्रव्यान्तराणां चोदकप्राप्तानामभ्यनुज्ञा प्रतीयते, ततो देयद्रव्य-सद्भावात् क्रय कर्त्तव्य इति पूर्वः पक्षः। "न ह्यत्र गौर्दीयते"– इत्यनेन निषेधो न विधीयते, किन्तु पूर्वोक्तेन निर्णयेन प्राप्त एव दानाभावोऽनूद्यते। "अदक्षिणानि सत्राणीत्याहु', न ह्यत्र गौर्दीयते"– इतिश्रुतौ परोक्तुपन्यासस्य प्रसिद्धवाचक-हि-शब्दस्य प्राप्तिगमकत्वात्। तस्मान्नित्यानुवादस्य कल्पकत्वाभावाद् वरण-वत्तदविनाभूतः क्रयोऽपि न कर्त्तव्य"– इति ॥

तत्रैव (जै० सू० ६१, अधि० २६.) अन्यच्चिन्तितम्—

"आत्रेयदानर्त्तुयाज्यावृत्ती सत्रेषु नाचरेत्।
कुर्याद्वाऽऽनतिलोपान्नो धर्मार्थं क्रियतां द्वयम् ॥

प्रकृतौ "हिरण्यमात्रेयाय ददाति"– इति* श्रुतम्, ऋतुयाज्या-वरणं चास्ति, तदुभयं सत्रेषु न कर्त्तव्यम्, द्वारभूताया आनते-र्लुप्तत्वात्। यद्यप्यात्रेयः कर्मकरेभ्यो बहिर्भूतस्तथापि तद्दानेन यज-मानस्यौदार्यं पश्यन्तो धनकामा ऋत्विज आनता भवन्ति; वरणस्य चानत्यर्थत्वमृत्विग्वरणे प्रारम्भकालीने प्रसिद्धम्, तस्मादानत्यर्थमुभयं नाचरेदिति पूर्व. पक्षः। प्रथमवरणेनैवानतिसिद्धेः कालान्तरे वरणमदृष्टार्थम्। धनकामानामपि कर्मकराणां प्रारम्भकाले स्वय-मङ्गीकृताया भृतेरधिकं धन न लभ्यत इत्यात्रेयदानदर्शनं नान-तिकरम्। तस्माददृष्टार्थमुभय कर्त्तव्यम्"– इति ॥

---

* ऐत० ब्रा० ४. ३. ४. २१, कात्या० श्रौ० १०. २. २१।

षष्ठाध्यायस्य षष्ठपादे (जै० सू० १६-२३; अधि० ३.) चिन्तितम्—

"सत्रं वर्णत्रयस्योत विप्रस्यैवाविशेषतः।

त्रयस्य, मैवं, स्वामित्वं विप्राणामृत्विजां यतः॥

"ऋद्धिकामाः सत्रमासीरन्"- इत्यत्र* विप्रा इति विशेषो न श्रूयते, तस्माद्वर्णत्रयस्य सत्राधिकार इति चेत्, मैवम्, विप्राणामेवार्त्विज्यमिति द्वादशे वक्ष्यते†,— ऋत्विक्कार्ये यजमानाः सत्रे समाम्नाताः,—"ये यजमानास्त ऋत्विज"- इति‡, तस्माद्विप्राणामेव सत्रम्§"- इति॥

तत्रैव (जै० सू० १-११; अधि०१.) अन्यच्चिन्तितम्—

"भिन्नप्रयाजादिकल्पा अपि सत्रेऽधिकारिणः।

तुल्यकल्पा एव वा?ऽऽद्यो वसिष्ठादिविधानतः॥

नराशंसाद्यङ्गतया स्वामित्वोद्देशपूर्वकम्।

नाराशंसविधौ सन्निकर्षात् साद्गुण्यतोऽन्तिमः॥

प्रयाजेषु पुरुषभेदेनानुष्ठानप्रकारो भिद्यते,— राजन्यवसिष्ठादीनां नराशंसो द्वितीयः प्रयाजः, तनूनपादन्येषाम्‖। तत्र वसिष्ठादि-

---

* "ते सर्वा ऋद्धिमाभुवन्, सर्वा ऋद्धिमृध्नुवन्ति, य एता उपयन्ति"- इति ता० ब्रा० २३. १. ५। "ऋद्धिकामा उपेयु"- इत्यादि च तत उत्तरम् (२९ १.)।

† जै० सू० १२ अ० ४ पा० ४१-४६, अधि० १५ द्रष्टव्यम्।

‡ "तस्मान्न वरणभरणनिमित्तमार्त्विज्यम्, किन्तु क्रतुयजननिमित्तम्। अत सत्रेऽपि सन्त्यृत्विजस्तद्विशेषाश्चाध्वर्य्वादय सन्त्येव; ते तु यजमाना एव नान्ये"- इति कात्या० श्रौ० १. ६. १२. या० वृ०।

§ "सत्राणि ब्राह्मणाना मृत्विक्श्रुते"- इति कात्या० श्रौ० १.६.१३।

‖ आश्व० श्रौ० १ ५. २१, २२; ३. २. १-८।

वध्र्यश्वशुनककण्वकश्यपसङ्कृतिगोत्रोत्पन्ना ये नराशंसप्रयाजवन्तः, ये चान्ये तनूनपात्प्रयाजकाः, त एते भिन्नकल्पा अपि मिलिता सप्तदशावराः सत्रेऽधिकारिण' स्युः। कुतः? नराशंसमुद्दिश्य तदङ्गत्वेन वसिष्ठादिविधानात्। तथा सति सत्रिणां मध्ये केषाञ्चित् वसिष्ठादिगोत्रजत्वेऽपि तदङ्गत्वं सिध्यतीति प्राप्ते, ब्रूम — वासिष्ठादीन् यजमानानुद्दिश्य नराशंसो विधीयते, तथा सति विधायकपदगतस्य धात्वर्थस्य विधेयत्वात् सन्निकर्षः, वसिष्ठादिविधौ तु पदान्तरोपात्तत्वात् विप्रकर्ष.। अतो वसिष्ठाद्युद्देशेन नराशंसविधौ नराशंसानुष्ठाने वसिष्ठादीनां साद्गुण्य मितरेषां तु वैगुण्यम्। तनूनपादनुष्ठाने तु वैपरीत्यम्। सर्वथा भिन्नकल्पानां सर्वेषां साद्गुण्यं न सिध्यति। अत' साद्गुण्याय तुल्यकल्पा एवाधिकारिण."— इति॥

तत्रैव (जै० सू० २४-२६, अधि० ४.) अन्यच्चिन्तितम्—

"विप्रस्य सत्रं सर्वस्य, वासिष्ठस्यैव वा भवेत्।
वैश्वामित्रस्यैव वा? ऽऽद्य ऋद्धीच्छुत्वेन, मध्यमः।
ब्रह्मत्वाय, त्ववासिष्ठो ब्रह्मा वा सोमभागतः।
वैश्वामित्रसमानानामेव होतृत्वसिद्धये॥

ऋद्धिकामस्य सत्र विहितम्, ब्राह्मणाय सर्वे ऋद्धिं वाञ्छन्ति, तस्माद्विप्रस्य सर्वस्य सत्राधिकार इत्याद्यः पक्ष'। "वासिष्ठो ब्रह्मा भवति"— इतिवचनात्*, अवासिष्ठस्य ब्रह्मत्वासम्भवात्, ब्रह्मत्वाय वासिष्ठस्याधिकारो वाच्यः, तथा सति भिन्नकल्पत्ववारणाय तत्तुल्यकल्पा एवाधिक्रियन्त इति द्वितीयः पक्ष.। "वासिष्ठो ब्रह्मा"—

* तै० सं० ३ ५. २. १, शत० ब्रा० १२ ६. १. ४१।

इतिवाक्याम वासिष्ठस्य ब्रह्मता, "रश्मिरसि क्षयाय त्वा"-इत्यादयो मन्त्राः स्तोमभागाः*, तानधीयान स्वयमवासिष्ठोऽपि ब्रह्मता मर्हति इति, स्तोमभागप्रशंसारूपेऽर्थवादे वासिष्ठो ब्रह्मेति पठितत्वात्[†]। तस्मात् "वैश्वामित्रो होता"-इतिविहितस्य होतृत्वस्य सिद्धये वैश्वामित्रस्य तत्समानकल्पानाञ्चाधिकारो नान्येषाम्"-इति॥

तत्रैव (जै० सू० २०-२१, अधि० ५.) अन्यच्चिन्तितम्—

"अनाधातुश्च तत् किं वाधातुरेवाग्निमो यतः।
एकस्याग्निषु तत्सिद्धिर्न स्वाग्निष्वात्मनेपदात्॥

तत् सत्रमग्न्याधानरहितस्यापि सम्भवति। कुतः? सत्रिणां मध्ये कस्यचिदाहिताग्निले तदीयेष्वग्निषु तेन सह प्रवृत्तेरनाहिताग्निभिरपि तस्य सत्रस्य साधयितुं शक्यत्वादिति चेत्, मैवम्, "आदधीत"-इत्यात्मनेपदमाधानफलस्य कर्तृगामितां दर्शयति[§]। तत्फलं चाग्नीनां कर्मयोग्यता। ततो ये ऽनाहिताग्नयो न ते अधिकारिणः, यत्र आहिताग्निस्तस्यैव कर्मयोग्यता, नान्यस्य। किञ्च सोमविकृतीनामिष्टिपूर्वकत्वं निर्णीतम्, इष्टिश्चाधानपूर्विका, तस्मादाधातुरेव सत्राधिकारः"-इति॥

---

* तै० सं० ३. ३ १. १-२१, ता० ब्रा० १ ९. १। ऐ० ब्रा० ५. ५. ८।

† ऋषयो वा इन्द्रं प्रत्यक्षं नापश्यन्, तं वसिष्ठः प्रत्यक्ष मपश्यत्●——● तस्माद् वसिष्ठो ब्रह्मा कार्यं, प्रैव जायते रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्याह"-इत्यादि तै० स० ३ ५. २। "पुरा वासिष्ठ एव ब्रह्मा भवति यतस्त्वेता अप्येतर्हि य एव कश्चाधीते●——●स ह वै ब्रह्मा भवितु मर्हति"-इति शत० ब्रा० १२. ६. १. ४१।

‡ ऐ० ब्रा० ७ ३. ४। कात्या० श्रौ० १. ६. १४. इत्तिर्दर्श्या (या० दे०)।

§ पा० १. ३ ७२। "डु धाञ् धारणपोषणयो"-इति जु० १०।

तत्रैव (जै० सू० ३३-३५; अधि० ६.) अन्यच्चिन्तितम्—

"जुह्वादयो यस्य कस्य कार्याः साधारणा उत?।

अविरोधादग्रिमोऽन्त्यो मृतदाहे विरोधतः॥

सत्रिणां मध्ये यस्य कस्य चित् सम्बन्धिभिर्जुह्वादिपात्रैः सत्रं प्रयोक्तव्यम्। कुतः? अविरोधात्। अन्यदीयेष्वग्निष्वात्मनेपदं यथा विरुध्यते, नैवं मन्त्रविरोधः कश्चिदुपलभ्यत इति प्राप्ते, ब्रूमः— यस्य जुह्वादयः, स चेत् सत्रमध्ये म्रियते, तदा मृतेन सह जुह्वादयो दह्यन्ते; "आहिताग्निमग्निभिर्दहति, यज्ञपात्रैश्च, दक्षिणहस्ते जुहूमासादयति"-इत्यादिवचनैस्तदवगमात्*। पात्रदाहे, चावशिष्टः सत्रप्रयोगो विगुणः स्यात्। तस्मात् 'साधारणाः' भिन्ना एव जुह्वादयः सत्रे सम्पादनीयाः"-इति॥

एकादशाध्यायस्य चतुर्थपादे (जै० सू० १६-२३; अधि० ५.) चिन्तितम्—

द्वादशाहे सदीक्षोपसदहस्सु दिनानि किम्†।
शतत्रयं, द्वादश वा, षट्त्रिंशद्वा? ऽग्रिमो यतः।
एकैककर्मणोऽङ्गोऽस्य ज्योतिष्टोमविकारता।
एकैकं तदनुष्ठानं दिनानां पञ्चविंशतिः।
अङ्गां द्वादशता श्रुत्या मध्यपक्षस्तदापि किम्।
कार्या द्वादश साद्यस्कास्त्रयस्त्र्याणामुत त्रिकम्?।
एकैकस्यैव यागस्य विकृतिलादिहादिमः।

* आप० श्र० ७ १. १-२६ सूत्राणि द्रष्टव्यानि। श्रौ० ६. १०. ३०।
† "दिनमानकम्"-इति घ।

अमुख्यकालाङ्गबाधाच्चतुर्द्धं भिद्यते त्रिधा।
दीक्षा उपसदः सुत्याः प्रत्येकं द्वादश स्मृताः।
साङ्गस्य द्वादशाहस्य षट्त्रिंशद्दिवसा मताः॥

द्वादशाहस्यैकैकमहः पृथक् कर्म। तस्मिंश्च सदीक्षस्य सोपसत्कस्य ससुत्यस्य ज्योतिष्टोमस्य विध्यन्तोऽतिदिष्टः। अतिदिष्टानां दीक्षाणा मुपसदाञ्च प्राकृतसङ्ख्याबाधनाय पृथग् द्वादशत्वं श्रुतम्। ततो दीक्षोपसदर्थं चतुर्विंशतिदिनानि, सुत्यार्थमेकं दिनमिति पञ्चविंशतिः। ईदृशस्य कर्मविशेषस्य अह्नां द्वादशभिरावृत्तिभिः शतत्रयं स्यादित्याद्यः पक्षः। तथा सत्यह्नां द्वादशत्वं श्रूयमाणं बाध्येत; तस्माद् द्वादशैव दिवसा इति मध्यमः पक्षः। तत्रापि दीक्षोपसङ्ख्यामङ्गाभ्यामुपेतस्यैकैकस्याह्नः साङ्गज्योतिष्टोमविकारत्वात्तत्रैव सद्य एव कर्त्तव्यमित्येकः पक्षः, प्रकृतौ दीक्षोपसदोर्मुख्यकालात्प्रागेवानुष्ठितत्वादिहापि तथैवानुष्ठानं प्राप्तम्, तच्च मुख्यकाले तदनुष्ठाने बाध्येत, तस्मादङ्गद्वयस्य प्रधानस्य च द्वादशदिनानि विभज्यानुष्ठानमिति पक्षान्तरम्। द्वादशाहस्य द्वादश दीक्षा द्वादशोपसदः द्वादश सुत्याः इत्यङ्गयोर्मुख्ये च पृथग् द्वादशत्वश्रुत्या* षट्त्रिंशदिति राद्धान्तः"-इति॥

नवमाध्यायस्य प्रथमे पादे (जै०सू०२८-३२; अधि०८.) चिन्तितम्—

"पत्नीसंयाजसंस्था किं सर्वेष्वन्येतरेषु वा?।
अविशेषादादिमो ऽन्यो ऽसंस्थितत्वोक्तिलिङ्गतः॥

---

* द्वादश दीक्षा द्वादशोपसदो द्वादश प्रसुत, षट्त्रिंशदेता रात्रयो भवन्ति '—• जायते वाव दीक्षया, पुनीत उपसद्भिः, देवलोकमेव सुत्यायेति"—इति ता० ब्रा० १०. ३।

द्वादशाहे श्रूयते—"पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते"—इति*। तत्र द्वादशसङ्ख्येषु सर्वेष्वप्यहस्सु पत्नीसंयाजान्तं कर्मानुष्ठायावशिष्टं हारियोजनादिकं त्याज्यम्†। कुतः? एतावत्सु पत्नीसंयाजसमाप्तिर्नेतरेष्विति विशेषनियामकाभावादिति चेत्, मैवम्; असंस्थितत्ववाक्योक्तलिङ्गेन प्रागुत्तमादह्नो यानीतराण्यहानि, तेषु पत्नीसंयाजान्तत्वं व्यवतिष्ठते। तथाहि "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते"—इत्यस्य विधेः शेष एव माम्नायते—"न बर्हिरनुप्रहरत्यसंस्थितो हि तर्हि यज्ञः"—इति‡। तत्र पत्नीसंयाजैः सर्वेषामह्नां समाप्तावसंस्थितत्वं व्याहन्येत, तस्मात्सन्तिष्ठन्त इति शब्दो न समाप्तिवचनः; किं तर्हि? सत्येव तदहस्सम्बन्धिकर्त्तव्यविशेषे व्यापारोपरममात्रं ब्रूते। अयञ्च कर्त्तव्यशेषश्चरमेऽहन्यनुष्ठातव्यः। तथा सति द्वादशानामह्नां विहितः सहप्रयोगोऽनुगृहीतो भवति। तथाहि—"द्वादशाहेन यजते"—इति सहप्रयोगो विहितः§। अत एव दीक्षोपसदादिकं तन्त्रेणानुष्ठीयते; तत्र प्रथममहः पत्नीसंयाजान्तमनुष्ठाय हारियोजनादिकं‖ बर्हिःप्रहरणान्तं कर्त्तव्यत्वेनावस्थाप्य द्वितीयमहः प्रक्रमते। एव मुत्तरत्रापि। तत्र सर्वत्रावशिष्टं

---

* कात्या० श्रौ० १२. ३. २१। आश्व० श्रौ० ७. १. ५।

† "पिष्टलेपादिकं न कार्यम्"—इति ग।

‡ अत एवैतरेयके वाजसनेयके च अन्त्यकर्माण्यभिहितानि (ऐ० ब्रा०५. ४. ३, शत० ब्रा० ४. ६. ९)। कात्या० श्रौ० "अन्त्यवर्ज्जम्"—इत्यारभ्य "अप उपस्पर्शनाद्येतत्सत्रोत्थानम्"—इत्यन्तो ग्रन्थ (१२ ३, ४) द्रष्टव्य।

§ "यत्र एकेन वाक्येन बहूनि प्रधानानि एकफलार्थं विधीयन्ते०——० तत्र तेषां सहप्रयोगो भवति"—इति कात्या० श्रौ० १. ७. २८. पद्धतिः।

‖ "पिष्टलेपादिक"—इति ग।

कर्त्तव्यमुत्तमेऽहन्यनुष्ठातव्यम्, तथा सत्युपक्रमैक्यवदुपसंहारस्याप्येकत्वाद् विहितः सद्‌प्रयोगः* सिध्यति; एकैकस्याङ्गः पत्नीसंयाजैः समाप्तौ भिन्नाः प्रयोगाः प्रसज्येरन्। यत्तु दशमस्याङ्गो मानसग्रहेण समापनं तद्वाचनिकम्। तस्मादुत्तमव्यतिरिक्तानामेवाङ्गां पत्नीसंयाजानन्तरं व्यापारोपरमः"-इति॥

षष्ठाध्यायस्य द्वितीयपादे (जै॰सू॰१,२, अधि॰१.) चिन्तितम्—

"सत्रे फलांशः प्रत्येकं सर्वं वा? ऽऽद्य' समूहके।

कर्तृत्वादन्य एकैकस्यापि तत्त्वाद्वहुत्वतः॥

इदमाम्नायते—"ऋद्धिकामाः सत्रमासीरन्"-इति। तत्र सत्रे बहूनां समुदायस्य कर्तृत्वमवगतम्, "सप्तदशावराः सत्रमासीरन्"-इतिश्रवणात्†। कर्तृत्वेन समुदायस्यैव फलित्वात् पुरुषाणां प्रत्येकं फलांश एव; न तु सर्वं फलमेकैकस्येति चेत्, मैवम्; एकैकस्यापि समुदायान्तःपातिनः कर्तृत्वसद्भावात्, अन्यथा समुदायस्यैकत्वेन सत्रमासीरन्निति श्रुतं कर्तृबहुत्वं नोपपद्येत। तस्मादेकैकस्य कर्तुः सर्वफलसद्भावात् सर्वफलकामिनामेवात्राधिकारो न लेशफलकामिनाम्"-इति॥१०॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः॥

---

* "विहितस्य सोपयोग"--इति क।

† "सप्तदशावराश्चतुर्विंशतिपरमाः सत्रमासीरन्निति"—इति कात्या॰ श्रौ॰ १.६ १०,१२. ख॰ या॰।

एकस्मै स्वाहा द्वाभ्याꣳ स्वाहा त्रिभ्यः स्वाहा चतुर्भ्यः स्वाहा पञ्चभ्यः स्वाहा षड्भ्यः स्वाहा सप्तभ्यः स्वाहाऽष्टाभ्यः स्वाहा नवभ्यः स्वाहा दशभ्यः स्वाहैकादशभ्यः स्वाहा द्वादशभ्यः स्वाहा त्रयोदशभ्यः स्वाहा चतुर्दशभ्यः स्वाहा पञ्चदशभ्यः स्वाहा षोडशभ्यः स्वाहा सप्तदशभ्यः स्वाहाष्टादशभ्यः स्वाहैकान्न विꣳशत्यै स्वाहा नवविꣳशत्यै स्वाहैकान्न चत्वारिꣳशते स्वाहा नवचत्वारिꣳशते स्वाहैकान्न (१)

षष्ट्यै स्वाहा नवषष्ट्यै स्वाहैकान्नाशीत्यै स्वाहा नवाशीत्यै स्वाहैकान्न शताय स्वाहा शताय स्वाहा द्वाभ्याꣳ शताभ्याꣳ स्वाहा सर्वस्मै स्वाहा ॥ ११ ॥

नैकविꣳशतिश्च* ॥ ११ ॥

दशमेऽनुवाके द्वादशाहस्यान्तिममहर्दीर्घाविशेषश्चोक्तः ; अथ शिष्टेषु दशस्वनुवाकेष्वश्वमेधगता मन्त्रा उच्यन्ते। कल्पः—"संस्थितेऽहन्यभित आहवनीयं षट्त्रिंशतमाश्वत्थानुपतल्पान् विमिन्वन्त्यस्तमित आदित्ये षट्त्रिंशतमध्वर्यव उपतल्पानधिरुह्य खादिरैः स्रुवैः सर्वाꣳ रात्रिमन्नहोमान् जुह्वत्याज्यं मधु तण्डुलान् पृथुकान् लाजान् करम्भान् धानाः सक्तून् मसूरस्यानि प्रियङ्गुतण्डुलानित्येकस्मै स्वाहेत्येतेषामनुवाकानामयुज आज्येन युजोऽन्नेनाज्येनान्ततः"—इति†।

* "नवचत्वारिꣳशते स्वाहैकान्नैकविꣳशतिश्च"—इति क, ख, ग।

† "एकस्मै स्वाहा"—इत्यादीना मा प्रपाठकसमाप्तेर्दशाना मनुवाकाना

सचादौ युग्मायुग्माभ्यां मिश्रितानां महमाह—"एकस्मै स्वाहा, द्वाभ्याꣳ स्वाहा, त्रिभ्यः स्वाहा, चतुर्भ्यः स्वाहा, पञ्चभ्यः स्वाहा, षड्भ्यः स्वाहा, सप्तभ्यः स्वाहा, ऽष्टाभ्यः स्वाहा, नवभ्यः स्वाहा, दशभ्यः स्वाहैकादशभ्यः स्वाहा, द्वादशभ्यः स्वाहा, त्रयोदशभ्यः स्वाहा, चतुर्दशभ्यः स्वाहा, पञ्चदशभ्यः स्वाहा, षोडशभ्यः स्वाहा, सप्तदशभ्यः स्वाहा, ऽष्टादशभ्यः स्वाहैकान्न विꣳशत्यै स्वाहा, नवविꣳशत्यै स्वाहैकान्न चत्वारिꣳशते स्वाहा, नवचत्वारिꣳशते स्वाहैकान्न षष्ट्यै स्वाहा, नवषष्ट्यै स्वाहैकान्नाशीत्यै स्वाहा, नवाशीत्यै स्वाहैकान्न शताय स्वाहा, शताय स्वाहा, द्वाभ्याꣳ शताभ्याꣳ स्वाहा, सर्वस्मै स्वाहा"–इति। अथ लेकशब्देन सर्वात्मकः प्रजापतिरुच्यते। अत एव ब्राह्मणे समाम्नायस्मन्ने—"एकस्मै स्वाहेत्याह, प्रजापतिर्वा एकः, तमेवाप्नोति"–इति (ब्रा०७.८.१६.१.)। अस्य च सर्वात्मकत्वाद् ये दिलादिसङ्ख्याविशिष्टाः पदार्थाः, ते सर्वेऽपि प्रजापतिरूपाः। तस्मात् प्रजापतिरूपानेतान् सर्वान् पदार्थानुद्दिश्येदं स्वाहाकृतमस्त्वित्येवं यथायोग चित्तदाहुतीर्जुहुयात्। अनुक्तपदार्थसङ्ग्रहार्थं सर्वशब्दः॥ ११॥

इति श्रीमायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके एकादशोऽनुवाकः॥

एक॑स्मै॒ स्वाहा॑ त्रि॒भ्यः स्वाहा॑ प॒ञ्चभ्यः॒ स्वाहा॑ स॒प्तभ्यः॒ स्वाहा॑ न॒वभ्यः॒ स्वाहैका॑द॒शभ्यः॒ स्वाहा॑ त्रयोद॒शभ्यः॒ स्वाहा॑ पञ्चद॒शभ्यः॒ स्वाहा॑ सप्तद॒शभ्यः॒ स्वाहैका॑न्न वि॒ꣳश॒त्यै स्वाहा॒ नव॑वि॒ꣳश॒त्यै स्वाहैका॑न्न च॒त्वारि॒ꣳश॒ते स्वाहा॒ नव॑चत्वारि॒ꣳश॒ते स्वाहैका॑न्न प॒ष्ट्यै स्वाहा॒ नव॑षष्ट्यै स्वाहैका॑न्नाशी॒त्यै स्वाहा॒ नवा॑शी॒त्यै स्वाहैका॑न्न श॒ताय॒ स्वाहा॑ श॒ताय॒ स्वाहा॒ सर्व॑स्मै॒ स्वाहा॑ ॥ १२ ॥

एक॑स्मै पञ्चा॒शत् ॥ १२ ॥

अथायुजामेकाधिकानां मन्त्रमाह— "एकस्मै स्वाहा, त्रिभ्यः स्वाहा, पञ्चभ्यः स्वाहा, सप्तभ्य स्वाहा, नवभ्यः स्वाहैकादशभ्यः स्वाहा, त्रयोदशभ्य. स्वाहा, पञ्चदशभ्यः स्वाहा, सप्तदशभ्यः स्वाहैकान्न विंशत्यै स्वाहा, नवविंशत्यै स्वाहैकान्न चत्वारिंशते स्वाहा, नवचत्वारिंशते स्वाहैकान्न षष्ट्यै स्वाहा, नवषष्ट्यै स्वाहैकान्नाशीत्यै स्वाहा नवाशीत्यै स्वाहैकान्न शताय स्वाहा, शताय स्वाहा, सर्वस्मै स्वाहा"–इति। एतैरयुक्सङ्ख्यैर्मन्त्रैर्विंशत्याहुतीर्जुहुयात्। न चात्र पूर्वानुवाकेन सह पुनरुक्तिः शङ्कनीया, यथावचनमनुष्ठेयत्वात्। अथवा अनन्तेषु प्रजापत्यवयवेषु यथामति विषयभेदः कल्पनीयः* ॥ १२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके द्वादशोऽनुवाकः ॥

---

* अस्यानुवाकस्य व्याख्यानादिकं ब्रा० ३. ८ १५. द्रष्टव्यम्।

द्वाभ्याꣳ स्वाहा चतुर्भ्यः स्वाहा षड्भ्यः स्वाहाष्टाभ्यः स्वाहा दशभ्यः स्वाहा द्वादशभ्यः स्वाहा चतुर्दशभ्यः स्वाहा षोडशभ्यः स्वाहाष्टादशभ्यः स्वाहा विꣳशत्यै स्वाहाष्टानवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ १३ ॥

द्वाभ्याꣳ* षड्विꣳशतिः ॥ १३ ॥

अथ द्विसङ्ख्यामारभ्य युग्मसङ्ख्यानां मन्त्रमाह —"द्वाभ्याꣳ स्वाहा, चतुर्भ्यः स्वाहा, षड्भ्यः स्वाहा, ऽष्टाभ्यः स्वाहा, दशभ्यः स्वाहा, द्वादशभ्यः स्वाहा, चतुर्दशभ्यः स्वाहा, षोडशभ्यः स्वाहा, ऽष्टादशभ्यः स्वाहा, विꣳशत्यै स्वाहा, ऽष्टानवत्यै स्वाहा, शताय स्वाहा, सर्वस्मै स्वाहा"– इति। तैरेतैर्मन्त्रैस्त्रयोदशाज्याहुतीर्जुहुयात् ॥१३॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके त्रयोदशोऽनुवाकः॥

---

त्रिभ्यः स्वाहा पञ्चभ्यः स्वाहा सप्तभ्यः स्वाहा नवभ्यः स्वाहैकादशभ्यः स्वाहा त्रयोदशभ्यः स्वाहा पञ्चदशभ्यः स्वाहा सप्तदशभ्यः स्वाहैकान्न विꣳशत्यै स्वाहा नवविꣳशत्यै स्वाहैकान्न चत्वारिꣳशते स्वाहा नवचत्वारिꣳ-

* "द्वाभ्यामष्टानवत्यै"– इति क, ख, ग।

शते स्वाहैकान्न पष्ठ्यै स्वाहा नवषष्ठ्यै स्वाहैकान्नाशीत्यै स्वाहा नवाशीत्यै स्वाहैकान्न शताय स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ १४ ॥

त्रिभ्योऽष्टाचत्वारिꣳशत् ॥ १४ ॥

अथ त्रिसङ्ख्यामारभ्य विषमसङ्ख्याना मन्त्रमाह—"त्रिभ्य स्वाहा, पञ्चभ्य स्वाहा, सप्तभ्य स्वाहा, नवभ्य स्वाहैकादशभ्य स्वाहा, त्रयोदशभ्य स्वाहा, पञ्चदशभ्य स्वाहा, सप्तदशभ्य स्वाहैकान्न विꣳशत्यै स्वाहा, नवविꣳशत्यै स्वाहैकान्न चत्वारिꣳशते स्वाहा, नवचत्वारिꣳशते स्वाहैकान्न षष्ट्यै स्वाहा, नवषष्ट्यै स्वाहैकान्नाशीत्यै स्वाहा, नवाशीत्यै स्वाहैकान्न शताय स्वाहा, शताय स्वाहा, सर्वस्मै स्वाहा" —इति। तैरेतैर्मन्त्रैरेकोनविंशतिसङ्ख्याका आहुतीर्जुहुयात् ॥१४॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके चतुर्दशोऽनुवाक ॥

---

चतुर्भ्यः स्वाहाष्टाभ्यः स्वाहा द्वादशभ्यः स्वाहा षोडशभ्यः स्वाहा विꣳशत्यै स्वाहा पर्णवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ १५ ॥

चतुर्भ्य. षोडश* ॥ १५ ॥

---

* 'चतुर्भ्य षण्णवत्यै षोडश'—इति क, ख, ग।

अथ चतुःसङ्ख्यामारभ्य चतुरुत्तराणां समसङ्ख्यानां सङ्घमाह —"चतुर्भ्यः स्वाहा, ऽष्टाभ्यः स्वाहा, द्वादशभ्यः स्वाहा, षोडशभ्यः स्वाहा, विंशत्यै स्वाहा, षण्णवत्यै स्वाहा, शताय स्वाहा, सर्वस्मै स्वाहा"-इति। एतैर्मन्त्रैरष्टावाहुतीर्जुहुयात् ॥१५॥

इति श्रीमायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके पञ्चदशोऽनुवाकः॥

---

पञ्चभ्यः स्वाहा दशभ्यः स्वाहा पञ्चदशभ्यः स्वाहा विंशत्यै स्वाहा पञ्चनवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ १६ ॥

पञ्चभ्यश्चतुर्दश* ॥ १६ ॥

अथ पञ्चसङ्ख्यामारभ्य पञ्चोत्तराणां समविषमसङ्ख्यानां सङ्घमाह —"पञ्चभ्यः स्वाहा, दशभ्यः स्वाहा, पञ्चदशभ्यः स्वाहा, विंशत्यै स्वाहा, पञ्चनवत्यै स्वाहा, शताय स्वाहा, सर्वस्मै स्वाहा"-इति। एतैर्मन्त्रैः सप्ताहुतीर्जुहुयात् ॥१६॥

इति श्रीमायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके षोडशोऽनुवाकः॥

---

दशभ्यः स्वाहा विंशत्यै स्वाहा त्रिंशते स्वाहा

---

* "पञ्चभ्यः पञ्चनवत्यै चतुर्दश"-इति क, ख, ग।

चत्वारिꣳशते स्वाहा पञ्चाशते स्वाहा षष्ट्यै स्वाहा सप्तत्यै स्वाहाशीत्यै स्वाहा नवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ १७ ॥

दशभ्यो द्वाविꣳशतिः ॥ १७ ॥

अथ दशसङ्ख्यामारभ्य दशोत्तराणां सङ्ख्यां दर्शयति—"दशभ्यः स्वाहा, विꣳशत्यै स्वाहा, त्रिꣳशते स्वाहा, चत्वारिꣳशते स्वाहा, पञ्चाशते स्वाहा, षष्ट्यै स्वाहा, सप्तत्यै स्वाहा, ऽशीत्यै स्वाहा, नवत्यै स्वाहा, शताय स्वाहा, सर्वस्मै स्वाहा"—इति । एतैर्मन्त्रैरेकादशाहुतीर्जुहुयात् ॥ १७ ॥

इति श्रीमायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके सप्तदशोऽनुवाकः ॥

---

विꣳशत्यै स्वाहा चत्वारिꣳशते स्वाहा षष्ट्यै स्वाहाशीत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ १८ ॥

विꣳशत्यै द्वादश ॥ १८ ॥

अथ विंशतिसङ्ख्यामारभ्य विꣳशत्युत्तराणां सङ्ख्यानां मन्त्रमाह —"विꣳशत्यै स्वाहा, चत्वारिꣳशते स्वाहा, षष्ट्यै स्वाहा, ऽशीत्यै स्वाहा, शताय स्वाहा, सर्वस्मै स्वाहा"—इति । एतैर्मन्त्रैः षडाहुतीर्जुहुयात् ॥ १८ ॥

इति श्रीमायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठकेऽष्टादशोऽनुवाकः ॥

पञ्चाशते स्वाहा शताय स्वाहा द्वाभ्याꣳ शताभ्याꣳ स्वाहा त्रिभ्यः शतेभ्यः स्वाहा चतुर्भ्यः शतेभ्यः स्वाहा पञ्चभ्यः शतेभ्यः स्वाहा षड्भ्यः शतेभ्यः स्वाहा सप्तभ्यः शतेभ्यः स्वाहाष्टाभ्यः शतेभ्यः स्वाहा नवभ्यः शतेभ्यः स्वाहा सहस्राय स्वाहा सर्वस्मै स्वाहा ॥ १९ ॥

पञ्चाशते द्वाविꣳशतिः ॥ १९ ॥

अथ पञ्चाशत्सङ्ख्यामारभ्य पञ्चाशदुत्तराणां शतोत्तराणाञ्च मन्त्रं दर्शयति—"पञ्चाशते स्वाहा, शताय स्वाहा, द्वाभ्याꣳ शताभ्याꣳ स्वाहा, त्रिभ्यः शतेभ्यः स्वाहा, चतुर्भ्यः शतेभ्यः स्वाहा, पञ्चभ्यः शतेभ्यः स्वाहा, षड्भ्यः शतेभ्यः स्वाहा, सप्तभ्यः शतेभ्यः स्वाहा, ऽष्टाभ्यः शतेभ्यः स्वाहा, नवभ्य शतेभ्यः स्वाहा, सहस्राय स्वाहा, सर्वस्मै स्वाहा"-इति। एतैर्मन्त्रैर्द्वादशाहुतीर्जुहुयात् ॥१९॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके एकोनविंशोऽनुवाकः॥

---

शताय स्वाहा सहस्राय स्वाहायुताय स्वाहा नियुताय स्वाहा प्रयुताय स्वाहार्बुदाय स्वाहा न्यर्बुदाय स्वाहा समुद्राय स्वाहा मध्याय स्वाहान्ताय स्वाहा परार्धाय स्वाहोषसे स्वाहा व्युष्ट्यै स्वाहोदेष्यते

स्वाहोद्यते स्वाहोदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहा सर्वस्मै स्वाहा* ॥ २० ॥

शतायाष्टाचिंशत् ॥ २० ॥

अथ शतसङ्ख्यामारभ्योत्तरोत्तरदशगुणवृद्धियुक्तानां सङ्ख्यानां शङ्कमाह—"शताय स्वाहा, सहस्राय स्वाहा, ऽयुताय स्वाहा, नियुताय स्वाहा, प्रयुताय स्वाहा, ऽर्बुदाय स्वाहा, न्यर्बुदाय स्वाहा, समुद्राय स्वाहा, मध्याय स्वाहा, ऽन्ताय स्वाहा, परार्द्धाय स्वाहोषसे स्वाहा, व्युष्ट्यै स्वाहोदेष्यते स्वाहोद्यते स्वाहोदिताय स्वाहा, सुवर्गाय स्वाहा, लोकाय स्वाहा, सर्वस्मै स्वाहा"–इति। अत्र समुद्रादिशब्दाः सर्वे शतसहस्रादिशब्दवदुत्तरोत्तरदशगुणसङ्ख्यावाचिन एव। 'परार्द्ध' ब्रह्मण आयुष्यार्द्धस्यावृत्तानां मानुषसंवत्सराणामवधिभूता परमसङ्ख्या; न ह्यतोऽधिका काचित् सङ्ख्या क्वचित् विद्यते। परार्द्धस्य द्वैगुण्ये तु परार्द्धद्वयमित्येव व्यवहरन्ति। तस्मात् सङ्ख्यावृद्धिविश्रान्तिस्तत्र द्रष्टव्या। कल्पः—"एतानतुवाकान् पुनः पुनरभ्यासं ·रात्रिशेषं कृत्वोषसे स्वाहेत्युषसि व्युच्छन्त्य स्वाहेति व्युच्छन्त्यां व्युष्ट्यै स्वाहेति व्युष्टायामुदेष्यते स्वाहेत्युपोदय मुद्यते स्वाहेत्युद्यति उदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहेत्युदिते कृत्वा"–इति। अत्र "व्युच्छन्त्यै स्वाहा"–इति शाखान्तरमन्त्रः; इतरे स्वमत्या एव। अत्र ब्रह्मणो रात्र्यवसाने सति तदीया उषःकालादयोऽत्र विवक्षिताः; यद्वा मनुष्यप्रसिद्धाः। एवं सत्युष.शब्देन

* श्रस्यानुवाकस्य व्याख्यानादिकम् वा० ३. ८ १६ द्रष्टव्यम्।

प्रभातोपक्रम उक्तः। व्युष्टिशब्देन सम्यक्प्रभातदशा उक्ता*। उदेष्य-च्छब्देन सूर्योदयात् प्राचीनसमीपदशा। उद्यच्छब्देनोदयकालीन-दशा। उदितशब्देनोदयादूर्द्ध्वभाविनी दशा। स्वर्गशब्देन द्युलोको विवक्षितः। लोकशब्देन प्रकाशयुक्तो भूरादिः। अथानुक्तसर्व-विशेषसङ्ग्रहार्थं "सर्वस्मै स्वाहा"-इत्यन्ते समाम्नातम्॥

अत्र प्रपाठकस्य विनियोगसङ्ग्रहः—

षड्रात्रः स्याद्द्वितीयाद्ये, द्वितीये सप्तरात्रकः।
अष्टरात्रस्तृतीये स्याच्चतुर्थे नवरात्रकः।
दशरात्रः पञ्चमे, ऽथ स्यादेकादशरात्रकः।
षष्ठे, काम्यग्रहाः सप्तमे, समूढोऽष्टमे श्रुतः।
द्वादशाहगतानि स्युरहान्येकादशानि तु।
नवमे, दशमे तस्य शेषः सर्वं उदीरीतः। (१-१०)
अथाश्वमेधशेषाः स्युर्मन्त्राः सर्वांच होमगाः॥ (११-२०)

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयात् विद्यातीर्थमहेश्वरः॥७॥२॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे द्वितीयप्रपाठके विंशोऽनुवाकः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये 'वेदार्थ-प्रकाश'-नामकृष्णयजुस्तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डीयव्याख्याने द्वितीयः प्रपाठकः समाप्तः॥

---

* "रात्रिर्वै व्युष्टिरहः स्वर्गोऽहोरात्रे एव तत् प्रीणाति०—०व्युष्ट्यै स्वाहे-त्युदित आदित्ये जुहोति, स्वर्गाय स्वाहेत्युदिते"-इति शत०ब्रा०१३.२.१.६।

(१)साध्याः (२)कुसुरुबिन्दो (३)बृहस्पतिः (४)प्रजापतिः (५)प्रजापति(६)र्ऋतवं (७)ऐन्द्रवायवाग्रान् (८)गायत्रः (९)प्रजापति(१०)र्नै(११)कस्मा* (१२)एकस्मै (१३)द्वाभ्यां (१४)त्रिभ्य(१५)श्चतुर्भ्यः (१६)पञ्चभ्यो (१७)दशभ्यो (१८)विंशत्यै (१९)पञ्चाशते (२०)शताय विंशतिः† ॥ २ ॥

(१)साध्या (२)अस्मा इमे लोका (३)गायत्रं (४)वै तृतीय(५)मेकस्मै पञ्चाशत् ॥ २‡ ॥

## इति तैत्तिरीयसंहितायां सप्तमकाण्डे द्वितीयः प्रपाठकः ॥ २ ॥

---

* (१)साध्या ०—० यंत्रान्नं (२)कुसुरुबिन्द ०—० सप्तरात्रं (३)बृहस्पति ०—०अष्टरात्र(४)प्रजापति ०—०चतुर्थं०—०नवरात्र(५)प्रजापतिरकामयत०—०दशहोतार (६)ऋतवं (७)ऐन्द्रवायवाग्रान् (८)गायत्रो वै (९)प्रजापति ०—०स०—०द्वादशरात्र (१०)न वा (११)एकस्मा"—इति क, ख, ग ।

† प्रपाठकेऽत्र ये विंशतिरनुवाकास्तेषा मेवेमानि प्रतीकपदानि ।

‡ २६४पृ० ६पं०, २८०पृ० ७पं०, २६१पृ० १पं०, ३०४पृ० १०पं०, ३१०पृ० १पं० । मु०-पुस्तके नास्त्येतद्वाक्यम् ।

# अथ तैत्तिरीयसंहितायां

## सप्तमकाण्डे

### तृतीय प्रपाठक ।

॥ हरिः ओम् ॥

प्रजवं वा एतेन यन्ति यद्दशममहः पापावहीयं वा एतेन भवन्ति यद्दशममहर्यो वै प्रजवं यतामपथेन प्रतिपद्यतेथ* स्थाणुं हन्ति यो भ्रेषं न्येति स हीयते स यो वै दशमेऽहन्नविवाक्य उपहन्यते स हीयते तस्मै य उपहताय व्याह तमेवान्वारभ्य समश्नुतेऽथ यो व्याह सः ( १ )

हीयते तस्माद्दशमेऽहन्नविवाक्य उपहताय न व्युच्य[1]मथो खल्वाहुर्यज्ञस्य वै समृद्धेन देवाः सुवर्गं लोकमायन्यज्ञस्य व्यृद्धेनासुरान् पराभावयन्निति यत् खलु वै यज्ञस्य समृद्धं तद्यजमानस्य यद्व्यृद्धं तद्भ्रातृव्यस्य स यो वै दशमेऽहन्नविवाक्य उपहन्यते स एवार्तिं रेचयति ते ये बाह्या दृशीकवः ( २ )

---

* "य"–इति मु॰ पाठ ।

स्युक्ते वि ब्रूयु[१]र्यदि तच्च न विन्देयुरन्तस्सदसा-द्युच्य[२] यदि तच्च न विन्देयुर्गृहपतिना व्युच्यं[३] तद्युच्य-मेवा[४]थ वा एतत्सर्पराज्ञिया ऋग्भिः स्तुवन्तीयं वै सर्पतो राज्ञी यद्वा अस्यां किञ्चार्चन्ति यदानृचुस्ते-नेयꣳ सर्पराज्ञी ते यदेव किञ्च वाचानृचुर्यद्तो-ऽध्यर्चितारः * ( ३ )

तदुभयमाप्नावरुध्योत्तिष्ठामेति[६] ताभिर्मनसा स्तु-वते न वा इमामश्वरथो नाश्वतरीरथः सद्यः पर्याप्तु-मर्हति मनो वा इमाꣳ सद्यः पर्याप्तुमर्हति मनः परि-भवितु[७]मथ ब्रह्म वदन्ति परिमिता वा ऋचः परि-मितानि सामानि परिमितानि यजूꣳष्यथैतस्यैवान्तो नास्ति यद्ब्रह्म तत्प्रतिगृणत आ चक्षीत सः ( ४ )

प्रतिगरः † [८] ॥ १ ॥

स‡ [१] हृणीकवा[२] ऽर्चितारः[३] स[४] एकञ्च ॥ १ ॥

॥ श्रीगणेशाय नम ॥

यस्य निःश्वसित वेदा, यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

---

* "०दितोऽध्यर्चितारः"—इति क, सु० ।

† "प्रतिगर"—इति क, ख ।

‡ "याह स[१]"—इति क, ख, ग ।

षड्राद्याद्या द्वादशाहपर्यन्ता वर्णिताः क्रमात् ।
द्वितीयेऽथ तृतीयेऽस्मिन् सत्त्रजातमुदीर्यते ॥ २ ॥

तत्र प्रथमेनानुवाकेन पूर्वोक्तद्वादशाहशेषत्वेन दशमेऽह्नि क्रियामपि विशेषोऽभिधीयते । प्रथमं तावत् प्रमादादिस्खलितस्य कस्यचिदङ्गस्य स्मारणायान्येन वचनं प्रतिषेधति— "प्रजवं वा एतेन यन्ति, यद्दशममहः ; पापावहीयं वा एतेन भवन्ति, यद्दशममहर्यो वै प्रजवं यतामपथेन प्रतिपद्यते, य स्थाणुं हन्ति, यो भ्रेषं न्येति, स हीयते ; स यो वै दशमेऽहन्नविवाक्य उपहन्यते, स हीयते, तस्मै य उपहताय व्याह, तमेवान्वारभ्य समश्नुते, ऽथ यो व्याह, स हीयते ; तस्माद्दशमेऽहन्नविवाक्य उपहताय न व्युच्यम्[1]"—इति । यदिदं दशममहरस्ति, एतेन 'प्रजवं यन्ति' अत्रानुष्ठेयाङ्गबाहुल्यात्तस्मिन्नेवाह्नि कृत्स्नसमाप्तये प्रकृष्टो जवो वेगो यथा भवति तथैवानुतिष्ठन्ति । इयता प्रयासेन तदनुष्ठाने कारणमुच्यते,— यद्दशममहरस्ति, 'एतेन पापावहीयं भवन्ति' पापस्यावहीयं हानिः, पापक्षयमेतेनाह्ना 'भवन्ति' प्राप्नुवन्ति । तस्मात् प्रयास सोढ्वापि त्वरया तदहरनुष्ठेयम् । त्वरया अनुष्ठातुः स्खलने लौकिको दृष्टान्त उच्यते । चोरव्याघ्रादिभयाकुलमहारण्ये 'प्रजवं यतां' प्रकर्षेण वेगो यथा भवति तथा गच्छतां पुरुषाणां मध्ये यः कोऽपि मन्दबुद्धिपुरुषः पण्डितम्मन्यः सन् सर्वेषां पुरतस्त्वरया गच्छन् बुद्धपराधाद्राजमार्गं परित्यज्य केनाप्यमार्गेण गच्छति, यश्चान्यः पुरुषः सहसा गच्छन् पुरोवर्त्तिनं स्थाणुमदृष्ट्वा पादेन तं स्थाणुं हन्ति, योऽप्यन्यः पुरुषः कण्टकादिना रोगेण वा पीड़ितः सन् 'भ्रेषं न्येति' गन्तुमशक्तो गमनभ्रंशं नितरां प्रा-

प्नोति, स त्रिविधोऽपि पुरुषो हीयते। एवाहेतोः सहायभूताद् गच्छतो जनसङ्घाद्धीनो भवति। यथायं त्रिविधः पुरुषो हीन', तथा दशमेऽहन्यपि विस्मृताङ्गानुष्ठानः पुरुष ऋत्विक्सङ्घाताद्धीयते। सोऽय दार्ष्टान्तिक इहाभिधीयते। 'स यो वै' एतेषां मध्ये यः कोऽप्यृत्विग् 'दशमेऽहन्युपहन्यते' अस्मिन्नहन्यङ्गानुष्ठानविस्मृतिलक्षणमुपघात प्राप्नोति। 'स' अयमृत्विक् सम्यगनुष्ठातृभ्य ऋत्विग्भ्यो हीनो भवति। अविवाक्य इत्यनेन दशममहर्विशेष्यते। अन्येषु यागेषु यत् प्रमादादेकेन विस्मृतमङ्गम्, तदन्येन स्मारयितु वक्तव्य भवति। विकल्पश्च तद्वाक्य वक्तव्यञ्चेति विवाक्यम्, न विद्यते विवाक्यमस्मिन्नहनि तदह' 'अविवाक्यम्' *, एकेन विस्मृतमङ्गं जानताप्यन्येनास्मिन्नहनि न वक्तव्यमित्यर्थ'। एव सति 'उपहताय' स्खलितानुष्ठानाय 'तस्मै' ऋत्विजे 'य' अन्य' कश्चिदृत्विक् 'व्याह' विस्मृतं लयेदमिति ब्रूते, तमेव वक्तारम् 'अन्वारभ्य' अवलम्ब्य स्खलितानुष्ठान' स ऋत्विक् 'समश्नुते' सम्यगनुतिष्ठति। 'अथ' अनन्तरं 'य' अन्यो 'व्याह' विकल्प ब्रूते, 'स.' अयं विवचनेनापराधेन सम्यगनुष्ठातृभ्य ऋत्विग्भ्यो हीयते। 'तस्मात्' कारणाद् अविवाक्येऽस्मिन् दशमेऽहनि 'उपहताय' स्खलितानुष्ठानाय 'न ब्रूयम्' विकल्पमङ्गं न वक्तव्यम् ॥

पक्षान्तरमाह—"अथो खल्वाहुर्यज्ञस्य वै समृद्धेन देवाः सुवर्गं लोकमायन्, यज्ञस्य व्यृद्धेनासुरान् पराभावयन्निति, यत् खलु वै

---

* ऐ० ब्रा० ५, ४ ३, आश्व० श्रौ० ८ १२ १०-१२।

यज्ञस्य समृद्धं, तद्यजमानस्य; यद् व्यृद्धं तद् भ्रातृव्यस्य; स यो वै दशमेऽहन्नविवाक्य उपहन्यते, स एवातिरेचयति; ते ये बाह्या दृशीकव' स्युस्ते वि ब्रूयु[१]"-इति। अभिज्ञास्त्वेवमाहुः। यज्ञस्य यत् सम्पूर्णमनुष्ठानम्, तेन देवाः स्वर्गङ्गताः; यज्ञस्य यदनुष्ठानं विकलम्, तेन असुरान् 'पराभावयन्' पराभवं प्रापितवन्तः। सम्पूर्णफलं यजमानगामि, विकलन्तु भ्रातृव्यगामि। एवं सति दशमेऽहनि 'यः' यजमान' 'उपहन्यते' स्खलितानुष्ठानो भवति, 'स एव' यजमान' 'अतिरेचयति' शास्त्रीयमनुष्ठानमतिलङ्घयति। तथा सत्यनुष्ठानस्य विकलत्वेन न्यूनफलत्वात्, तत्फल भ्रातृव्यगामि स्यात्; अतस्तत्परिहाराय विरुद्ध वक्तव्यमेव। तदाप्यृत्विजो वक्तुः पूर्वोक्तरीत्या प्रत्यवायो भविष्यतीति तत्परिहाराय यज्ञाङ्ग-भूतेभ्य ऋत्विग्भ्यो बहिर्भूता यज्ञ द्रष्टुमागता ये केचित् पुरुषाः सन्ति, तेऽत्र विकलमङ्ग ब्रूयुः। एव सत्यृत्विज. प्रत्यवायो न भविष्यति, विकलमङ्गञ्च समाहित भवति॥

अथ पक्षान्तरमाह—"यदि तत्र न विन्देयुरन्तस्सदमाद्ब्रूयुः[२]" -इति। 'तत्र' तेषु द्रष्टुमागतेषु पुरुषेषु स्खलितप्रयोगाभिज्ञा ऋत्विग्यजमाना यदि न लभेरन्, तदानीम् 'अन्तस्सदमात्' सदसो यज्ञभूमेरन्तर्मध्ये वर्त्तमानैरेव ऋत्विग्भ्य' तद्विकलमङ्गं वक्तव्यम्॥

पुनरपि पक्षान्तरमाह— "यदि तत्र न विन्देयुर्गृहपतिना ब्रूयु[३]"-इति। 'तत्र' तेष्वृत्विक्षु वैकल्याभिज्ञान् पुरुषान् यदि न लभेरन्, तदानी यजमानेन तद्विकलाङ्गं वक्तव्यम्॥

सर्वेषां पक्षाणां तात्पर्यं निगमयति—"तद्ब्रूयमेव[४]"-इति।

किं वङ्गनाद्रष्टुमागतैः पुरुषैर्वा, तत्रत्यैः ऋत्विग्भिर्वा, यजमानेन वा, सर्वथापि तद्विकल्पमङ्गं वक्तव्यमेव। एवं तर्हि विकल्पस्यावश्य-वक्तव्यत्वादविवाक्यत्वविशेषणमयुक्तमिति चेत्, नैवम्; अन्यथा योजयितुं शक्यत्वाद् 'विवाक्य' विकल्पाङ्गवचनं यथा प्रमत्तं न भवति, तथा सावधानैरनुष्ठेयत्वादिदमहरविवाक्यम्। इतरेष्वहस्सु कथञ्चिदेकत्वेऽप्यनायासेन समाधातुं शक्यम्, अत्र तु समाधानं दुःशकमित्यवश्यमप्रमत्तैर्भवितव्यमित्यर्थः॥

अस्मिन्नहनि मानसग्रहकाले स्तोत्रविशेषं विधत्ते—"अथ वा एतत् सर्पराज्ञिया ऋग्भिः स्तुवन्तीयं वै सर्पतो राज्ञी; यद्वा अस्यां किञ्चार्चन्ति, यदानृचुस्तेनेयꣳ सर्पराज्ञी; ते यदेव किञ्च वा-नृचुर्यदतोऽध्यर्चितारस्तदुभयमाप्नावरुध्योत्तिष्ठामेति[1]"-इति। 'अथ वै' अनन्तरमेव मानसग्रहकाले इत्यर्थः। 'एतत्' एतस्मिन्नहनि 'सर्पराज्ञियाः' सर्पस्वामिन्या भूमेः सम्बन्धिनीभिः ऋग्भिर्भूमेः स्तुतिं कुर्युः। का सा सर्पराज्ञी? कथं वा तस्याः सर्पराज्ञीत्वम्? इति तदुभयमुच्यते। 'इयम्' एव भूमिः 'सर्पतः' सञ्चारं कुर्वतः सर्वस्य प्राणिनो राज्ञी। एतेन का सा? इत्यस्योत्तरं सम्पन्नम्; अथ कथं सर्पराज्ञीत्वमित्यस्योत्तरमुच्यते— प्राणिनां मध्ये परस्परोपकार्योप-कारित्वस्य सद्भावात् केचिदर्चकाः, तत्र यत्किञ्चित्प्राणिजातमन्ये पुरुषा अर्चन्ति, 'यदानृचुः' ये पुरुषा अर्चयितारः; तदुभयम-र्चनीयार्चयितृप्राणिस्वरूपम् 'अस्या' पृथिव्यामेव वर्त्तते, तस्मात् सर्वतोऽर्चनादिव्यवहारं कुर्वतः प्राणिजातस्याधार इति भूमिरियं सर्पराज्ञीत्युच्यते। तस्याः सर्पराज्ञियाः सम्बन्धिन्या ऋचः 'भूमि-

भूम्ना'-इत्यादयः*। एते च मन्त्राः प्रथमकाण्डे पुनराधानप्रकरणे समाम्नाताः (तै॰ सं॰ १.५.३)। ताश्च तत्रत्ये ब्राह्मणे एतन्नाम्ना व्यवहृताः—"सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधाति"-इति (तै॰ सं॰ १.५.४.)। तस्माद्भूमिर्भूम्नेत्यादिभिरच स्तुतिं कुर्युः। स्तोतॄणामत्र कोऽभिप्रायः? इति, सोऽयमुच्यते— यदेव किञ्चित् प्राणिजातमन्ये पुरुषा अस्यां भूमौ वाचा पूजितवन्त', ये चास्या भूमेरुपरि अर्चयितार', तदुभयस्वरूपमपि स्तोतारो वय प्राप्य, तच्च स्वाधीनं कृत्वा पश्चादुत्तिष्ठाम 'इति' एवम् एताभिर्ऋग्भि' स्तोतॄणामयमभिप्रायः॥

स्तोत्रान्तरेभ्य' किञ्चिद्विशेष विधत्ते-"ताभिर्मनसा स्तुवते; न वा इमामश्वरथो नाश्वतरीरथ सद्य पर्याप्तुमर्हति, मनो वा इमाꣳ सद्यः पर्याप्तुमर्हति, मनः परिभवितुम्"[७] -इति। इतरैः स्तोत्रैर्वाचिकी स्तुतिः क्रियते, 'ताभि.' सर्पराज्ञीभिरच मानसप्रदस्य प्रवर्त्तमानत्वात् मनसा स्तुतिं कुर्यु'। तत्राय हेतुरुच्यते,— बलवद्भिरश्वैर्युक्तो रथः 'अश्वरथ.', अश्वतर्यस्तु सङ्कीर्णजातयोऽत्यन्तबलयुक्ताः, ताभिर्युक्तः 'अश्वतरीरथ.', तयोरन्यतरोऽपि एकस्मिन्नेव दिने भूमिम् 'इमां' कृत्स्नां व्याप्तुं नार्हति, मनस्त्वेकस्मिन्नेव क्षणे सर्वां भूमिं व्याप्तुमर्हति, अनिष्टञ्च सर्वं तिरस्कर्त्तुमर्हति; तस्माद्भूमिविषयाभिर्ऋग्भिर्मनसैव स्तोतव्यम्॥

---

* "ते सामसा सर्पराज्ञ्या सम्बन्धिनीषु ऋक्षु "आयङ्गौ"-इत्यादिषु स्तोत्रं कुर्युः"-इत्यैतरेयभाष्ये सायण (ए. ब्रा. सु. ३भा॰ १४५ पृ॰)। तत्रत्ये मदीये टीप्पन्यौ च द्रष्टव्ये। एतत्संहितायां तु "भूमिर्भूम्ना"-इत्येषैव सार्पराज्ञीषु प्रथमा, "आयङ्गौ"-इत्यादयस्तदुत्तरा (१.५.३)।

किं वक्तुमाद्रष्टुमागते पुरुषैर्वा, तत्रत्यैः ऋत्विग्भिर्वा, यजमानेन वा, सर्वथापि तद्विकल्पमन्त्र वक्तव्यमेव। एवं तर्हि विकल्पस्यावश्य-वक्तव्यत्वाद्विवाक्यत्वविशेषणमयुक्तमिति चेत्, नैवम्, अन्यथा योजयितुं शक्यत्वाद् 'विवाक्य' विकल्पाङ्गवचनं यथा प्रमक्तं न भवति, तथा सावधानैरनुष्ठेयत्वादिदमहरविवाक्यम्। इतरेष्वहस्सु कथञ्चिद्विकल्पेऽप्यनायासेन समाधातुं शक्यम्, अत्र तु समाधानं दुःशकमित्यवश्यमप्रमत्तैर्भवितव्यमित्यर्थः॥

अस्मिन्नहनि मानसग्रहकाले स्तोत्रविशेषं विधत्ते—"अथ वा एतत् सर्पराज्ञिया ऋग्भिः स्तुवन्तीयं वै सर्पतो राज्ञी, यद्वा अस्यां किञ्चार्चन्ति, यदानृचुस्तेनेयः सर्पराज्ञी, ते यदेव किञ्च वा-नृचुर्यदतोऽध्यर्चितारस्तदुभयमाप्त्वावरुध्योत्तिष्ठामेति(१)"—इति। 'अथ वै' अनन्तरमेव मानसग्रहकाले इत्यर्थः। 'एतत्' एतस्मिन्नहनि 'सर्पराज्ञिया' सर्पस्वामिन्या भूमेः सम्बन्धिनीभिः ऋग्भिर्भूमेः स्तुतिं कुर्युः। का सा सर्पराज्ञी? कथं वा तस्याः सर्पराज्ञीत्वम्? इति तदुभयमुच्यते। 'इयम्' एव भूमिः 'सर्पतः' सञ्चारं कुर्वतः सर्वस्य प्राणिनो राज्ञी। एतेन का सा? इत्यस्योत्तरं सम्पन्नम्, अथ सर्पराज्ञीत्वमित्यस्योत्तरमुच्यते— प्राणिनां मध्ये परस्परोपकार-कारित्वस्य सद्भावात् केचिदर्चकाः तत्र यत्किञ्चन।। ग। पुरुषा अर्चन्ति, 'यदानृचुः' ये पुरुषा अर्चयितारः र्चनीयार्चयितृप्राणिस्वरूपम् 'अस्यां' पृथिव्यामेव वर्त्तते, सर्वतोऽर्चनादिव्यवहारं कुर्वतः प्राणिजातस्याधारः इति सर्पराज्ञीत्युच्यते। तस्याः सर्पराज्ञिया सम्बन्धिन्या

भूँमा'—इत्यादयः*। एते च मन्त्रा' प्रथमकाण्डे पुनराधानप्रकरणे समाम्नाताः (तै० सं० १.५.३.)। तास्तु तत्रत्ये ब्राह्मणे एतन्नाम्ना व्यवहृताः—"सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधाति"—इति (तै० सं० १.५.४.)। तस्माद्भूमिर्भूमेत्यादिभिरच स्तुतिं कुर्युः। स्तोतॄणामत्र कोऽभिप्रायः? इति, सोऽयमुच्यते— यदेव किञ्चित् प्राणिजातमन्ये पुरुषा अस्यां भूमौ वाचा पूजितवन्त, ये चास्या भूमेरुपरि अर्चयितार', तदुभयस्वरूपमपि स्तोतारो वयं प्राप्य, तच्च स्वाधीनं कृत्वा पश्चादुत्तिष्ठाम 'इति' एवम् एताभिर्ऋग्भिः स्तोतॄणामयमभिप्रायः॥

स्तोत्रान्तरेभ्य' किञ्चिद्विशेष विधत्ते—"ताभिर्मनसा स्तुवते, न वा इमामश्वरथो नाश्वतरीरथ सद्य पर्याप्तुमर्हति, मनो वा इमां सद्यः पर्याप्तुमर्हति, मनः परिभवितुम्"(७)—इति। इतरैः स्तोत्रैर्वाचिकी स्तुतिः क्रियते, 'ताभि.' सर्पराज्ञीभिरच मानसयज्ञस्य प्रवर्त्तमानत्वात् मनसा स्तुतिं कुर्युः। तत्रायं हेतुरुच्यते,— बलवद्भिरश्वैर्युक्तो रथः 'अश्वरथ.', अश्वतर्यस्तु सङ्कीर्णजातयोऽत्यन्तबलयुक्ताः, ताभिर्युक्तः 'अश्वतरीरथ', तयोरन्यतरोऽपि एकस्मिन्नेव दिने भूमिम् 'इमां' कृत्स्नां व्याप्तुं नार्हति, मनस्त्वेकस्मिन्नेव क्षणे सर्वां भूमिं व्याप्तुमर्हति, अनिष्टञ्च सर्वं तिरस्कर्त्तुमर्हति; तस्माद्भूमिविषयाभिर्ऋग्भिर्मनसैव स्तोतव्यम्॥

---

* "ते सामगाः सर्पराज्ञ्या सम्बन्धिनीषु ऋक्षु "आयङ्गौ"—इत्यादिषु स्तोत्रं कुर्युः"—इत्यैतरेयभाष्ये सायणः (ए. सो. मु. इभा० १८५ पृ०)। तच्चत्र मदीये टीप्पन्यौ च पर्यवेक्ष्ये। एतत्संहितायां तु "भूमिर्भूमा"—इत्येषैव सार्पराज्ञीषु प्रथमा, "आयङ्गौ"—इत्यादयस्तदुत्तरा (१. ५ ३.)।

यदुक्तं सूत्रकारेण—"होता चतुर्होतॄन् व्याचष्टे"-इति, तदिदं विधत्ते—"अथ ब्रह्म वदन्ति, परिमिता वा ऋचः, परिमितानि सामानि, परिमितानि यजूंष्यथैतस्यैवान्तो नास्ति यद् ब्रह्म, तत्प्रतिगृणत आ चक्षीत, स प्रतिगरः(८)"-इति। पूर्वोक्ताभिर्ऋग्भिः प्रसवकाले यत्र यत्राध्वर्युः प्रतिगरं प्रयुङ्क्ते, तत्र तत्र प्रतिगरकाले होता ब्रह्मशब्दाभिधेयं चतुर्होतृमन्त्रं ब्रूयात्। "ब्रह्म वै चतुर्होतारः"-इतिश्रुत्यन्तरात् (ब्रा० २ २.१) तस्य मन्त्रस्य ब्रह्मत्वम्। "पृथिवी होता। द्यौरध्वर्युः"-इत्यादिकं (३ १ १) आरण्यकाण्डाम्नातश्चतुर्होतृमन्त्रः। एतेन सर्वेऽपि होतृमन्त्रा उपलक्षिताः। अत एव सर्वेषां होतृमन्त्राणां स्थाने प्रतिगरं सूत्रकारो दर्शयति—"ओमिति दशहोतुः प्रतिगरस्तथेति चतुर्होतुरोमिति पञ्चहोतुस्तथेति षड्ढोतुररात्म होतरिति सप्तहोतुः"-इति। प्रसितुः प्रोत्साहजननं 'प्रतिगरः'। तत्प्रतिगरविषयत्वेनारण्यकाण्डोक्ताः सर्वे दशहोत्रादिमन्त्राः (तै० आ० २ १-७) होत्रा वक्तव्याः। तत्सर्वमन्त्रसङ्ग्रह्य 'ब्रह्म वदन्ति' इत्यनेन वाक्येन विधीयते। मन्त्रान्तरपरित्यागेन ब्राह्मण एव वदने हेतुरुच्यते। ये ऋग्रूपा मन्त्रास्ते 'परिमिताः' क्वचित् क्वचिदेव प्रयोज्यत्वात् एवं यजुषां साम्नाञ्च परिमितत्वम्, 'यत्' तु ब्रह्मशब्दाभिधेयं होतृमन्त्रजातम्, एतस्यैव 'अन्तः' परिमितत्वं नास्ति, बहुषु प्रदेशेषु प्रयोक्तव्यत्वात्। तस्मात् 'तद्' ब्रह्मशब्दाभिधेयं होतृमन्त्रजातम् 'प्रतिगृणते' प्रतिगरार्थमुद्युक्तायाध्वर्यवे होता ब्रूयात्। 'स' अयं होतृमन्त्रसङ्घः प्रतिगीर्यतइति 'प्रतिगरः', अध्वर्युकर्तृकायाः प्रतिगरणक्रियायाः कर्मभूत इत्यर्थः॥

अथ मीमांसा। दशमाध्यायस्य षष्ठपादे (जै० सू० ३४-४४. अधि० १२) चिन्तितम्—

"मानसं किं महर्भिन्नं मङ्गं वा दशमेऽहनि ?।
भिन्नं स्तुत्यादिना ; ऽङ्गं तद् विसर्गोक्त्यादिभिर्भवेत् ॥

द्वादशाहे मानसग्रहणं श्रूयते—"अनया त्वा पृथिव्या पात्रेण समुद्रे रसया प्रजापतये जुष्टं गृह्णामीति मानसं प्राजापत्यं गृह्णाति"-इति। अयमर्थः। पृथिवी पात्रम्, 'समुद्रः' सोमः, तद्रसः, प्रजापतिर्देवता ; एवंविशिष्टस्य ग्रहस्य ग्रहणे मनः साधनम्, तदिदं मानसमिति। एतच्च द्वादशभ्यो भिन्नमहः, त्रयोदशेऽहनि कर्त्तव्यो यागविशेषः। कुतः? स्तुत्यादिभ्यः। मानसेन द्वादशाहस्य स्तुतिरेवमाम्नायते—"द्वादशाहस्य हतरसानि च्छन्दांसि, तानि मानसेनाप्याययन्ति"-इति। स्तुतिसाधनञ्च मानसं स्तोतव्याद् भिन्नं भवितुं युक्तम्। तथा व्यपदेशभेदोऽपि श्रूयते—"वाग् वै द्वादशाहो मनो मानसम्"-इति। एवमाद्युपपत्तिभिर्भिन्नमहरिति प्राप्ते, ब्रूमः—दशमस्याह्नोऽङ्गं तत्स्याद्, विसर्गोक्त्यादिभ्यः। "एष वै दशमस्याह्नो विसर्गो यन्मानसम्"-इति विसर्गोक्तिः। इयञ्च दशमाहाङ्गत्वं गमयति। अहरन्तरत्वे द्वादशाहसमाख्या च विरुध्येत। अङ्गभूतेनापि मानसेन स्तुतिव्यपदेशभेदादिकमुपपद्यते। तस्मादङ्गम्"-इति ॥ १ ॥

इति श्रीसायणार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः॥

---

ब्रह्मवादिनो वदन्ति किं द्वादशाहस्य प्रथमेनाहृत्विजां यजमानो वृङ्क्त इति तेज इन्द्रियमिति किं द्वितीयेनेति प्राणानन्नाद्यमिति किं तृतीयेनेति त्री-निमांल्लोकानिति* किं चतुर्थेनेति चतुष्पदः पशूनिति किं पञ्चमेनेति पञ्चाक्षरां पङ्क्तिमिति किꣳ षष्ठेनेति षडृतूनिति किꣳसप्तमेनेति सप्तपदाꣳशक्वरीमिति (१)

किमष्टमेनेत्यष्टाक्षरं गायत्रीमिति किं नवमेनेति त्रिवृतꣳ स्तोममिति किं दशमेनेति दशाक्षरां विराजमिति किमेकादशेनेत्येकादशाक्षरां त्रिष्टुभमिति किं द्वादशेनेति द्वादशाक्षरां जगतीमित्येतावद्वा अस्ति यावदेतद्यावदेवास्ति तदेषां वृङ्क्ते॥ २॥

शक्वरी(१)मित्येकचत्वारिꣳशच्च ॥ २ ॥

प्रथमेऽनुवाके द्वादशाहगतमविवाक्यमहः प्रपञ्चितम्, अथ द्वितीये प्रश्नोत्तराभ्यामहीनद्वादशाह आर्त्विज्यनिन्दामुखेन तद्याजिनं यजमानं प्रशंसति—"ब्रह्मवादिनो वदन्ति,— किं द्वादशाहस्य प्रथमेनाहृत्विजां यजमानो वृङ्क्त इति? तेज इन्द्रियमिति, कि द्वितीयेनेति? प्राणानन्नाद्यमिति, कि तृतीयेनेति? त्रीनिमांल्लोकानिति, कि चतुर्थेनेति? चतुष्पद पशूनिति, किं पञ्चमेनेति? पञ्चाक्षरां

* "त्रीनिमान् लोकानिति" सु०, "त्रीनिमा लोकानिति" क, ख, ग।

पङ्क्तिमिति; किꣳ षष्ठेनेति? षड्ढूनिति; किꣳ सप्तमेनेति? सप्तपदाꣳ शक्वरीमिति, किमष्टमेनेत्यष्टाक्षरां गायत्रीमिति; किं नवमेनेति? त्रिवृतꣳ स्तोममिति; किं दशमेनेति? दशाक्षरां विराजमिति; किमेकादशेनेत्येकादशाक्षरां त्रिष्टुभमिति; किं द्वादशेनेति? द्वादशाक्षरां जगतीमित्येतावद्वा अस्ति यावदेतद्यावदेवास्ति तदेषां वृङ्क्ते"-इति। अहीनस्य द्वादशाहस्यानुष्ठाता यजमानः ऋत्विजां सम्बन्धि यच्छ्रेयोऽस्ति, तत्सर्वं निर्वर्जितं यथा भवति तथा स्वयं सर्वमादत्त इत्येतमर्थं सिद्धवत्कृत्य केनाहर्विशेषेण कं फलविशेष मादत्ते इत्येवं ब्रह्मवादिनः पप्रच्छुः। तत्राभिज्ञः कश्चित्तेजआदिकं क्रमेणादत्ते इत्युत्तरं ब्रूते। पञ्चाक्षरपादान्वितं यत्पङ्क्तिच्छन्दः, तेन साध्यं फलं वृङ्क्ते। एवं तत्र तत्र यथायोगमुन्नेयम्। एतैरुक्तैर्द्वादशभिर्वाक्यैर्यावदेतच्छ्रेय उक्तम्, एतावदेवर्त्विजां विद्यमानं श्रेयः; अतो यावदेषामस्ति, तत्सर्वं यजमान आदत्ते ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः॥

---

एष वा आप्तो द्वादशाहो यत् त्रयोदशरात्रः समानꣳ ह्येतदहर्यत् प्रायणीयश्चोदयनीयश्च(१) त्र्यतिरात्रो भवति त्रयं इमे लोका एषां लोकानामाप्त्यै(२) प्राणो वै प्रथमोऽतिरात्रो व्यानो द्वितीयोऽपानस्तृतीयः प्राणापानोदानेष्वेवान्नाद्ये प्रति तिष्ठन्ति सर्वमायुर्यन्ति

य एवं विद्वाꣳसस्त्रयोदशरात्रमासते[१] तदाहुर्वाग्वा एषा वितता (१)

यद् द्वादशाहस्तां विच्छिन्द्युर्यन्मध्येऽतिरात्रं कुर्युरु-पदासुका गृहपतेर्वाक स्यादुपरिष्टाच्छन्दोमानां महा-व्रतं कुर्वन्ति सन्तताभेव वाचमव रुन्धतेऽनुपदासुका गृहपतेर्वाग् भवति[४] पशवो वै छन्दोमा अन्नं महाव्रतं यदुपरिष्टाच्छन्दोमानां महाव्रतं कुर्वन्ति पशुषु चैवा-न्नाद्ये च प्रति तिष्ठन्ति[५] ॥ ३ ॥

वितता[१] त्रिचत्वारिꣳशच्च ॥ ३ ॥

द्वितीये द्वादशाहयाजिनः प्रशंसाभिहिता, अथ तृतीये त्रयो-दशरात्रोऽभिधीयते—"एष वा आप्तो द्वादशाहो यत् त्रयोदशरात्रः; समानꣳ ह्येतदहर्यत्प्रायणीयश्चोदयनीयश्च[१]"—इति। योऽयं त्रयोद-शरात्रो विधास्यमानः, एष एव सम्पूर्णो द्वादशाहः। पूर्वस्माद् द्वादशाहादेकदिनाधिक्येन फलाधिक्याद्दिनाधिक्ये सति केन साम्येन द्वादशाहत्वमिति चेत्, तदुच्यते—प्रायणीय उदयनीयश्चेत्युभय द्वा-दशाहे यादृशम्, तादृश मेवात्रापीति द्विविधस्याह्नः समानत्वाद् द्वादशाहत्वोपचार ।

अथ विशेष विधत्ते—"अतिरात्रो भवति, त्रय इमे लोका एषां लोकानामाप्त्यै[२]"—इति। द्वादशाहे प्रायणीयोदयनीयौ द्वावेवातिरात्रौ, अत्र तु मध्येऽपि कश्चिदतिरात्रः, तेन लोकत्रय-

प्राप्तिः। अथाहःक्लृप्तिं सूत्रकारो दर्शयति— "अतिरात्रः पृष्ठ्यः षडहः सर्वस्तोमोऽतिरात्रश्चत्वारश्छन्दोमा अतिरात्रः"—इति। यद्यपि चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशाख्यास्त्रय एव छन्दोमा विद्यमानाः, तथाप्यन्त्यलोपो वृद्धिर्वेति न्यायेनाष्टाचत्वारिंशस्यावृत्त्या चतुःसङ्ख्या पूरणीया* ॥

अथ त्रयोदशरात्रं विधत्ते— "प्राणो वै प्रथमोऽतिरात्रो व्यानो द्वितीयोऽपानस्तृतीयः प्राणापानोदानेष्वेवान्नाद्ये प्रति तिष्ठन्ति, सर्वमायुर्यन्ति य एवं विद्वांसस्त्रयोदशरात्रमासते[३]"—इति। व्यानेनोदानादीनामप्युपलक्षितत्वादुदानेनोपसंहारो न विरुद्धः ॥

योऽयं मध्यमोऽतिरात्रः, तस्य छन्दोमानामधस्तात् सूत्रकारः शाखान्तरानुसारेण स्थानं निर्दिश्य, तदिदं दूषयित्वा छन्दोमानामुपरि स्थानं विधत्ते— "तदाहुर्वाग् वा एषा वितता यद् द्वादशाहस्तां विच्छिन्द्युर्यन्मध्येऽतिरात्रं कुर्युरुपदासुका गृहपतेर्वाक् स्यादुपरिष्टाच्छन्दोमानां महाव्रतं कुर्वन्ति, सन्ततामेव वाचमवरुन्धतेऽनुपदासुका गृहपतेर्वाग् भवति[४]"—इति। योऽयं द्वादशाहोऽस्ति, सोऽयं विस्तीर्णवाक्स्वरूपः, तत्रत्येष्वहःसु विद्यमानानां स्तोत्रशस्त्राणामविच्छेदस्य प्रकृतिभूते तस्मिन् द्वादशाहे क्लृप्तत्वात्। एवं च सति षडहस्य छन्दोमानाञ्च मध्ये यदि कश्चिदन्यः सर्वस्तोमोऽतिरात्रोऽनुष्ठीयेत, तदानीं द्वादशाहगतां क्लृप्तां सन्ततां वाचमनुष्ठातारो विच्छिन्द्युः। तथा सति यजमानस्य वाक् उपचयशीला स्यात्। अतस्तत्परिहाराय छन्दोमानामुपरि यद्विवाक्यमहः

* एवमेवैष विहितः सामवेदेऽपि (ता० ब्रा० २३ १.)।

द्वादशाहगत, तदेवाह सर्वस्तोमातिरात्ररूप कुर्यात्। तस्मिंश्च महाव्रतधर्मातिदेशाभिप्रायेण महाव्रतशब्दप्रयोग । एवमुपरिष्टादनुष्ठाने सति सन्ततामेव वाच प्राप्नोति, न तु यजमानस्य वागुपक्षीयते ॥

तदेवोपरिष्टादनुष्ठान प्रकारान्तरेण प्रशसति—"पशवो वै छन्दोमा अन्न महाव्रत यदुपरिष्टाच्छन्दोमाना महाव्रत कुर्वन्ति, पशुषु चैवान्नाद्ये च प्रति तिष्ठन्ति(४)"—इति। सत्सु प्रथम पशुषु, पश्चात् घृतक्षीरादिरूपमन्नाद्य युक्तम्, तस्मादन्नरूपस्य महाव्रतधर्मकस्यातिरात्रस्योपरिष्टादेवानुष्ठान न्याय्यम् * ॥ २ ।

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाक ॥

---

आदित्या अकामयन्तोभयोर्लोकयोर्ऋध्नुयामेति त एत चतुर्दशरात्रमपश्यन् त माहरन्तेनायजन्त ततो वै त उभयोर्लोकयोरार्ध्नुवन्नस्मिꣳश्चामुष्मिꣳश्च य एवं विद्वाꣳसश्चतुर्दशरात्रमासत उभयोरेव लोकयोर्ऋध्नुवन्त्यस्मिꣳश्चामुष्मिꣳश्च(१) चतुर्दशरात्रो भवति सप्त ग्राम्या ओषधय सप्तारण्या उभयीषामवरुद्ध्यै(२) यत्पराचीनानि पृष्ठानि (१)

भवन्त्यमुमेव तैर्लोकमभि जयन्ति यत् प्रतीचीनानि पृष्ठानि भवन्तीममेव तैर्लोकमभि जयन्ति(३) त्रय-

---

* एष द्वितीयस्त्रयोदशरात्र सामवेदेऽपि (ता० ब्रा० २३ २ )।

त्रिꣳशौ मध्यतः स्तोमौ भवतः साम्राज्य मेव गच्छन्त्यधिराजौ भवतोऽधिराजा एव समानानां भवन्त्य[४]-तिरात्रावभितो भवतः परिगृहीत्यै[५] ॥ ४ ॥

पृष्ठानि[१] चतुस्त्रिꣳशच्च ॥ ४ ॥

तृतीयेऽनुवाके त्रयोदशरात्रोऽभिहितः, अथ चतुर्थे चतुर्दशरात्रोऽभिधीयते; तमेतं विधत्ते— "आदित्या अकामयन्तोभयोर्लोकयोर्ऋध्नुयामेति; त एतं चतुर्दशरात्रमपश्यन् त माहरन् तेनायजन्त; ततो वै त उभयोर्लोकयोरार्ध्नुवन्नस्मिꣳश्चामुष्मिꣳश्च य एवं विद्वाꣳसश्चतुर्दशरात्रमासत उभयोरेव लोकयोर्ऋध्नुवन्त्यस्मिꣳश्चामुष्मिꣳश्च[१]"–इति ॥

तत्राक्तां सङ्ख्यां प्रशंसति— "चतुर्दशरात्रो भवति; सप्त ग्राम्या ओषधयः सप्तारण्या उभयीषामवरुद्ध्यै[२]"–इति । ग्राम्याश्चारण्याश्चाक्सङ्ख्याताः* ॥

प्रायणीयोदयनीययोर्मध्यवर्तीनि द्वादशसङ्ख्याकान्यहानि विधत्ते— "यत्पराचीनानि पृष्ठानि भवन्त्यमुमेव तैर्लोकमभि जयन्ति; यत्प्रतीचीनानि पृष्ठानि भवन्तीममेव तैर्लोकमभि जयन्ति[३]"–इति । रथन्तरबृहद्वैरूपवैराजशाक्वररैवतसामसाध्यैः पृष्ठस्तोत्रैरुक्तान्यहानि पृष्ठानीत्युच्यन्ते । तेषामुक्तोऽनुक्रमः पराचीनत्वम्, विपरीतक्रमः प्रतीचीनत्वम्; तेन द्वैविध्येन लोकद्वयप्राप्तिः ॥

एतमेवारोहावरोहप्रकारं पुनः प्रशंसति— "त्रयस्त्रिꣳशौ मध्यतः

* ४भा० ७०४ पृ० २पं० । "यदक्षष्टे पच्यते तेनारण्यम्"–इति ग्रु० ब्रा० ६. १. १ ।

स्तोमौ भवतः, साम्राज्यमेव गच्छन्त्यधिराजौ भवतोऽधिराजा एव समानानां भवन्ति[६]"-इति। त्रिवृत्, पञ्चदश', सप्तदश., एकविंश', त्रिणव', त्रयस्त्रिंश',—इत्येष' स्तोमानां षट्खिद्वारोहक्रमः, त्रयस्त्रिंश., त्रिणव', एकविंशः, सप्तदशः, पञ्चदश., त्रिवृदित्ययमवरोहक्रमः। एवञ्च सति एषु द्वादशस्वहस्सु मध्ये षष्ठसप्तमयोरह्नो-र्नैरन्तर्येण त्रयस्त्रिंशस्तोमौ सम्पद्येते, तेन च यजमानाः साम्राज्यं गच्छन्ति। किञ्चैतावन्येषां स्तोमानामधिराजौ, अर्वाचीनाना तत्रान्तर्भावात्। अतो यजमानाः सर्वेषामन्येषां अधिराजा भवन्ति॥

अथ प्रायणीयोदयनीयावहर्विशेषो विधत्ते—"अतिरात्रावभितो भवत परिगृहीत्यै[५]"-इति*॥ ४॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः॥

---

प्रजापतिः सुवर्गं लोकमैत्तं देवा अन्वायन् तानादित्याश्च पशवश्चान्वायन् ते देवा अंब्रुवन् यान् पशून्पाजीविष्म त इमेऽन्वाग्मन्निति तेभ्य एतं चतुर्दशरात्रं प्रत्यौहन् त आदित्याः पृष्ठैः सुवर्गं लोकमारोहन् त्र्यहाभ्यामस्मिंल्लोके† पशून् प्रत्यौहन् पृष्ठैरादित्या अमुष्मिंल्लोक आर्ध्नुवन् त्र्यहाभ्यामस्मिन् (१)

---

* सामवेदेऽप्यय प्रथमश्चतुर्दशरात्र (ता० ब्रा० २३ ३.)।

† "०मस्मिन् लोके"—इति मु०, "०मस्मिं लोके"—इति क, ख, ग। एव सिद्धोत्तरत्रापि सर्वत्र।

लोके पशवो(१) य एवं विद्वाꣳसश्चतुर्दशरात्रमासत उभयोरेव लोकयोर्ऋध्नुवन्त्यस्मिꣳश्चामुष्मिꣳश्च पृष्ठैरेवामुष्मिंल्लोक ऋध्नुवन्ति त्र्यहाभ्यामस्मिंल्लोके(२) ज्योतिर्गौरायुरिति त्र्यहो भवतीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरिमानेव लोकानभ्यारोहन्ति(३) यदन्यतः पृष्ठानि स्युर्विविवधꣳ* स्यान्मध्ये पृष्ठानि भवन्ति सविवधत्वाय (२)

ओजो वै वीर्यं पृष्ठान्योज एव वीर्यं मध्यतो दधते(४) बृहद्रथन्तराभ्यां यन्तीयं वाव रथन्तरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति(५) पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ् त्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्यै (३)

उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्ति(६) चतुर्दशैतास्तासां या दश दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमवरुन्धते याश्चतस्रश्चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठ(७)न्त्यतिरात्रावभितो भवतः परिगृहीत्यै(८) ॥ ५ ॥

---

* "विविवधꣳ" क ।

अस्मिं[१]न्त्सविवुधत्वाय[२]* प्रतिष्ठित्या[३] एकविꣳशच्च ॥ ५ ॥

चतुर्थेऽनुवाके एकश्चतुर्दशरात्रोऽभिहितः, अथ पञ्चमेऽन्यश्चतुर्दशरात्रोऽभिधीयते*, तमेव विधातुं प्रस्तौति—"प्रजापतिः सुवर्गं लोकमैत्, तं देवा अन्वायन्; तानादित्याश्च पशवश्चान्वायन्; ते देवा अब्रुवन्, यान् पशूनुपाजीविष्म त इमेऽन्वाग्मन्निति; तेभ्य एतं चतुर्दशरात्रं प्रत्यौहन् त आदित्याः पृष्ठैः सुवर्गं लोकमारोहन्, त्र्यहाभ्यामस्मिंल्लोके पशून् प्रत्यौहन्, पृष्ठैरादित्या अमुष्मिंल्लोक आर्ध्नुवन्, त्र्यहाभ्यामस्मिंल्लोके पशवः[१]"—इति। यदा प्रजापतिः स्वर्गं गतः, तदा प्रजापतिमनु सर्वेऽपि देवा गताः। 'तान्' देवान् 'अनु' पश्चादादित्याः पशवश्च गताः। तान् आदित्यान् पशून् उभयविधान् दृष्ट्वा 'ते' देवाः परस्परमिदमब्रुवन्,—यान् पशूनुपेत्य मनुष्यैः सहिताः सर्वे वयमजीविष्म, 'ते' पशवः सर्वेऽप्यस्माकं पृष्ठत एव समागताः। आगतानामादित्यानां पशूनाञ्च मध्ये आदित्याः स्वर्गमारोहन्तु, पशवः प्रतिनिवृत्य भूमौ गच्छन्तु, तत्र क उपायः? इति विचार्य 'एतं' चतुर्दशरात्रं प्रत्यावृत्तिरूपयुक्तमनुष्ठितवन्तः। तत्रेयमहःक्लृप्तिः—आदावेकोऽतिरात्रः, ततो ज्योतिर्गौरायुरित्यारोहत्पक्षिरात्रः, ततः पृष्ठ्यः षडहः, तत आयुर्गौर्ज्योतिरित्यवरोहत्पक्षिरात्रः, ततोऽतिरात्र इति। तस्मिन्ननुष्ठिते सति पृष्ठ-

* "आर्ध्नुवन् त्र्यहाभ्यामस्मिं[१]न्त्सविवुधत्वाय[२]"—इति क, ख, ग।

† सामवेदे चयश्चतुर्दशरात्रयागाः श्रुताः—सर्वफलसाधनः, स्वर्गसाधनः, प्रतिष्ठासाधनश्चेति, तत्रायं द्वितीयः (ता० ब्रा० २३ ४.)।

शब्दाभिधेयैः षड्भिरहोभिरादित्याः स्वर्गमारोहन्, प्रत्यावृत्ति-युक्ताभ्यां 'त्र्यहाभ्यां' देवाः पशूनस्मिन् लोके प्रतिनिवर्त्तितवन्तः। तत्र आदित्याः पृष्ठैः स्वर्गं प्राप्य तत्र समृद्धिं गताः, पशवस्तु त्र्यहा-भ्यामस्मिंल्लोके समृद्धिं गताः॥

तत् इदानीं विधत्ते—"य एवं विद्वाꣳसश्चतुर्दशरात्रमासत, उभयोरेव लोकयोर्ऋध्नुवन्त्यस्मिꣳश्चामुष्मिꣳश्च पृष्ठैरेवामुष्मिंल्लोक ऋध्नुवन्ति त्र्यहाभ्यामस्मिंल्लोके[१]"—इति॥

अथारोहरूपं प्रथमं त्र्यहं विधत्ते—"ज्योतिर्गौरायुरिति त्र्यहो भवतीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरिमानेव लोकानभ्यारोह-न्ति[२]"—इति। ज्योतिष्टोमगोष्टोमायुष्टोमरूपा अहर्विशेषा मिलित्वा 'त्र्यहः'; तेन च त्रित्वसाम्याल्लोकत्रयप्राप्तिर्भवति॥

अथ षडहगतान्यहानि विधत्ते—"यदन्यतः पृष्ठानि स्युर्विवि-वधꣳ स्यान्मध्ये पृष्ठानि भवन्ति सविवधत्वाय, ओजो वै वीर्यं पृष्ठा-न्योज एव वीर्यं मध्यतो दधते[३]"—इति। 'विवध'शब्देनोभयतः शिक्योपेतः क्षीराज्यादिवाही काष्ठविशेष उच्यते*। तस्य चोभयतो भारः समानः। एवं सत्यत्रायं पृष्ठ्यः षडहः आदावन्ते वा यद्येक-

* पा० सू० ४. ४ १७। 'विवधवीवधशब्दौ उभयतोबद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्त्तेते'—इति तत्र सि० कौ०। तत्र विवध इति ह्रस्वादिरेतच्छाखापाठ, वीवध इति दीर्घादिस्तु शाखान्तरीय। तद्यथा— पुनरत्रैव सप्तमेऽनुवाके (४४४ पृ०) 'विविवधꣳ'—इति, ताण्ड्यैतरेयादिषु तु वीवध इति (ता० ब्रा० ४. ५, १९; १४. १. १०, ऐ० ब्रा० ८. १ १, श्राश्व० श्रौ० १ १२ ९। त्रिसदृशो विवधो 'विविवध', विवधसदृश 'सविवध' इति च विवेक। विवध इति पवर्गमध्यपाठोऽपि क्वाचित्क।

स्मिन् पार्श्वे भवेत्, तदा भारद्वयमाप्याभावाद् 'विविवध'लक्षणमिदं कर्म स्यात्, अतो विवधसदृशत्वाय पृष्ठाख्यानि अहानि मध्ये कर्त्तव्यानि। किञ्चैतानि पृष्ठानि शरीरबलेन्द्रियसामर्थ्यस्य च हेतुत्वात्तद्रूपाणि, तस्मात्तेषां मध्यतोऽनुष्ठाने सत्योजो वीर्यञ्च मध्ये धृतं भवति ॥

अथ तेष्वहस्सु चोदकप्राप्तानि वैरूपवैराजादिसामान्यपवदितुं विधत्ते—"बृहद्रथन्तराभ्यां यन्तीयं वाव रथन्तरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती, ताभ्यामेव सुवर्गं लोकं यन्ति[५]"-इति। प्रथम-तृतीय-पञ्चमेष्वहस्सु रथन्तरसाम्ना पृष्ठस्तोत्रं निष्पादनीयम्, द्वितीय-चतुर्थ-षष्ठेष्वहस्सु बृहत्साम्नेति विवेकः। अवशिष्टं वाक्यं "साध्या वै देवाः सुवर्गकामाः"- इत्यस्मिन् अनुवाके (२२७ पृ०) व्याख्यातम् ॥

अथ प्रत्यवरोहरूपं त्र्यहं विधत्ते—"पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति, ये पराचीनानि पृष्ठान्युपयन्ति, प्रत्यङ् त्र्यहो भवति, प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्ति[६]"-इति। 'ये' यजमाना अनुक्रमगतानि पृष्ठाख्यान्यहान्यनुतिष्ठन्ति, 'एते' यजमानाः प्रत्यावृत्तिरहिताः स्वर्गमारोहन्ति। अतः स्वर्गात् प्रत्यवरोहाय प्रत्यावृत्त आयुर्गौर्ज्योतिरित्येवंविधः 'त्र्यहः' कर्त्तव्यः। अपि चायं त्र्यहः अस्मिन् लोके प्रतिष्ठायै सम्पद्यते। तस्मादुभयोरपि लोकयोः समृद्धिं प्राप्योत्कर्षेण तिष्ठन्ति ॥

अहर्गतां सङ्ख्यां प्रशंसति—"चतुर्दशैतास्तासां या दश दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमवरुन्धते, याश्चतस्रश्चतस्रो दिशो

दिक्ष्वेव प्रति तिष्ठन्ति(७)"-इति। चतुर्दशरात्रक्रतुगता या रात्रयः एताश्चतुर्दशसङ्ख्याकाः, तासां मध्ये या रात्रयो दशसङ्ख्याकाः, ताभिः सङ्ख्यासाम्याद्विराड्द्वारान्नप्राप्तिः, यास्तूपरिष्टाच्चतस्रो रात्रयः, ताभि' सङ्ख्यासाम्याच्चतुर्दिक्षु प्रति तिष्ठन्ति॥

अथ प्रायणीयोदयनीयौ विधत्ते—"अतिरात्रावभितो भवतः परिगृहीत्यै(८)"-इति॥ ५॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः॥

---

इन्द्रो वै सदृङ् देवताभिरासीत् स न व्यावृतमगच्छत् स प्रजापतिमुपाधावत्तस्मा एतं पञ्चदशरात्रं प्रायच्छत्तमाहरत्तेनायजत ततो वै सोऽन्याभिर्देवताभिर्व्यावृतमगच्छद्य एवं विद्वांसः पञ्चदशरात्रमासते व्यावृतमेव पाप्मना भ्रातृव्येण गच्छन्ति(१) ज्योतिर्गौरायुरिति त्र्यहो भवतीयं वाव ज्योतिरन्तरिक्षम् (१) गौरसावायुरेष्वेव लोकेषु प्रति तिष्ठ(२)न्त्यसत्रं वा एतद्यदच्छन्दोमं यच्छन्दोमा भवन्ति तेन सत्रं देवता एव पृष्ठैरव रुन्धते पशून् छन्दोमै*रोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव वीर्ये पशुषु प्रति

---

* पशून् छन्दोमैरित्यत्र रुत्वाभावश्छान्दसः (पा० ८. ३ ८)।

इन्द्रो वै शिथिल इवाप्रतिष्ठित आसीत्सोऽसुरेभ्योऽबिभेत्स प्रजापति मुपाधावत्तस्मा एतं पञ्चदशरात्रं वज्रं प्रायच्छत्तेनासुरान् पराभाव्य विजित्य श्रियमगच्छदग्निष्टुता पाप्मानं निरदहत पञ्चदशरात्रेणौजो बलमिन्द्रियं वीर्यमात्मन्नधत्त[१] य एवं विद्वाꣳसः पञ्चदशरात्र मासते भ्रातृव्यानेव पराभाव्य विजित्य श्रियङ्गच्छन्त्यग्निष्टुता पाप्मानं निः ( १ )

दहन्ते पञ्चदशरात्रेणौजो बलमिन्द्रियं वीर्यमात्मन् दधत[२] एता एव पशव्याः पञ्चदश वा अर्द्धमासस्य रात्रयोऽर्द्धमासशः संवत्सर आप्यते संवत्सरं पशवोऽनु प्र जायन्ते तस्मात् पशव्या[३] एता एव सुवर्ग्याः पञ्चदश वा अर्द्धमासस्य रात्रयोऽर्द्धमासशः संवत्सर आप्यते संवत्सरः सुवर्गो लोकस्तस्मात् सुवर्ग्या[४] ज्योतिर्गौरायुरिति त्र्यहो भवतीयं वाव ज्योतिरन्तरिक्षम् ( २ )

गौरसावायुरिमानेव लोकानभ्यारोहन्ति[५] यदन्यतः पृष्ठानि स्युर्विविवधꣳ स्यान्मध्ये पृष्ठानि भवन्ति सविवधत्वायौजो वै वीर्यं पृष्ठान्योज एव वीर्यं मध्यतो दधते बृहद्रथन्तराभ्यां यन्तीयं वाव रथन्तरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकम् ( ३ )

यन्ति[६] पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ् त्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्धोत्तिष्ठन्ति[७] पञ्चदशैतास्तासां या दश दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धते याः पञ्च पञ्च दिशो दिक्ष्वेव प्रति तिष्ठ[८]न्त्यतिरात्रावभितो भवत इन्द्रियस्य वीर्यस्य प्रजायै ( ४ )

पशूनां परिगृहीत्यै[९] ॥ ७ ॥

नि[१]रन्तरिक्षं[२]* लोकं[३] प्रजायै[४] द्वे च ॥ ७ ॥

षष्ठेऽनुवाके प्रथमः पञ्चदशरात्रोऽभिहित., अथ सप्तमे द्वितीयः पञ्चदशरात्रोऽभिधीयते; तमेतं विधत्ते —"इन्द्रो वै शिथिल इवाप्रतिष्ठित आसीत्, सोऽसुरेभ्योऽबिभेत्, स प्रजापतिमुपाधावत्तस्मा एतं पञ्चदशरात्रं वज्रं प्रायच्छत्तेनासुरान् पराभाव्य विजित्य श्रियमगच्छदग्निष्टुता पाप्मानं निरदहत पञ्चदशरात्रेणौजो बलमिन्द्रियं वीर्यमात्मन्नधत्त[१]" –इति। इन्द्रः कदाचित् 'शिथिलः' योद्धुमसमर्थः सेनारहित एकाकी दरिद्र इवैकत्रावस्थातुमसुरोपद्रवरहितं स्थानमलभमान आसीत्। सोऽसुरेभ्यो भीतः सन् प्रजापत्युपदेशाद्वज्रसमानं वक्ष्यमाणं पञ्चदशरात्रक्रतुमनुष्ठाय, तेन तानसुरान् पराभूतान् कृत्वा, स्वयं विजित्य, श्रियमाप्नोत्। तस्मिन् क्रतौ यदिदमग्निष्टुदाख्यं द्वितीयमहः, तेन स्वगतशैथिल्यहेतुं पाप्मानं निर्दग्धवान्।

* "गच्छन्त्यग्निष्टुता पाप्मानं नि[१]रन्तरिक्षं[२]"–इति क, ख, ग।

अवशिष्टेन पञ्चदशरात्रक्रतुभागेन बलहेतुमोजोरूपं सप्तमधातुं शारीरं बलमिन्द्रियपाटवं युद्धे विजयोत्साहञ्च स्वस्मिन् सम्पादितवान् ॥

वेदनं प्रशंसति—"य एवं विद्वांसः पञ्चदशरात्रमासते, भ्रातृव्यानेव पराभाव्य विजित्य श्रियं गच्छन्त्यग्निष्टुता पाप्मानं निर्दहन्ते; पञ्चदशरात्रेणौजो बलमिन्द्रियं वीर्यमात्मन् दधते[१]"–इति। इन्द्रवदन्येऽपि यजमानाः फलं प्राप्नुवन्ति ॥

एतस्मिन् क्रतौ विद्यमानाः पञ्चदशसङ्ख्याका रात्रीः प्रशंसति—"ता एव पशव्याः पञ्चदश वा अर्द्धमासस्य रात्रयोऽर्द्धमासशः संवत्सर आप्यते, संवत्सरं पशवोऽनु प्र जायन्ते, तस्मात्पशव्याः[२]"–इति। अस्मिन् क्रतौ या रात्रयः, 'एताः' पशुभ्यो हिताः, तत्प्राप्तिहेतुत्वात्। कथमिति, तदुच्यते— एकस्यार्द्धमासस्य पञ्चदश रात्रयः सन्ति, स चार्द्धमासः क्रमेण वर्तमानः संवत्सरत्वमापद्यते, पशवश्च संवत्सरमात्रं गर्भे स्थित्वा पश्चात् प्र जायन्ते, तस्मात् रात्रयः सङ्ख्याद्वारा पशुहेतुभूताः ॥

पुनरपि प्रकारान्तरेण प्रशंसति—"एता एव सुवर्ग्याः पञ्चदश वा अर्द्धमासस्य रात्रयोऽर्द्धमासशः संवत्सर आप्यते, संवत्सरः सुवर्गो लोकस्तस्मात् सुवर्ग्याः[३]"–इति। पूर्वोक्तरीत्या सङ्ख्याद्वारा संवत्सरसम्पत्तौ सत्यां स संवत्सरो वसन्तकालीनज्योतिष्टोमानुष्ठानद्वारा स्वर्गप्राप्तिहेतुः। तस्मात् 'एताः' रात्रयः स्वर्गाय हिताः ॥

अथाहर्विशेषा विधातव्याः, तत्राग्निष्टुदाख्यमेकमहरुत्यैवोक्तीतविधिकमिति द्रष्टव्यम्; "अग्निष्टुता पाप्मानं निर्दहन्ते"–इति स्तुतिः पूर्वमुदाहृता (४ पं०), तत ऊर्द्ध्वं त्र्यहं विधत्ते—"ज्योतिर्गौरायुरिति त्र्यहो भवतीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरिमा-

नैव लोकानभ्यारोहन्ति[५]"–इति। पूर्ववद् (२३९पृ०) व्याख्येयम्॥

अथ पृष्ठ्यषडहगतान्यहानि विधत्ते– "यदन्यत' पृष्ठानि स्युर्विविवधः स्यान्मध्ये पृष्ठानि भवन्ति सविवधत्वायौजो वै वीर्यं पृष्ठान्योज एव वीर्यं मध्यतो दधते, बृहद्रथन्तराभ्यां यन्तीय वाव रथन्तरमसौ बृहदाभ्यामेव यन्त्ययो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती, ताभ्यामेव सुवर्गं लोकं यन्ति[६]"–इति। एतदपि पूर्ववद् (२३९ पृ०) व्याख्येयम्॥

आरोहरूपत्र्यहः पूर्वं विहित, इदानीमवरोहरूप त्र्यहं विधत्ते– "पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति, ये पराचीनानि पृष्ठान्युपयन्ति; प्रत्यङ् त्र्यहो भवति, प्रत्यवरूढ्या, अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्ति[७]"–इति। एतदपि पूर्ववद् (२४०पृ०) व्याख्येयम्॥

अथ क्रतुगतां रात्रिसङ्ख्यां प्रशंसति– "पञ्चदशैतास्तासां या दश, दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धते, याः पञ्च, पञ्च दिशो दिक्ष्वेव प्रति तिष्ठन्ति[८]"–इति। ऊर्ध्वया सह दिशां पञ्चत्वम्। अन्यत् पूर्ववद् (२४०पृ०) व्याख्येयम्॥

प्रायणीयोदयनीयौ विधत्ते– "अतिरात्रावभितो भवत इन्द्रियस्य वीर्यस्य प्रजायै पशूना परिगृहीत्यै[९]"–इति। इन्द्रेणानुष्ठितत्वादिन्द्रियहेतुत्वम्, वज्ररूपत्वाच्च वीर्यहेतुत्वम्, पशव्यत्वस्य च पूर्वमुक्तत्वात्तस्य चोपलक्षणत्वात् प्रजापशुहेतुत्वम्॥ ७॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः॥

---

प्रजापतिरकामयतान्नादः* स्यामिति स एतꣳ सप्तदशरात्रमपश्यत्तमाहरत्तेनायजत ततो वै सोऽन्नादोऽभवद्य एवं विद्वाꣳसः सप्तदशरात्रमासतेऽन्नादा एव भवन्ति[१] पञ्चाहो भवति पञ्च वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठन्त्यथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धते[२] ऽसत्रं वा एतत् ( १ )

यदच्छन्दोमं यच्छन्दोमा भवन्ति तेन सत्रं देवता एव पृष्ठैरव रुन्धते पशून् छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति[३] सप्तदशरात्रो भवति सप्तदशः प्रजापतिः प्रजापतेराप्त्या[४] अतिरात्रावभितो भवतोऽन्नाद्यस्य परिगृहीत्यै[५] ॥ ८ ॥

एतत्[१] सप्तचिꣳशच्च ॥ ८ ॥

सप्तमे द्वितीय पञ्चदशरात्रोऽभिहित, अथाष्टमे सप्तदशरात्रोऽभिधीयते†, तमेत विधत्ते— "प्रजापतिरकामयतान्नाद स्यामिति, स एतꣳ सप्तदशरात्रमपश्यत्, तमाहरत्, तेनायजत, ततो वै सोऽन्नादोऽभवद्, य एव विद्वाꣳस सप्तदशरात्रमासतेऽन्नादा एव भवन्ति[१]"–इति ॥

---

* इह विसर्गाभाव क पुस्तके।

† सत्र मेतत् ताण्ड्येऽपि (२३ ११)। तत्रैव पुरस्तात् परमविजय साधन षोडशरात्र नाम सत्र मप्येक विहितम् (२३ १०)।

अथैतदीयेष्वहस्सु ज्योतिर्गौरायुरित्येवविधमह्नाम्पञ्चकं विधत्ते— "पञ्चाहो भवति, पञ्च वा ऋतवः संवत्सर, ऋतुष्वेव संवत्सरे प्रति तिष्ठन्त्यथो पञ्चाक्षरा पङ्क्तिः, पाङ्क्तो यज्ञो, यज्ञमेवाव रुन्धते[१]" -इति । द्विरावृत्ते त्र्यहे द्वितीयज्योतिर्वर्जितोऽवशिष्टः पञ्चाहः । हेमन्तशिशिरयोरेकीभावादृतूनां पञ्चत्वम् * ॥

अथ पृष्ठ्यं षडहं चतुरश्छन्दोमांश्च विधत्ते— "असत्रं वा एतद्यदच्छन्दोमं, यच्छन्दोमा भवन्ति तेन सत्रं, देवता एव पृष्ठैरव रुन्धते, पशून् छन्दोमैरोजो वै वीर्यं, पृष्ठानि पशवश्छन्दोमा ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति[२]"-इति । पूर्ववद्(३४२पृ०)व्याख्येयम् ॥

क्रतुगतां रात्रिसङ्ख्यां प्रशंसति— "सप्तदशरात्रो भवति, सप्तदशः प्रजापतिः, प्रजापतेराप्त्यै[४]"-इति । आश्रावयेत्यादिसप्तदशाक्षरात्मकत्वात् † प्रजापतेः सप्तदशत्वम् ॥

प्रायणीयोदयनीयौ विधत्ते— "अतिरात्रावभितो भवतोऽन्नाद्यस्य परिगृहीत्यै[५]"-इति । अन्नाद्यस्य फलत्वं विधिवाक्ये स्पष्टम् ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥

---

* "पञ्चर्त्तवो हेमन्तशिशिरयो समासेन"—इति ऐ० ब्रा० १ १.१ ।

† "आश्रावयेति चतुरक्षर, मस्तु श्रौषडिति चतुरक्षर, यजेति द्व्यक्षरं, ये यजामहे इति पञ्चाक्षरं, द्व्यक्षरो वषट्कार, एष वै सप्तदश प्रजापति" —इति १ भा० ९२९ पृ०। ऐतरेयके तु "सप्तदशो वै प्रजापतिर्द्वादश मासा पञ्चर्त्तवो हेमन्तशिशिरयो समासेन, तावान्संवत्सर, संवत्सर प्रजापति" —इति ए सो मु १ भा० १३ पृ०; २ भा० ३८५ पृ० ।

सा विराड् विक्रम्यातिष्ठद् ब्रह्मणा देवेष्वन्नेनासुरेषु ते देवा अकामयन्तोभयꣳ सं वृञ्जीमहि ब्रह्म चान्नञ्चेति त एता विꣳशतिꣳ रात्रीरपश्यन् ततो वै त उभयꣳ समवृञ्जत ब्रह्म चान्नञ्च ब्रह्मवर्चसिनोऽन्नादा अभवन य एवं विद्वाꣳस एता आसत उभयमेव सं वृञ्जते* ब्रह्म चान्नञ्च (१)

ब्रह्मवर्चसिनोऽन्नादा भवन्ति[१] द्वे वा एते विराजौ तयोरेव नाना प्रति तिष्ठन्ति विꣳशो वै पुरुषो दश हस्त्या अङ्गुलयो दश पद्या यावानेव पुरुषस्तमाप्नोत्ति-ष्ठन्ति[२] ज्योतिर्गौरायुरिति त्र्यहा भवन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरिमानेव लोकानभ्यारोह-न्त्यभिपूर्वं त्र्यहा भवन्त्यभिपूर्वमेव सुवर्गम् (२)

लोकमभ्यारोहन्ति[३] यदन्यतः पृष्ठानि स्युर्विविवधꣳ स्यान्मध्ये पृष्ठानि भवन्ति सविवधत्वायौजो वै वीर्यं पृष्ठान्योज एव वीर्यं मध्यतो दधते बृहद्रथन्तराभ्यां यन्तीयं वाव रथन्तरमसौ बृहदाभ्यामेव यन्त्ययो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी सृती ताभ्यामेव सुवर्गं लोकं यन्ति[४] पराञ्चो वा एते सुवर्गं लोकम् (३)

---

* "स दृजते" मु०।

अभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ् त्र्यहो भवति प्रत्यवरुह्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्धोत्तिष्ठ[१]न्त्यतिरात्रावभितो भवतो ब्रह्मवर्चसस्यान्नाद्यस्य परिगृहीत्यै[२] ॥ ८ ॥

च[१] * सुवर्ग[२] लोकं[३] चर्योविꣳशतिश्च ॥ ८ ॥

अष्टमे सप्तदशरात्रोऽभिहित, अथ नवमे विंशतिरात्रोऽभिधीयते†; तमेत विधत्ते—"सा विराड् विक्रम्यातिष्ठद् ब्रह्मणा देवेष्वन्नेनासुरेषु, ते देवा अकामयन्तोभयꣳ सं वृजीमहि ब्रह्म चान्नञ्चेति; त एता विꣳशतिꣳ रात्रीरपश्यन्, ततो वै त उभयꣳ समवृञ्जत ब्रह्म चान्नञ्च, ब्रह्मवर्चसिनोऽन्नादा अभवन्, य एवं विद्वाꣳस एता आसत, उभयमेव स वृञ्जते ब्रह्म चान्नञ्च, ब्रह्मवर्चसिनोऽन्नादा भवन्ति[१]"–इति । दशरात्राभिमानिनी काचिद् 'विराड्' देवता रूपद्वयेन विभज्यातिष्ठत्,— देवेषु ब्रह्मवर्चसरूपेण, असुरेषु चान्नरूपेण। तदानीं देवा असुरेभ्योऽन्नमपनीय तदेतदुभयं वयमेव लभेमहीत्यकामयन्त। ततस्तत्साधनत्वेन वक्ष्यमाणा विंशतिसङ्ख्याका रात्रीर्निश्चित्य तदनुष्ठानेनासुरेभ्यस्तदपनीय स्वयमेवाधिकेन ब्रह्मवर्चसेनान्नेन च सम्पन्ना अभवन्। एवमन्योऽपि तदनुष्ठानेन तत् फलं प्राप्नुवन्ति। पूर्वचाहस्सङ्घप्राधान्येन सप्तदशरात्रपञ्चदशरात्रादीना-

---

* "वृञ्जते ब्रह्म चान्नंच[१]"—इति क, ख, ग ।

† सत्र मेतद् विहितं ताण्ड्येऽपि (२३. १४.) । अष्टादशरात्र मेकोनविंशतिरात्रं चेति सत्रद्वय मपि तत्रैतत्पुरस्तात् (२३. १२, १३ ) ।

मेकवचनेन निर्देशः, अत्र तु क्लृप्तवयवभूतराचिप्राधान्येन बहुवचन-निर्देशः ॥ -

क्रतुगतां विंशतिराचिसङ्ख्यां प्रशंसति— "द्वे वा एते विराजौ, तयोरेव नाना प्रति तिष्ठन्ति; विंशो वै पुरुषो दश हस्त्या अङ्गुलयो दश पद्या, यावानेव पुरुषस्तमाप्नोत्तिष्ठन्ति(१)"-इति। दशसङ्ख्यया विभज्यमाने द्वे एते विराजौ सम्पद्येते। तयोश्च ब्रह्मवर्चसान्नसाधनभूतयोः पृथगेव प्रति तिष्ठन्ति, एकैकं फलमितर-निरपेक्षत्वेनैव सम्पूर्णं लभत इत्यर्थः। अथ वा विद्वत्सभायामुपयुक्तं ब्रह्मवर्चसम्, धनिकसभायामुपयुक्ता अन्नसमृद्धिः; एवं नानाविधा प्रतिष्ठा। किं च पुरुषस्य हस्तपादगताङ्गुलिसङ्ख्यासाम्याद् 'यावान्' गुणसङ्घः पुरुषे सम्भावितः, सर्वं प्राप्नोति ॥

अथात्र नवाहानि विधत्ते— "ज्योतिर्गौरायुरिति त्र्यहा भवन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरिमानेव लोकानभ्यारोहन्त्यभिपूर्वं त्र्यहा भवन्त्यभिपूर्वमेव सुवर्गं लोकमभ्यारोहन्ति(२)"-इति। यथा प्रथमस्त्र्यहो ज्योतिरादिकः, एवं द्वितीयतृतीयावपि ज्योतिरादिकौ; न त्वत्र कश्चिदायुरादिकोऽस्ति। एवं सत्यनुक्रमेणैव स्वर्गमभ्यारोहन्ति ॥

एतेषां त्र्यहाणां वक्ष्यमाणत्र्यहस्य च मध्ये पृष्ठं विधत्ते— "यदन्यतः पृष्ठानि स्युर्विविवधꣳ स्यान्मध्ये पृष्ठानि भवन्ति सविवधत्वायौजो वै वीर्यं पृष्ठान्योज एव वीर्यं मध्यतो दधते; बृहद्रथन्तराभ्यां यन्तीयं वाव रथन्तरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती, ताभ्यामेव सुवर्गं लोकं

यन्ति[8]"–इति। पूर्वोक्तेषु त्र्यहेषु योऽयमन्त्यस्त्र्यह, यश्च भावी त्र्यहः, तयोरुभयोर्मध्यवर्त्तित्वेन विवधसाम्यम्। अन्यत् पूर्ववद् (३३८ पृ०) व्याख्येयम्॥

अथ प्रत्यवरोहरूपं त्र्यहं विधत्ते–"पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति, ये पराचीनानि पृष्ठान्युप यन्ति, प्रत्यङ् त्र्यहो भवति प्रत्यवरुह्य अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठ-न्ति[9]"–इति। पूर्ववद् (३४० पृ०) व्याख्येयम्॥

प्रायणीयोदयनीयौ विधत्ते–"अतिरात्रावभितो भवतो ब्रह्मवर्चसस्यान्नाद्यस्य परिगृहीत्यै[10]"–इति। फलद्वयं विधिवाक्ये एव विस्पष्टम्॥

अथ मीमांसा। चतुर्थाध्यायस्य तृतीयपादे (जै० सू० १७–१८, अधि० ८.) चिन्तितम्–

"स्वर्गाय वा प्रतिष्ठायै रात्रिसत्रमिहाग्रिमः।
पूर्ववत्स्यात् प्रतिष्ठाच श्रुता तेनाश्रुताद् * वरम्॥

सत्रकाण्डे श्रूयते– "प्रति तिष्ठन्ति ह वा एता रात्रीरुप यन्ति" –इति, "ब्रह्मवर्चसिनोऽन्नादा भवन्ति"–इति (३५० पृ०) च। द्वादशाहादूर्द्ध्वभाविनस्त्रयोदशरात्रचतुर्दशरात्रादयः सर्वे सत्रविशेषाः। त्रयोदशसङ्ख्याका रात्रयो यस्मिन् सत्रविशेषे सोऽयं त्रयोदशरात्र इति समुदायप्राधान्येनैकवचनान्ततया प्रायेण निर्देशो भवति, क्वचित्तु समुदायिनां रात्रिविशेषाणां प्रत्येकं† प्राधान्यमभ्युपेत्यैक

* "श्रुतावेहाश्रुताद्" क, ख।
† नास्त्येतत्पदं क-ख पुस्तकयोः।

एव मन्त्रविशेषो बहुवचनान्तेन रात्रिशब्देनाम्नायते, तद्यथा— "त एता विंशतिं रात्रीरपश्यन्"-इति (३५० पृ०)। तादृशे रात्रिसत्रे विश्वजिन्न्यायेन स्वर्गं फलत्वेन कल्पनीय इति प्राप्ते, ब्रूम — अस्य रात्रिसत्रविधेस्तावकेऽर्थवादे प्रतिष्ठा श्रुता, सा चास्मिन् वाक्येऽत्यन्त-मश्रुतात् स्वर्गात् प्रत्यासन्ना, तस्मात् प्रतिष्ठाकामो रात्रिसत्त्रं कुर्या-दित्येव प्रतिष्ठैव फलत्वेन कल्पनीया"-इति ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः ॥

---

अ॒सावा॑दि॒त्यो᳚ऽस्मिंल्लो॒क* आ॑सी॒त्तं दे॒वाः पृ॒ष्ठैः परि॑-गृह्य सुव॒र्गं लो॒कम॑गमयन् प॒रैर॑व॒स्तात्पर्य॑गृह्णन् दि॑-वाकी॒र्त्ये॑न सुव॒र्गे लो॒के प्रत्य॑स्थापयन् प॒रैः प॒रस्ता॒त्पर्य॑-गृह्णन् पृ॒ष्ठैरु॒पाव॑ारोहन्त्स वा अ॒सावा॑दि॒त्यो᳚ऽमुष्मिंल्लो॒के प॒रैरु॑भ॒यतः॒ परि॑गृहीतो[१] यत् पृ॒ष्ठानि॒ भव॑न्ति सुव॒र्ग-मे॒व तैर्लो॒कं यज॑माना यन्ति प॒रैर॑व॒स्तात्परि॑ गृह्णन्ति दि॒वाकी॒र्त्ये॑न (१)

सु॒व॒र्गे लो॒के प्रति॑ तिष्ठन्ति प॒रैः प॒रस्ता॒त्परि॑ गृह्णन्ति पृ॒ष्ठैरु॒पाव॑रोहन्ति[२] यत्प॒रे प॒रस्ता॒न्न स्युः परा᳚ञ्चः सुव॒-र्गाल्लो॒कान्निष्प॑द्येरन् यद॒व॒स्ता॒न्न स्युः प्र॒जा निर्द॑हेयु-

* "ऽस्मिन् लोक"-इति क, ख, मु०। एवमितोऽनन्तरमपि।

र्‌भितो दिवाकीर्त्यं परःसामानो भवन्ति सुवर्ग एवैनांल्लोक उभयतः परि गृह्णन्ति[१] यजमाना वै दिवाकीर्त्यꣳ संवत्सरः परःसामानोऽभितो दिवाकीर्त्यं परःसामानो भवन्ति संवत्सर एवोभयतः ( २ )

प्रति तिष्ठन्ति[४] पृष्ठं वै दिवाकीर्त्यं पार्श्वे परःसामानोऽभितो दिवाकीर्त्यं परःसामानो भवन्ति तस्मादभितः पृष्ठं पार्श्वे भूयिष्ठा ग्रहा गृह्यन्ते भूयिष्ठꣳ शस्यते यज्ञस्यैव तन्मध्यतो ग्रन्थिं ग्रथ्नन्त्यविस्रꣳसाय[५] सप्त गृह्यन्ते सप्त वै शीर्षण्याः प्राणाः प्राणानेव यजमानेषु दधति[६] यत्पराचीनानि पृष्ठानि भवन्त्यमुमेव तैर्लोकमभ्यारोहन्ति यदिमं लोकं न ( ३ )

प्रत्यवरोहेयुरुद्वा माद्येयुर्यजमानाः प्र वा मीयेरन् यत् प्रतीचीनानि पृष्ठानि भवन्तीममेव तैर्लोकं प्रत्यवरोहन्त्यथो अस्मिन्नेव लोके प्रति तिष्ठन्त्यनुन्मादाय[७] येन्द्रो वा अप्रतिष्ठित आसीत्स प्रजापतिमुपाधावत्तस्मा एतमेकविꣳशतिरात्रं प्रायच्छत्तमाहरत्तेनायजत ततो वै स प्रत्यतिष्ठद् ये बहुयाजिनोऽप्रतिष्ठिताः ( ४ )

स्युस्त एकविꣳशतिरात्रमासीरन् द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳश एतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति तिष्ठ[८]न्त्यसा-

वादित्यो न व्यरोचत स प्रजापतिमुपाधावत्तस्मा एत-
मेकविꣳशतिरात्रं प्रायच्छत्तमाहरत्तेनायजत ततो वै
सोऽरोचत य एवं विद्वाꣳस एकविꣳशतिरात्र मासते (५)
रोचन्त एवैकविꣳशतिरात्रो भवति रुग्वा एकविꣳशो
रुचमेव गच्छन्त्यथो प्रतिष्ठामेव प्रतिष्ठा ह्येकविꣳ-
शोऽ(८)तिरात्रावभितो भवतो ब्रह्मवर्चसस्य परिगृही-
त्यै(१०) ॥ १० ॥

दिवाकीर्त्य[५]नोभयतो[२]* ना[६]प्रतिष्ठिता[४] आ-
सत[५] एकविꣳशतिश्च ॥ १० ॥

नवमेऽनुवाके विंशतिरात्रोऽभिहित, अथ दशमे एकविंशति-
रात्रोऽभिधीयते†, तत्र तावदियमह क्लृप्तिः — आदावतिरात्र, तत
पृष्ठ्यः षडह, तत त्रयः स्वरसामानस्त्रयोऽहर्विशेषा, ततो दिवाकीर्त्य-
मेकमह, पुनरपि त्रय स्वरसामान, पुनरपि पृष्ठ्य षडह, ततो
ऽतिरात्र इति‡। तमिम विधातु प्रस्तौति— "असावादित्योऽस्मि-

---

* "गच्छन्ति दिवाकीर्त्य[१]नैवोभयतो[२]"—इति क, ख, ग।

† सामवेदे द्वौ एकविंशतिरात्रौ (ता० ब्रा० २३ १५, १६), तत्र पशुफलसाधन प्रथम, ब्रह्मवर्चसफलसाधनो द्वितीय, स एवैम, तयो याह क्लृप्तिसाम्यात्।

‡ "अतिरात्रः, पृष्ठ्य षडहस्, त्रय स्वरसामानो, दिवाकीर्त्य महस्, त्रय स्वरसामानः, पृष्ठ्य षडहस्, त्रयस्त्रिंशारम्भणोऽतिरात्रो ब्रह्मवर्चस कामा उपेयु"—इति ता० ब्रा० २३ १६।

लोक आसीत्, तं देवाः पृष्ठैः परिगृह्य सुवर्गं लोकमगमयन्, परै-रवस्तात्पर्यगृह्णन्, दिवाकीर्त्येन सुवर्गे लोके प्रत्यस्थापयन्, परैः परस्तात्पर्यगृह्णन्, पृष्ठैरुपावारोहन्त्स वा असावादित्योऽमुष्मिंल्लोके परैरुभयतः परिगृहीतः[1]"-इति। 'असौ' स्वर्गे दृश्यमान आदित्यः पुरा भूलोक एव तिष्ठति स्म 'तम्' आदित्यं देवाः परिगृह्य पृष्ठाख्यैः षड्भिरहोभिः स्वर्गं प्रापितवन्तः। तत्र च परशब्देन स्वरसामशब्देन च तत्र तत्र व्यवह्रियमाणैः त्रिभिरहोभिः 'अवस्तात् पर्यगृह्णन्' आदित्यो यथाधस्तान्नागच्छति तथा व्यवधानं कृतवन्तः। परशब्दाभिधेयं किञ्चित्साम*, तेन साम्ना निष्पाद्यमाना अहर्विशेषाः 'पराः' इत्युच्यन्ते। तथा दिवैव कीर्त्तनीयं किञ्चित्साम†, तेन च निष्पाद्यमहरपि 'दिवाकीर्त्यम्' इत्युच्यते। तेन चाह्ना तमादित्यं स्वर्गे प्रतिष्ठापितवन्तः। पुनरप्यनुष्ठीयमानैः परशब्दाभिधेयैरहोभिः 'परस्तात्' आदित्यं 'पर्यगृह्णात्' यथा तत ऊर्द्ध्वमादित्यो न गच्छति, तथा प्रतिबन्धं कृतवन्तः। एवं कृत्वा पुनरनुष्ठीयमानैः पृष्ठाख्यैः

* तत्र "यज्ञायज्ञा अमूर्ध्वा"-इत्यस्यां (आर० आ० २.७.) योनावुत्पन्नम् (आर० गा० ३ २.९.), आर्षे० ब्रा० ३.१९. द्रष्टव्यम्। स्वराख्यं च तदेव ; ता० ब्रा० ४.५.१-४. द्रष्टव्यानि। स्वराख्यानि योनिसामानि चत्वारि (आर० गा० ३.२.९-१२), स्तोत्रसामानि तु अष्टौ ऊह्ये (२.१.३-१०.) द्रष्टव्यानि।

† अत्रत्यसायणभाष्यदर्शनादवगम्यते श्रुतं किञ्चिद् दिवाकीर्त्यं नाम साम, *ताण्ड्यभाष्यदर्शनात्तु* (४.६.१२) बुध्यते भ्राजाभ्राजादीनामेव साम्नां दिवाकीर्त्यत्वमिति। तानि च ऊह्यसंवत्सरपर्वगतानि (३.१.११-२०.)।

षड्भिरहोभि स्वर्गादुपावारोहन्। सोऽसौ दिवि दृश्यमान आदित्यः स्वर्गे लोके पराख्यैरहोभिरुभयतो नियमितत्वान्नोर्द्ध्वं गच्छति नाप्यधस्तादागच्छति॥

तान्येतान्यहानि विधत्ते—"यत् पृष्ठानि भवन्ति, सुवर्गमेव तैर्लोकं यजमाना यन्ति, परैरवस्तात्परि गृह्णन्ति, दिवाकीर्त्येन सुवर्गे लोके प्रति तिष्ठन्ति, परैः परस्तात्परि गृह्णन्ति, पृष्ठैरुपावरोहन्ति(१)" -इति। आदित्यवाक्यवद् यजमानवाक्यं व्याख्येयम्॥

दिवाकीर्त्यस्योभयतोऽनुष्ठेयान् पराख्यानहर्विशेषान् व्यतिरेकमुखेन प्रशंसति— "यत्परे परस्तान्न स्युः, पराञ्चः सुवर्गाल्लोकान्निष्पद्येरन्, यदवस्तान्न स्युः, प्रजा निर्दहेयुरभितो दिवाकीर्त्यं परस्सामानो भवन्ति, सुवर्ग एवैनांल्लोक उभयतः परि गृह्णन्ति(२)"—इति। यद्युपरितनाः पराख्याः अहर्विशेषा. न स्युः, तदानीं स्वर्गङ्गता यजमानास्ततोऽप्यूर्द्ध्वगमनस्य निवारकाभावात्स्वर्गादूर्द्ध्वं निर्गच्छेयुः। यदि चाधस्तनाः पराख्या नानुष्ठीयेरन्, तदानीं व्यवधायकाभावात् आदित्यात्मकाः सर्वे यजमाना भूमिवर्तिनः 'प्रजा.' सर्वा निमिषेण दहेयुः। तस्माद् दिवाकीर्त्यस्य पुरस्ताच्चोपरिष्टाच्च परस्सामानोऽनुष्ठेयाः, ते च 'एनान्' यजमानान् स्वर्गमित्राधस्तादुपरिष्टाच्च निरुध्य स्थापयन्ति॥

प्रकारान्तरेण दिवाकीर्त्यं परस्सामाख्यान्यहानि च प्रशंसति— "यजमाना वै दिवाकीर्त्यꣳ संवत्सरः परस्सामानोऽभितो दिवाकीर्त्यं परस्सामानो भवन्ति, संवत्सर एवोभयतः प्रति तिष्ठन्ति(३)"—इति। दिवाकीर्त्यस्य यजमानस्थानीयत्वात्, परस्साम्नां च संवत्सरस्थानीय-

त्वादुभयतस्तदनुष्ठाने यजमाना अधस्ताच्चोपरिष्टाच्च संवत्सरदेवताया मेव प्रति तिष्ठन्ति ॥

पुनरपि प्रकारान्तरेण प्रशंसति— "पृष्ठं वै दिवाकीर्त्यं पार्श्वे परस्सामानोऽभितो दिवाकीर्त्यं परस्सामानो भवन्ति, तस्मादभितः पृष्ठं पार्श्वे भूयिष्ठा ग्रहा गृह्यन्ते, भूयिष्ठꣳ शस्यते, यज्ञस्यैव तन्मध्यतो ग्रन्थिं ग्रथ्नन्त्यविस्रꣳसाय(४)"-इति। यथा लोके पुरुषस्य पृष्ठभागो मध्यवर्त्ती, पार्श्वभागावुभयतो वर्त्तिनौ, एवमत्रापि दिवाकीर्त्यं पृष्ठस्थानीयम्, परस्सामानस्तूभयपार्श्वस्थानीयाः*। किं चैतस्मिन् दिवाकीर्त्ये परस्सामयुता† अतिग्राह्या ग्रहा अपि भूयिष्ठा गृह्यन्ते। तथा हि दिवाकीर्त्यं परस्सामानश्च गवामयने उत्पन्ना.‡। तत्र हि चोदकप्राप्तेभ्योऽतिग्राह्येभ्योऽधिकास्त्रयोऽतिग्राह्याः तृतीयकाण्डोक्ताः, "अग्नस्त्रीपधीभ्य."-इत्यादिमन्त्रसाध्या विहिताः सन्ति§; तद्विकृतित्वादत्रापि तेऽधिका गृह्यन्ते। अत एव शस्त्रमप्यधिकं शस्यते। तेनाधिकानुष्ठानेन यज्ञस्यैकविंशतिरात्ररूपस्य 'ग्रन्थिं ग्रथ्नन्ति' दृढबन्धनं कुर्वन्ति, तच्च यज्ञस्य विस्रंसनपरिहाराय भवति ॥

पुनरपि दिवाकीर्त्ये विशेषं दर्शयति— "सप्त गृह्यन्ते; सप्त वै शीर्षण्याः प्राणाः, प्राणानेव यजमानेषु दधति(६)"-इति। दिवाकीर्त्यात् प्रतीचीनेषु दिनेष्वेकैकस्मिन्नेकैकोऽतिग्राह्यइत्यनुक्रमेण

---

* "०स्थानीयौ"-इति क, ख।

† "परस्सामानतु"-इति ख, "परस्साम्नोनतु"-इति ग।

‡ ता० ब्रा० ४ ५, ६ खण्डौ द्रष्टव्यौ।

§ ३का० ३प्र० ६घ० ६-८म० (३भा० १६५ पृ०)।

चयो गृह्यन्ते, उत्तरेषु दिनेषु त एवावरोहक्रमेण* गृह्यन्ते। त एते षडपि दिवाकीर्त्यदिने तथैव गृह्यन्ते। तेषां मध्ये सौर्यः "उदुत्यं जातवेदसम्"-इतिमन्त्रसाध्य† सप्तमो गृह्यते। तदेवं तस्मिन् दिने सप्ताधिका ग्रहाः। ते च मस्तायामूर्द्धगत सप्तच्छिद्रवर्त्ति-प्राणसमाः। अतस्तदनुष्ठानेन यजमानेषु प्राणान् स्थापयन्ति। तदेवं दिवाकीर्त्य-महः प्रशस्तम्। यद्वा भूयिष्ठा यद्वा इत्यादि गवामयनगतानामव-त्यानां चाह्नां प्रकृतिविकृतिभावद्योतनाय तल्लिङ्ग दर्शयितुं विधि-रेवास्तु ॥

अथावरोहरूप पृष्ठ्यषडहं विधत्ते— "यत्पराचीनानि पृष्ठानि भवन्त्यमुमेव तैर्लोकमभ्यारोहन्ति, यदिमं लोकं न प्रत्यवरोहेयुरुद्वा माद्येयुर्यजमानाः प्र वा मीयेरन्, यत् प्रतीचीनानि पृष्ठानि भव-न्तीममेव तैर्लोकं प्रत्यवरोहन्त्यथो अस्मिन्नेव लोके प्रति तिष्ठन्त्य-नुन्मादाय(७)"-इति। दिवाकीर्त्यसदृशेभ्यः परस्मात्मभ्यः पूर्वमनुष्ठि-तानि 'पराचीनानि' आरोहरूपाणि यानि पृष्ठसामान्यहानि सन्ति, तैर्यजमानाः स्वर्गं लोकमारोहन्त्येव। अत ऊर्ध्वमिमं लोकं प्रति प्रत्यवरोहसाधनानि कानि चिदहानि नानुतिष्ठेयुः, तदानीं ते यजमाना एतं लोकव्यवहारक्रम विस्मृत्योन्मत्ता मृता वा भवेयुः। तस्मात् 'प्रतीचीनानि' अवरोहरूपाणि पृष्ठाख्यान्यहान्यनुष्ठेयानि; 'तैः' अहोभिरिमं लोकं प्रत्यवरोहन्ति, अपि चास्मिन् लोके प्रति-ष्ठिता अनुन्मत्ताश्च भवन्ति ॥

---

* "एवाहोरावक्रमेण"-इति ख।

† ३४० पृ०। पृष्ठसामानि २०६ पृ० १०प०, § टीप्पन्याञ्च द्रष्टव्यानि।

पूर्वं "सुवर्गमेव तैर्लोकं यजमाना यन्ति"-इत्यादिना (३५८ पृ०) क्लवयवानामहर्विशेषाणां फलोपन्यासमुखेन स्वर्गार्थमयं क्रतुर्विहितः, अथ प्रतिष्ठार्थमिमं क्रतुं विधत्ते- "इन्द्रो वा अप्रतिष्ठित आसीत्, स प्रजापतिमुपाधावत्, तस्मा एतमेकवि९ंशतिरात्रं प्रायच्छत्, तमाहरत्, तेनायजत, ततो वै स प्रत्यतिष्ठद्, ये बह्वयाजिनोऽप्रतिष्ठिताः स्युस्त एकवि९ंशतिरात्रमासीरन् द्वादश मासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकवि९ंश, एतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति तिष्ठन्ति(८)"-इति। पुरा यथेन्द्रः प्रजापत्युपदेशादिमं क्रतुमनुष्ठाय प्रत्यतिष्ठत्, एवं बह्वयागान् कृत्वाप्यप्रतिष्ठिता यजमाना एतं क्रतुमनुष्ठायाहर्गतैकविंशतिसङ्ख्यासाम्याद् द्वादशमासाभिमानिदेवस्थानेषु, पञ्चर्त्त्वभिमानिदेवस्थानेषु, त्रिषु पृथिव्यादिलोकेषु, एकस्मिन्नादित्यलोके चैतेष्वेकविंशतिस्थानेषु* 'यथापूर्वं प्रति तिष्ठन्ति' तल्लोकवासिन' सर्वे प्राणिनो यथा प्रतिष्ठिताः, तद्वत् प्रति तिष्ठन्तीत्यर्थ ॥

एवं प्रतिष्ठार्थं क्रतुं विधाय फलान्तरार्थं पुनर्विधत्ते- "असावादित्यो न व्यरोचत, स प्रजापतिमुपाधावत्, तस्मा एतमेकवि९ंशतिरात्रं प्रायच्छत्तमाहरत्तेनायजत; ततो वै सोऽरोचत; य एवं विद्वा९ंस एकवि९ंशतिरात्रमासते, रोचन्त एवैकवि९ंशतिरात्रो भवति; रुग्वा एकवि९ंशो रुचमेव गच्छन्त्यथो प्रतिष्ठामेव, प्रतिष्ठा ह्येकवि९ंशः(९)"-इति। पुरा कदाचिदादित्यः सुवर्भान्वाख्येनासुरेण

* "द्वादश मासा पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकविंश"-इति ता० ब्रा० ४ ६ ४।

तमसा विद्धोऽन्येन वा मेघहिमादिना निरन्तरमावृतः सन् विशेषेण नादीप्यत*। ततः प्रजापत्युपदेशात् 'एतं' क्रतुमनुष्ठायादीप्यत। तद्वदन्येऽपि यजमानाः पूर्वं विद्याधनादिभिर्मनुष्येष्वप्रकाशमाना एतं क्रतुमनुष्ठाय पश्चात् प्रकाशन्ते। किञ्चात्रानेकविंशतिसङ्ख्यासद्भावात्तेनैकविंशतिस्तोमेन वृद्धिप्रकाशहेतुत्वाद् ब्रह्मवर्चसं परिगृहीतम्। स च विद्यादापेक्षया प्रौढत्वाद्दीप्यमान इव। अतस्तत्साम्यादेतदनुष्ठायिनोऽपि प्रकाशं प्राप्नुवन्ति; एकविंशतिस्तोमस्येतरप्रतिष्ठाधारत्वात्†॥

अथ प्रायणीयोदयनीयौ विधत्ते—"अतिरात्रावभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै(१०)"—इति। अस्य विद्यादिप्रकाशहेतुत्वाद् ब्रह्मवर्चसमेव परिगृहीतं भवति॥ १०॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः॥

---

अ॒र्वाङ् य॒ज्ञः सं॒क्रा॑मत्व॒मुष्मा॒दधि॒ माम॒भि। ऋषी॑णां॒ यः पु॒रोहि॑तः(१)। नि॒र्दे॒वं नि॒र्वी॒रं कृ॒त्वा विष्क॑न्धं॒ तस्मि॑न्

---

* "स्वर्भानुर्वा आसुर आदित्यं तमसाविध्यत्, तस्मै देवा प्रायश्चित्तिमैच्छꣳस्त एता अविन्दꣳस्ताभिरस्मात्तमोऽपाघ्नन्; व्यप तमो घ्नते य एता उप यन्ति"—इति ता० ब्रा० २३. १६. १–३।

† "एकविंशो भवत्येकविꣳशो वा अस्य भुवनस्यादित्य०—०मध्यत एव यज्ञस्य प्रति तिष्ठन्ति"—इति ता० ब्रा० ४. ६. ३–५।

हीयतां योऽस्मान् द्वेष्टि। शरीरं यज्ञशमलं कुसीदं तस्मिन्त्सीदतु योऽस्मान् द्वेष्टि[२]। यज्ञ यज्ञस्य यत्तेजस्तेन सङ्क्राम मामभि। ब्राह्मणानृत्विजो देवान् यज्ञस्य तपसा ते सवाहमा हुवे[३]। इष्टेन पक्वमुप (१)

ते हुवे सवाहम्। सन्नं वृञ्जे सुकृतः सम्प्रजां पशून्[४]। प्रैषान्त्सामिधेनीराघारावाज्यभागावाश्रुतम्प्रत्याश्रुतमा शृणामि ते। प्रयाजानूयाजान्त्स्विष्टकृतमिडामाशिष आ वृञ्जे सुवः[५]। अग्निनेन्द्रेण सोमेन सरस्वत्या विष्णुना देवताभिः। याज्यानुवाक्याभ्यामुप ते हुवे सवाहं यज्ञमा ददे ते वषट्कृतम्[६]। स्तुतः शस्त्रं प्रतिगरं ग्रहमिडामाशिषः (२)

आ वृञ्जे सुवः पत्नीसंयाजानुप ते हुवे सवाहः समिष्टयजुरा ददे तव[७]। पशून्त्सुतम्पुरोडाशान्त्सवनान्योत यज्ञम्। देवान्त्सेन्द्रानुप ते हुवे सवाहमग्निमुखान्त्सोमवतो ये च विश्वे[८] ॥ ११ ॥

उपा[१]शिषो[२] * द्वाचिंशच्च ॥ ११ ॥

दशमेऽनुवाके एकविंशतिरात्रोऽभिहितः, अथावशिष्टेष्वनुवाकेषु अश्वमेधगता मन्त्रा उच्यन्ते। तत्रास्मिन् अनुवाके आशाख्यानाम्

---

* "उप[१] ग्रहमिडामाशिषो[२]"—इति क, ख, ग।

अष्टाहुतीनां मन्त्रा उच्यन्ते। अत एव ब्राह्मणे विनियोगः पठ्यते—"अर्वाङ् यज्ञः सङ्क्रामतु"-इत्याग्नीध्रे जुहोति"-इति * ॥

तत्र प्रथमामाह—"अर्वाङ् यज्ञः सङ्क्रामत्वमुष्मादधि मामभि। ऋषीणां यः पुरोहित.(१)"-इति। 'यः' अश्वमेधाख्यो यज्ञ', सः 'ऋषीणां' ज्ञानवतां पूर्वमिष्टानां यजमानानां 'पुरोहितः' सर्वार्थसाधनभावेन पुरस्तादवस्थापितः। स यज्ञः 'अमुष्मात्' मद्व्यतिरिक्ताद् देवदत्तादेर्यजमानात् अपक्रम्य 'मामभि' मामुद्दिश्य 'अर्वाङ्' अभिमुखः सन् 'अधि सङ्क्रामतु' आधिक्येनादरातिशयेन सम्यगागच्छतु॥

अथ द्वितीयामाह—"निर्देवं निर्वीरं कृत्वा विष्कन्धं तस्मिन् हीयतां योऽस्मान् द्वेष्टि। शरीरं यज्ञशमलं कुसीदं तस्मिन्त्सीदतु योऽस्मान् द्वेष्टि(२)"-इति। 'यः' पुरुषोऽस्मान् द्वेष्टि, तस्य शरीरं निर्देवादिविशेषणविशिष्टं कृत्वा, तस्मिन् द्वेषिणि पुरुषे 'हीयतां' हीनत्वेनावस्थाप्यताम्। कीदृश शरीरम्? 'निर्देवं' निर्गता यज्ञाद्भूता देवा यस्मात् तं निर्देवम्, देवताभक्तिरहितमित्यर्थः। निर्गता वीराः पुत्रा भृत्याश्च यस्मात्तं 'निर्वीरम्'। विरूपा स्कन्धाद्यवयवा यस्य तं 'विष्कन्धम्'। किञ्च योऽस्मान् द्वेष्टि, तस्मिन् द्वेषिणि पुरुषे 'यज्ञशमलं' यज्ञानुष्ठाने मलिनम्, कदाचिदप्यनुष्ठानरहितमित्यर्थः। तादृशं यत् 'कुसीदं' निरन्तरं धनवृद्ध्यादर्शनेन * यत् जीवनं, तत् 'सीदतु' द्वेषी पुमान् यज्ञे विमुखः केवलो वणिग् भूत्वा यथाकथञ्चित् तिष्ठत्वित्यर्थः ॥

---

* "अर्वाङ् यज्ञः सङ्क्रामत्वित्याग्नीध्रे जुहोति। सुवर्गस्य लोकस्याप्त्यै"—इति ३ । ८ । १० । ४ । 'स्वर्गं प्राप्यते याभिस्ता आमदः'—इति तत्र सा० भा०।

अथ तृतीयामाह— "यज्ञ यज्ञस्य यत्तेजस्तेन सङ्क्राम मामभि। ब्राह्मणानृत्विजो देवान् यज्ञस्य तपसा ते सवाहमा हुवे[३]"–इति। हे अश्वमेधाख्य 'यज्ञ!' 'सम्यगनुष्ठितस्य' 'यज्ञस्य' तव यत् 'तेजः' फलम्, 'तेन' फलेन सह 'मामभि सङ्क्राम' अभिमुखो भूत्वा मां प्रविश। सूयते अभिषिच्यते अत्रेत्यभिषेकयुक्तो यज्ञ 'सवः'। हे सव! सम्यगनुष्ठितस्य 'ते' तव 'तपसा' सामर्थ्येनानुग्रहरूपेणानुगृहीतोऽहं 'ब्राह्मणान्' सदस्यान्, 'ऋत्विजः' अध्वर्युप्रभृतीन् 'देवान्' यष्टव्यान् 'आ हुवे' इह कर्मण्याह्वयामि॥

अथ चतुर्थीमाह— "इष्टेन पक्कमुप ते हुवे सवाहम्। सन्ते वृञ्जे सुकृतꣳ सम्प्रजां पशून्[४]"–इति। हे 'सव' यज्ञ। 'ते इष्टेन' त्वदीयेन यजनेन अहं पक्कमन्नम् 'उप हुवे' समीप आह्वयामि। 'ते' तवानुग्रहात् 'सुकृतं सं वृञ्जे' सम्यगावर्जितं कुर्वे, पुण्यं सम्पादयामीत्यर्थः; तथा प्रजां पशून् सम्पादयामि॥

अथ पञ्चमीमाह— "प्रैषान्त्सामिधेनीराघारावाज्यभागावाश्रुतप्रत्याश्रुतमा शृणामि ते। प्रयाजानूयाजान्त्स्विष्टकृतमिडामाशिष आ वृञ्जे सुवः[५]"–इति। प्रैषादीनि यज्ञाङ्गानि प्रसिद्धानि; तानि सर्वाणि तद्वत् सिद्ध्यर्थम् 'आ शृणामि' सर्वतः ग्रासमुखाकृत्वा सम्पादयामि। तथा प्रयाजादीनि यज्ञाङ्गानि 'सुवः' फलरूपं स्वर्गञ्च 'आ वृञ्जे' सम्पादयामि॥

अथ षष्ठीमाह— "अग्निनेन्द्रेण सोमेन सरस्वत्या विष्णुना देवताभिः। याज्यानुवाक्याभ्यामुप ते हुवे सवाह यज्ञमा ददे ते वषट्कृतम्[६]"–इति। हे 'सव' यज्ञ! अग्न्यादयो ये देवा उक्ताः,

याश्चानुक्ताः अन्याः सर्वा देवताः, ये च तद्देवताविषये याज्यानुवाक्ये, तैः सर्वैः सहितः अहं 'ते' त्वत्सिद्ध्यर्थम् 'उप ह्वये' समीप एवाध्वर्युप्रभृतीन् अनुष्ठातृनाह्वयामि। तथा 'ते' त्वत्सिद्ध्यर्थं 'वषट्कृतं' वषट्कारसहितं 'यज्ञं' कृत्स्नप्रयोगम् 'आ ददे' स्वीकरोमि॥

अथ सप्तमीमाह—"स्तुतꣳ शस्त्रं प्रतिगरं ग्रहमिडामाशिष आ वृञ्जे सुवः। पत्नीसंयाजानुप ते ह्वये सवाहꣳ समिष्टयजुरा ददे तव(७)"–इति। स्तोत्रशस्त्रादीनि यज्ञाङ्गानि, 'सुवः' फलरूपं स्वर्गञ्च 'आ वृञ्जे' सर्वतः सम्पादयामि। स्वर्गस्य प्राधान्यात् पुनरभिधानम्। हे 'सव!' त्वत्सिद्ध्यर्थं पत्नीसंयाजानुद्दिश्य 'उप ह्वये' ऋत्विजः समीपमाह्वयामि। तथा 'ते' तव, त्वत्सिद्ध्यर्थं समिष्टयजुः स्वीकरोमि॥

अथाष्टमीमाह—"पशून्त्सुतं पुरोडाशान्त्सवनान्योत यज्ञम्। देवान्त्सेन्द्रानुप ते ह्वये सवाहमग्निमुखान्त्सोमवतो ये च विश्वे(८)"–इति। 'ये' अग्नीषोमीयादयः पशवः, यश्चाभिषुतः सोमः, ये च सवनीयपुरोडाशाः, यानि च प्रातस्सवनादीनि, यश्च तैर्निष्पाद्यः कृत्स्नो यज्ञः, तान् सर्वान् 'आ वृञ्जे'–इत्यनुवर्त्तते। हे सव! 'ते' त्वत्सिद्ध्यर्थमहं देवान् 'उप ह्वये' समीप आह्वयामि। कीदृशान् देवान्? इन्द्रेण सह वर्त्तन्त इति 'सेन्द्रान्', अग्निर्मुखं येषान्तेऽग्निमुखास्तान्, सोमो येषामस्ति ते सोमवन्तस्तान्, अपि च येऽन्ये विश्वे देवास्तान्; सर्वानप्युप ह्वये॥ ११॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके एकादशोऽनुवाकः॥

---

भूतं भव्यं भविष्यद् वषट् स्वाहा* नम[१] ऋक् साम यजुर्वषट् स्वाहा नमो[२] गायत्री त्रिष्टुब् जगती वषट् स्वाहा नमः[३] पृथिव्यन्तरिक्षं द्यौर्वषट् स्वाहा नमो[४]-ऽग्निर्वायुः सूर्यो वषट् स्वाहा नमः[५] प्राणो व्यानो-ऽपानो वषट् स्वाहा नमो[६]ऽन्नं कृषिर्वृष्टिर्वषट् स्वाहा नमः[७] पिता पुत्रः पौत्रो वषट् स्वाहा नमो[८] भूर्भुवः (१)

सुवर्वषट् स्वाहा नमः[९] ॥ १२ ॥

भुव[१]श्चत्वारि च ॥ १२ ॥

एकादशे आप्त्याख्या मन्त्रा उक्ताः, अथ द्वादशे पर्याप्त्याख्या मन्त्रा उच्यन्ते। तथा च ब्राह्मणे विनियोगः श्रूयते—"भूतं भव्यं भविष्य-दिति पर्याप्तीर्जुहोति"—इति † ॥

तत्र प्रथममन्त्रमाह—"भूतं भव्यं भविष्यद् वषट् स्वाहा नमः[१]" -इति। वषट्कारादीनि त्रीणि ब्रह्मणो नामानि, एभिश्च सत्यल-माख्यायते। तथा सति कालत्रयवर्त्तीनि सत्यानीति वाक्यार्थो भवति। आदरार्थमेकार्थवाचिनां वषडादीनां त्रयाणां प्रयोगः। एतेभ्यः स्वाहेति शेषः। एवमुत्तरेष्वपि योजनीयम् ॥

तानेतानुत्तरान् मन्त्रानाह—"ऋक् साम यजुर्वषट् स्वाहा

---

* "वषट्स्वाहा"—इतीह सर्वत्रैव मु०-पाठः।

† "भूतं भव्यं भविष्यदिति पर्याप्तीर्जुहोति। सुवर्गस्य लोकस्य पर्याप्त्यै"—इति ३ ८. १७. १०। 'स्वर्गप्राप्तिर्याभिराहुतिभिर्भवति ताः पर्याप्तयः'—इति तत्र सा० भा०।

नमो, गायत्री त्रिष्टुब् जगती वषट् स्वाहा नमः, पृथिव्यन्तरिक्षं द्यौर्वषट् स्वाहा नमो, ऽग्निर्वायुः सूर्यो वषट् स्वाहा नमः, प्राणो व्यानोऽपानो वषट् स्वाहा नमो, ऽन्नं कृषिर्वृष्टिर्वषट् स्वाहा नमः, पिता पुत्रः पौत्रो वषट् स्वाहा नमो, भूर्भुवः सुवर्वषट् स्वाहा नमः(२-८)' -इति। वेद-च्छन्दो-लोक-देव-प्राणा-ऽन्न-पितृ-व्याहृतिविषया एतेऽष्टौ मन्त्राः, पूर्वेण मन्त्रेण सहैतैर्मन्त्रैर्नवभिः पर्याप्याख्या आहुतयो होतव्याः ॥ १२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः॥

---

आ मे गृहा भवन्त्वा प्रजा म आ मा यज्ञो विशतु वीर्यावान्। आपो देवीर्यज्ञिया मा विशन्तु सहस्रस्य मा भूमा मा प्र हासीत्(१)। आ मे ग्रहो भवत्वा पुरोरुक् स्तुतशस्त्रे मा विशताꣳ समीची। आदित्या रुद्रा वसवो मे सदस्याः सहस्रस्य मा भूमा मा प्र हासीत्(२)। आ माग्निष्टोमो विशतु ( १ )

उक्थ्यश्चातिरात्रो मा विशत्वापिशर्वरः। तिरोअह्निया मा सुहुता आ विशन्तु सहस्रस्य मा भूमा मा प्र हासीत्(३) ॥ ३ ॥

विश(१)त्वष्टादश च* ॥ १३ ॥

* "ग्निष्टोमो वि[१]शत्वष्टादश च"-इति क, ख, ग।

पर्य्याप्तिनामका मन्त्रा द्वादशेऽभिहिताः, अथाभूनामका होम-मन्त्रास्त्रयोदशेऽभिधीयन्ते। तथा च ब्राह्मणे विनियोगः—"आ मे गृहा भवन्त्वित्याभूर्जुहोति"–इति * ॥

तत्र प्रथमामाह—"आ मे गृहा भवन्त्वा प्रजा म आ मा यज्ञो विशतु वीर्य्यावान्। आपो देवीर्यज्ञिया मा विशन्तु सहस्रस्य मा भूमा मा प्र हासीत्[१]"–इति। 'मे' मदर्थं गृहाः समीचीनाः 'आ भवन्तु' सर्वतः सम्पद्यन्ताम्। तथा 'प्रजाः' पुत्रादिरूपा अपि 'मे' मदर्थम् आ भवन्तु। तथा 'वीर्य्यावान्' फलोपेतो यज्ञश्च माम् आविशतु। तथा 'यज्ञियाः' यज्ञार्हाः 'आपो देवीः' जलदेवताः माम् आ विशन्तु। 'सहस्रस्य भूमा' सहस्रसङ्ख्याकस्य धनस्य बाहुल्यं मां कदाचिदपि 'मा प्र हासीत्' मा परित्यजतु ॥

अथ द्वितीयामाह—"आ मे ग्रहो भवत्वा पुरोरुक् स्तुतशस्त्रे मा विशताꣳ समीची। आदित्या रुद्रा वसवो मे सदस्याः सहस्रस्य मा भूमा मा प्र हासीत्[२]"–इति। 'मे' मदर्थं 'ग्रहः' अपीन्द्रवाय-वादिकः, सः 'आ भवतु' सर्वतः सम्पद्यताम्। तथा 'पुरोरुक्' ग्रहं गृहीतुं पुरतः पठ्यमानो मन्त्रोऽप्या भवतु। तथा स्तोत्रशस्त्रे अपि 'समीची' अनुकूले मामा विशताम्। तथा आदित्याद्या देवाः 'सदस्याः' ब्राह्मणाय मामा विशन्तु। सहस्रस्येत्यादि पूर्ववत् ॥

अथ तृतीयामाह—"आ माग्निष्टोमो विशतूक्थ्यश्चातिरात्रो

* "आ मे गृहा भवन्त्वित्याभूर्जुहोति। सुवर्गस्य लोकस्याभूत्यै"—इति ३ ८. १० ११। 'यामि स्वर्गं आ समन्ताद् भवति ता आहुतय आभुव'–इति तत्र सा० भा०।

मा विशत्वापिशर्वरः । तिरोअह्निया मा सुकृता आ विशन्तु सह-स्रस्य मा भूमा मा प्रहासीत्[१]"—इति । सोमयागेषु प्रथमसंस्थारूपो योऽयम् 'अग्निष्टोम' स मामा विशतु । यश्च द्वितीयसंस्थारूपः 'उक्थ्य' सोऽय मामा विशतु । यश्चतुर्थसंस्थारूप 'अतिरात्र' सोऽपि मामा विशतु । कीदृशोऽतिरात्र ? 'आपिशर्वर.' अपि गतानि प्राप्तानि शर्वर्या पठितव्यानि स्तोत्राणि यस्यासावापिशर्वरः *, तथा 'तिरोअह्निया.' अह्नस्तिरस्कृत्य रात्रौ प्रयोक्तव्या अतिरात्रगताः सोमविशेषाः †, ते च सुष्टु कृताः सन्तो मामा विशन्तु । सहस्रस्ये-त्यादि पूर्ववत् ॥ १२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके त्रयोदशोऽनुवाकः ॥

---

अग्निना तपोऽन्वभवद् वाचा ब्रह्म मणिना रूपाणी-न्द्रेण देवान् वातेन प्राणान्त्सूर्येण द्यां चन्द्रमसा नक्ष-त्राणि यमेन पितॄन राज्ञा मनुष्यान् फलेन नादेयान-जगरेण सर्पान् व्याघ्रेणारण्यान् पशून् श्येनेन‡ पत-

---

* ऐ० ब्रा० ए सो मु. २ भा० २६६, २७५ पृ० द्रष्टव्यम् ।

† "तिरोऽह्नि राव्यन्तर्हितेऽहनि भवा सोमास्तिरोऽह्न्या । ध्याश्विन-ग्रहस्तुकयागसम्बन्धिन चमसस्था सोमा पूर्वेदिर्निष्पन्नत्वात् तिरोअह्न्या इत्युच्यन्ते"—इति कात्या० श्रौ० सू० २४ ३ ४२. कर्कभाष्यम् तथा ऋ० स० १ ४५ १० सा० भा०, अपि ता० ब्रा० १.६.४ सा० भा० द्रष्टव्यम् ।

‡ "पृश्नूक्श्येनेन"—इति ख पाठ ।

चिणो रूप्णाश्वान्दृपभेण गा बस्तेनाजा* वृष्णिनावीं-न्वीहिणान्नानि यवेनौपधीन्न्यग्रोधेन वनस्पतीनुदुम्बरे-णोर्जं गायचिया छन्दांसि चिवृता स्तोमान् ब्राह्म-णेन (१)

वाचम् ॥ १४ ॥

ब्राह्मणेनैकं च ॥ १४ ॥

आभूनामका मन्त्रास्त्रयोदशेऽभिहिता, अथानुभूनामकाश्चतु-र्दशेऽभिधीयन्ते। तथा च ब्राह्मणे विनियोग—"अग्निना तपो-ऽन्वभवदित्यनुभूर्जुहोति"-इति†। पाठस्तु—"अग्निना तपोऽन्वभवद्, वाचा ब्रह्म, मणिना रूपाणीन्द्रेण देवान्, वातेन प्राणान्, सूर्येण द्या, चन्द्रमसा नक्षत्राणि, यमेन पितॄन्, राज्ञा मनुष्यान्, फलेन नादेयान्, अजगरेण सर्पान्, व्याघ्रेणारण्यान् पशून्, श्येनेन पतत्रिणो, वृष्णाश्वान्, ऋषभेण गा, बस्तेनाजा, वृष्णिनावीर्, व्रीहिणान्नानि, यवेनौपधीर्, न्यग्रोधेन वनस्पतीन्, उदुम्बरेणोर्जं, गायत्रिया छन्दांसि, त्रिवृता स्तोमान्, ब्राह्मणेन वाचम्"-इति। अथ यजमान 'अग्निना तपो-ऽन्वभवत्' अग्निरूपो भूत्वा तत्सामर्थ्येन सर्वं तपो व्याप्नोति। एव-मुत्तरेष्वपि त्रयोविंशतिमन्त्रेषु व्याख्येयम्। तृतीयान्तैस्तत्तदात्मकत्व यजमानस्येत्युच्यते, द्वितीयान्तैर्व्याप्य वस्तु, अन्वभवदिति सर्वत्रा-

* "बस्तेनाज" इत्यन्तस्यादि पाठ क, सु०, टी० ग०।

† "अग्निना तपोऽन्वभवदित्यनुभूर्जुहोति। सुवर्गस्य लोकस्यानुभूत्यै'—इति १ ८ १७.१२। 'आभि सर्गोऽनुभूयते'-इति तत्र सा० भा०।

सुषज्यते। 'ब्रह्म' मन्त्रजातम्। 'रूपाणि' प्रतिबिम्बात्मकानि। 'फलेन' वृक्षगतेन पक्केन। 'नादेयान्' नदीवत् सम्पूर्णान् रसान्। मण्डूकादीनामिव मनुष्याणां निगरणे समर्थः प्रौढः सर्पः 'अजगरः'। 'वृषा' प्रौढोऽश्वः। 'वाचं' वेदात्मिकाम्। स्पष्टमन्यत् ॥ १४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके चतुर्दशोऽनुवाकः॥

---

स्वाहाधिमाधीताय स्वाहा स्वाहाधीतं मनसे स्वाहा स्वाहा मनः प्रजापतये स्वाहा[१] काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहा[२]दित्यै स्वाहादित्यै मह्यै स्वाहादित्यै सुमृडीकायै स्वाहा[३] सरस्वत्यै स्वाहा सरस्वत्यै बृहत्यै स्वाहा सरस्वत्यै पावकायै स्वाहा[४] पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहा[५] त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा[६] ( १ )

विष्णवे स्वाहा विष्णवे निखुर्यपाय स्वाहा विष्णवे निभूयपाय स्वाहा[७] सर्वस्मै स्वाहा[८] ॥ १५ ॥

स्वाहा[५] * दश च॥ १५ ॥

---

* "पुरुरूपाय स्वाहा[५]"—इति क, ख, ग।

अनुभूनामका मन्त्राश्चतुर्दशेऽभिहिताः, अथ पञ्चदशे वैश्वदेवाख्या आहुतिमन्त्रा उच्यन्ते। कल्पः—"आकूत्यै प्रयुजेऽग्नये स्वाहेति चत्वार्यौद्ग्रहणानि जुहोति; स्वाहाधिमाधीताय स्वाहेति त्रीणि वैश्वदेवानि; सोऽयं दीक्षाहुतिकालो विहृतः सन्नाहमन्वहमौद्ग्रहणै-र्वैश्वदेवैश्चोत्तरोत्तरैः प्रचरति; षडुत्तमेऽहन्यौद्ग्रहणानि जुहोति; सर्वस्मै स्वाहेति पूर्णाहुतिमुत्तमाम्"-इति। तत्रौद्ग्रहणमन्त्राः प्रथम-काण्डे समाम्नाताः*; वैश्वदेवमन्त्रा इहाम्नायन्ते†॥

तेषु प्रथमदिनमन्त्रानाह—"स्वाहाधिमाधीताय स्वाहा, स्वा-हाधीतं मनसे स्वाहा, स्वाहा मनः प्रजापतये स्वाहा(१)"-इति। एते च मन्त्रा उभयतःस्वाहाकाराः; तत्रान्तिमः स्वाहाकारो हविः-प्रदाने वर्त्तते, प्रथमस्तु स्वाहाकारो 'निपाता अनेकार्थाः'-इति-न्यायेन उचितार्थे योजनीयः। आ समन्ताद्धीयते स्थाप्यते मन्त्रा-द्यनुष्ठाननिर्णयोऽस्यां बुद्धाविति 'आधिः' बुद्धिः, तां बुद्धिं 'स्वाहा' सम्पादयामीत्यध्याहृतार्थः; 'आधीताय' तस्यां बुद्धौ स्थापिताय मन्त्राभिमानिने देवाय 'स्वाहा' स्वाहुतमिदमस्तु। तथा 'आधीतं' बुद्धौ सङ्गृहीतं 'स्वाहा' विस्मरणमन्तरेण धारयामि; 'मनसे' तद्धारणसमर्थायान्तःकरणाय स्वाहुतमिदमस्तु। तथा 'मनः' तथा-विधमन्तःकरणं 'स्वाहा' सम्पादितवानस्मि, 'प्रजापतये' तस्य मनसः प्रेरकाय स्वाहुतमिदमस्तु॥

---

* १ भा० २२५ पृ० ६ पं०, पुनः ४ भा० ५८५ पृ० ८ पं०। औद्ग्रहण-मन्त्रमाहात्म्यन्तु ५ भा० ८८ पृ० ८ पं०।

† "स्वाहाधिमाधीताय स्वाहेति समस्तानि वैश्वदेवानि जुहोति। समस्त मेव द्विमन्त्तं भ्रातृव्यमतिक्रामति"—इति ब्रा० ३. ८. १०. १४।

अथ द्वितीयदिनगतान्मन्त्रानाह— "काय स्वाहा, कस्मै स्वाहा, कतमस्मै स्वाहा[१]"-इति। प्रथममन्त्रगतः क-शब्दः प्रजापतिवाचकः, "को ह वै नाम प्रजापतिः"-इतिश्रुत्यन्तरात् (ऐ० ब्रा० २ २ १० २ *)। द्वितीयमन्त्रगतस्तु क-शब्दः सर्वनामत्वात् प्रश्नस्तवाची, तेन चावज्ञानं लक्ष्यते, ईदृशोऽयमिति केनापि ज्ञातुं मशक्य इत्यर्थः। कतम-शब्दो बहूनां मध्ये निर्द्धारणप्रश्ने वर्त्तते, तेन च सर्वेषु देवेषु मध्ये शास्त्रविचारेण निर्द्धारणीयस्वरूप इत्युक्तं भवति॥

अथ तृतीयदिनगतान्मन्त्रानाह— "अदित्यै स्वाहा, ऽदित्यै मह्यै स्वाहा, ऽदित्यै सुमृडीकायै स्वाहा[३]"-इति। 'अदितिः' भूमिः। 'मही' विस्तीर्णा। 'सुमृडीका' सुखप्रदा॥

अथ चतुर्थदिनगतान्मन्त्रानाह— "सरस्वत्यै स्वाहा, सरस्वत्यै बृहत्यै स्वाहा, सरस्वत्यै पावकायै स्वाहा[४]"-इति। "पावकायै" शोधयित्र्यै॥

अथ पञ्चमदिनगतान्मन्त्रानाह— "पूष्णे स्वाहा, पूष्णे प्रपथ्याय स्वाहा, पूष्णे नरन्धिषाय स्वाहा[५]"-इति। प्रकृष्टाय श्रौतस्मार्त्तमार्गाय हितः 'प्रपथ्यः'। नराणां धारयिता 'नरन्धिषः'॥

अथ षष्ठदिनगतान्मन्त्रानाह— "त्वष्ट्रे स्वाहा, त्वष्ट्रे तुरीपाय स्वाहा, त्वष्ट्रे पुरुरूपाय स्वाहा[६]"-इति। तूर्णं प्राप्तः 'तुरीपः'। बहुमूर्त्तिविशेषैर्युक्तः 'पुरुरूपः'॥

अथ सप्तमदिनगतान्मन्त्रानाह— "विष्णवे स्वाहा, विष्णवे निखुर्यपाय स्वाहा, विष्णवे निभूयपाय स्वाहा[७]"-इति। नितरां

* १ भा० ८८३ पृ०, निरु० ११४, ३८८—४०० पृ०।

खुरं पापरोगादिबाधमर्दन्तीति* निखुर्याः, तेषां पाता 'निखुर्यपः'। विधैश्वर्यादिराहित्येन न्यग्भावयोग्या निभूयाः, तेषां पाता 'निभूयपः' ॥

अथ पूर्णाहुतिमन्त्रमाह— "सर्वस्मै स्वाहा(८)"—इति। सर्वप्रकारपालकाय स्वाहुतमित्यर्थः ॥ १५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके पञ्चदशोऽनुवाकः ॥

---

द॒द्भ्यः स्वाहा॒ हनू॑भ्या॒ꣳ स्वाहौष्ठा॑भ्या॒ꣳ स्वाहा॒ मुखा॑य॒ स्वाहा॒ नासि॑काभ्या॒ꣳ स्वाहा॒क्षीभ्या॒ꣳ स्वाहा॒ कर्णा॑भ्या॒ꣳ स्वाहा॑ पा॒र इ॒क्षवो॑ऽवा॒र्ये॑भ्यः पक्ष्म॑भ्यः स्वाहा॑वा॒र इ॒क्षवः॑ पा॒र्ये॑भ्यः पक्ष्म॑भ्यः स्वाहा॑ शी॒र्ष्णे स्वाहा॑ भ्रू॒भ्याꣳ स्वाहा॑ ल॒लाटा॑य॒ स्वाहा॑ मू॒र्ध्ने स्वाहा॑ म॒स्तिष्का॑य॒ स्वाहा॑ केशे॑भ्यः स्वाहा॒ वहा॑य॒ स्वाहा॑ ग्री॒वाभ्यः॒ स्वाहा॑ स्क॒न्धेभ्यः॒ स्वाहा॒ कीक॑साभ्यः॒ स्वाहा॑ पृ॒ष्टीभ्यः॒ स्वाहा॑ पाज॒स्या॑य॒ स्वाहा॑ पा॒र्श्वाभ्या॒ꣳ स्वाहा॑ (१)

अ॒ꣳसाभ्या॒ꣳ स्वाहा॑ दो॒षभ्या॒ꣳ स्वाहा॑ बा॒हुभ्या॒ꣳ स्वाहा॒ जङ्घा॑भ्या॒ꣳ स्वाहा॒ श्रोणी॑भ्याꣳ स्वाहो॒रुभ्या॒ꣳ स्वाहा॑ष्ठी॒वद्भ्या॒ꣳ स्वाहा॒ जङ्घा॑भ्या॒ꣳ स्वाहा॑ भ॒सदे॒ स्वाहा॑ शिख॒ण्डेभ्यः॒ स्वाहा॑ वाल॒धाना॑य॒ स्वाहा॒ण्डाभ्या॒ꣳ स्वाहा॒

* "खुरं पादतो गोविषाधमर्दन्तीति"—इति क, ख,।

शेपाय स्वाहा रेतसे स्वाहा प्रजाभ्यः स्वाहा प्रजननाय स्वाहा पद्भ्यः स्वाहा शफेभ्यः स्वाहा लोमभ्यः स्वाहा त्वचे स्वाहा लोहिताय स्वाहा मांसाय स्वाहा स्नावभ्यः स्वाहास्थभ्यः स्वाहा मज्जभ्यः स्वाहा ( २ )

अङ्गेभ्यः स्वाहात्मने स्वाहा सर्वस्मै स्वाहा ॥ १६ ॥

स्वाहा[१] स्वाहा[२] षट् च* ॥ १६ ॥

पञ्चदशे वैश्वदेवाहुतिमन्त्रा उक्ताः, अथ षोडशे ...होमाय उच्यन्ते। तथा च ब्राह्मणम् विसंदृशाय स्वाहा सुसंदृशाय होमान् जुहोति स्वाहा ( १ )

... सर्वस्मै स्वाहा ॥ १७ ॥

स्वाहा[१] * द्वे च ॥ १७ ॥

षोडशेऽनुवाके अङ्गहोममन्त्रा उक्ताः, अथ सप्तदशाष्टादशयोः रूपहोममन्त्रा उच्यन्ते। तथा च ब्राह्मणम्— "अञ्ज्येताय स्वाहा कृष्णाय स्वाहा श्वेताय स्वाहेत्यश्वरूपाणि जुहोति"-इति†। तत्रैकानुवाकगतानाह— "अञ्ज्येताय स्वाहा, ऽञ्जिसक्थाय स्वाहा, शितिपदे स्वाहा, शितिककुदे स्वाहा, शितिरन्ध्राय स्वाहा, शितिपृष्ठाय स्वाहा, शित्यंसाय स्वाहा, पुष्पकर्णाय स्वाहा, शित्योष्ठाय स्वाहा, शितिभ्रवे स्वाहा, शितिभसदे स्वाहा, श्वेतानूकाशाय स्वाहा, ऽञ्जये

---

* "रूपाय स्वाहा[१]"-इति क, ख, ग।

† ३ ८ १७ १५। "रूपैरेवैनं समर्द्धयति"-इति तच्छेषः।

स्वाहा; प्रजननाय स्वाहा, पद्भ्यः स्वाहा, शफेभ्यः स्वाहा, लोमभ्यः स्वाहा, त्वचे स्वाहा, लोहिताय स्वाहा, मांसाय स्वाहा, स्नावभ्यः स्वाहा, ऽस्थभ्यः स्वाहा, मज्जभ्यः स्वाहा, अङ्गेभ्यः स्वाहा, ऽऽत्मने स्वाहा, सर्वस्मै स्वाहा"-इति । अत्र दन्तहन्वादयोऽश्वस्यावयवाः प्रसिद्धाः। 'इक्षवः' अक्षिरोमाणि, ते च 'पारे' उपरिभागे वर्त्तन्ते; तस्मात् 'पार इक्षवः' इति तदुच्यते। 'अवार्येभ्यः पक्ष्मभ्यः' अधोभागवर्त्तिभ्यः रोमभ्यः उपरि वर्त्तन्ते, एतादृशा ये सन्ति तेभ्यः स्वाहेति योज-पुष्पाकारलक्षण [illegible]- 'अवारे' अधोभागे ये केचिदिक्षवो 'शितिभ्रु'। श्वेतेनापानेन युक्तः 'शितिभसत्'[illegible]चितः, मूर्द्ध-शब्देन प्रदेशः। 'अञ्जिः' श्वेतकृत्स्नशरीरः। ललाटश्वैत्ययुक्तो रथयुगस्य कृष्णजानुयुक्तः 'असितज्ञु'। कृष्णमिश्रसान्ध्यवर्णयुक्तः 'कृष्णैतः'। जपाकुसुमवदत्यन्तरागयुक्तः सान्ध्यो वर्णो 'लोहितैतः'*। ईषदारुण्य-युक्तः सान्ध्यो वर्णः 'अरुणैतः'। इदमिति स्पष्टत्वेनावभासमानाकारः 'ईदृशः'। किमित्यनिश्चितत्वेनावभासमानः 'कीदृशः'। दूरस्थदृष्टान्ते-नोपमीयमानः 'तादृशः'। समीपस्थदृष्टान्तेनोपमीयमानः 'सदृशः'। उपमारहितो 'विसदृशः'। सुखेनोपमातुं शक्यः 'सुसदृशः'। आकार-सामान्यं 'रूपम्'। अनुक्रमसङ्ग्रहार्थं सर्वशब्दः॥ १७॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके सप्तदशोऽनुवाकः॥

---

* "रोहितैतः"-इति मूलपाठः।

कृष्णाय स्वाहा श्वेताय स्वाहा पिशङ्गाय स्वाहा सारङ्गाय स्वाहाऽरुणाय स्वाहा गौराय स्वाहा बभ्रवे स्वाहा नकुलाय स्वाहा रोहिताय स्वाहा शोणाय स्वाहा श्यावाय स्वाहा श्यामाय स्वाहा पाकलाय स्वाहा सुरूपाय स्वाहाऽनुरूपाय स्वाहा विरूपाय स्वाहा सरूपाय स्वाहा प्रतिरूपाय स्वाहा शबलाय स्वाहा कमलाय स्वाहा पृश्नये स्वाहा पृश्निसक्थाय स्वाहा सर्वस्मै स्वाहा ॥ १८ ॥

कृष्णाय षट्चत्वारिंशत् ॥ १८ ॥

सप्तदशेऽश्वावयवरूपा मन्त्रा उक्ताः, अथाष्टादशे त्ववयविरूपमन्त्रा उच्यन्ते। विनियोगस्तु पूर्वेणैवोदाहृतः। (९७८पृ०१२पं०) पाठस्तु— "कृष्णाय स्वाहा, श्वेताय स्वाहा, पिशङ्गाय स्वाहा, सारङ्गाय स्वाहा, ऽरुणाय स्वाहा, गौराय स्वाहा, बभ्रवे स्वाहा, नकुलाय स्वाहा, रोहिताय स्वाहा, शोणाय स्वाहा, श्यावाय स्वाहा, श्यामाय स्वाहा, पाकलाय स्वाहा, सुरूपाय स्वाहा, ऽनुरूपाय स्वाहा, विरूपाय स्वाहा, सरूपाय स्वाहा, प्रतिरूपाय स्वाहा, शबलाय स्वाहा, कमलाय स्वाहा, पृश्नये स्वाहा, पृश्निसक्थाय स्वाहा, सर्वस्मै स्वाहा"—इति। कृत्स्नेऽपि शरीरे कार्ष्ण्ययुक्तः 'कृष्णः'। एवं श्वेतादयः। 'पिशङ्गः' गोरोचनावर्णः। 'सारङ्गः' चातकवर्ण। ईषद्रक्तः 'अरुणः'। 'गौरः' अत्यन्तश्वेतः। 'बभ्रुः' कपिलः। 'नकुलः' नकुलवर्णः। 'रोहितः' अत्यन्तारक्तः। 'शोणः' पीतलोहितः।

'श्यावः' पीतकृष्णः। 'श्यामः' नीलः। अत्यन्तकृष्णः 'पाकलः'। शोभनरूपः 'सुरूपः'। अनुकूलरूपः 'अनुरूपः'। विविधरूपः 'विरूपः'। समानरूपः 'सरूपः', नात्यन्तं सुरूपो नात्यन्तं कुरूप इत्यर्थः। प्रतिकूलरूपः 'प्रतिरूपः'। मिश्रवर्णः 'शबलः'। कमलवर्णः 'कमलः'। चित्रवर्णः 'पृश्निः'। तथाविधाभ्यां सक्थिभ्यामुपेतः 'पृश्निसक्थः'। अनुक्रमसङ्ग्रहार्थः सर्वशब्दः। पूर्वानुवाकोक्तैः षड्विंशतिमन्त्रैरेतदनुवाकोक्तैस्त्रयोविंशतिमन्त्रैश्चेत्येवमेकोनपञ्चाशन्मन्त्रैः अश्वरूपाणि जुहुयात्॥ १८॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठकेऽष्टादशोऽनुवाकः॥

---

ओषधीभ्यः स्वाहा मूलेभ्यः स्वाहा तूलेभ्यः स्वाहा काण्डेभ्यः स्वाहा वल्शेभ्यः* स्वाहा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहा गृहीतेभ्यः स्वाहाऽगृहीतेभ्यः स्वाहावपन्नेभ्यः स्वाहा शयानेभ्यः स्वाहा सर्वस्मै स्वाहा॥१९॥ ओषधीभ्यश्चतुर्विंशतिः॥ १९॥

अश्वविरूपमन्त्रा अष्टादशे प्रोक्ताः, अथौषधिमन्त्रा एकोनविंशेऽभिधीयन्ते। तथा च ब्राह्मणम्— "ओषधीभ्यः स्वाहा मूलेभ्यः स्वाहेत्योषधिहोमान् जुहोति"—इति†। पाठस्तु— "ओषधीभ्यः

---

* वल्शेभ्य"—इति सवर्णीयादिः क-पाठः।

† ३ न. १७. १९। "द्वयो वा ओषधयः। पुष्पेभ्योऽन्याः फलं गृह्णन्ति। मूलेभ्योऽन्याः। ता एवोभयीरवरुन्धे"—इति तच्छेषः।

स्वाहा, मूलेभ्य स्वाहा, तूलेभ्य स्वाहा, काण्डेभ्य स्वाहा, वल्शेभ्य स्वाहा, पुष्पेभ्य स्वाहा, फलेभ्य स्वाहा, गृहीतेभ्य स्वाहा, ऽगृहीतेभ्य स्वाहा, ऽवपन्नेभ्य स्वाहा, शयानेभ्य स्वाहा, सर्वस्मै स्वाहा' —इति। 'तूलानि' अग्राणि। 'काण्डानि' दण्डसदृशभागा। 'वल्शानि' द्वैधीभावसन्धय। 'गृहीतानि' प्राणिभिरुपयुक्तानि। 'अगृहीतानि' प्राणिभिरनुपयुक्तानि। 'अवपन्नानि' स्तम्भेभ्यो वियुज्य भूमौ पतितानि। 'शयानानि' स्तम्भै सह भूमौ पतितानि। अनुक्तसङ्ग्रहार्थं सर्वशब्द। एतैर्दादशभिर्मन्त्रैरोषधिहोम जुहुयात् ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके एकोनविंशोनुवाक ॥

---

वनस्पतिभ्यः स्वाहा मूलेभ्यः स्वाहा तूलेभ्यः स्वाहा स्कन्धोभ्यः* स्वाहा शाखाभ्यः स्वाहा पर्णेभ्यः स्वाहा पुष्पेभ्य स्वाहा फलेभ्यः स्वाहा गृहीतेभ्यः स्वाहागृहीतेभ्यः स्वाहावपन्नेभ्यः स्वाहा शयानेभ्यः स्वाहा शिष्टाय स्वाहातिशिष्टाय स्वाहा परिशिष्टाय स्वाहा सꣳशिष्टाय स्वाहोच्छिष्टाय स्वाहा रिक्ताय स्वाहारिक्ताय स्वाहा प्ररिक्ताय स्वाहा सꣳरिक्ताय स्वाहोद्रिक्ताय स्वाहा सर्वस्मै स्वाहा ॥ २० ॥

वनस्पतिभ्यः षट्चत्वारिꣳशत् ॥ २० ॥

---

* 'स्कन्धेभ्य' —इति मु० पाठ।

ओषधिहोममन्त्रा एकोनविंशेऽभिहिताः, वृक्षमन्त्रा विंशेऽभिधीयन्ते। तथा च ब्राह्मणम्—"वनस्पतिभ्यः स्वाहेति वनस्पतिहोमान् जुहोति"—इति *। पाठस्तु—"वनस्पतिभ्यः स्वाहा, मूलेभ्यः स्वाहा, स्कन्धेभ्यः स्वाहा, शाखाभ्यः स्वाहा, पर्णेभ्यः स्वाहा, पुष्पेभ्यः स्वाहा, फलेभ्यः स्वाहा, गृहीतेभ्यः स्वाहा, ऽगृहीतेभ्यः स्वाहा, ऽवपन्नेभ्यः स्वाहा, शयानेभ्यः स्वाहा, शिष्टाय स्वाहा, ऽतिशिष्टाय स्वाहा, परिशिष्टाय स्वाहा, सꣳशिष्टाय स्वाहोच्छिष्टाय स्वाहा, रिक्ताय स्वाहा, ऽरिक्ताय स्वाहा, प्ररिक्ताय स्वाहा, सꣳरिक्ताय स्वाहोद्रिक्ताय स्वाहा, सर्वस्मै स्वाहा"—इति। 'स्कन्धांसि' द्वैधीभावमन्वयः। एकस्मिन् कर्मणीदानीमुपयुक्तादन्यः कालान्तरे उपयोक्ष्यमाणः 'शिष्टः'। कालान्तरेऽपि तत्कर्मोपयुक्तादन्यः 'अतिशिष्टः'। कर्मान्तरेष्वप्युपयुक्तादन्यः 'परिशिष्टः'। लोकव्यवहारेऽप्युपयुक्तादन्यः 'संशिष्टः'। उपयुज्य त्यक्तः 'उच्छिष्टः'। इदानीं पूर्वैः फलैर्वर्जितः 'रिक्तः'। तद्युक्तस्तु 'अरिक्तः'। सर्वदा तद्वर्जितः 'प्ररिक्तः'। पर्णैरपि विवर्जितः 'संरिक्तः'। सर्वेषु सर्वदा समृद्धः 'उद्रिक्तः'। अनुक्तसङ्ग्रहार्थः सर्वशब्दः। एतैस्त्रयोविंशतिमन्त्रैर्वनस्पतिहोमान् जुहुयात् ॥२०॥

अथास्य प्रपाठकस्य विनियोगसङ्ग्रहः—

अविवाक्यं तृतीयाद्ये, द्वितीये क्रतुसंस्तवः।
यस्त्रयोदशरात्रोऽसौ तृतीये, ऽथ चतुर्थके।
स्याच्चतुर्दशरात्रो, ऽथ पञ्चमेऽन्यश्च तादृशः।
षष्ठसप्तमयोः स्यातां द्वौ पञ्चदशरात्रकौ।

* ३. ८. १०, १७। "आरण्यस्यान्नाद्यस्यावरुध्यै"—इति तच्छेषः।

यः सप्तदशरात्रोऽयमष्टमे, नवमे पुनः ।
भवेद् विंशतिरात्रो, ऽथ दशमे समुदीरितः ।
एकविंशतिरात्रो, ऽथ मन्त्राः सर्वेऽश्वमेधगाः,—
अर्वाङ्यज्ञात्मिमन्त्रा, भूत पर्याप्तयो नव ।
आभूमन्त्रास्त्रयो ह्या मे, ह्यनुभूमन्त्रकाः पुनः ।
चतुर्विंशतिसङ्ख्याः स्युरग्निनेत्येवमादयः ।
दीक्षाहोमार्थमन्त्रास्तु स्वाहा द्वाविंशतिर्मताः ।
दक्षोऽङ्गमन्त्राः पञ्चाशद्, अञ्जिषड्विंशतिस्तथा ।
कृष्णा त्रयोविंशतिः स्युर्मिलित्वा रूपमन्त्रकाः ।
द्वादशौषधिमन्त्राः स्युम्, त्रयोविंशतिरीरिताः ।
वनस्पतिभ्यो हृद्याख्यमन्त्रा उक्ताः प्रपाठके ॥ (१-२०)

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ७ ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे तृतीयप्रपाठके विंशोऽनुवाकः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्क-
भूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये 'वेदार्थ-
प्रकाश'-नामकृष्णयजुस्तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डीयव्याख्याने
तृतीयः प्रपाठकः समाप्तः ॥

(१)प्रजवं (२)ब्रह्मवादिनं (३)एष (४)आदित्याः (५)प्रजापतिः(६)रिन्द्र (७)इन्द्रः (८)प्रजापतिः (९)सा(१०)ऽसा(११)वर्वाङ् (१२)भूत (१३)मा (१४)ऽग्निना (१५)स्वाहा (१६)दृह्यो (१७)ऽह्येताय* (१८)कृष्णा(१९)यौषधीभ्यो (२०)वनस्पतिभ्यो विंशतिः † ॥ ३ ॥

(१)प्रजवं (२)प्रजापति(३)र्यदच्छन्दोमं (४)तं हुवे सवाद (५)मोषधीभ्यो द्विचत्वारिंशत् ‡ ॥ ३ ॥

इति तैत्तिरीयसंहितायां
सप्तमकाण्डे तृतीयः प्रपाठकः ॥ ३ ॥

---

* "(१)प्रजवं (२)ब्रह्मवादिन ०—० (३)किमेष वा व्यास (४)आदित्या०—० उभयी (५) प्रजापतिरन्वाय (६)निन्द्रो वै सद्(७)इन्द्रो वै शिथिल (८) प्रजापतिरकामयताग्नाद (९) सा विराड(१०)सावादित्यो(११)ऽर्वाङ (१२)भूत मा(१३) मे (१४)ऽग्निना (१५)स्वाहाधि(१६) दृह्यो(१७)ह्येताय"—इति क, ख, ग ।

† प्रपाठकेऽत्र ये विंशत्यनुवाकास्तेषामेवेमानि प्रतीकपदानि ।

‡ ३२१ पृ० ६ पं०, ३३६ पृ० १४ पं०, ३४८ पृ० ७ पं०, ३६३ पृ० ५ पं०, ३८१ पृ० १२ पं० । मु०-पुस्तके नास्त्येतद् वाक्यम् ।

## अथ तैत्तिरीयसंहितायां

सप्तमकाण्डे

चतुर्थः प्रपाठकः ।

॥ हरिः ओम् ॥

बृहस्पतिरकामयत श्रन्मे देवा दधीरन् गच्छेयं पुरोधामिति स एतं चतुर्विंशतिरात्रमपश्यत्तमाहरत्तेनायजत ततो वै तस्मै श्रद्देवा अदधतागच्छत् पुरोधां य एवं विद्वाꣳसश्चतुर्विꣳशतिरात्रमासते श्रदेभ्यो मनुष्या दधते गच्छन्ति पुरोधां[१] ज्योतिर्गौरायुरिति त्र्यहा भवन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुः (१)

इमानेव लोकानभ्यारोह[२]न्त्यभिपूर्वं त्र्यहा भवन्त्यभिपूर्वमेव सुवर्गं लोकमभ्यारोह[३]न्त्यसंत्रं वा एतद्यदच्छन्दोमं यच्छन्दोमा भवन्ति तेन सत्त्रं देवता एव पृष्ठैरव रुन्धते पशून् छन्दोमै*रोजो वै वीर्यं पृष्ठानि

* "पशूञ्छन्दोमै"—इति क, "पशूनुञ्छन्दोमै"—इति क-टी ।

पुशवंश्छन्दोमा ओजस्येव वीर्ये पुशुषु प्रति तिष्ठन्ति बृहद्रथन्तराभ्यां यन्तीयं वाव रथन्तरमसौ बृहदाभ्यामेव (२)

यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै युज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति(४) चतुर्विंशतिरात्रो भवति चतुर्विंशतिरर्द्धमासाः संवत्सरः संवत्सरः सुवर्गो लोकः संवत्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो चतुर्विंशत्यक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैव* ब्रह्मवर्चसमव† रुन्धतेऽ(५)ऽतिरात्रावभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै(६) ॥ १ ॥

आयुः[१]रेव[२]‡ पञ्चचत्वारिंशच्च ॥ १ ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा, यो वेदेभ्योऽखिलं जगत्।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
एकविंशतिरात्रान्तं सत्रमुक्तं तृतीयके।
चतुर्विंशतिरात्रादि चतुर्थेऽथ प्रवक्ष्यते ॥ २ ॥

---

* "गायत्रीयैव"—इति क, टी ख, पुस्तकयोः पाठः।

† 'ब्रह्मवर्चसमेवाव'—इति टी-ख।

‡ "अन्तरिक्षं गौरसावायु[१]राभ्यामेव[२]"—इति क, ख, ग।

द्वौ चतुर्विंशतिरात्रौ*, तयोराद्यं प्रथमेऽनुवाके विधत्ते— "बृहस्पतिरकामयत श्रन्मे देवा दधीरन्, गच्छेयं पुरोधामिति; स एतं चतुर्विꣳशतिरात्रमपश्यत्, तमाहरत्, तेनायजत, ततो वै तस्मै श्रद् देवा अदधतागच्छत् पुरोधां, य एवं विद्वाꣳसश्चतुर्विꣳशतिरात्रमासते, श्रदेभ्यो मनुष्या दधते, गच्छन्ति पुरोधाम्(१)"—इति। पुरा कदाचिद् बृहस्पतिः देवैरिन्द्रादिभिरविश्वसनीयः सन्, मनस्येवमकामयत,—एते देवा 'मे' मदर्थं 'श्रद्दधीरन्' अयं बृहस्पतिरस्मभ्यं हित इति विश्वासं धारयन्तु। ततोऽहं 'पुरोधां' पौरोहित्यम्, आचार्यलक्षणं मुख्यत्वं वा गच्छेयमिति। ततस्तदुपायं विचार्य शास्त्रमुखेन चतुर्विंशतिरात्रं निश्चित्य तमनुष्ठाय देवैर्विश्वसनीयः सन् पुरोधां प्राप्तवान्। एवमन्येऽपि यजमाना एतदनुष्ठानेन मनुष्यैर्विश्वसनीयाः सन्तः पुरोधां प्राप्नुवन्ति॥

तत्र कानिचिदहानि विधत्ते— "ज्योतिर्गौरायुरिति त्र्यहा भवन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरिमानेव लोकानभ्यारोहन्ति(२)"—इति। अत्र चत्वारस्त्र्यहा विज्ञेयाः, तावता विवक्षितसङ्ख्यायाः पूरणात्॥

तत्र चतुर्णां त्र्यहानामानुपूर्व्यं विधत्ते—"अभिपूर्वं त्र्यहा भव-

---

* सामवेदे एकविंशतिरात्रद्वयविधानानन्तरम् अन्नाद्यफलसाधन मेकं द्वाविंशतिरात्रं सत्र विहितम्, तत प्रतिष्ठासाधन त्रयोविंशतिरात्रश्चैकम्। ततो द्वे चतुर्विंशतिरात्रसत्रे। तत्राद्य स्वर्गसाधनम्, अपरं प्रजापश्वोरन्यतरस्य साधनम्। ता० ब्रा० २३ प्र० १०—२० ख०।

न्त्यभिपूर्वमेव सुवर्गं लोकमभ्यारोहन्ति[२]"-इति। इतो निर्गता-नामानुपूर्व्येणैव स्वर्गारोहणम्* ॥

अथ पृष्ठ्य षडहश्चत्वारश्छन्दोमा इत्येव द्वादशाहगतानि दशा-हानि विधत्ते—"अपत्र वा एतद्यच्छन्दोम, यच्छन्दोमा भवन्ति, तेन सत्र, देवता एव पृष्ठैरव रुन्धते, पशून् छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा, ओजस्येव वीर्ये पशुपु प्रति तिष्ठन्ति, बृह-द्रथन्तराभ्या यन्तीय वाव रथन्तरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती, ताभ्यामेव सुवर्गं लोक यन्ति[३]"-इति। पूर्ववद्व्याख्येयम् (३४२पृ०) ॥

अथैतत्क्रतुगतामहस्सङ्ख्यां प्रशसति—'चतुर्विꣳशतिरात्रो भवति, चतुर्विꣳशतिरर्द्धमासा सवत्सर, सवत्सर सुवर्गो लोक, सवत्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो चतुर्विꣳशत्यक्षरा गायत्री, गायत्री ब्रह्मवर्चस, गायत्रियैव ब्रह्मवर्चसमव रुन्धते[४] -इति। सङ्ख्यासाम्या-दर्द्धमासद्वारा सवत्सर प्राप्य तत्कालीनकर्मानुष्ठानद्वारा स्वर्गे प्रति तिष्ठन्ति। तथा गायत्रीद्वारा ब्रह्मवर्चस प्राप्नुवन्ति ॥

अथ प्रायणीयोदयनीयौ विधत्ते—"अतिरात्रावभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै[५]"-इति। गायत्रीद्वारा ब्रह्मवर्चसप्राप्ते-रुक्तत्वात् तत्परिग्रह ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाक ॥

---

* 'स्वर्गलोकारोहणम'-इति ग।

यथा वै मनुष्या एवं देवा अग्र आसन् तेऽकामय-न्तावर्त्तिं पाप्मानं मृत्युमपहत्य दैवीꣳ सꣳसदं गच्छेमेति त एतं चतुर्विꣳशतिरात्रमपश्यन् तमाहरन् तेनायजन्त ततो वै तेऽवर्त्तिं पाप्मानं मृत्युमपहत्य दैवीꣳ सꣳसद-मगच्छन् य एवं विद्वाꣳसश्चतुर्विꣳशतिरात्रमासते-ऽवर्त्तिमेव पाप्मानमपहत्य श्रियं गच्छन्ति श्रीर्हि मनु-ष्यस्य ( १ )

दैवीं सꣳस[१]ज्ज्योतिरतिरात्रो भवति सुवर्गस्य लोकस्यानुख्यात्यै[२] पृष्ठ्यः षडहो भवति षड् वा ऋतवः संवत्सरस्तं मासा अर्धमासा ऋतवः प्रविश्य दैवीꣳ सꣳसदमगच्छन् य एवं विद्वाꣳसश्चतुर्विꣳशतिरात्रमा-सते संवत्सरमेव प्रविश्य वस्यसीꣳ सꣳसदं गच्छन्ति[३] त्रयस्त्रयस्त्रिꣳशा अवस्ताद्भवन्ति त्रयस्त्रयस्त्रिꣳशाः पर-स्तात् त्रयस्त्रिꣳशैरेवोभयतोऽवर्त्तिं पाप्मानमपहत्य दैवीꣳ सꣳसदं मध्यतः ( २ )

गच्छन्ति पृष्ठानि हि दैवीं सꣳस[४]ज्जामि वा एतत् कुर्वन्ति यत्त्रयस्त्रयस्त्रिꣳशा अन्वञ्चो मध्येऽनिरुक्तो भवति तेनाजा[५]म्यूर्ध्वानि पृष्ठानि भवन्त्यूर्ध्वाश्छन्दोमा उभाभ्याꣳ रूपाभ्याꣳ सुवर्गं लोकं य[६]न्त्यसत्त्रं वा एत-द्यदच्छन्दोमं यच्छन्दोमा भवन्ति तेन सत्त्रं देवता एव

पृष्ठैरव रुन्धते पशून् छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवः ( ३ )

छन्दोमा ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति(७) त्रयस्त्रयस्त्रिंशा अवस्ताद्भवन्ति त्रयस्त्रयस्त्रिंशाः पुरस्तान्मध्ये पृष्ठान्युरो वै त्रयस्त्रिंशा आत्मा पृष्ठान्यात्मन एव तद्यजमानाः शर्म नह्यन्तेऽनार्त्यै(८) बृहद्रथन्तराभ्यां यन्तीयं वाव रथन्तरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी सृती* ताभ्यामेव ( ४ )

सुवर्गं लोकं यन्ति पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ् षडहो भवति प्रत्यवरुह्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋध्वोत्तिष्ठन्ति(९) त्रिवृतोऽधि त्रिवृतमुप यन्ति स्तोमानाः सम्पत्त्यै प्रभवाय ज्योतिरग्निष्टोमो भवत्ययं वाव स क्षयोऽस्मादेव तेन क्षयान्न यन्ति(१०) चतुर्विंशतिरात्रो भवति चतुर्विंशतिरर्धमासाः संवत्सरः ( ५ )

संवत्सरः† सुवर्गो लोकः संवत्सर एव सुवर्गे लोके

---

* "स्रुती"–इति ग।

† "संवत्सर"–इति क।

प्रति तिष्ठन्त्यथो चतुर्विꣳशत्यक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैव* ब्रह्मवर्चसमव रुन्धते(११)ऽतिरात्रावभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै(१२) ॥ २॥

मनुष्यस्य[१], मध्यतः[२] पशवः[३] एव[४]† संवत्सरश्चतुर्विꣳशतिश्च ॥ २ ॥

प्रथमेऽनुवाके कश्चिच्चतुर्विंशतिरात्रोऽभिहित, अथ द्वितीये ऽन्यश्चतुर्विंशतिरात्रोऽभिधीयते। तमेत विधत्ते—"यथा वै मनुष्या एव देवा अग्र आसन्, ते ऽकामयन्तावर्त्तिं पाप्मानं मृत्युमपहत्य दैवीꣳ सꣳसद गच्छेमेति त एत चतुर्विꣳशतिरात्रमपश्यन्, तमाहरन्, तेनायजन्त, ततो वै तेऽवर्त्तिं पाप्मानं मृत्युमपहत्य दैवीꣳ सꣳसदमगच्छन्, य एव विद्वाꣳसश्चतुर्विꣳशतिरात्रमासते, ऽवर्त्तिमेव पाप्मानमपहत्य श्रिय गच्छन्ति, श्रीर्हि मनुष्यस्य दैवी सꣳसत्(१)"— इति। यथा मनुष्या दरिद्रा दारिद्र्यहेतुभूतपापयुक्ता, एव देवा अपि पुरा दारिद्र्यहेतुभूतपापयुक्ता आसन्। ते च देवा कदाचि देवमकामयन्त—'वर्त्ति' इत्ति, जीवनोपायो धनमभूत् तदभाव 'अवर्त्ति' तच हेतु 'पाप्मा' दारिद्र्यहेतुर्जन्मान्तरकृत पापविशेष। स एव क्लेशहेतुत्वान्मृत्यु, तमेतादृशमवर्त्तिं पाप्मान मृत्यु केनापि सुकृतानुष्ठानेनापहत्य, देवसम्बन्धिनी सम्पत्ति प्राप्नुयाम इति

* 'गायत्र्यैव'—इति क।

† मध्यव[३]स्ताभ्यामेव[४]'—इति क, ख, ग।

‡ एकश्चतु'—इति ग।

विचार्य, चतुर्विंशतिरात्र तदुपायं शास्त्रमुखान्निश्चित्य, तदनुष्ठानेन तत्फल प्राप्ताः। एवं मनुष्या अपि तदनुष्ठानेन दारिद्र्यहेतुपाप-निवृत्तिद्वारा देवसम्बन्धिनी सभद् प्राप्नुवन्ति। देवा' सम्यक् सीदन्ति सुखेनावतिष्ठन्ते यस्यां श्रिया सा श्रीरेव 'दैवी सम्पत्'। मनुष्या हि श्रियमेव देवसभा* मन्यन्ते॥

तत्र प्रथममह्र विधत्ते— "ज्योतिरतिरात्रो भवति, सुवर्गस्य लोकस्यानुख्यात्यै[१]"–इति। ज्योतिष्टोमविशेषो योऽयमतिरात्र', स एव प्रथममह', तेन ज्योतिषा स्वर्ग. प्रकाश्यते॥

अनन्तरभावीनि षडहानि विधत्ते— "पृष्ठ्य षडहो भवति, षड्वा ऋतव सवत्सरस्त मासा अर्द्धमासा ऋतव. प्रविश्य दैवीꣳ सꣳसदमगच्छन्, य एव विद्वाꣳसश्चतुर्विꣳशतिरात्रमासते, सवत्सर-मेव प्रविश्य वस्यसीꣳ सꣳसद गच्छन्ति[२]"–इति। षड्विधे पृष्ठ-स्तोत्रैर्निष्पाद्य 'पृष्ठ्य षडह', सोऽयामुष्ठेय। षट्सङ्ख्याका ऋतव', ते च सम्भूय सवत्सरीभवन्ति। 'त' च सवत्सर, द्वादशमासा चतु-र्विंशतिरर्द्धमासा षड्तवश्चावयवत्वेन प्रविश्यातिशयेन धनसमृद्धां सभा प्राप्नुवन्ति, मनुष्या अपि तथैव पृष्ठ्यषडहयुक्तेन चतुर्विंशति-रात्रेण फल प्राप्नुवन्ति।

तथान्यान्यपि षडहानि विधत्ते— "त्रयस्त्रयस्त्रिꣳशा अवस्ताद्भव न्ति, त्रयस्त्रयस्त्रिꣳशाः परस्तात्, त्रयस्त्रिंशैरेवोभयतोऽवर्त्ति पाप्मान-मपहत्य दैवीꣳ सꣳसद मध्यतो गच्छन्ति, पृष्ठानि हि दैवी सꣳसत्[३]" –इति। अत्रेयमह क्लृप्ति सूत्रकारेण दर्शिता—"समदा चतुर्विंशति-

* "दैवसमां"–इति ख। "देवससद"–इति ग।

रात्रेण स्वर्गे लोके सीदन्त्यतिरात्रश्चतुर्विंश उक्थ्य आरम्भणीयस्त्रि-वृदा पृष्ठ्यस्तोमः षडहस्त्रयस्त्रिंशमहरनिरुक्तं त्रयस्त्रिंशं त्रिणवं द्वे एकविंशे त्रिणवं त्रयस्त्रिंशमहर्निरुक्तं त्रयस्त्रिंशमनिरुक्तं पृष्ठ्यस्तोमः षडहः प्रत्यङ् त्रिवृदहरनिरुक्तं ज्योतिष्टोमो वैश्वानरोऽतिरात्रः"-इति। यदिदमतिरात्ररूपं प्रथममहः सूत्रेऽभिहिततम्, तत् 'ज्योतिरतिरात्रो भवति'-इति (३८० पृ० ७पं०) वाक्येनाम्नातम्। यत्त्वारम्भणीयरूपं द्वितीयमहस्तच्छाखान्तरगतम्*। तृतीयमहरा-रभ्याष्टमान्तः पराग्रूपः पृष्ठ्यः षडहः। तत्र षष्ठमहस्त्रयस्त्रिंशरूपम्; यद्यादित आरभ्य गणनायामष्टममहः। ततो नवममहः 'अनिरुक्तं' त्रयस्त्रिंशं स्पष्टलिङ्गैर्मन्त्रैर्गानं निरुक्तम्, तद्विपरीतमनिरुक्तम्। ततो दशममहः 'निरुक्तं' त्रयस्त्रिंशम्। त एतेऽष्टमनवमदशमा अह-र्विशेषाः 'त्रयः', 'अवस्तात्' अधोभागे वर्त्तमानाः 'त्रयस्त्रिंशाः'। तत एकादशद्वादशत्रयोदशचतुर्दशाख्यान्यहानि त्रिणवैकविंशद्वय-त्रिणवरूपाणि मध्यवर्त्तीनि पृष्ठानीत्युच्यन्ते। ततः पञ्चदशषोडश-सप्तदशा अहर्विशेषास्त्रिसङ्ख्याकाः 'परस्तात्' ऊर्द्ध्वभागे वर्त्तमाना-स्त्रयस्त्रिंशाः। तेषु त्रिषु मध्यममनिरुक्तं त्रयस्त्रिंशम्। तस्मादुप-रितनं त्रयस्त्रिंशस्तोमयुक्तं निरुक्तं सप्तदशसङ्ख्यापूरकं दिनमारभ्य द्वाविंशदिनपर्यन्तमावृत्तः पृष्ठ्यः षडहः; अतएवायं 'प्रत्यङ्'-इति निर्दिश्यते। तत ऊर्द्ध्वमुपान्तिममहस्त्रिवृदनिरुक्तं ज्योतिरग्निष्टोम-रूपम्। तत ऊर्द्ध्वमतिरात्रोऽन्तिमः। एवं स्थिते सत्येकादशादि-

* "चतुर्विंश मेतदहरुपयन्त्यारम्भणीयम्"-इत्यादि ऐ० ब्रा० ४.२.६।

चतुर्दशान्तान् मध्यवर्त्तिनोऽहश्चतुष्टयादध उपरिष्टाच्च ये त्रिसङ्ख्या-कास्त्रयस्त्रिंशाः, तैरुभयतोऽवस्थितैः दारिद्र्यहेतु पाप्मानमपहत्य दैवीं सभां मध्यवर्त्तिनो गच्छन्ति। यानि मध्यवर्त्तीनि चत्वारि पृष्ठाख्यान्यहानि, एतान्येवात्र 'दैवी संसत्'-इत्युच्यते। तस्मादुभयतस्त्रयस्त्रिंशयुक्तान्यहानि कुर्यादिति विध्युन्नयः॥

अथाधोवर्त्तिषु त्रिषु त्रयस्त्रिंशेषु यो मध्यमः, यश्चोर्द्ध्ववर्त्तिषु त्रिषु मध्यमः, तस्योभयविधस्य मध्यमस्यानिरुक्तता विधत्ते— "जामि वा एतत्कुर्वन्ति, यत्त्रयस्त्रयस्त्रिꣳशा अन्वञ्चो मध्येऽनिरुक्तो भवति, तेनाजामि(५)"-इति। यद्यनुक्रमवर्त्तिनः सर्वेऽपि त्रयस्त्रिंशा एकविधाः स्युस्तदानीमनुष्ठातार आलस्य कुर्वन्ति, तस्मान्मध्ये वर्त्तमानमह-र्विशेषमनिरुक्तत्वेनेतरस्मान्निरुक्तादिलक्षणं कुर्य्यु, तेन वैलक्षण्येन आलस्य परिहृतं भवेत्॥

उभयतोऽवस्थितानां त्रयस्त्रिंशानां मध्यवर्त्तिषु चतुर्ष्वहस्सु कञ्चिद्विशेषं विधत्ते— "ऊर्द्ध्वानि पृष्ठानि भवन्त्यूर्द्ध्वाश्छन्दोमा उभाभ्याꣳ रूपाभ्याꣳ सुवर्गं लोकं यन्ति(६)"-इति। रथन्तरबृहदाद्यनुक्रमगतानि पृष्ठस्तोत्राणि निष्पादनीयानि*। तथा चतुर्विंश-चतुश्चत्वारिंशाद्यनुक्रमगताश्छन्दोमा निष्पादनीयाः†। यद्यपि त्रिणवैकविंशदयत्रिणवस्तोमैस्तान्यहानि निष्पादनीयानीति शाखान्तरानुसारेण सूत्रे अभिहितम्, तथाप्यत्र वचनबलात् पवमानादिषु

* २०६ पृ० ९पं०, §टीप्पन्याद्य, पुन २३८ पृ० ४ पं० द्रष्टव्यानि।

† २६२ पृ० ३पं०। ऐ० ब्रा० ५ ३ १, ता० भा०, पुन ५.४.३।

‡ ३६४ पृ० २पं० "त्रिणवं वै एकविंशे त्रिणवं"-इति।

स्तोत्रेषु चतुर्विंशादयश्छन्दोमा अनुक्रमेण प्रयोक्तव्या। एवं सत्युभाभ्या पृष्ठ्यच्छन्दोमरूपाभ्यां स्वर्गं प्राप्नुवन्ति॥

तमेत पृष्ठ्यच्छन्दोमविधिं प्रशंसति— "अमत्र वा एतद्यद्‌छन्दोम, यच्छन्दोमा भवन्ति, तेन सत्र देवता एव पृष्ठैरव रुन्धते, पशून् छन्दोमैरोजो वै वीर्यं, पृष्ठानि पशवश्छन्दोमा ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति(७)"–इति। पूर्ववद्व्याख्येयम् (३४२ पृ॰)॥

तान्येतानि मध्यवर्त्तीनि पृष्ठान्युभयतोऽवस्थितास्त्रयस्त्रिंशाश्च प्रकारान्तरेण प्रशंसति— "त्रयस्त्रयस्त्रिंशा अवस्ताद्भवन्ति, त्रयस्त्रयस्त्रिंशा परस्तान्, मध्ये पृष्ठान्युरो वै त्रयस्त्रिंशा आत्मा पृष्ठान्यात्मन एव, तद्यजमाना शर्म नह्यन्तेऽनार्त्यै(८)"–इति। य एतेऽधोवर्त्तिनस्त्रयस्त्रिंशा, ये चोपरिवर्त्तिन, ते सर्वेऽपि पुरुषशरीरस्य स्रोरोदेशस्थानीया, यानि तु मध्यवर्त्तीनि पृष्ठानि, तानि जीवात्मस्थानीयानि। 'तत्' तेनोभयविधानुष्ठानेन यजमाना स्वार्थं 'शर्म नह्यन्ते' सुखं बध्नन्ति, सम्पादयन्तीत्यर्थ। तच्च 'अनार्त्यै' दुःखविनाशाय भवति॥

उक्तेषु पृष्ठस्तोत्रेषु पर्यायेण सामद्वयमेव विधत्ते— "बृहद्रथन्तराभ्या यन्तीय वाव रथन्तरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती, ताभ्यामेव सुवर्गं लोक यन्ति, पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति, ये पराचीनानि पृष्ठान्युपयन्ति, प्रत्यङ् षडहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्ति(९)"–इति। पूर्ववद् (२४०पृ॰) व्याख्येयम्॥

अथोपान्त्य त्र्योविंशमहर्विधत्ते— "त्रिवृतोऽधि त्रिवृतमुप यन्ति

स्तोमानाꣳ सम्पत्त्यै प्रभवाय; ज्योतिरग्निष्टोमो भवत्ययं वाव स क्षयोऽस्मादेव तेन क्षयान्न यन्ति[१०]"–इति। आवृत्तः पृष्ठ्यः षडह-स्त्रयस्त्रिंशादिस्त्रिवृदन्तः। तथा सति द्वाविंशे दिने त्रिवृत्स्तोमः प्राप्नोति। तस्मात् त्रिवृत्स्तोमयुक्तादह्नोऽप्यूर्ध्वं त्रयोविंशदिने त्रिवृतमेवानुतिष्ठेयुः। तथा सति त्रिवृत्स्तोमस्य सान्तत्यादेषां स्तोमानां सम्पत्तिर्भवति। सा च सम्पत्तिर्यजमानस्य पुत्रादिप्रभवाय सम्पद्यते। स च त्रिवृत्स्तोमयुक्ताहर्विशेषो ज्योतिष्टोमः कार्यः; सप्तसंस्थारूपेऽग्निष्टोमे प्रथमसंस्थारूपं कुर्यादित्यर्थ.। अयमेव मनुष्य-लोकः सोऽग्निष्टोमरूपः 'क्षयः' निवासार्थो गृहविशेषः। तेनाग्नि-ष्टोमानुष्ठानेन 'अस्माद्' भूलोकवर्त्तिनः 'क्षयाद्' गृहात् 'न यन्ति' न विनश्यन्तीत्यर्थः॥

अथ क्रतुगतामहःसङ्ख्यां प्रशंसति– "चतुर्विꣳशतिरात्रो भवति; चतुर्विꣳशतिरर्द्धमासाः संवत्सरः, संवत्सरः सुवर्गो लोक, संवत्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो चतुर्विꣳशत्यक्षरा गायत्री, गा-यत्री ब्रह्मवर्चसं गायत्रियैव ब्रह्मवर्चसमव रुन्धते[११]"–इति। पूर्ववद् व्याख्येयम् (३८८पृ०)॥

अथोदयनीयमहर्विधत्ते– "अतिरात्रावभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै[१२]"–इति। पूर्वं विहितेन 'ज्योतिरतिरात्रो भवति'– इत्यनेन (३९०पृ० ७पं०) प्रायणीयेन सह निर्दिष्टं द्विवचनम्। वर्णसङ्ख्याया गायत्रीसाम्याद् ब्रह्मवर्चसफलत्वेन तत्परिग्रहः॥२॥

इति श्रीमायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः॥

---

कृष्णा वा इयमलोमकासीत्साकामयतौषधीभिर्वनस्पतिभिः प्र जायेयेति सैतास्त्रिꣳशतꣳ रात्रीरपश्यत्ततो वा इयमोषधीभिर्वनस्पतिभिः प्राजायत ये प्रजाकामाः पशुकामाः स्युस्त एता आसीरन् प्रैव जायन्ते प्रजया पशुभि[१]रियं वा अक्षुध्यत्सैतां विराजमपश्यत्तामात्मन्धित्वान्नाद्यमवारुन्धौषधीः ( १ )

वनस्पतीन् प्रजां पशून्तेनावर्द्धत सा जेमानं महिमानमगच्छद्य एवं विद्वाꣳस एता आसते विराजमेवात्मन्धित्वान्नाद्यमव रुन्धते* वर्द्धन्ते प्रजया पशुभिर्जेमानं महिमानं गच्छन्ति[२] ज्योतिरतिरात्रो भवति सुवर्गस्य लोकस्यानुख्यात्यै[३] पृष्ठ्यः षडहो भवति षड्वा ऋतवः षट् पृष्ठानि पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संवत्सरं ते संवत्सर एव ( २ )

प्रति तिष्ठन्ति[४] त्रयस्त्रिꣳशात् त्रयस्त्रिꣳशमुप यन्ति यज्ञस्य सन्तत्या अथो प्रजापतिर्वै त्रयस्त्रिꣳशः प्रजापतिमेवा रभन्ते प्रतिष्ठित्यै[५] त्रिणवो भवति विजित्या[६] एकविꣳशो भवति प्रतिष्ठित्या अथो रुचमेवात्मन्दधते[७] त्रिवृदग्निष्टुद्भवति पाप्मानमेव तेन निर्दहन्तेऽथो तेजो

* "रुन्धेते"—इति मु०-पाठ।

वै त्रिवृत्तेज एवात्मन्दधते[८] पञ्चदश इन्द्रस्तोमो भवतीन्द्रियमेवाव (३)

रुन्धते[९] सप्तदशो भवत्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायन्ते[१०] एकविंशो भवति प्रतिष्ठित्या अथो रुचमेवात्मन्दधते[११] चतुर्विंशो भवति चतुर्विंशतिरर्धमासाः संवत्सरः संवत्सरः सुवर्गो लोकः संवत्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो एष वै विषूवान्विषूवन्तो भवन्ति य एवं विद्वांस एता आसते[१२] चतुर्विंशात् पृष्ठान्युप यन्ति संवत्सर एव प्रतिष्ठाय (४)

देवता अभ्यारोहन्ति[१३] त्रयस्त्रिंशात्त्रयस्त्रिंशमुप यन्ति त्रयस्त्रिंशद्वै देवता देवतास्वेव प्रति तिष्ठन्ति[१४] त्रिणवो भवतीमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रति तिष्ठन्ति[१५] द्वावेकविंशौ भवतः प्रतिष्ठित्या अथो रुचमेवात्मन्दधते[१६] बह्वः षोडशिनो भवन्ति तस्माद्बह्वः प्रजासु वृषाणो[१७] यदेते स्तोमा व्यतिषक्ता भवन्ति तस्मादियमोषधीभिर्वनस्पतिभिर्व्यतिषक्ता[१८] (५)

व्यतिषज्यन्ते प्रजया पशुभिर्य एवं विद्वांस एता आसते[१९] ऽकॢप्ता वा एते सुवर्गं लोकं यन्त्युच्चावचान्हि स्तोमानुपयन्ति यदेत ऊर्ध्वाः कॢप्ता स्तोमा भवन्ति

कृता एव सुवर्गं लोकं यन्त्युभयोरेभ्यो लोकयोः कल्पते[२०] त्रिꣳशदेतास्त्रिꣳशदक्षरा विराडन्नं विराड्विराजै-वान्नाद्यमव रुन्धते[२१] ऽतिरात्रावभितो भवतोऽन्नाद्यस्य परिगृहीत्यै[२२] ॥ ३ ॥

ओषधी[१]रेवाव[१,२]* प्रतिष्ठाय[७] व्यतिषक्तै[४]कान्न-पञ्चाशच्च ॥ ३ ॥

द्वितीये द्वितीयश्चतुर्विंशतिरात्रोऽभिहितः, अथ तृतीये त्रिंशद्रात्रोऽभिधीयते†। तमेतं विधत्ते— "त्वचा वा इयमलोमकासीत्, साकामयतौषधीभिर्वनस्पतिभिः प्र जायेयेति, सैतास्त्रिꣳशतꣳ रात्रीरपश्यत्, ततो वा इयमोषधीभिर्वनस्पतिभिः प्राजायत; ये प्रजाकामाः पशुकामाः स्युस्त एता आसीरन्, प्रैव जायन्ते प्रजया पशुभि.[१]"—इति। ओषधयो वनस्पतयश्च पृथिव्या लोमानि, तद्रहितत्वात् कदाचित् इयम् 'त्वचा' परुषा आसीत्। तत ओषधिवनस्पत्युत्पादनं कामयित्वा त्रिंशद्रात्रयागानुष्ठानेनोत्पादयामास। एवमन्येऽपि तदनुष्ठानेन प्रजाः पशूंश्चोत्पादयन्ति। समुदायप्राधान्यं परित्यज्य प्रत्येकप्राधान्यविवक्षया रात्रीरिति बहुवचननिर्देशः॥

अथान्नप्राप्त्यर्थं तमेव क्रतुं विधत्ते— "इयं वा अक्षुध्यत्सैतां विराजमपश्यत्, तामात्मन्धित्वान्नाद्यमवारुन्धौषधीर्वनस्पतीन् प्रजां पशून्

* "ओषधी[१]मन्तसुर एवावं[२,२]"—इति क, ख, ग।

† सामब्राह्मणे तु चतुर्विंशतिरात्रश्रवणादनन्तरं पञ्चविंशतिरात्राद्यभिधेयानि च पञ्च सत्राणि श्रूयन्ते (ता० ब्रा० २३ प्र० २१—२५ ख०)। ततोऽन्नाद्यफलसाधनमेतत्त्रिंशद्रात्रसत्र मप्याम्नातम् (२६ ख०)।'

तेनावर्द्धत, सा जेमानं महिमानमगच्छद्य एवं विद्वाऽस्र एता आसते, विराजमेवात्मन्विलाप्यान्नाद्यमव रुन्धते, वर्द्धन्ते प्रजया पशुभिर्जेमानं महिमानं गच्छन्ति[२]"-इति। 'इयं' भूमि', अन्नाभावात्कदाचित् क्षुधिताभूत्। ततस्तत्परिहार विचार्य 'एतां' त्रिंशद्रात्रिरूपां विराजमपश्यत्। त्रिंशदक्षरसाम्याद्विराट्त्वं। 'तां' च विराज स्वमनसि स्थापयित्वा तदनुष्ठानेनान्नं प्राप्तवती। तच्चान्नमुदकतृणौदनरूपेण बहुविधम्। तेनौषधादीनवर्द्धयत। वर्द्धयित्वा च सर्वत्र पूज्यत्वलक्षणं महित्वञ्च प्राप्नोत्। एवमन्येऽपि तदनुष्ठानेन तत्फलञ्च प्राप्नुवन्ति॥

तत्र प्रथममहर्विधत्ते— "ज्योतिरतिरात्रो भवति, सुवर्गस्य लोकस्यानुख्यात्यै[३]"-इति॥

अथानन्तरभावीनि षट्सङ्ख्याकान्यहानि विधत्ते— "पृष्ठ्य' षडहो भवति, षड्वा ऋतव', षट् पृष्ठानि, पृष्ठैरेवर्त्तूनन्वारोहन्त्यृतुभि. संवत्सरं, ते संवत्सर एव प्रति तिष्ठन्ति[४]"-इति। गतम् (३६१ पृ० १७ प०)॥

अथाष्टममहर्विधत्ते— "त्रयस्त्रिꣳशात्त्रयस्त्रिꣳशमुप यन्ति, यज्ञस्य सन्तत्या, अथो प्रजापतिर्वै त्रयस्त्रिꣳश', प्रजापतिमेवा रभन्ते प्रतिष्ठित्यै[५]"-इति। पृष्ठ्यषडहे यदन्तिममह', तदेदत्त्रयस्त्रिंशम्। तस्मादूर्द्ध्वं पुनस्त्रयस्त्रिंशानुष्ठानेन सजातीयत्वेन यज्ञस्य सान्तत्यं भवति। अपि च त्रयस्त्रिंशस्य प्रजापतिना सृष्टत्वात्तद्रूपत्वम्, तेन तदनुष्ठायिनः प्रजापतिमेवानुतिष्ठन्ति, तच्च प्रतिष्ठार्थं भवति॥

अथ नवममहर्विधत्ते—"त्रिणवो भवति, विजित्यै[६]"-इति। अन्यच*

* तै० ब्रा० २अ० २प्र० ३अ० (६)।

"त्रिणवेन स्तोमेनैभ्यो लोकेभ्योऽसुरान् प्राणुदत"–इति श्रवणात् त्रिणवो जयहेतुः ॥

अथ दशममहर्विधत्ते–"एकविंशो भवति, प्रतिष्ठित्या अथो रुचमेवात्मन्दधते(७)"–इति। अन्यत्र* "प्रतिष्ठा वा एकविंशः"–"रुग्वा एकविंशः"–इतिश्रवणादुभयप्राप्तिः ॥

अथैकादशमहर्विधत्ते– "त्रिवृदग्निष्टुद्भवति, पाप्मानमेव तेन निर्दहन्ते, ऽथो तेजो वै त्रिवृत्तेज एवात्मन् दधते(८)"–इति। अग्निरेव यत्र स्तूयते, सः 'अग्निष्टुत्'। अतोऽग्निसामर्थ्यात्पापदाहः, त्रिवृत्सामर्थ्यात् कान्तिप्राप्तिः ॥

अथ द्वादशमहर्विधत्ते–"पञ्चदश इन्द्रस्तोमो भवतीन्द्रियमेवाव रुन्धते(९)"–इति। इन्द्र एव यत्र स्तूयते, सोऽयम् 'इन्द्रस्तोमः'। तेनेन्द्रियप्राप्तिः ॥

अथ त्रयोदशमहर्विधत्ते–"सप्तदशो भवत्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायन्ते(१०)"–इति। सप्तदशस्तोमस्यान्नप्रजाहेतुत्वादुभयप्राप्तिः ॥

अथ चतुर्दशमहर्विधत्ते–"एकविंशो भवति, प्रतिष्ठित्या; अथो रुचमेवात्मन् दधते(११)"–इति। पूर्ववद् (२पं०) व्याख्येयम् ॥

अथ पञ्चदशमहर्विधत्ते–"चतुर्विंशो भवति, चतुर्विंशतिरर्द्धमासाः संवत्सरः, संवत्सरः सुवर्गो लोकः, संवत्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो एष वै विषूवान्, विषूवन्तो भवन्ति य एवं विद्वांस एता आसते(१२)"–इति। सद्वामास्यादर्द्धमाससंवत्सरद्वारा स्वर्गे प्रतिष्ठा। अपि चायमहर्विशेषो 'विषूवान्' विविधा स्तुतिः फलोत्प-

* "सम् वा०–०प्रतिष्ठा ह्येकविंश"–इति ३६१ पृ०।

त्तिरिति विद्यू, तद्वानयम्। तस्मादेव विदित्वानुष्ठातारोऽपि विविधफलोत्पत्तिमन्तो भवन्ति ॥

अथ षोडशमारभ्यैकविंशतिपर्यन्तानि षट्सङ्ख्याकान्यहानि विधत्ते— "चतुर्विंशात् पृष्ठान्युप यन्ति, संवत्सर एव प्रतिष्ठाय देवता अभ्यारोहन्ति[१३]"–इति। प्रतिष्ठाहेतुसंवत्सरात्मकचतुर्विंशस्तोमयुक्तादह्न ऊर्द्ध्वं पृष्ठ्यषडहानुष्ठाने सति प्रथमसंवत्सरे प्रतिष्ठां प्राप्य पश्चात् षड्भिरहोभिरारभ्य देवता प्राप्नोति ॥

अथ द्वाविंश दिन विधत्ते— 'त्रयस्त्रिंशात्त्रयस्त्रिंशमुप यन्ति त्रयस्त्रिंशद्वै देवता देवतास्वेव प्रति तिष्ठन्ति[१४]'–इति। पृष्ठ्ये षडहे अन्तिम त्रयस्त्रिंशमह, तस्मादूर्द्ध्वं पुनरपि त्रयस्त्रिंशानुष्ठाने "ये देवा दिव्येकादश स्थ –इत्यादिमन्त्रोक्तासु* त्रयस्त्रिंशत्सङ्ख्याकासु देवतास्वेव प्रतिष्ठिता भवन्ति ॥

अथ त्रयोविंश दिन विधत्ते— 'त्रिणवो भवतीमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रति तिष्ठन्ति[१५]'–इति। नवसङ्ख्याविषयया त्रिसङ्ख्यया समानत्वाल्लोकत्रये प्रतिष्ठा ॥

अथ त्रयोविंशचतुर्विंशदिने द्वे विधत्ते— "द्वावेकविंशौ भवत, प्रतिष्ठित्या अथो रुचमेवात्मन् दधते[१६]"–इति। पूर्ववद् (४०२पृ०३प०) व्याख्येयम् ॥

अथ पञ्चविंशदिनमारभ्यैकोनत्रिंशपर्यन्तानि पञ्चाहानि विधत्ते—

---

* स चाय मन्त्र (ऋ० स० १ १३९ ११)—
'ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ।
अप्सु क्षितो महिनैकादश स्थ ते देवासो यज्ञ मिम जुषध्वम्॥" इति।

"बह्वः षोडशिनो भवन्ति, तस्माद्बह्वः प्रजासु वृषाणः(१०)"–इति। षोडशस्तोत्रयुक्ता अहर्विशेषाः 'षोडशिनः'। ते च 'बह्वः' नैरन्तर्येणाच पञ्चैवानुष्ठेयाः, तावतैवापेक्षितसङ्ख्यायाः पूरितत्वात्। यस्मात् प्रजोत्पत्तिहेतवः षोडशिनोऽत्र बह्वोऽनुष्ठिताः, 'तस्मात्' लोके 'प्रजासु' मध्ये 'वृषाणः' पुंस्त्वधर्मयुक्ताः बह्वो दृश्यन्ते॥

एतेभ्यः षोडशिभ्य ऊर्द्ध्वदिनेष्वनुष्ठितान् परस्परविलक्षणान् स्तोमान् प्रशंसति– "यदेते स्तोमा व्यतिषक्ता भवन्ति, तस्मादियमोषधीभिर्वनस्पतिभिर्व्यतिषक्ता(१८)"–इति। यस्मादेते स्तोमा न्यूनाधिकभावेन सङ्कीर्णाः, 'तस्माद्' भूमिरपि व्यवस्थामन्तरेणौषधीभिर्वनस्पतिभिश्च सर्वत्र सङ्कीर्णा दृश्यते॥

स्तोमव्यतिषङ्गवेदनं प्रशंसति– "व्यतिषज्यन्ते प्रजया पशुभिर्य एवं विद्वा९स एता आसते(१९)"–इति। 'एताः' त्रिंशद्रात्रीर्येऽनुतिष्ठन्ति, तेषां मध्ये एकस्य प्रजा, अपरस्य पशव एवेति व्यवस्था नास्ति, किन्तु सर्वेऽपि प्रजया पशुभिश्च सङ्कीर्णा भवन्ति॥

अथ षोडशेभ्यहस्सु एकविधस्तोमान् प्रशंसति– "अक्लृप्ता वा एते सुवर्गं लोकं यन्त्युच्चावचान् हि स्तोमानुपयन्ति; यदेत ऊर्द्ध्वाः क्लृप्ता स्तोमा भवन्ति, क्लृप्ता एव सुवर्गं लोकं यन्त्युभयोरेभ्यो लोकयोः कल्पते(२०)"–इति। ये यजमानाः पूर्वेषु दिनेषु 'उच्चावचान्' परस्परविलक्षणान् स्तोमाननुतिष्ठन्ति, ते यजमानाः 'अक्लृप्ता वै' इदमेतावत्तव भोग्यमित्येवं निश्चयरहिता एव, स्वर्गं प्राप्नुवन्ति। तस्मात् 'क्लृप्ताः' क्लृप्तोभयविधस्तोमानुष्ठानादेतद्यजमानार्थमुभयोर्लोकयोर्भोग्यं क्लृप्तं भवति॥

अथ क्रतुगतामहस्सङ्ख्यां प्रशंसति— "त्रि२शदेतास्त्रि२शदक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धते[११]"–इति। गतम् (३४१ पृ०)॥

अथान्तिममहर्विधत्ते— "अतिरात्रावभितो भवतोऽन्नाद्यस्य परिगृहीत्यै[१२]"–इति। प्रायणीयेन सह निर्देशाद् द्विवचनम्*। अन्नाद्यफलस्य विधिवाक्ये दृष्टत्वात्† तत्परिग्रहः॥ ३॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाकः॥

---

प्रजापतिः सुवर्गं लोकमैत्तं देवा येनयेन च्छन्दसानु प्रायुञ्जत तेन नाप्नुवन् त एता द्वात्रि२शत२ रात्रीरपश्यन् द्वात्रि२शदक्षरानुष्टुगानुष्टुभः प्रजापतिः स्वेनैव च्छन्दसा प्रजापतिमाप्ताभ्यारुह्य सुवर्गं लोकमायन् य एवं विद्वा२स एता आसते द्वात्रि२शदेता द्वात्रि२शदक्षरानुष्टुगानुष्टुभः प्रजापतिः स्वेनैव च्छन्दसा प्रजापतिमाप्ता श्रियं गच्छन्ति (१)

श्रीर्हि मनुष्यस्य सुवर्गो लोको[१] द्वात्रि२शदेता

---

* 'अतिरात्रौ' प्रायणीयोदयनीयात्मकाविति भाव। ३५३पृ० द्रष्टव्यम्।

† "अन्नाद्यमवारुन्धत"–इति ३९८पृ० ६पं०।

द्वाचिं॑ꣳशदक्षरानु॒ष्टुग्वाग॑नु॒ष्टुप् सर्वा॑मे॒व वाच॑माप्नुवन्ति सर्वे॑ वा॒चो व॑दि॒तारो॑ भवन्ति सर्वे॑ हि श्रिय॑ गच्छ॑न्ति[१] ज्योति॒र्गौरा॒यु॒रिति॑ त्र्य॒हा भ॑वन्त्ती॒यं वाव ज्योति॑र॒न्त-रि॑क्षं गौर॒सावा॒यु॒रि॒माने॒व लो॒कान॒भ्यारो॑हन्त्यभि-पू॒र्वं त्र्य॒हा भ॑वन्त्यभिपू॒र्वमे॒व सु॑व॒र्गं लो॒कम॒भ्यारो॑हन्ति[२] बृहद्रथन्त॒राभ्यां॑ यन्ति (२)

इ॒यं वाव र॑थन्त॒रम॒सौ बृ॑ह॒दा॒भ्यामे॒व य॒न्त्यथो॑ अ॒नयो॑रे॒व प्रति॑ तिष्ठन्त्ये॒ते वै य॒ज्ञस्या॑ञ्जसाय॑नी सृ॒ती ताभ्या॑मे॒व सु॑व॒र्गं लो॒कं य॑न्ति[३] परा॑ञ्चो वा ए॒ते सु॑व॒र्गं लो॒कम॒भ्यारो॑हन्ति ये परा॑चस्त्र्य॒हानु॑प॒यन्ति॑ प्र॒त्यङ् त्र्य॒हो भ॑वति प्र॒त्यव॑रूढ्या॒ अथो॒ प्रति॑ष्ठित्या उ॒भयो॑र्लो॒क-यो॑रृ॒द्ध्वोत्ति॑ष्ठन्ति[४] द्वाचिं॑ꣳशदे॒तास्तासां॒ यास्त्रिꣳशत्त्रिꣳ-श॒द॑क्षरा* (३)

वि॒राड॒न्नं॑ वि॒राड्वि॒राजै॒वान्नाद्य॒मव॑ रुन्धते॒ ये द्वे॑ अ॑होरा॒त्रे ए॒व ते उ॒भाभ्या॑ꣳ रू॒पाभ्या॑ꣳ सुव॒र्गं लो॒कं य॑[५]न्त्यतिरा॒त्राव॒भितो॑ भवतः॒ परि॑गृहीत्यै[६] ॥ ४ ॥

ग॒च्छ॒न्ति॒ [५]य॒न्ति॒ [५]त्रिꣳश॒द॑क्षरा॒[६]द्वावि॑ꣳशतिश्च ॥ ४ ॥

तृतीयेऽनुवाके त्रिंशद्रात्रोऽभिहितः, अथ चतुर्थे द्वात्रिंशद्रात्रो-

* "यास्त्रिꣳशत्त्रिꣳशदक्षरा"—इति मु०-पाठः।

ऽभिधीयते * । तमिमं विधत्ते— "प्रजापतिः सुवर्गं लोकमैत्; तं देवा येन-येन च्छन्दसानुप्रायुञ्जत, तेन नाप्नुवन्, त एता द्वात्रिꣳशतꣳ रात्रीरपश्यन्; द्वात्रिꣳशदक्षरानुष्टुगानुष्टुभ. प्रजापतिः स्वेनैव च्छन्दसा प्रजापतिमाप्त्वाभ्यारुह्य सुवर्गं लोकमायन्; य एवं विद्वाꣳस एता आसते, द्वात्रिꣳशदेता द्वात्रिꣳशदक्षरानुष्टुगानुष्टुभः प्रजापतिः स्वेनैव च्छन्दसा प्रजापतिमाप्त्वा श्रियं गच्छन्ति; श्रीर्हि मनुष्यस्य सुवर्गो लोकः[७]"–इति। यदा प्रजापतिः स्वर्गं प्राप्नोत्, तदा प्रजापतिं स्वर्गं गच्छन्तं वयमप्यनुप्राप्नुम इति मन्यमाना देवाः, येन-येन च्छन्दसा युक्तं यज्ञमन्वतिष्ठन्त, तेन सर्वेणापि नाप्नुवन्। ततस्ते देवा द्वात्रिंशद्रात्रं तत्साधनत्वेनानुष्ठितवन्तः। तत्सङ्ख्याया अनुष्टुभि विद्यमानत्वात्प्रजापतेश्च मन्त्रराजानुष्टुभा सर्वस्रष्टृत्वस्य तापनीये श्रुतत्वादेन मानुष्टुभं प्रजापतिं तदीयेनैव द्वात्रिंशदक्षरेण छन्दसा प्राप्य, स्वर्गमभ्यारुह्य, तत्र भोगान् प्राप्नुवन्तः। एवमन्येऽपि यजमानास्तदनुष्ठानेन प्रजापतिं प्राप्य, तदनुग्रहाच्छ्रियं गच्छन्ति। न चात्र स्वर्गोऽनुक्त इति शङ्कनीयम्, यस्मान्मनुष्यस्य श्रीरेव देवता स्वर्गः॥

क्रतुगतामहस्सङ्ख्यां प्रशंसति— "द्वात्रिꣳशदेता द्वात्रिꣳदक्षरानुष्टुग्वागनुष्टुप् सर्वामेव वाचमाप्नुवन्ति, सर्वे वाचो वदितारो भवन्ति; सर्वे हि श्रियं गच्छन्ति[९]"–इति। 'एताः' क्रतुगता रात्रयो द्वात्रिंशत्सङ्ख्याकाः, अनुष्टुप्यक्षरसङ्ख्यापि तावती; अनुष्टुप् च वाग्विशेष-

* सामवेदे तु त्रिंशद्रात्रसत्रादनन्तरमन्नाद्यसाधनं प्रजापतेरेकत्रिंशद्रात्रं सत्रमप्याम्नातम् ( ता॰ ब्रा॰ २३प्र॰ २०ख॰ ), ततः पशुसाधनं द्वात्रिंशद्रात्र मपि।

रूपत्वादागेव। तस्मादेतदनुष्ठानेन 'वाच' वेदशास्त्रादिरूपां सर्वामपि 'प्राप्नुवन्ति',— सर्वेऽपि यजमानाः सभारञ्जनाय वाचं वदितु समर्था भवन्ति। तेन वक्तृत्वेन पूज्यत्वलक्षणां 'श्रियम्' अपि प्राप्नुवन्ति॥

अथाहानि विधत्ते— "ज्योतिर्गौरायुरिति त्र्यहा भवन्तीय वाव ज्योतिरन्तरिक्षं गौरसावायुरिमानेव लोकानभ्यारोहन्त्यभिपूर्वं त्र्यहा भवन्त्यभिपूर्वमेव सुवर्गं लोकमभ्यारोहन्ति(१)"–इति। 'त्र्यहा.'–इति बहुवचननिर्देशाद्यावद्भिरपेक्षितसङ्ख्यापूर्त्तिस्तावन्तोऽनुष्ठेयाः। अत्र च नवसङ्ख्यया तत्पूर्त्तेर्नवैवानुष्ठेयाः। ते सर्वेऽप्यानुलोम्येनानुष्ठेयाः, तथा सत्यनुक्रमेणैव स्वर्गं प्राप्नुवन्ति॥

अथैतेषु सप्तविंशतिदिनेषु पृष्ठस्तोत्रार्थं सामद्वयमेव पर्यायेण विधत्ते— "बृहद्रथन्तराभ्यां यन्तीय वाव रथन्तरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती, ताभ्यामेव सुवर्गं लोकं यन्ति(४)"–इति॥

अथ प्रातिलोम्येनानुष्ठेयमेकं त्र्यहं विधत्ते— "पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति, ये पराचस्त्र्यहानुपयन्ति, प्रत्यङ् त्र्यहो भवति, प्रत्यवरुह्या अथो प्रतिष्ठित्या, उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्ति(५)"–इति। पूर्ववद् (३४०पृ०) व्याख्येयम्॥

क्रतुगतदिनसङ्ख्या पूर्वं समूहरूपेण प्रशस्ता, इदानीं विभज्य प्रशंसति— "द्वात्रिꣳशदेतास्तासां यास्त्रिꣳशत्त्रिꣳशदक्षरा विराडन्नं विराड्, विराजैवान्नाद्यमव रुन्धते, ये द्वे अहोरात्रे एव ते उभाभ्याꣳ रूपाभ्याꣳ सुवर्गं लोकं यन्ति(६)"–इति। अत्र त्रिंशत्सङ्ख्यया विराड्द्वाराऽन्नप्राप्तिः, उपरितनया द्विसङ्ख्यया अहोरात्ररूपाभ्यां स्वर्गप्राप्तिः॥

अथ प्रायणीयोदयनीयौ विधत्ते— "अतिरात्रावभितो भवतः परिगृहीत्यै[७]"—इति ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥

---

द्वे वाव देवसत्रे द्वादशाहश्चैव त्रयस्त्रिꣳशदहश्च य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते साक्षादेव देवता अभ्यारोहन्ति यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति यद्यवविध्यति पापीयान् भवति यदि नावविध्यति सदृङ् य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते वि पाप्मना भ्रातृव्येणा वर्त्तन्ते[१]ऽहर्भाजो वा एता देवा अग्र आहरन् (१)

अहरेकोऽभजताहरेकस्ताभिर्वै ते प्रबाहुगार्ध्नुवन् य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते सर्व एव प्रबाहुगृध्नुवन्ति सर्वे ग्रामणीयं प्राप्नुवन्ति[१] पञ्चाहा भवन्ति पञ्च वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठन्त्यथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धते[१] त्रीण्याश्विनानि भवन्ति त्रय इमे लोका एषु (२)

एव लोकेषु प्रति तिष्ठन्त्यथो त्रीणि वै यज्ञस्येन्द्रियाणि तान्येवाव रुन्धते[१] विश्वजिद्भवत्यन्नाद्यस्यावरुद्ध्यै[१] सर्व-

पृष्ठो भवति सर्वस्याभिजित्यै[1] वाग्वै द्वादशाहो यत्-
पुरस्ताद् द्वादशाहमुपेयुरनाप्तां वाचमुपेयुरुपदासुकैषां
वाक् स्यादुपरिष्टाद् द्वादशाहमुप यन्त्याप्तामेव वाचमुप
यन्ति तस्मादुपरिष्टाद्वाचा वदामो[2] ऽवान्तरम् (२)
वै दशरात्रेण प्रजापतिः प्रजा असृजत यद्दशरात्रो
भवति प्रजा एव तद्यजमानाः सृजन्त[3] एताꣳ ह वा
उदङ्कः शौल्बायनः* सत्रस्यर्द्धिमुवाच यद्दशरात्रो यद्द-
शरात्रो भवति सत्रस्यर्द्ध्या अथो यदेव पूर्वेष्वहस्सु विलोम
क्रियते तस्यैवैषा शान्ति[4]र्द्व्यनीका वा एता रात्रयो यज-
माना विश्वजित्सहातिरात्रेण पूर्वाः षोडश सह (४)
अतिरात्रेणोत्तराः षोडश य एवं विद्वाꣳसस्त्रयस्त्रिꣳ-
शदहमासते एषां द्व्यनीका प्रजा जायते[10]ऽतिरात्रा-
वभितो भवतः परिगृहीत्यै[11] ॥ ५ ॥

अहरन्नेदवान्तरꣳ[1, 2, 3] सह †[4]सप्तदश च ॥ ५ ॥

चतुर्थेऽनुवाके द्वात्रिंशद्रात्रोऽभिहितः, अथ पञ्चमे त्रयस्त्रिंश-
द्रात्रोऽभिधीयते‡। तमिमं विधत्ते—"द्वे वाव देवसत्रे,—द्वाद-

---

* "शौल्वायन"—इति क, ग।

† "षोडश सह[४]"—इति क, ख, ग।

‡ सामवेदे प्रतिष्ठासाधनमेकं त्रयस्त्रिंशदाख्यसत्रम, अपरं समृद्धिसाधनम्, अन्यच्चास्ति सर्वकामसाधनमिति बोध्यं (ता० ब्रा० २४ १ १)।

अथ आहरत्नहरेकोऽभजताहरेकस्ताभिर्वै ते प्रबाहुगार्ध्नुवन्; य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते, सर्वं एव प्रबाहुगृध्नुवन्ति, सर्वे ग्रामणीयं प्राप्नुवन्ति[१]"-इति। अहानि भजन्ते अनुतिष्ठन्त इति 'अहर्भाज', तादृशा देवाः 'एताः' त्रयस्त्रिंशत्सङ्ख्याका रात्रीः सम्पादितवन्तः। कथमिति तदुच्यते,— एको देव एकमहरन्वतिष्ठत्, पुनरप्येको देवोऽन्यदहरन्वतिष्ठत्; एव त्रयस्त्रिंशत्सङ्ख्याका देवास्तत्स-ङ्ख्याकान्यहान्यन्वतिष्ठन्, ताभिरनुष्ठिताभिः रात्रिभिरेव ते सर्वेऽपि देवा', 'प्रबाहुगार्ध्नुवन्' समं यथा भवति तथा समृद्धिं प्राप्नुवन्, न तेकोऽपि तन्मध्ये समृद्धिविकल'। एवं यजमाना अपि सर्वे साम्येन समृद्धिं प्राप्नुवन्ति। सैव समृद्धिः स्पष्टीक्रियते,— सर्वे 'ग्रामणीयं' ग्रामस्वामित्वं प्राप्नुवन्ति॥

अथाहानि विधत्ते—"पञ्चाहा भवन्ति; पञ्च वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठन्त्यथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धते[२]"-इति। ज्योतिर्गौरायुरित्येवंविधो द्विरावृत्त-स्त्र्यहो द्वितीयज्योतिर्विवर्जितः 'पञ्चाह.'। तादृशाश्च पञ्चाहा याव-न्तोऽपेक्षितास्तावन्तोऽनुष्ठेयाः। इह तु चतुर्भिरपेक्षितसङ्ख्यापूरणा-शत्वारो विधीयन्ते। हेमन्तशिशिरयोरैक्यात्पञ्चसङ्ख्याका ऋतव *, तद्द्वारेण संवत्सरे प्रति तिष्ठन्ति। किञ्च पञ्चसङ्ख्याया† पङ्क्तिद्वारेण यज्ञं प्राप्नुवन्ति॥

मायणीयोदयनीययोरतिरात्रयोर्मध्ये‡ चातिरात्रे शस्त्राणि विधत्ते

---

* "हेमन्तशिशिरयो समासेन"-इति ऐ० ब्रा० १.१.१।

† "पञ्चसङ्ख्यया"-इति ख। ‡ "०र्मध्ये"-इति ख।

—"त्रीण्याश्विनानि भवन्ति; त्रय इमे लोका एष्वेव लोकेषु प्रति तिष्ठन्त्यथो त्रीणि वै यज्ञस्येन्द्रियाणि तान्येवाव रुन्धते[४]"—इति। आश्विनेन ग्रहेणोपलक्षितान्यहानि त्रीण्यनुष्ठेयानि। तेन लोकत्रये प्रतिष्ठिता भवन्ति। किञ्च यज्ञस्येन्द्रियस्थानानि सवनानि त्रीणि, तान्यपि प्राप्नुवन्ति ॥

अन्यदहर्विधत्ते—"विश्वजिद्भवत्यन्नाद्यस्यावरुद्ध्यै[५]"—इति। विश्वजयहेतोरन्नहेतुत्वं सुलभम् ॥

तमेव विश्वजितं विशिनष्टि—"सर्वपृष्ठो भवति सर्वस्याभिजित्यै[६]"—इति। रथन्तरबृहदादीनि षट्सङ्ख्याकानि पृष्ठानि सर्वाण्यपि यस्यासौ 'सर्वपृष्ठः'। तेन सर्वमपि फलं भवति ॥

अथान्यान्यहानि विधत्ते—"वाग्वै द्वादशाहो यत्पुरस्ताद्द्वादशाहमुपेयुरनाप्तां वाचमुपेयुरुपदासुकैषां वाक् स्यादुपरिष्टाद्द्वादशाहमुप यन्त्याप्तामेव वाचमुप यन्ति तस्मादुपरिष्टाद्वाचा वदामः[७]"—इति। बहुविधस्तोत्रशस्त्रोपेतत्वाद्द्वादशाहो वाग्रूपः। तथाविधं द्वादशाहं यद्यमुभ्योऽहोभ्यः पूर्वमनुष्ठेयुः, तदानीं तत्रत्यानां स्तोत्रशस्त्राणामनुक्तत्वाद् 'अनाप्ताम्' असम्पूर्णां वाचमुपेयुः प्राप्नुयुः, तेषां यजमानानां वागुपक्षयशीला स्यात्। तस्मादमुभ्योऽहोभ्य ऊर्द्ध्वं द्वादशाहमनुतिष्ठेयुः। तस्माद् 'आप्तां' सम्पूर्णामेव वाचं प्राप्नुवन्ति। यस्मादूर्द्ध्वभागे वाग्रूपस्य द्वादशाहस्यानुष्ठानम्, तस्मात्कारणादस्माभिरुपरिष्टान्मुखेन वयं वाचा वदामः ॥

अत्र द्वादशाहशब्देन प्रायणीयोदयनीयौ वर्जयित्वा अवशिष्टस्य दशरात्रस्य विवक्षां दर्शयति—"अवान्तरं वै दशरात्रेण प्रजापतिः

प्रजा असृजत, यद्दशरात्रो भवति, प्रजा एव तद्यजमानाः सृजन्ते(८)"—इति। 'अवान्तरं वै' द्वादशाहस्यावयवभूतेनैव दशरात्रेण पुरा कदाचित् प्रजापतिः प्रजा असृजत, अतो यदा दशरात्रो भवेत्, तदा तेन यजमानाः प्रजाः सृजन्ते ॥

तमेव दशरात्रं पुनः प्रशंसति—"एताꣳ ह वा उदङ्कः शौल्बायनः सत्त्रस्यर्द्धिमुवाच यद्दशरात्रो, यद्दशरात्रो भवति सत्त्रस्यर्द्ध्या अथो यदेव पूर्वेष्वहस्सु विलोम क्रियते तस्यैवैषा शान्तिः(९)"—इति। उदङ्को नामतः, स च शुल्बस्यापत्यभूतः। एतस्य सत्त्राङ्गभूतो योऽयं दशरात्रोऽस्ति, एतेन कृत्स्नस्य सत्त्रस्यैताम् 'ऋद्धिं' फलमुदङ्क उवाच। अतो यदि दशरात्रोऽनुष्ठीयते, तर्हि कृत्स्नसमृद्धिर्भवति। अपि च पूर्वेष्वहस्सु यदेवाङ्गं विकलमनुष्ठीयते, तस्य सर्वस्य 'एषा' दशरात्रानुष्ठितिरूपशमहेतुर्भवति ॥

इदानीं योऽयं विश्वजित्सर्वपृष्ठो विहितः, तस्य स्थानविशेषं विधत्ते—"द्व्यनीका वा एता रात्रयो यजमाना विश्वजित्सहातिरात्रेण पूर्वाः षोडश सहातिरात्रेणोत्तराः षोडश, य एवं विद्वाꣳसस्त्रयस्त्रिंशदहमासत, ऐषां द्व्यनीका प्रजा जायते(१०)"—इति। 'अनीकं' सेना, द्वे अनीके सेनारूपे यासां रात्रीणां ताः 'द्व्यनीकाः', सेनाद्वयसमाना इत्यर्थः। तत्र प्रायणीयातिरात्रेण सह षट् पञ्चाहाः षोडश पूर्वभाविन्यो रात्रयः एका सेना, उदयनीयेनातिरात्रेण सहैकः पञ्चाहो दशरात्रश्चेत्युत्तरभाविन्य एताः षोडशरात्रयो द्वितीया सेना। विश्वजिद् यजमानस्थानीयत्वादुभयपार्श्ववर्त्तिन्योः सेनयोर्मध्ये अवस्थितो राजेव, सप्तदशसङ्ख्यापूरके मध्यमदिने प्रयोक्तव्यः। एवं

विदित्वा क्रतुमनुतिष्ठतां यजमानानां बहुपुत्ररूपा बहुकन्यकारूपा च द्विविधा प्रजा सर्वतो जायते ॥

अथ प्रायणीयोदयनीयौ विधत्ते— "अतिरात्रावभितो भवतः परिगृहीत्यै[११]"–इति ॥ ५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥

---

आदित्या अकामयन्त सुवर्गं लोकमियामेति ते सुवर्गं लोकं न प्राजानन् न सुवर्गं लोकमायन् त एतꣳ षट्*त्रिꣳशद्रात्रमपश्यन् तमाहरन् तेनायजन्त ततो वै ते सुवर्गं लोकं प्राजानन्त्सुवर्गं लोकमायन् य एवं विद्वाꣳसः षट्त्रिꣳशद्रात्रमासते सुवर्गमेव लोकं प्र जानन्ति सुवर्गं लोकं यन्ति[१] ज्योतिरतिरात्रः (१) भवति ज्योतिरेव पुरस्ताद्दधते सुवर्गस्य लोकस्यानुख्यात्यै[२] षडहा भवन्ति षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठन्ति[३] चत्वारो भवन्ति चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठ[४]न्त्यसत्त्रं वा एतद्यदच्छन्दोमं यच्छन्दोमा भवन्ति तेन सत्त्रं देवता एव पृष्ठैरव रुन्धते पशून् छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव (२)

---

* "षट्"–इतीह सर्वत्रैव मु०-पाठ ।

वीर्ये॑ प॒शुषु॒ प्रति॑ तिष्ठन्ति[11] षट्त्रिं॒शद्रा॑त्रो भ॑वति षट्त्रिं॒शद॑क्षरा बृह॒ती बार्ह॑ताः प॒शवो॑ बृह॒त्यैव प॒शूनव॑ रुन्धते बृह॒तीच्छन्द॑सा॒ꣳ स्वारा॑ज्यमाश्नुवताश्नुवते॒ स्वारा॑ज्य॒ꣳ य ए॒वं वि॒द्वाꣳस॑ः षट्त्रिꣳशद्रा॒त्रमास॑ते सुव॒र्गमे॒व लो॒कं य॑[8]न्त्यतिरा॒त्राव॒भितो॑ भवतः सुव॒र्गस्य॑ लो॒कस्य॒ परि॑गृहीत्यै[9] ॥ ६ ॥

आ॒दि॒त्याः[1] ए॒व*[2] षट्त्रिꣳशच्च ॥ ६ ॥

पञ्चमेऽनुवाके त्रयस्त्रिंशद्रात्रोऽभिहितः, अथ षष्ठे षट्त्रिंशद्रात्रोऽभिधीयते। तमेतं विधत्ते— "आदित्या अकामयन्त सुवर्गं लोकमियामेति; ते सुवर्गं लोकं न प्राजानन्, न सुवर्गं लोकमायन्; त एतꣳ षट्त्रिꣳशद्रात्रमपश्यन्, तमाहरन्, तेनायजन्त, ततो वै ते सुवर्गं लोकं प्राजानन्त्सुवर्गं लोकमायन्; य एवं विद्वाꣳसः षट्त्रिꣳशद्रात्रमासते, सुवर्गमेव लोकं प्र जानन्ति, सुवर्गं लोकं यन्ति[1]"-इति। पुरा कदाचित् आदित्याः स्वर्गं लोकं गन्तुकामा मार्गमपश्यन्तो स्वर्गं न प्राप्ताः। ततस्तदुपायं विचार्य षट्त्रिंशद्रात्रं निश्चित्य तदनुष्ठानेन मार्गमवगत्य स्वर्गं प्राप्ताः। एवमन्येऽपि यजमानाः स्वर्गं प्राप्नुवन्ति ॥

---

* "ओजस्येव[२]"—इति क, ख, ग।

† सामवेदे चतुस्त्रिंशद्रात्रं पञ्चत्रिंशद्रात्रं चेत्यपि द्वे सत्रे विहिते; तत उत्तरं विहित मिदं षट्त्रिंशद्रात्रं पशुसाधनं स्वाराज्यसाधनञ्चेति (ता॰ ब्रा॰ २४. ४—६.)।

प्रायणीयमहर्विधत्ते— "ज्योतिरतिरात्रो भवति; ज्योतिरेव पुरस्ताद्धत्ते सुवर्गस्य लोकस्यानुख्यात्यै[२]"–इति ॥

अथोत्तराणि कानिचिदहानि विधत्ते— "षडहा भवन्ति; षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठन्ति[३]"–इति। ज्योतिर्गौरायुरायुर्गौर्ज्योतिरित्ययमेकोऽभिप्लवः षडहः। तादृशाः षडहा यावन्तोऽपेक्षितास्तावन्तोऽनुष्ठेयाः ॥

तेषां सङ्ख्यां विधत्ते— "चत्वारो भवन्ति; चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठन्ति[४]"–इति। चतुर्भिः षडहैरपेक्षिता सङ्ख्या पूर्यते ॥

अथ पृष्ठ्यः षडहश्चत्वारश्छन्दोमा इत्येवंविधं द्वादशाहस्य दशरात्रं विधत्ते— "अस्रत्रं वा एतद्यदच्छन्दोमं, यच्छन्दोमा भवन्ति, तेन सत्रं देवता एव पृष्ठैरव रुन्धते, पशून् छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव वीर्यं पशुषु प्रति तिष्ठन्ति[५]"–इति। पूर्ववद् (३४२पृ०) व्याख्येयम् ॥

क्रतुगतामहस्सङ्ख्यां प्रशंसति— "षट्चिश्शद्रात्रो भवति; षट्चिश्शदक्षरा बृहती, बार्हताः पशवो बृहत्यैव पशूनव रुन्धते, बृहतीच्छन्दसाꣳ स्वाराज्यमाश्नुताश्नुवते स्वाराज्यं य एवं विद्वाꣳसः षट्चिश्शद्रात्रमासते, सुवर्गमेव लोकं यन्ति[६]"–इति। पशूनां बार्हतत्वं चयनब्राह्मणे समाम्नातम्— "छन्दाꣳसि पशुष्वाजिमयुस्तान् बृहत्युदजयत्तस्माद्बार्हताः पशव उच्यन्ते"–इति *। किञ्च छन्दसां मध्ये बृहती स्वाराज्यं प्राप्तवती; तस्मादेतदनुष्ठायिनः इह स्वाराज्यं प्राप्य, परत्र स्वर्गं प्राप्नुवन्ति ॥

---

* तै० सं० ५. ३. १. ३ (५.भा० ६७पृ० ८पं०)।

अथोदयनीयं विधत्ते—"अतिरात्राावभितो भवतः, सुवर्गस्य लोकस्य परिगृहीत्यै ६)"–इति। प्रायणीयेन सह निर्दिष्टं द्विवचनम्। स्वर्गहेतुत्वस्य विधिवाक्ये स्पष्टत्वात् (४२६पृ०) तत्परिग्रहः॥ ६॥

इति श्रीमायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके षष्ठोऽनुवाकः॥

---

वसिष्ठो हतपुत्रोऽकामयत विन्देय प्रजामभि सौदासान् भवेयमिति स एतमेकस्मान्नपञ्चाशमपश्यत्तमाहरत्तेनायजत ततो वै सोऽविन्दत प्रजामभि सौदासानभवद्य एवं विद्वाꣳस एकस्मान्नपञ्चाशमासते विन्दते* प्रजामभि भ्रातृव्यान् भवन्ति(१) त्रयस्त्रिवृतोऽग्निष्टोमा भवन्ति वज्रस्यैव मुखꣳ सꣳ श्यन्ति(२) दश पञ्चदश भवन्ति पञ्चदशो वज्रः (१)

वज्रमेव भ्रातृव्येभ्यः प्र हरन्ति(३) षोडशिमद्दशममहर्भवति वज्र एव वीर्यं दधति(४) द्वादश सप्तदशा भवन्त्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तैर्जायन्ते(५) पृष्ठ्यः षडहो भवति षड्वा ऋतवः षट् पृष्ठानि पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संवत्सरं ते संवत्सर एव प्रति

* "विन्दन्ते"–इति क-ख-टीकापुस्तकयोः।

तिष्ठन्ति[९] द्वाद॑शैकवि॒ꣳशा भ॑वन्ति प्रति॑ष्ठित्या अथो॒ रुच॑मे॒वात्मन् (२)

द॒ध॒ते[७] ब॒हव॑: षोड॒शिनो॑ भवन्ति विजि॑त्यै[८] षडा॑-श्वि॒नानि॑ भवन्ति॒ षड्वा ऋ॒तव॑ ऋ॒तुष्वे॒व प्रति॑ तिष्ठ[९]-न्त्यूनातिरि॒क्ता वा ए॒ता रात्र॑य ऊ॒नास्तद्यदे॒क॑स्यै॒व प॑ञ्चा॒शदति॑रिक्ता॒स्तद्यद्भूय॑सीरष्टाच॑त्वारि॒ꣳशत ऊ॒नाश्च॒ खलु॒ वा अति॑रिक्ताश्च प्र॒जाप॑तिः प्राजा॑यत[१०] ये प्र॒जा-का॑माः प॒शुका॑माः स्यु॒स्त ए॒ता आ॑सीर॒न् प्रैव जा॑यन्ते प्र॒जया॑ (३)

प॒शुभि॑[११]र्वैरा॒जो वा ए॒ष य॒ज्ञो यदे॑कस्मान्नपञ्चा॒शो य ए॒वं वि॒द्वाꣳस॑ एकस्मान्नपञ्चा॒शमास॑ते वि॒राज॑मे॒व ग॑च्छन्त्यन्ना॒दा भ॑व[१२]न्त्यतिरा॒त्राव॒भितो॑ भव॒तोऽन्ना-द्य॑स्य॒ परि॑गृहीत्यै[१३] ॥ ७ ॥

वज्र॑[१] आ॒त्मन्[२] प्र॒जया॑[३] द्वावि॑ꣳशतिश्च ॥ ७ ॥

षष्ठे षट्त्रिंशद्रात्रोऽभिहितः, अथ सप्तमे एकोनपञ्चाशद्रात्रो-ऽभिधीयते*। तमेतं विधत्ते— "वसिष्ठो हतपुत्रोऽकामयत,—विन्देय

---

* सामवेदे तु सप्तत्रिंशद्रात्रम्, अष्टात्रिंशद्रात्रम्, एकोनचत्वारिंशद्रात्रम्, चत्वारिंशद्रात्रमदेति चत्वारि सत्राण्यभिधाय, सप्तविधपञ्चानि सप्तैकोन-पञ्चाशद्रात्रसत्राण्यभिहितानि ( ता० ब्रा० २४ ७—१७ )।

प्रजामभि सौदासान् भवेयमिति स एतमेकस्मान्नपञ्चाशमपश्यत्, तमाहरत्, तेनायजत, ततो वै सोऽविन्दत प्रजामभि सौदासानभवद्, य एवं विद्वाꣳस एकस्मान्नपञ्चाशमासते विन्दते प्रजामभि भ्रातृव्यान् भवन्ति[१] -इति। विश्वामित्रशापेन हतेषु पुत्रेषु प्रजां पुनर्लब्धुं कामयमानो वसिष्ठस्तदुपायत्वेनैकस्मान्नपञ्चाशं निश्चित्य, तदनुष्ठानेन प्रजां लब्ध्वा सौदासानभ्यभवत्। सुदासस्य पुत्राः सौदासाः, ते च वसिष्ठस्य शत्रवः। वसिष्ठवद्यजमाना अपि तदनुष्ठानेन प्रजां लब्ध्वा भ्रातृव्यानभिभवन्ति॥

अथाहानि विधत्ते—"त्रयस्त्रिवृतोऽग्निष्टोमा भवन्ति वज्रस्यैव मुखꣳ सꣳ श्यन्ति[२] -इति। त्रिवृत्स्तोमयुक्ता अग्निष्टोमरूपा अहर्विशेषास्त्रयः कर्त्तव्याः। 'त्रिवृतमेव वज्रꣳ सम्भृत्य भ्रातृव्याय प्रहरति'-इतिश्रुत्यन्तरात्* त्रिवृद्रूपस्य वज्रस्य मुखमनेन तीक्ष्णीकुर्वन्ति॥

अथान्यानि कानिचिदहानि विधत्ते—"दश पञ्चदशा भवन्ति पञ्चदशो वज्रो वज्रमेव भ्रातृव्येभ्यः प्र हरन्ति[३] -इति। पञ्चदशस्तोमयुक्ता अहर्विशेषा दशसंख्याकाः कर्त्तव्याः। 'तं पञ्चदशस्तोमो मध्यत उदसृजत्"-इत्येवमन्यत्र हिंसाहेतुत्वश्रवणात्† पञ्चदशस्य वज्रत्वम्॥

अथान्यदहर्विधत्ते —"षोडशिमद्दशममहर्भवति, वज्र एव वीर्यं दधति[४] '-इति। षोडशिस्तोत्रयुक्तं दशरात्रस्य दशममविवाक्यमेकमहः कार्यम्। तेन पूर्वोक्ते वज्रे वीर्यं स्थापयन्ति॥

अथान्यानि कानिचिदहानि विधत्ते —"द्वादश सप्तदशा भवन्त्य-

* तै॰ सं॰ २ ६ २ ५।  † तै॰ ब्रा॰ २ २ ३ १।

कायस्यावरुद्ध्या अथो प्रैव तैर्जायन्ते(५)"–इति। सप्तदशस्तोमयुक्ता अहर्विशेषा द्वादशसङ्ख्याकाः कार्याः। सप्तदशस्तोमस्योदरभागजन्यत्वादन्नहेतुत्वम्, सप्तदशाचरस्य प्रजापतिरूपत्वाच्च प्रजाहेतुत्वम्॥

अथ षट्सङ्ख्याकान्यहानि विधत्ते–"पृष्ठ्यः षडहो भवति, षड्वा ऋतवः, षट् पृष्ठानि, पृष्ठैरेवर्त्तूनन्वारोहन्त्यृतुभिः संवत्सरं, ते संवत्सर एव प्रति तिष्ठन्ति(६)"–इति॥

अथान्यानि कानिचिदहानि विधत्ते–"द्वादशैकविंशा भवन्ति प्रतिष्ठित्या अथो रुचमेवात्मन् दधते(७)"–इति। एकविंशस्तोमयुक्ता अहर्विशेषा द्वादश कर्त्तव्याः। एकविंशस्तोमस्य प्रतिष्ठाहेतुत्वं कान्तिहेतुत्वञ्चासकृदुक्तम्॥

अथान्यानि कानिचिदहानि विधत्ते–"बहवः षोडशिनो भवन्ति विजित्यै(८)"–इति। षोडशिस्तोत्रयुक्ता अहर्विशेषा यावन्तोऽपेचितास्तावन्तः कार्याः। अत्र विभिरपेक्षितसङ्ख्यायाः पूरणात् त्रयः कार्याः॥

एतत्क्रतुगतेषु षट्स्वहःस्वाश्विनशस्त्रं विधत्ते–"षडाश्विनानि भवन्ति; षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठन्ति(९)"–इति॥

एकोनपञ्चाशद्रूपं स्तौति–"ऊनातिरिक्ता वा एता रात्रय ऊनास्तद्यदेकस्यै पञ्चाशदतिरिक्तास्तद्यद्भूयसीरष्टाचत्वारिंशत ऊनाद्ध खलु वा अतिरिक्ताच्च प्रजापतिः प्राजायत(१०)"–इति। अस्मिन् क्रतौ विद्यमाना एता रात्रय ऊनाश्चातिरिक्ताश्च भवन्ति। कथमिति तदुच्यते–'यद्' यस्मात् कारणात् 'एकोनपञ्चाशत्' एकया रात्र्या वर्जिता पञ्चाशत्सङ्ख्या, तस्मादेता ऊनाः। 'यद्'

यस्मात् कारणादष्टाचत्वारिंशत्सङ्ख्या अधिका', तस्मादतिरिक्ता:। प्रजापति' पुरा कचित् 'ऊनात्' अल्पाद् वीर्यात् प्रौढशरीररूपाः प्रजा असृजत, कचिच्च 'अतिरिक्तात्' अधिकादाकाशादेरुत्तरोत्तर-न्यूनान् वाय्वादीनसृजत, तस्मादूनातिरिक्तरूपोऽयं क्रतु' प्रशस्तः॥

पूर्वं विधिवाक्येऽभिहितं (४१८पृ० १०पं०) फलमुपसंहरति— "ये प्रजाकामाः पशुकामाः स्युस्त एता आसीरन्, प्रैव जायन्ते प्रजया पशुभि[११]"–इति॥

क्रतुगतामहस्सङ्ख्यां प्रशंसति— "वैराजो वा एष यज्ञो यदेक-स्मान्नपञ्चाशो, य एवं विद्वाᳪंस एकस्मान्नपञ्चाशमासते विराजमेव गच्छन्त्यन्नादा भवन्ति[१२]"–इति। चतुर्दशकेषु दशसङ्ख्यासद्भावा-न्मुख्यवैराजत्वम्, पञ्चमस्य दशकस्यैकेन न्यूनत्वेऽपि वैराजत्वमुपचरितुं शक्यम्; "न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्"– इति* श्रुत्यन्तरात्॥

अतो वैराजत्वादन्नप्राप्तिं प्रायणीयोदयनीयौ विधत्ते— "अति-रात्रावभितो भवतोऽन्नाद्यस्य परिगृहीत्यै[१३]"–इति। उक्तन्याये-नान्नहेतुत्वादन्नपरिग्रहः॥७॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके सप्तमोऽनुवाक'॥

---

संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्नेषा वै संवत्सरस्य पत्नी यदेकाष्टकैतस्यां वा एष एताᳪं रात्रिं

---

* ऐ० ब्रा० १.१ ६ (ए० सो० मु० १ भा० ५३ पृ० १२ पं०)।

वसति साक्षादेव संवत्सरमारभ्य दीक्षन्त[1] आर्त्तं वा एते संवत्सरस्याभि दीक्षन्ते य एकाष्टकायां दीक्षन्तेऽन्तनामानावृतू भवतो व्यस्तं वा एते संवत्सरस्याभि दीक्षन्ते य एकाष्टकायां दीक्षन्तेऽन्तनामानावृतू भवतः फल्गुनीपूर्णमासे दीक्षेरन्मुखं वा एतत् (१)

संवत्सरस्य यत् फल्गुनीपूर्णमासो मुखत एव संवत्सरमारभ्य दीक्षन्ते[2] तस्यैकैव निर्या यत्साम्मेघ्ये विषूवान्त्सम्पद्यते चित्रापूर्णमासे दीक्षेरन्मुखं वा एतत् संवत्सरस्य यच्चित्रापूर्णमासो मुखत एव संवत्सरमारभ्य दीक्षन्ते तस्य न का चन निर्या भवति[3] चतुरहे पुरस्तात् पौर्णमास्यै दीक्षेरन् तेषामेकाष्टकायां क्रयः सम्पद्यते तेनैकाष्टकान्न च्छम्बट् कुर्वन्ति[4] तेषाम् (२)

पूर्वपक्षे सुत्या सम्पद्यते पूर्वपक्षं मासा अभि सम्पद्यन्ते ते पूर्वपक्ष उत्तिष्ठन्ति तानुत्तिष्ठत ओषधयो वनस्पतयोऽनूत्तिष्ठन्ति तान् कल्याणी कीर्त्तिरनूत्तिष्ठत्यरात्सुरिमे यजमाना इति तदनु सर्वे राध्नुवन्ति[5] ॥ ८ ॥

एतत्[1] तेषां[2]* चतुस्त्रिंशच्च ॥ ८ ॥

---

* "एत[१]च्छम्बट् कुर्वन्ति तेषां[२]"—इति क, ख, ग।

सप्तमेऽनुवाके एकोनपञ्चाशद्रात्रोऽभिहित, अथाष्टमादिषु चतुर्ष्वनुवाकेषु संवत्सरसत्रमभिधीयते*। तत्राष्टमेऽनुवाके संवत्सरसत्रस्य दीक्षाकालं विधत्ते—"संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्नेषा वै संवत्सरस्य पत्नी यदेकाष्टकैतस्यां वा एष एताꣳ रात्रिं वसति साक्षादेव संवत्सरमारभ्य दीक्षन्ते[1]"–इति। ये यजमाना संवत्सरसत्रार्थं दीक्षिष्यन्ते, ते यजमाना 'एकाष्टकायां' माघकृष्णाष्टम्यां दीक्षां कुर्युः। येयं सैकाष्टकाभिमानिनी देवता, सेयं संवत्सराभिमानिनो देवस्य पत्नी। एकाष्टकाया पत्न्यभिमानिदेवतात्वञ्च गर्भधारणादवगम्यते। तथाचाग्निकाण्डे मन्त्र आम्नायते—"एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम्"–इति†। संवत्सरस्य पतित्वं चान्यत्र मन्त्रान्तरेणाम्नातम्—"एकाष्टका तपसा तप्यमाना संवत्सरस्य या पत्नी दुदुहे प्रपीना"–इति। एष संवत्सराभिमानी देव, एतां माघकृष्णाष्टमीं रात्रिं सर्वामपि 'एतस्याम्' एकाष्टकादेवताया सैव वसति, अतस्तत्र दीक्षां कुर्वन्तो यजमाना मुख्यमेव संवत्सरमारभ्य दीक्षितवन्तो भवन्ति॥

तमेतं पक्षं दूषयित्वा पक्षान्तरं विधत्ते—"आर्त्तं वा एते संवत्सरस्याभि दीक्षन्ते, य एकाष्टकायां दीक्षन्ते, ऽन्तनामानावृतू

* सामवेदे त्रित उत्तर मेरुपष्टिरात्र प्रतरात्रश्चेति सप्तदश मभिधाय, गवामयनम्, आदित्यानामयनम्, अङ्गिरसामयनम्, दृतिवातवतोरयनम्, कुण्डपायिनामयनम्, तापश्चितामयनञ्चेति षट् संवत्सरसत्राणि क्रमेण विहितानि श्रूयन्ते (ता० ब्रा० २४ १८–२०, २५ १–५)।

† तै० सं० ४ ३ ११ ८ (४ भा० २८७ पृ०)। "गवामयनायैकाष्टकायां दीक्षा"–इति कात्या० श्रौ० १३ १ २।

भवतो व्यस्तं वा एते संवत्सरस्याभि दीक्षन्ते, य एकाष्टकायां दीक्षन्ते, ऽन्तनामानावृतू भवतः, फल्गुनीपूर्णमासे दीक्षेरन्, मुखं वा एतत् संवत्सरस्य यत् फल्गुनीपूर्णमासो, मुखत एव संवत्सरमारभ्य दीक्षन्ते[१]"–इति। 'ये' यजमाना एकाष्टकायां दीक्षन्ते, ते यजमानाः संवत्सरसत्रस्य 'आर्त्तम्' विनाशम् 'अभि'लक्ष्य दीक्षन्ते। तत्रायं हेतुः—पुष्यमाघरूपौ द्वावृतवौ संवत्सरस्यान्त इत्येतन्नामधारिणौ, तयो शिशिरर्त्तुरूपत्वात्, तेन चर्तुना पूर्वसंवत्सरस्य समाप्तत्वात्। पौषपौर्णमासीमारभ्य फाल्गुनपौर्णमास्याः प्राचीनः कालः संवत्सरस्यान्तः। किञ्चैकाष्टकायां दीक्षमाणाः संवत्सरस्य 'व्यस्तमभि' विपर्यासमभिलक्ष्य दीक्षन्ते। आदौ हि दीक्षा कर्त्तव्या, अयञ्च संवत्सरस्यान्तः कालः, ऋतुद्वयवयोरेकयोरुक्तन्यायेनान्तनामोपेतत्त्वात्। तस्मादुत्तरफल्गुनीयुक्ते पूर्णमासे दीक्षां कुर्युः; तस्य च भाविसंवत्सरोपक्रमदिनत्वात्। एतदेवाभिप्रेत्य आधानब्राह्मणे समाम्नातम्—"उत्तरयोरादधीत; एषा वै प्रथमा रात्रिः संवत्सरस्य, यदुत्तरे फल्गुनी"–इति *॥

एतमपि पक्षं दूषयित्वा पक्षान्तरं विधत्ते—"तस्यैकैव निर्या, यत् साम्मेघ्ये विषूवान्त्सम्पद्यते; चित्रापूर्णमासे दीक्षेरन्; मुखं वा एतत् संवत्सरस्य यच्चित्रापूर्णमासो, मुखत एव संवत्सरमारभ्य दीक्षन्ते, तस्य न का चन निर्या भवति[१]"–इति। 'तस्य' फल्गुनीपूर्णमासदीक्षापक्षस्य 'एकैव निर्या' वक्ष्यमाण एक एव दोषः; न तु पूर्वो-

* तै० ब्रा० १ १ २ ८।

कार्त्तत्स्यस्तत्दोषौ। कोसावेको दोष इति स उच्यते— समीचीना अतिवर्षणक्षमा मेघा यस्मिन् वर्षर्त्तौ सोऽयं 'समेघः', तस्य सम्बन्धी प्रत्यासन्नः कालः 'साम्मेघ्यः', अस्मिन् काले विषूवानहः सम्पद्यते। तथाहि 'विषूवान्'-इति संवत्सरस्य मध्यवर्त्ती मुख्योऽहर्विशेषः; ततः पूर्वे षण्मासाः, उत्तरे च षण्मासाः; तयोरुभयोर्मासषट्कयोर्मध्ये सोऽहर्विशेषः कर्त्तव्यः। अत्र च फल्गुनीपूर्णमासमारभ्य द्वादश दीचा द्वादशोपसदश्चानुष्ठायोत्तरदिने प्रथममासोपक्रमः कार्यः; तथा सति चैत्रशुक्लनवम्यामुपक्रमो भवति; आश्वयुजशुक्लाष्टम्यां मासषट्कं समाप्य नवम्यां विषूवान् कार्यः; स च वर्षर्त्तोः प्रत्यासन्नः; भाद्रपदपौर्णमास्यां वर्षर्त्तौ समाप्ते सत्यनन्तरमाश्वर्त्तित्वात्। अतो वर्षर्त्तुसमीपे विषुवद्दिनसम्पत्तिपरिहाराय चित्रानक्षत्रयुक्तायां पौर्णमास्यां दीचा कर्त्तव्या। सोऽपि वसन्तर्त्तुमध्यपातित्वात् संवत्सरस्य मुखमेव। अतो मुखत एवारम्भः कृतो भवति। एवं सति कार्त्तिकशुक्लनवम्यां विषूवान् सम्पद्यते; तच्च दिनं वर्षर्त्तोर्दूरवर्त्ति; अतो वृष्टिशङ्काया अभावाद् विलम्बेनानुष्ठातुं शक्यत इति तस्य पचस्य न कोऽपि दोषोऽस्ति॥

अथ गुणविशेषमवलोक्य पचान्तरं विधत्ते— "चतुरहे पुरस्तात् पौर्णमास्यै दीचेरन्; तेषामेकाष्टकायां क्रयः सम्पद्यते; तेनैकाष्टकां न छम्बट् कुर्वन्ति[७]"-इति। माघपौर्णमास्याः 'पुरस्तात् चतुरहे' शुक्लैकादश्यां दीचेरन्, तथा सति माघकृष्णसप्तम्यां द्वादशदीचाणां समाप्तत्वात्, तदनन्तरवर्त्तिन्याम् 'एकाष्टकायां' सोमक्रयः सम्पद्यते। तथा सत्येकाष्टकाया अप्युपयुक्तत्वात् संवत्सरपक्षोत्तेन मुख्यामितां

'न छम्बट् कुर्वन्ति' निष्प्रयोजनां न कुर्वन्ति* । तत. संवत्सरपत्न्याः सत्कार एको गुण ॥

अथ गुणान्तरं दर्शयति— "तेषां पूर्वपक्षे सुत्या सम्पद्यते, पूर्वपक्षं मासा अभि सम्पद्यन्ते, ते पूर्वपक्ष उत्तिष्ठन्ति, तानुत्तिष्ठत ओषधयो वनस्पतयोऽनूत्तिष्ठन्ति, तान् कल्याणी कीर्त्तिरनूत्तिष्ठत्यरात्सुरिमे यजमाना इति, तदनु सर्वे राध्नुवन्ति(१)"-इति । 'तेषाम्' एकाष्टकायां क्रयमनुतिष्ठतां यजमानानां तद्दिनमारभ्यानुष्ठीयमाना उपसदश्चैत्रशुक्लचतुर्थ्यां सम्पद्यन्ते। तत उत्तरदिने क्रियमाणा 'सुत्या' शुक्लपक्ष एवोपक्रान्ता भवति । तत आरभ्य सर्वेऽपि मासाः शुक्लपक्षमेवाभिलक्ष्य समाप्यन्ते। तेषु समाप्तेषु 'ते' सत्रिणोऽपि पूर्वपक्ष एव सत्रादुत्तिष्ठन्ति । उत्तिष्ठत 'तान्' यजमानान् अनु भूम्यामोषधयो वनस्पतयश्च सत्कर्मानुष्ठानसामर्थ्यादुद्भवं गच्छन्ति । तदुद्भवे सति 'तान्' यजमानान् अनु पुण्यकीर्त्तिरुत्तिष्ठति । कीदृशी कीर्त्तिरिति सोच्यते— 'इमे' यजमानाः 'अरात्सु' समृद्धिं गता इत्येतादृशी कीर्त्ति । सत्कीर्त्त्युत्थानमनु सर्वे प्राणिन. समृद्धा भवन्ति; एतदीयेन सत्कर्मानुष्ठानेन भूमौ सर्वसस्याभिवर्द्धनात् । तस्मादीदृशं गुणषट्कमवेक्ष्य माघशुक्लैकादश्यां दीक्षेत्ययमेव मुख्य' पक्ष † ॥

---

* छम्बट्शब्दो व्यर्थवचन । २भा॰ ५८६, ६५८, ७०७, ७६३ पृ॰ । छवडित्यन्तस्यमध्योऽपि शाखान्तरीय । तद्यथा— ता॰ ब्रा॰ ४ १० ४, ५. ६ १३ । पठितश्चाय चादिगणे (ग॰ पा॰ १. ४ ५७) ।

† सामवेदीये ताण्ड्यब्राह्मणेऽप्येषोऽनुवाक किञ्चित्पाठन्यूनातिरेकव्यतिक्रमै पठित (५ ९) । कात्या॰ श्रौ॰ १३ १ २–१० ।

कार्त्तस्न्यसम्पत्तदोषौ। कोऽसावेको दोष इति स उच्यते— समीचीना अतिवर्षणक्षमा मेघा यस्मिन् वर्षर्त्तौ सोऽयं 'सम्मेघः', तस्य सम्बन्धी प्रत्यासन्नः कालः 'साम्मेघ्यः', अस्मिन् काले विषूवानहः सम्पद्यते। तथाहि 'विषूवान्'-इति संवत्सरस्य मध्यवर्ती मुख्योऽहर्विशेषः; ततः पूर्वं षण्मासाः, उत्तरे च षण्मासाः; तयोरुभयोर्मासषट्कयोर्मध्ये सोऽहर्विशेष कर्त्तव्य। अत्र च फल्गुनीपूर्णमासमारभ्य द्वादश दीक्षा द्वादशोपसदस्यानुष्ठायोत्तरदिने प्रथममासोपक्रमः कार्य., तथा सति चैत्रशुक्लनवम्यामुपक्रमो भवति, आश्वयुजशुक्लाष्टम्यां मासषट्कं समाप्य नवम्यां विषूवान् कार्य', स च वर्षर्त्तोः प्रत्यासन्न ; भाद्रपदपौर्णमास्यां वर्षर्त्तौ समाप्ते तदनन्तरमासवर्त्तित्वात्। अतो वर्षर्त्तुसमीपे विषुवद्दिनसम्पत्तिपरिहाराय चित्रानक्षत्रयुक्तायां पौर्णमास्यां दीक्षा कर्त्तव्या। सोऽपि वसन्तर्त्तुमध्यपातित्वात् संवत्सरस्य मुखमेव। अतो मुखत एवारम्भः कृतो भवति। एवं सति कार्त्तिकशुक्लनवम्यां विषूवान् सम्पद्यते, तच्च दिन वर्षर्त्तोर्दूरवर्त्ति, अतो दृष्टिशङ्काया अभावाद् विसम्भेणानुष्ठातुं शक्यत इति तस्य पक्षस्य न कोऽपि दोषोऽस्ति ॥

अथ गुणविशेषमवलोक्य पक्षान्तरं विधत्ते— "चतुरहे पुरस्तात् पौर्णमास्यै दीक्षेरन्, तेषामेकाष्टकाया क्रय. सम्पद्यते, तेनैकाष्टकां न छम्बट् कुर्वन्ति[७]"-इति। माघपौर्णमास्याः 'पुरस्तात् चतुरहे' शुक्लैकादश्यां दीक्षेरन्, तथा सति माघकृष्णसप्तम्यां द्वादशदीक्षाणां समाप्तत्वात्, तदनन्तरवर्त्तिन्याम् 'एकाष्टकायां' सोमक्रय सम्पद्यते। तथा सत्येकाष्टकाया अप्युपयुक्तत्वात् सवत्सरपक्षोत्लेन मुख्यामेतां

'न छम्बट् कुर्वन्ति' निष्प्रयोजनां न कुर्वन्ति* । ततः संवत्सरपत्न्याः सत्कार एको गुणः ॥

अथ गुणान्तरं दर्शयति—"तेषां पूर्वपक्षे सुत्या सम्पद्यते; पूर्वपक्षं मासा अभि सम्पद्यन्ते, ते पूर्वपक्ष उत्तिष्ठन्ति, तानुत्तिष्ठत ओषधयो वनस्पतयोऽनूत्तिष्ठन्ति, तान् कल्याणी कीर्त्तिरनूत्तिष्ठत्यराल्सुरिमे यजमाना इति, तदनु सर्वे राध्नुवन्ति(४)"—इति । 'तेषाम्' एकाष्टकायां क्रयमनुतिष्ठतां यजमानानां तद्दिनमारभ्यानुष्ठीयमाना उपसद्दीक्षशुद्धचतुर्थ्यां सम्पद्यन्ते। तत उत्तरदिने क्रियमाणा 'सुत्या' शुक्लपक्ष एवोपक्रान्ता भवति । तत आरभ्य सर्वेऽपि मासाः शुक्लपक्षमेवाभिलक्ष्य समाप्यन्ते। तेषु समाप्तेषु 'ते' सत्रिणोऽपि पूर्वपक्ष एव सत्रादुत्तिष्ठन्ति। उत्तिष्ठतः 'तान्' यजमानान् अनु भूम्यामोषधयो वनस्पतयश्च सत्कर्मानुष्ठानसामर्थ्यादुद्भवं गच्छन्ति। तदुद्भवे सति 'तान्' यजमानान् अनु पुण्यकीर्त्तिरुत्तिष्ठति। कीदृशी कीर्त्तिरिति सोच्यते—'इमे' यजमानाः 'अराल्सुः' समृद्धिं गता इत्येतादृशी कीर्त्तिः। सत्कीर्त्त्युत्थानमनु सर्वे प्राणिनः समृद्धा भवन्ति; एतदीयेन सत्कर्मानुष्ठानेन भूमौ सर्वसस्याभिवर्द्धनात्। तस्मादीदृशं गुणषट्कमवेक्ष्य माघशुक्लैकादश्यां दीक्षेत्ययमेव मुख्यः पक्षः† ॥

* छम्बट्शब्दो व्यर्थवचनः। २भा० ५८९, ६५८, ७०७, ७६३ पृ०। छंवडित्यन्तस्समर्थोऽपि शाखान्तरीयः। तद्यथा— ता० ब्रा० ४.१०.४; ५.९.१२। पठितश्चायं चादिगणे (ग० पा० १.४.५७.)।

† सामवेदीये ताण्ड्यब्राह्मणेऽप्येषोऽनुवाकः किञ्चित्पाठन्यूनातिरेकव्यतिक्रमैः पठित (५.९.)। कात्या० श्रौ० १३.१.२–१०।

अथ मीमांसा। षष्ठाध्यायस्य पञ्चमपादे (जै० सू० ३०—३७. अधि० १०) चिन्तितम्—

"गवामयन उक्ता तु या काचित् पूर्णिमाथवा।
चैत्री माघ्युत काचित् स्यादविशेषात् प्रशंसया? ॥
चैत्री स्यात् क्रय एकाष्टकायामित्युपवर्णितम्।
माघकृष्णाष्टमी लेकाष्टकातो माघपूर्णिमा ॥

गवामयने श्रूयते—"चतुरहे पुरस्तात् पौर्णमास्ये दीक्षेरन्; तेषामेकाष्टकायां क्रयः सम्पद्यते"–इति (४२३पृ० १०पं०)। पौर्णमास्याः पूर्वस्मिन् चतुरहे 'दीक्षेरन्' एकादशीं दीक्षामारभेत। तथा सति पौर्णमास्या उपरितने सप्तमे दिने द्वादश दीक्षाः पूर्यन्ते। तत उपरितन्यामष्टम्या सोमक्रय इत्यर्थ.। तत्र विशेषस्यादृष्टत्वाद्* या काचित् पूर्णिमेत्येक. पक्ष'। "चित्रापूर्णमासे दीक्षेरन्, मुखं वा एतत् संवत्सरस्य, यच्चित्रापूर्णमास."–इति (४२३पृ० ८पं०) प्रशस्यमानतया चैत्री पौर्णमासीति द्वितीय' पक्षः। याज्ञिकसमाख्यया माघकृष्णाष्टमी एकाष्टका†, तत्र सोमक्रयसम्पत्तये माघ्याः पौर्णमास्याः पूर्वस्यामेकादश्यां दीक्षा आरभ्या."–इति ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥

---

* "विशेषस्यानुक्तत्वात्"–इति, ए सो. बे जे०-न्या०-पुस्तक-पाठ।

† "माघकृष्णाष्टम्या एकाष्टकत्वात्"–इति ए० सो. बे जे०-न्या०-पु०-पाठ।

सुवर्गं वा एते लोकं यन्ति ये सत्रमुपयन्त्यभीन्धत एव दीक्षाभिरात्मानꣳ श्रपयन्त उपसद्भि[१]र्द्वाभ्यां लोमाव द्यन्ति द्वाभ्यां त्वचं द्वाभ्यामसृङ् द्वाभ्यां माꣳसं द्वाभ्यामस्थि द्वाभ्यां मज्जानमात्मदक्षिणं वै सत्रमात्मानमेव दक्षिणां नीत्वा सुवर्गं लोकं यन्ति[२] शिखामनु प्र वपन्त ऋद्ध्या अथो रघीयाꣳसः सुवर्गं लोकमयामेति[३] ॥ ९ ॥

सुवर्गं पञ्चाशत् ॥ ९ ॥

अष्टमे संवत्सरसत्रस्य दीक्षाकाल उक्तः, अथ नवमे दीक्षा उपसदश्चोच्यन्ते। ता उभयीर्विधत्ते— "सुवर्गं वा एते लोकं यन्ति, ये सत्रमुपयन्त्यभीन्धत एव दीक्षाभिरात्मानꣳ श्रपयन्त उपसद्भिः[१]" –इति। सत्रानुष्ठायिनः स्वर्गं गच्छन्ति, अतस्तद्योग्यतायै स्वदीक्षाभिः 'आत्मानं' स्वदेहम् 'अभीन्धत एव' सर्वतो ज्वलयन्त्येव; उपसद्भिस्तु 'श्रपयन्ते' स्वदेहं पचन्ति। तस्माद् दीक्षा उपसदश्चानुष्ठेया इति विधुस्यः*। यद्यपि द्वादशाहविकृतित्वेन प्राप्तस्तथापि विकृतिलिङ्गत्वाय स्तुतये वा तदनुवादोऽस्तु ॥

अथ विभज्य प्रशंसां कुर्वन् तासामुभयविधानां द्वादशत्वं प्रकटयति— "द्वाभ्यां लोमाव द्यन्ति, द्वाभ्यां त्वचं, द्वाभ्यामसृङ्, द्वाभ्यां माꣳसं, द्वाभ्यामस्थि, द्वाभ्यां मज्जानमात्मदक्षिणं वै सत्रमात्मानमेव

---

* जै० सू० ६. ५. २८, २९, अधि० ८, ९. द्रष्टव्यम् ।

दक्षिणां नीत्वा सुवर्गं लोकं यन्ति[१]"-इति। 'दाभ्यां' द्विनदयानुष्ठेयाभ्यां दीक्षाभ्यामुपसद्भ्याञ्च स्वकीयं लोम हविर्यमेव यन्ति। अनन्तरभाविनीभ्यां द्वाभ्यां त्वचमेव यन्ति। एवं रक्तमांसास्थिमज्जसु योजनीयम्। यदेतत् सर्वं, तदेतत् 'आत्मदक्षिणं वै' स्वशरीरमेव तत्र दक्षिणा; न त्वन्या गवादिरूपास्ति; तस्मात् स्वशरीरमेव दक्षिणारूपेण नीत्वा स्वर्गं प्राप्नुवन्ति॥

यदुक्तं सूत्रकारेण "सत्त्रश्चेद् वपनकाले सशिखानि वपन्ते"-इति, तद्विधत्ते– "शिखामनु प्र वपन्त ऋद्ध्या अथो रघीयाꣳसः सुवर्गं लोकमयामेति[२]"-इति। शिखामनुलक्ष्य प्रकर्षेण वपनं कुर्युः। तत्र स्तनलघूपाणां केशानामपगमात् समृद्धो भवति, अपि च केशभाररहिताः 'रघीयांसो' लघुतराः सन्तः स्वर्गं प्राप्नुयाम इत्यनेनाभिप्रायेण सशिखं वपनं कुर्युः॥ ९॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके नवमोऽनुवाकः॥

---

ब्रह्मवादिनो वदन्त्यतिरात्रः परमो यज्ञक्रतूनां कस्मात्तं प्रथममुप यन्तीत्येतद्वा अग्निष्टोमं प्रथममुप यन्त्यथोक्थ्यमथ षोडशिनमथातिरात्रमनुपूर्वमेवैतद्यज्ञक्रतूनुपेत्य तानालभ्य परिगृह्य सोममेवैतत्पिबन्त आसते ज्योतिष्टोमं प्रथममुप यन्ति ज्योतिष्टोमो वै स्तोमानां मुखं मुखत एव स्तोमान् प्रयुञ्जते[१] ते (१)

सऽस्तुता विराजमभि सम्पद्यन्ते द्वे चर्चावतिरिच्येते एकया गौरतिरिक्त एकयायुरूनः सुवर्गो वै लोको ज्योतिरूर्ग्विराट् सुवर्गमेव तेन लोकं यन्ति[१] रथन्तरं दिवा भवति रथन्तरं नक्तमित्याहुर्ब्रह्मवादिनः केन तदजामीति सौभरं तृतीयसवने ब्रह्मसामम्भूहत्तन्मध्यतो दधति विधृत्यै तेनाजामि[२] ॥ १० ॥

त[१] एकान्नपञ्चाशच्च ॥ १० ॥

नवमे दीचा उपदसघोक्ताः, अथ दशमे प्रायणीयाख्यं प्रथममहरुच्यते। तदेतद्विधत्ते— "ब्रह्मवादिनो वदन्त्यतिरात्रः परमो यज्ञक्रतूनां कस्मात् तं प्रथममुप यन्तीत्येतद् वा अग्निष्टोमं प्रथममुप यन्त्यथोक्थ्यमथ षोडशिनमथातिरात्रमनुपूर्वमेवैतद् यज्ञक्रतूनुपेत्य तानालभ्य परिगृह्य सोममेवैतत्पिबन्त आसते, ज्योतिष्टोमं प्रथममुप यन्ति, ज्योतिष्टोमो वै स्तोमानां मुखं, मुखत एव स्तोमान् प्रयुञ्जते[१]"—इति। योऽयमतिरात्राख्य क्रतु', सोऽयं 'यज्ञक्रतूनां परम.' सोमयागरूपा ये क्रतव, तेषां मध्ये चरमः। अग्निष्टोमः, उक्थ्य', षोडशी, अतिरात्र', इत्येतस्य तदीयक्रमत्वादग्निष्टोमस्य च प्रायम्यम्। "प्रजननं ज्योति"—इत्यनुवाके (१४७पृ०) "तस्मादाङ्ग्ज्येष्ठयज्ञः"—इत्याम्नातम्। एवं सत्यग्निष्टोमं परित्यज्य चरमभाविनमतिरात्रं कस्मात् कारणात् सत्रे प्रथममनुतिष्ठन्ति? इति ब्रह्मवादिनां प्रश्न'। तत्राभिज्ञा एवमुत्तरमाहुः— नात्राग्निष्टोमः परित्यक्त'; अत्राग्निष्टोमोक्थ्यषोडश्यतिरात्राणामुत्तरोत्तरस्य पूर्वपूर्व-

गर्भितत्वात्। द्वादशस्तोत्रमग्निष्टोममन्तर्भाव्य पुनः स्तोत्रत्रयाधिक्येनोक्थ्यः सम्पद्यते। तमन्तर्भाव्य पुनरेकस्तोत्राधिक्येन षोडशी सम्पद्यते। तमन्तर्भाव्य पुनस्त्रयोदशस्तोत्राधिक्येनातिरात्रः सम्पद्यते। अतः सत्रिणोऽतिरात्रमनुतिष्ठन्तीति यत् 'एतद् वै' एतस्मिन् सोमानुष्ठानेऽग्निष्टोम प्रथममनुतिष्ठन्ति, अथोक्थ्यषोडश्यतिरात्रान्, तदेतद् 'अनुपूर्वमेव' अनुक्रमेणैव यज्ञक्रतून् 'उपेत्य' अनुष्ठातुं निश्चित्य, 'तान्' क्रतून् 'उपक्रम्य' परितः स्तोत्रत्य, ततः सर्वत्र सोममेव पिबन्तः सत्रिण आसते। तस्मादग्निष्टोमपरित्यागाभावादतिरात्ररूपं ज्योतिष्टोमं प्रथममनुतिष्ठेयुः। स हि ज्योतिष्टोमो ज्योतिर्गौरायुरित्येतन्नामकानां स्तोमानां क्रतूनां मुखमदृशः। तस्मात् मुखत एवारभ्य स्तोमान् क्रतून् सत्रिणः प्रयुञ्जते॥

गोष्टोमायुष्टोमाभ्यां पूर्वभाविनं ज्योतिष्टोमस्य प्रकारान्तरेण पुनः प्रशंसति— "ते स॰स्तुता विराजमभि सम्पद्यन्ते, द्वे चर्चावतिरिच्येते, एकया गौरतिरिक्त एकयायुरूनः सुवर्गो वै लोको ज्योतिरूर्ग्विराट् सुवर्गमेव तेन लोकं यन्ति(१)"—इति। ज्योतिष्टोमे स्तोत्रगता ये ऋग्विशेषाः सन्ति, ते संस्तुताः सन्तो 'विराजं' दशसङ्ख्यामेव प्राप्नुवन्ति, न तु न्यूनाः, नाप्यधिकाः। इतरयोस्तु गोष्टोमायुष्टोमयोः द्वे ऋचावतिरिच्येते, दशसङ्ख्यां न प्राप्नुतः। तत्कथमिति तदुच्यते— 'एकया' ऋचा गोष्टोमो दशसङ्ख्याया अतिरिक्तः, आयुष्टोमस्त्वेकया न्यूनः, तस्माद् विराड्रूपत्वं ज्योतिष्टोमस्य प्राशस्त्ये हेतुः। किञ्च शमकत्वाज्ज्योतिष्टोमः स्वर्गलोकात्मको विराड्रूपः। तस्मादुभयथा प्रशस्तेन तेन ज्योतिष्टोमेन स्वर्गं लोकं प्राप्नुवन्ति॥

अथास्मिन्नतिरात्रसंस्थे ज्योतिष्टोमे सामविशेषं विधत्ते—"रथन्तरं दिवा भवति, रथन्तरं नक्तमित्याहुर्ब्रह्मवादिनः केन तदजामीति, सौभरं तृतीयसवने ब्रह्मसामम्*, बृहत् तन्मध्यतो दधति विधृत्यै, तेनाजामि[१]"–इति। 'दिवा' पृष्ठस्तोत्रे रथन्तरं गीयते, 'नक्तम्' अधि रात्रिपर्यायेषु रथन्तरं गीयते, 'तत्' तदानीमालस्यं भवति, तादृशालस्यपरिहारः 'केन' अन्येन साम्ना भवतीति ब्रह्मवादिनां प्रश्नः। तत्राभिज्ञा उत्तरमाहुः—सौभराख्यं यदन्यत् सामास्ति, तत् तृतीयसवने ब्रह्मसामत्वेन गेयम्। तच्च 'बृहत्' प्रौढम्, 'तत्' एतद् बृहद्रथन्तरयोरुभयोर्मध्ये स्थापयन्ति। तच्च यज्ञस्य धृत्यै सम्पद्यते। 'तेन' विजातीयसाम्ना आलस्यपरिहारो भवति ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके दशमोऽनुवाकः ॥

---

ज्योतिष्टोमं प्रथममुप यन्त्यस्मिन्नेव तेन लोके प्रति तिष्ठन्ति गोष्टोमं द्वितीयमुप यन्त्यन्तरिक्ष एव तेन प्रति तिष्ठन्त्यायुष्टोमं तृतीयमुप यन्त्यमुष्मिन्नेव तेन लोके प्रति तिष्ठन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुर्यदेतान्स्तोमानुपयन्त्येष्वेव तल्लोकेषु सचिणः प्रतितिष्ठन्तो यन्ति[१] ते स॒ꣳस्तुता विराजम् ( १ )

* "जनसनखनक्रमगमो विट्"—इति (पा० ५ ४ १०३) टचि रूपम्।

अभि सम्पद्यन्ते द्वे चर्चाविति रिच्येते एकया गौरतिरिक्त एकयायुरूनः सुवर्गो वै लोको ज्योतिरूर्ग्विराडूर्जमेवाव रुन्धते ते न क्षुधार्त्तिमार्च्छन्त्यक्षोधुका भवन्ति क्षुत्सम्बाधा* इव हि सत्रिणो[१]ऽग्निष्टोमावभितः प्रधी तावुक्थ्या मध्ये नभ्यं तत्तदेतत्परियद्देवचक्रं यदेतेन (२)

षडहेन यन्ति देवचक्रमेव समारोहन्त्यरिष्ट्यै ते स्वस्ति समश्नुवते[१] षडहेन यन्ति षड् वा ऋतव ऋतुष्वेव प्रति तिष्ठ[४]न्त्युभयतो ज्योतिषा यन्त्युभयत एव सुवर्गे लोके प्रति तिष्ठन्तो यन्ति[५] द्वौ षडहौ भवतस्तानि द्वादशाहानि सम्पद्यन्ते द्वादशो वै पुरुषो द्वे सक्थ्यौ द्वौ बाहू आत्मा च शिरश्च चत्वार्यङ्गानि स्तनौ द्वादशौ (३)

तत्पुरुषमनु पर्यावर्त्तन्ते[१] त्रयः षडहा भवन्ति तान्यष्टादशाहानि सम्पद्यन्ते नवान्यानि नवान्यानि नव वै पुरुषे प्राणास्तत्प्राणाननु पर्यावर्त्तन्ते[२] चत्वारः षडहा भवन्ति तानि चतुर्विंशतिरहानि सम्पद्यन्ते चतुर्विंशतिरर्धमासाः संवत्सरस्तत्संवत्सरमनु पर्याव-

* "क्षुत्संबाधा" क।

त्तन्ते[८] ऽप्रतिष्ठितः संवत्सर इति खलु वा आहुर्वर्षीयान् प्रतिष्ठाया इत्येतावद्वै (४)

संवत्सरस्य ब्राह्मणं यावन्मासो मासिमास्येव प्रतितिष्ठन्तो यन्ति[९] ॥ ११ ॥

विराजं[१] मेतेन[२] द्वादशौ[३] वा[४]* अष्टौ च॥ ११ ॥

दशमे प्रायणीयमहरुक्तम्, अथैकादशे मासगतान्युच्यन्ते। तत्रादौ तावत् त्रीण्यहानि विधत्ते— "ज्योतिष्टोमं प्रथममुप यन्त्यस्मिन्नेव तेन लोके प्रति तिष्ठन्ति; गोष्टोमं द्वितीयमुप यन्त्यन्तरिक्ष एव तेन प्रति तिष्ठन्त्यायुष्टोमं तृतीयमुप यन्त्यमुष्मिन्नेव तेन लोके प्रति तिष्ठन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुर्यदेतान्स्तोमानुपयन्त्येष्वेव तल्लोकेषु सत्रिणः प्रतितिष्ठन्तो यन्ति[१]"— इति। ज्योतिष्टोमगोष्टोमायुष्टोमा एकाहविशेषाः। एतैरेवानुलोमप्रतिलोमगतैरभिप्लवः षडहः सम्पद्यते। तस्मिन् षडहे पूर्वभागवर्त्तिनोऽनुलोमगता एतेऽनुष्ठेयाः। क्रमेणैतैर्लोकत्रये प्रतिष्ठा भवति। ज्योतिरादीनां भूरादिरूपत्वादेतेषां त्रयाणामनुष्ठानेन सत्रिणो लोकत्रये प्रतिष्ठिताः सुखेन व्यवहरन्ति। पूर्वस्मिन्ननुवाके प्रथमदिनेऽनुष्ठेयः प्रायणीयाख्योऽतिरात्ररूपो ज्योतिष्टोमो विहितः, इह तु तृतीयदिनेऽनुष्ठेयोऽग्निष्टोमात्मको ज्योतिष्टोम इति विशेषः॥

तस्यैतस्याग्निष्टोमरूपस्य ज्योतिष्टोमस्य प्राथम्यं पूर्वोक्तातिरात्रवत्

* "द्वादशा[३]वेतावद्वा"—इति क, ख, ग।

प्रशंसति—"ते सꣳस्तुता विराजमभि सम्पद्यन्ते; द्वे ऋचावति रिच्येते, एकया गौरतिरिक्त एकयायुरूनः; सुवर्गो वै लोको ज्योतिरूर्ग्विराडूर्जमेवाव रुन्धते; ते न क्षुधार्त्तिमार्च्छन्त्यक्षोधुका भवन्ति, क्षुत्सम्बाधा इव हि सत्रिणः[१]"—इति। ज्योतिष्टोमस्य स्तोत्रीयागतसङ्ख्यया विराट्सम्पत्तौ, विराज ऊर्ग्-रूपत्वात् 'ते' सत्रिणः क्षुधासम्पादितामार्त्तिं न प्राप्नुवन्ति; किन्तु 'अक्षोधुकाः' सर्वदा क्षुद्रहिता भवन्ति। सत्रिणामनुष्ठानप्रयासबाहुल्यात् प्रायेण ते क्षुत्सम्पादितबाधयुक्ता इव भवन्ति। तस्मात् तेषां तत्परिहारायोर्ग्रूपविराट्सम्पत्तियुक्तो ज्योतिष्टोम एव प्रथममनुष्ठेयः॥

इदानीमुक्तैर्ज्योतिरादिभिरनुलोमप्रतिलोमगतैर्निष्पन्नमभिप्लवषडहं रथचक्ररूपकल्पया विधत्ते—"अग्निष्टोमावभितः प्रधी, तावुक्थ्या मध्ये नभ्यं तत्, तदेतत्परियद् देवचक्रं; यदेतेन षडहेन यन्ति, देवचक्रमेव समारोहन्त्यरिष्ट्यै; ते स्वस्ति समश्नुवते[२]"—इति। लोके रथचक्रं फलकत्रयेण निष्पाद्यते। तत्र पार्श्ववर्त्तिनी फलके 'प्रधी' इत्युच्येते। प्रकर्षेण धीयते धार्यते मध्यफलकमाभ्यामिति प्रधी। मध्यफलकन्तु 'नभ्यम्' इत्युच्यते; नाभिस्थानीयत्वात्। एवञ्च सत्यत्र चक्ररूपस्य अभिप्लवषडहस्य अभितो वर्त्तमानावाद्यन्तदिनयोरनुष्ठेयौ ज्योतिःशब्दाभिधेयौ यावग्निष्टोमौ, तावुभौ 'प्रधी'। ये च मध्यवर्त्तिनो गौरायुर्गौरित्येतन्नामान उक्थ्यरूपाश्चत्वारः क्रतवः, ते सर्वे मिलित्वा मध्ये स्थितं 'नभ्यं' तद्भवति। 'तदेतत्' अभिप्लवषडहरूपं 'परियत्' पुनः प्रवर्त्तमानं देवचक्रमित्युच्यते। 'यद्' यदि 'एतेन' देवचक्ररूपेण षडहेन यजमाना अनुष्ठानं निष्पादयेयुः, तर्हि 'ते'

यजमाना देवचक्रमेव समारोहन्ति । तचारोहणम् 'अरिष्ट्यै' हिंसाराहित्याय भवन्ति। हिंसारहिताश्च ते 'स्वस्ति समश्नुवते' क्षेमं प्राप्नुवन्ति ॥

पुनरपि षडहं प्रशंसति— "षडहेन यन्ति, षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठन्ति(४)"-इति ॥

तस्य षडहस्यानुलोमप्रतिलोमरूपद्व्यहात्मकत्व विधत्ते— "उभयतो ज्योतिषा यन्त्युभयत एव सुवर्गे लोके प्रति तिष्ठन्तो यन्ति(५)" -इति। ज्योतिर्गौरायुरित्येव मानुलोम्ये सत्यादौ ज्योतिः, आयुर्गौर्ज्योतिरित्येव प्रातिलोम्ये सत्यन्ते ज्योतिः, एवम् 'उभयतो ज्योतिषा' षडहेनानुष्ठाने सति स्वर्गप्रवेशकाले फलावसानकाले च 'प्रति तिष्ठन्तः' अवस्रारहिता' सन्त सञ्चरन्ति ॥

तस्य च षडहस्य द्विरावृत्ति विधत्ते— "द्वौ षडहौ भवतस्तानि द्वादशाहानि सम्पद्यन्ते, द्वादशो वै पुरुषो,— द्वे सक्थ्यौ, द्वौ बाहू, आत्मा च, शिरश्च, चत्वार्यङ्गानि, स्तनौ द्वादशौ, तत्पुरुषमनु- पर्यावर्त्तन्ते(६)"-इति । 'सक्थि'-शब्देन श्रोणीद्वयमुच्यते, 'बाहु'- शब्देनांसद्वयम्, 'आत्मा' मध्यदेह, 'शिर.' प्रसिद्धम्, हस्तौ पादौ च मिलित्वा 'चत्वार्यङ्गानि', ततो द्वौ 'स्तनौ' द्वादशसङ्ख्यापूरकौ । तथा सत्येवं द्वादशाहानि पुरुषमनुसृत्य पर्यावृत्तानि भवन्ति ॥

तस्य च षडहस्य तृतीयामावृत्ति विधत्ते— "त्रय षडहा भवन्ति, तान्यष्टादशाहानि सम्पद्यन्ते, नवान्यानि, नवान्यानि, नव वै पुरुषे प्राणास्तत्प्राणाननु पर्यावर्त्तन्ते(७)"-इति । पूर्वाभ्या द्विरावृत्ताभ्या सह त्रित्वम् । अष्टादशानामङ्कां द्वेधा विभागे

मति, नवसङ्ख्यया नवच्छिद्रगतप्राणाननुसृत्य षडहास्त्रयः पर्यावृत्ता भवन्ति ॥

अथ पूर्वाभिस्तृभिरावृत्तिभिः सह चतुर्थीमावृत्तिं विधत्ते— "चत्वारः षडहा भवन्ति, तानि चतुर्विंशतिरहानि सम्पद्यन्ते; चतुर्विंशतिरर्द्धमासाः संवत्सरस्तत्संवत्सरमनु पर्यावर्त्तन्ते(८)"-इति। सङ्ख्याद्वारेणार्द्धमासद्वारा सवत्सरमनुसृत्य चत्वारः षडहाः पर्यावृत्ता भवन्ति। अत्र मासपूरणाय पृष्ठ्य षडहोऽध्याहर्त्तव्यः। अतएव छन्दोगा आमनन्ति— "यदेष पृष्ठ्यः षडहो भवति, वीर्य्ये एवान्ततः प्रति तिष्ठन्ति"-इति * ॥

अथाक्षेपसमाधानमुखेन सर्वमासानुष्ठानं विधत्ते— "अप्रतिष्ठितः संवत्सर इति खलु वा आहुर्वर्षीयान् प्रतिष्ठाया इत्येतावद् वै संवत्सरस्य ब्राह्मणं यावन् मासो मासि-मास्येव प्रतितिष्ठन्तो यन्ति(९)"-इति। पूर्वोक्तन्यायेन मास एकः प्रतिष्ठितो न संवत्सर इत्येव केचिच्चोद्यवादिन आहुः। अत्रैतदुत्तरम्— तस्योक्तप्रतिष्ठा-हेतोर्मासाद् वर्षीयस्त्वादत्यन्ताधिक्यात् 'मासो ब्राह्मणं' पूर्वोक्त-रीत्या मासस्य प्रतिपादकं ब्राह्मणवाक्यं यावदस्ति, एतावदेव संवत्सरस्य प्रतिपादकं ब्राह्मणम्, न त्वितोऽधिकं किञ्चिन्नूतनमस्ति। अनेनैव प्रकारेण प्रतिमासमनुतिष्ठन्तो यजमानास्तस्मिंस्तस्मिन् मासि प्रतितिष्ठन्तः क्रमेण संवत्सरं यन्ति ॥११॥

इति श्रीमायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके एकादशोऽनुवाकः॥

* ता० ब्रा० ४. १. १९।

मेषस्त्वा पचतैरवतु लोहितग्रीवश्छागैः शल्मलि-र्वृद्ध्या पर्णो ब्रह्मणा प्लक्षो मेधेन न्यग्रोधश्चमसैरुदुम्बर ऊर्जा गायत्रीच्छन्दोभिस्त्रिवृत्स्तोमैः(१)रवन्ती* स्थाव-न्तीस्त्वावन्तु प्रियं त्वा प्रियाणां वर्षिष्ठमाप्यानां नि-धीनां त्वा निधिपतिꣳ हवामहे वसो मम(२) ॥ १२ ॥

मेषः षट्त्रिꣳशत् ॥ १२ ॥

एकादशे संवत्सरगतेषु सर्वमासेष्वहानि विहितानि ; अथाव-शिष्टेष्वनुवाकेष्वश्वमेधाङ्गमन्त्रा उच्यन्ते । कल्पः— "मेषस्त्वा पचतै-रवत्विति पर्यग्नौ क्रियमाणे ऽपाव्यानि जुहोति"–इति । पाठस्तु— "मेषस्त्वा पचतैरवतु, लोहितग्रीवश्छागैः, शल्मलिर्वृद्ध्या, पर्णो ब्रह्मणा, प्लक्षो मेधेन, न्यग्रोधश्चमसैर्, उदुम्बर ऊर्जा, गायत्रीच्छन्दोभिस्, त्रिवृत्स्तोमैः(१)"–इति । अविजातौ मुख्यः पुमान् यो मेषोऽस्ति, सोऽयं 'पचतैः' हविष्ट्वेन पचनीयैः क्षुद्रैरविविशेषैः सह, हे अश्व ! त्वाम् अवतु । एवमुत्तरेष्वपि मन्त्रेषु त्वामवत्वित्यनुषञ्जनीयम् । अजजातौ योऽयं मुख्यो बस्तो 'लोहितग्रीवः', सोऽयमन्यैश्छागैः सह त्वाम् अवतु । 'शाल्मलिः' अत्युन्नतो वृक्षविशेषः, स च स्वकीयया 'वृद्ध्या' सह त्वामवतु । 'पर्णः' पलाशवृक्षः, स च स्वाभिमानिना 'ब्रह्मणा' मन्त्रेण वा सह त्वामवतु । 'प्लक्षः' यज्ञियेषु मुख्यो वृक्षः, स च 'मेधेन' यज्ञेन सह त्वामवतु । 'न्यग्रोधः' चमसहेतुर्वृक्षः, स च स्वकीयैश्चमसैः सह त्वामवतु । 'उदुम्बरः' प्रसिद्धः, स च 'ऊर्जा'

---

* ख-पुस्तके सविसर्गपाठ ।

स्वकीयफलेन लामवतु। 'गायत्री' चान्यैस्त्रिष्टुबादिच्छन्दोभिः सह लामवतु। 'त्रिवृत्' स्तोमश्चान्यैः पञ्चदशादिस्तोमैः सह लामवतु। एतैर्नवभिर्मन्त्रैरपाय्याख्या आहुतीर्जुहुयात् * ॥

कल्पः—"ता दक्षिणान् केशपक्षानुद्ग्रथ्य, सव्यान् विस्रस्य, दक्षिणानूरूनाघ्नानाः सिग्भिरभिधून्वत्यस्त्रिःप्रदक्षिणमश्वं धुवन्त्यः परियन्त्यवन्तौ स्थेति"–इति। अत्र तच्छब्देन राजपत्न्यः परामृश्यन्ते, तासां प्रकृतत्वात्। मृतमश्वं प्रति पत्नीभिः क्रियमाण एष उपचारः। पाठस्तु—"अवन्तौ स्थावन्तीस्त्वावन्तु, प्रियं त्वा प्रियाणां, वर्षिष्ठमाप्यानां, निधीनां त्वा निधिपतिꣳ हवामहे, वसो मम(२)"–इति। ताः पत्न्य. परस्परं सम्बोध्य वदन्ति। हे राजपत्न्यः! यूयम् 'अवन्तौ स्थ' अश्वस्य पालयित्र्यः स्थ। हे अश्व! त्वाम् 'अवन्तीः' पालयित्र्यः पत्न्यो 'अवन्तु' रक्षन्तु। मम 'वसो' वासयितः! तादृश हे अश्व! 'प्रियाणां' मध्ये अतिप्रियं त्वां 'हवामहे' आह्वयामः। 'आप्यानां' काममाप्तिहेतूनां मध्ये 'वर्षिष्ठम्' अतिशयेन वृद्धं त्वां हवामहे। तथा 'निधीनां' शङ्खपद्मादीनां मध्ये 'निधिपतिम्' अत्यन्तमधिकस्य निधेः पालयितारं त्वां हवामहे ॥१२॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः॥

---

* "मेघस्त्वा पचतैरवत्वित्यपाय्यानि जुहोति। प्राणा वै देवा अपाय्याः, प्राणानेवास्य दधे"–इति ब्रा० ३. ८. १७. १८।

कूप्याभ्यः स्वाहा कूल्याभ्यः स्वाहा विकर्याभ्यः स्वाहावट्याभ्यः स्वाहा खन्याभ्यः स्वाहा ह्रद्याभ्यः स्वाहा सूद्याभ्यः स्वाहा सरस्याभ्यः स्वाहा वैशन्तीभ्यः स्वाहा पल्वल्याभ्यः स्वाहा वर्ष्याभ्यः स्वाहाऽवर्ष्याभ्यः स्वाहा ह्रादुनीभ्यः स्वाहा पृष्वाभ्यः स्वाहा स्यन्दमानाभ्यः स्वाहा स्थावराभ्यः स्वाहा नादेयीभ्यः स्वाहा सैन्धवीभ्यः स्वाहा समुद्रियाभ्यः स्वाहा सर्वाभ्यः स्वाहा ॥ १३ ॥

कूप्याभ्यश्चत्वारिꣳशत् ॥ १३ ॥

अपाम्यहोममन्त्रा द्वादशेऽभिहिताः, अथानुवाकद्वयेनापां होमा उच्यन्ते । तथा च ब्राह्मणम्— "कूप्याभ्यः स्वाहाद्भ्यः स्वाहेत्यपाꣳ होमाञ्जुहोति"–इति * । तत्र प्रथमानुवाकमन्त्रानाह— "कूप्याभ्यः स्वाहा, कूल्याभ्यः स्वाहा, विकर्याभ्यः स्वाहा, ऽवट्याभ्यः स्वाहा, खन्याभ्यः स्वाहा, ह्रद्याभ्यः स्वाहा, सूद्याभ्य' स्वाहा, सरस्याभ्यः स्वाहा, वैशन्तीभ्य' स्वाहा, पल्वल्याभ्यः स्वाहा, वर्ष्याभ्यः स्वाहा, ऽवर्ष्याभ्यः स्वाहा, ह्रादुनीभ्यः स्वाहा, पृष्वाभ्यः स्वाहा, स्यन्दमानाभ्यः स्वाहा, स्थावराभ्यः स्वाहा, नादेयीभ्यः स्वाहा, सैन्धवीभ्यः स्वाहा, समुद्रियाभ्यः स्वाहा, सर्वाभ्यः स्वाहा"–इति। कूपे भवाः 'कूप्या.' आपः । नदीपूरणेन कूले तीरे भवाः 'कूल्याः' । विकरे भूविवरे भवाः

* ३. ८ १७. १९ । "अप्सु वा अन्नम्', अन्नं वा आप, अद्भ्यो वा अन्नं जायते, यदेवाद्भ्योऽन्नं जायते, तदव रुन्धे"–इति तच्छेष' ।

'विकर्या'। अवटे गर्त्ते भवाः 'अवट्याः'। खननेन निष्पन्नाः 'खन्याः'। ह्रदे भवाः 'ह्रद्याः'। सूदे पङ्के भवाः 'सूद्याः'। सरसि भवाः 'सरस्याः'। वेशन्ते भवाः 'वैशन्त्यः'; यत्र कूल्यादौ पुनःपुनरापो विशन्ति, तत्रत्या इत्यर्थः। पल्वलेऽत्यल्पजलाशये भवाः 'पल्वल्या'। वर्षे भवाः 'वर्ष्याः'। वर्षनैरपेक्ष्येण भूमाववस्थिताः 'अवर्ष्याः'। प्रवाहध्वनिसहिताः 'ह्रादुन्यः'। अवश्यायजन्याः 'पृष्वाः'। प्रवाहरूपाः 'स्यन्दमानाः'। एकत्रावस्थिताः 'स्थावराः'। नद्यां भवाः 'नादेय्यः'। सिन्धौ पुत्रदे भवाः 'सैन्धव्यः'। समुद्रे भवाः 'समुद्रियाः'। अनुक्तसङ्ग्रहार्थः सर्वशब्दः ॥१३॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके त्रयोदशोऽनुवाकः॥

---

अद्भ्यः स्वाहा वहन्तीभ्यः स्वाहा परिवहन्तीभ्यः स्वाहा समन्तं वहन्तीभ्यः स्वाहा शीघ्रं वहन्तीभ्यः स्वाहा शीभं वहन्तीभ्यः स्वाहोग्रं वहन्तीभ्यः स्वाहा भीमं वहन्तीभ्यः स्वाहाम्भोभ्यः स्वाहा नभोभ्यः स्वाहा महोभ्यः स्वाहा सर्वस्मै स्वाहा ॥ १४ ॥

अद्भ्य एकान्नत्रिंशत् ॥ १४ ॥

तस्मिन्नेव अपाहोमे द्वितीयानुवाकगतान्मन्त्रानाह— "अद्भ्यः स्वाहा, वहन्तीभ्यः स्वाहा, परिवहन्तीभ्यः स्वाहा, समन्तं वहन्तीभ्यः स्वाहा, शीघ्रं वहन्तीभ्यः स्वाहा, शीभं वहन्तीभ्यः स्वाहोग्र वह-

नीभ्यः स्वाहा, भीमं वहन्तीभ्यः स्वाहा, ऽम्भोभ्यः स्वाहा, नभोभ्यः स्वाहा, महोभ्यः स्वाहा, सर्वस्मै स्वाहा"-इति । उदकशान्तिगात्रयुक्ताः 'आपः' । प्रवाहरूपाः 'वहन्त्यः' । परिमण्डलरूपा आवर्त्तगताः 'परिवहन्त्यः' । भूमेः समन्तमन्तेन सर्वतो गच्छन्त्यः 'समन्तं वहन्त्यः' । निम्नाधिक्येन 'शीघ्रं वहन्त्यः' । ईषन्निम्नत्वेन 'शीभं' शोभनं यथा भवति तथा 'वहन्त्यः' । पर्वतपादादधः 'उग्रं वहन्त्यः' । दृश्यमानमकरादिक्षोभोपेताः 'भीमं वहन्त्यः' । अम्भो-नभो-महः-शब्दैः लोकत्रयगता आप उच्यन्ते ; "अयं वै लोकोऽम्भांसि • — • अन्तरिक्षं वै नभांसि • — • असौ वै लोको महांसि • — •"-इति ब्राह्मणेऽभिहितत्वात् * । पूर्वानुवाकोक्तैर्विंशतिमन्त्रैरेतदनुवाकोक्तैर्द्वादशभिर्मन्त्रैश्च रात्र्यवयवहोमाः कर्त्तव्याः । तेषामेव मन्त्रविशेषप्रयुक्तोऽयं होम इति व्यवहारः ॥ १४ ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके चतुर्दशोऽनुवाकः ॥

---

यो अर्वन्तं जिघांसति तमभ्यमीति वरुणः[१] । परो मर्तः परः श्वा[२] । अहं च त्वं च वृत्रहन्त्सं बभूव सनिभ्य आ । अरातीवा चिदद्रिवोऽनु नौ शूर मंसते भद्रा इन्द्रस्य रातयः[३] । अभि क्रत्वेन्द्र भूरध

---

* तै० ब्रा० ३. ८. १८. १-२ ।

ङमन्न ते विव्यङ्महिमानꣳ रजाꣳसि। स्वेना हि वृत्रꣳ शवसा जघन्थ न शत्रुरन्तं विविदत् (१)

युधा ते[७] ॥ १५ ॥

विविदद्[१] द्वे च ॥ १५ ॥

पूर्वयोरनुवाकयोरपांहोममन्त्रा उक्ताः; अथास्मिन् श्वप्रहारोऽभिधीयते। कल्पः—"यो अर्वन्तमिति सैध्रकेण मुसलेन* पौꣳश्चलेयः† शुनः प्रहरति"—इति। पाठस्तु—"यो अर्वन्तं जिघाꣳसति तमभ्यमीति वरुणः[१]"—इति। 'यः' अयं श्वा, जले स्नाप्यमानम् 'अर्वन्त' स्वयमपि जले प्रविश्य हन्तुमिच्छति, 'तं' श्वानं, जलाधिपतिः 'वरुणः' 'अभ्यमीति' सर्वतो रोगग्रस्तं करोति ॥

कल्पः—"तमश्वस्याधस्तदमुपास्यति परो मर्त्तः परः श्वेति"—इति। पाठस्तु—"परो मर्त्तः परः श्वा[२]"—इति। 'परः श्वा' प्रबलोऽयं श्वा, 'परो मर्त्तोऽस्तु' परस्ताद्गत्वा मृतो भवतु ॥

कल्पः—"अहञ्च त्वञ्च वृत्रहन्निति ब्रह्मा यजमानस्य हस्तं गृह्णाति"—इति। पाठस्तु—"अहञ्च त्वञ्च वृत्रहन्त्सम्बभूव सनिभ्य

---

* 'सैध्रको महासारो वृक्षः'। यस्य वृक्षस्य मध्ये लोहसमानं सारं छायावर्णादिवर्णयुक्तं विद्यते, तदीय मुसलं साधनम्'—इति तै० ब्रा० ३. ८. ४. सा० भा०।

† 'बहुषु पुरुषेषु चलति, न त्वेकस्मिन् भर्त्तरि नियता वर्त्तते इति पुंश्चली दासी, तत्पुत्रः श्रुनो हन्ता'—इति तै० ब्रा० ३. ८. ४ सा० भा०।

आ। अरातीवा चिदद्रिवोऽनु नौ शूर मंसते भद्रा इन्द्रस्य रातयः[२]"-इति। हे 'वृत्रहन्' वैरिहन्तृत्वेनेन्द्रसमान यजमान! त्वं च 'अहं' ब्रह्मा च 'सनिभ्यः' बहुभ्यो लाभेभ्यः, बहुविधद्रव्य-लाभसिद्धये 'आ सम्भूव' सर्वतः संयुक्तौ भवाव। हे 'अद्रिवः' पर्वत-सदृशो वज्रोऽस्यास्तीत्यद्रिमानिन्द्रः, स एवाद्रिवान्, तद्रूप हे *यजमान! 'शूर' शौर्योपेत!* 'इन्द्रस्य' देवाधिपतेः *'भद्रा रातयः'* कल्याणानि फलदानानि 'नौ' आवामुभौ 'अनुमंसते' अनुमन्यन्ताम्, अङ्गीकुर्वन्तु। कीदृशौ नौ? 'अरातीवा' रातिर्हविर्दानं, तद्युक्तौ रातिमन्तौ, तद्रहितावरातिमन्तौ, तावेव अरातीवा*। 'चित्' यद्यपि आवां हविर्दानरहितौ, तथापीन्द्रदत्तानि फलान्यावां प्रत्या-गच्छन्त्वित्यर्थः॥

कल्पः—"अभि क्रत्वेन्द्र भूरध ज्मन्नित्यध्वर्युर्यजमानं वाच-यति"-इति। पाठस्तु—"अभि क्रत्वेन्द्र भूरध ज्मन्न ते विव्यङ्म-हिमानꣳ रजाꣳसि। स्वेना हि वृत्रꣳ शवसा जघन्थ न शत्रुरन्तं विविदद्युधा ते[४]"-इति। हे 'इन्द्र' परमैश्वर्ययुक्त यजमान! 'क्रत्वा' अनेन क्रतुना 'अभिभूः' शत्रुमभिभूतवानसि। 'अध' अनन्तरं 'ज्मन्' अस्यां भूमौ; नकारान्तस्य ज्मन्शब्दस्य भूमिनामसु पठितत्वात्†। तस्यां भूमौ 'ते' त्वदीयं महिमानं, 'रजांसि' जगद्रञ्जकानि चरितानि च, 'न विव्यक्' कश्चिदपि विवेक्तुं न समर्थः। त्वं तु 'स्वेन शवसा' स्वकीयेन बलेन 'वृत्रं जघन्थ' शत्रुं हतवानसि। सः

---

* "छन्दसीवनिपौ च वक्तव्यौ (पा० ५. २. १२२. वा०)"-इति वनिप्।

† निघण्टौ १. १. ३।

तु मनु' 'युधा' युद्धेन 'ते अन्तं' त्वदीयं नाशं 'न विविदत्' नैव लब्धवान् ॥ १५॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके पञ्चदशोऽनुवाकः* ॥

---

नमो॒ राज्ञे॒ नमो॒ वरु॑णाय॒ नमोऽश्वा॑य॒ नमः॑ प्र॒जाप॑तये॒ नमोऽधि॑पतये॒ऽधि॑पति॒र॒स्यधि॑पतिं मा कु॒र्वधि॑पति॒रहं प्र॒जानां॑ भूयास॒ं मां धे॑हि॒ मयि॑ धे॒ह्युपा॑कृताय॒ स्वाहाल॑ब्धाय॒ स्वाहा॑ हु॒ताय॒ स्वाहा॑ ॥ १६ ॥

नम॒ एका॒न्नत्रि॒ꣳशत् ॥ १६ ॥

पञ्चदशे शुनः प्रहारोऽभिहितः, षोडशे यव्याख्यो होमोऽभिधीयते। तथा च ब्राह्मणम्—"नमो राज्ञे नमो वरुणायेति यव्यानि जुहोति"–इति †। पाठस्तु—"नमो राज्ञे, नमो वरुणाय, नमोऽश्वाय, नमः प्रजापतये, नमोऽधिपतये, ऽधिपतिरस्यधिपतिं मा कुर्वधिपतिरहं प्रजानां भूयासं, मां धेहि, मयि धेह्युपाकृताय स्वाहा, ऽऽलब्धाय स्वाहा, हुताय स्वाहा"–इति। 'राजा' सोम', इतरे प्रसिद्धाः। अधिपतिशब्देन धर्मदेवतोच्यते—"धर्मो वा अधिपतिः"–

---

* एतदनुवाकीयमन्त्राणां विधयो व्याख्यानानि च तै० ब्रा० ३.८.४ द्र०।
† ३ ८.१८ ३। "यव्यानि"–इति तच्चेष।

इति ब्राह्मणेनोक्तत्वात्*। हे धर्म! देव! त्वमधिपतिरसि, मामप्यधिपतिं कुरु, त्वत्प्रसादादहं प्रजानामधिपतिर्भूयासम्। 'मां धेहि' प्रजानामाधिपत्ये स्थापय। मयि च ताः प्रजाः पालनीयत्वेन स्थापय। तैरेतैः षड्भिर्यव्यनामकैरन्नहोमान् जुहुयात्। उपाकृतायेत्यादिमन्त्राणां त्रयाणां कालविशेषे होमो ब्राह्मणे श्रूयते—"उपाकृताय स्वाहेत्युपाकृते जुहोति, आलब्धाय स्वाहेति नियुक्ते जुहोति, हुताय स्वाहेति हुते जुहोति"-इति† ॥१६॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके षोडशोऽनुवाकः‡॥

---

मयोभूर्वातो अभि वातूस्रा ऊर्जस्वतीरोषधीरा रिशन्ताम्। पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृड[१]॥ याः सरूपा विरूपा एकरूपा यासामग्निरिष्ट्या नामानि वेद। या अङ्गिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्य महि शर्म्म यच्छ[२]॥ या देवेषु तनुवमैरयन्त यासाꣳ सोमो विश्वा रूपाणि वेद। ता अस्मभ्यं पयसा पिन्वमानाः प्रजावतीरिन्द्र (१)
गोष्ठे रिरीहि[३]॥ प्रजापतिर्मह्यमेता रराणो विश्वै-

---

* ३ ८. १९. ३।      † ३ ८. १९ ९।
‡ तै० ब्रा० ३. ८. १९ अनुवाके एतदनुवाकविधिव्याख्याने द्रष्टव्ये।

देवैः पितृभिः संविदानः । शिवाः सतीरुप नो गोष्ठमाकस्तासां वयं प्रजया सꣳ सदेम(४)॥ इह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहा(५) महीमू षु सुत्रामाणम्(६) ॥ १७॥.

इन्द्राग्नाविꣳशच्च ॥ १७ ॥

षोडशे गव्याख्यो होमोऽभिहितः; सप्तदशे गव्याख्यैर्मन्त्रैर्होमोऽभिधीयते। तथा च ब्राह्मणम्—"मयोभूर्वातो अभि वातूस्रा इति * गव्यानि जुहोति"–इति † । तत्र प्रथमामाह— "मयोभूर्वातो अभि वातूस्रा ऊर्जस्वतीरोषधीरा रिशन्ताम् । पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृड(१)"–इति । 'मयोभूः' सुखस्य भावयिता, 'वातः' वायुः, 'उस्राः' सर्वा गाः 'अभि'लक्ष्य 'वातु' प्रसरतु, अतिवातेनोपद्रवं मा करोतु, किन्तु मन्दवातेन गवां सुखं यथा भवति तथा वातु । एताश्च गावः 'ऊर्जस्वतीः' रसयुक्ताः ओषधीः 'आरिशन्ताम्' आस्वादयन्तु । जीवरूपं धनं 'जीवधनं' प्राणिजातमित्यर्थ, तदर्हन्तीति 'जीवधन्याः', पातुं योग्या आपः, ताश्च 'पीवस्वत्य.' पानेन पुष्टिरूपस्य स्थौल्यस्य प्रापणात्; तादृशीरपो गावः पिबन्तु । हे रुद्र। 'अवसाय' अवितुं योग्याय, 'पद्वते' पादसञ्चारिणे पशवे 'मृड' सुखं कुरु ॥

---

* 'इति' एतदादिभिरेतदनुवाकीयैरेभिर्मन्त्रैरित्यर्थः ।

† ५. ८. १८. ३। "पशूनामवरुद्ध्यै"–इति तच्छेष ।

अथ द्वितीयामाह— "याः सरूपा विरूपा एकरूपा यासा-मग्निरिष्ट्या नामानि वेद। या अङ्गिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्य महि शर्म यच्छ[१]"–इति। 'याः' गावः 'सरूपाः' समानप्रमाण-देहाः, 'विरूपाः' विविधवर्णाः, 'एकरूपाः' एकजातियुक्ताः, 'अग्निः' आहवनीयादिरूपः 'इष्ट्या' यागेन निमित्तभूतेन 'यासां' गवां 'नामानि' "सा विश्वायुः सा विश्वव्यचाः सा विश्वकर्मा"–इत्यादीनि*, "इडे रन्तेऽदिते"–इत्यादीनि† वा श्रुत्युक्तानि 'वेद' जानाति; 'अङ्गिरसः' महर्षयः 'तपसा' स्वकीयेन तपस्सामर्थ्येन 'याः' गाः 'इह' भूमौ 'चक्रुः' स्थापितवन्तः, हे 'पर्जन्य' जलदेव! 'ताभ्यः' गोभ्यो 'महि शर्म यच्छ' महत्सुखं देहि॥

अथ तृतीयामाह— "या देवेषु तनुवमैरयन्त यासां सोमो विश्वा रूपाणि वेद। ता अस्मभ्यं पयसा पिन्वमानाः प्रजावती-रिन्द्र गोष्ठे रिरीहि[२]"–इति। 'याः' गावो 'देवेषु' निमित्तभूतेषु 'तनुव' शरीरम् 'ऐरयन्त' भूमौ प्रवर्त्तितवत्यः, 'सोमः' देवो 'यासां' गवां 'विश्वा रूपाणि' शुक्लकृष्णादीनि बहुक्षीराल्पक्षीरा-दीनि च सर्वाणि रूपाणि 'वेद' जानाति, हे इन्द्र! 'पयसा पिन्वमानाः' स्वकीयेन क्षीरेण प्राणिजातं प्रीणयन्तीः, 'प्रजावतीः' बहुवत्सोपेताः 'ताः' गाः 'अस्मभ्यम्' अस्मदर्थं गोष्ठे 'रिरीहि' गोशालायां प्रापय॥

---

* १. १. ३. १.—१भा० ६५ पृ०।

† वा० सं० ८ ४३। तै० सं० २ ६. ७ ३।

अथ चतुर्थीमाह— "प्रजापतिर्मह्यमेता रराणो विश्वैर्देवैः पितृभिः संविदानः। शिवाः सतीरुप नो गोष्ठमाकस्तासां वयं प्रजया सं सदेम[४]"-इति। यः 'प्रजापतिः', सोऽयं 'मह्यं' यजमानाय 'एताः' उक्तलक्षणा गाः 'रराणः' प्रयच्छन् 'विश्वैर्देवैः' सर्वैर्देवैः पितृभिश्च 'संविदानः' ऐकमत्यं गतः, ताः 'शिवाः सतीः' बहुक्षीरादिप्रदानेन कल्याणरूपाः सतीः 'एताः' गाः 'नो गोष्ठम्' अस्मदीयगोशालाम् 'उपाकः' उपाकरोतु, प्रापयत्वित्यर्थः। वयं 'तासां' गवां 'प्रजया' वत्सरूपया 'संसदेम' सङ्गतास्तिष्ठामः॥

अथ चत्वारि यजूंष्याह— "इह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहा[५]"-इति। एतानि च "विभूर्मात्रा"-इत्यनुवाके (२१६ पृ० ६ पं०) अश्वस्य पादचतुष्टयस्थानविषयत्वेन व्याख्यातानि॥

अथ द्वयोर्ऋचोः प्रतीके दर्शयति— "मह्रीमू षु सुत्रामाणम्[६]"-इति। एतच्चोभयं "वैश्वानरो न ऊत्या"-इत्यत्र व्याख्यातम्*। एतैर्दशभिर्व्याख्यैर्मन्त्रैरन्नहोमान् जुहुयात्†॥ १७॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके सप्तदशोऽनुवाकः॥

---

* १ भा० ८४४ पृ० (१ ५. ११.)।

† सप्तमकाण्डगत द्वितीयप्रपाठकस्थलिखित-प्रपाठकगता अन्नहोममन्त्रानुवाकाः, तेषां च मन्त्राणां मध्येऽद्भावादीनि विविधश्रौतनामानि सन्ति, तानि भा० ३. ८ १७ अनुवाक-भाष्यादितोऽवगन्तव्यानि।

किꣳ स्विदासीत्पूर्वचित्तिः किꣳ स्विदासीद् बृहद्वयः। किꣳ स्विदासीत्पिशङ्गिला किꣳ स्विदासीत्पिलिप्पिला[१]॥ द्यौरासीत्पूर्वचित्तिरश्व आसीद् बृहद्वयः। रात्रिरासीत्पिशङ्गिलाविरासीत्पिलिप्पिला[२]॥ कः* स्विदेकाकी चरति क उ स्विज्जायते पुनः। किꣳ स्विद्धिमस्य भेषजं किꣳ स्विदावपनं महत्[३]॥ सूर्य एकाकी चरति (१)

चन्द्रमा जायते पुनः। अग्निर्हिमस्य भेषजं भूमिरावपनं महत्[४]॥ पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि त्वा भुवनस्य नाभिम्। पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम[५]॥ वेदिमाहुः परमन्तं पृथिव्या यज्ञमाहुर्भुवनस्य नाभिम्। सोममाहुर्वृष्णो अश्वस्य रेतो ब्रह्मैव वाचः परमं व्योम[६]॥ १८॥

चरति[१]† षट्चत्वारिꣳशच्च॥ १८॥

सप्तदशे गव्याख्यहोम उक्तः; अष्टादशे ब्रह्मोद्यमुच्यते। कल्पः— "अभितोऽग्निं ब्रह्मोद्याय पर्युपविशेते, दक्षिणो ब्रह्मोत्तरो होता;

---

* "क"—इति निर्विसर्गपाठः क-पुस्तके।

† "सूर्य एकाकी चरति[१]"—इति क, ख, ग।

किꣳस्विदासीत्पूर्वचित्तिरित्येतस्यानुवाकस्य पृष्टानि * होतुः, प्रतिज्ञातानि ब्रह्मणः"—इति। एकविंशतियूपेषु मध्यवर्त्ती यूपः 'अग्निष्ठः', आह्मणयोरुक्तिप्रत्युक्तिरूपेण संवादः 'ब्रह्मोद्यम्', 'पृष्टानि' प्रश्नवाक्यानि, 'प्रतिज्ञातानि' प्रत्युत्तरवाक्यानि। तस्मिन् ब्रह्मोद्ये पृष्टासूचमाह— "किꣳ स्विदासीत्पूर्वचित्तिः ? किꣳ स्विदासीद् बृहद्वयः ?। किꣳ स्विदासीत्पिशङ्गिला ? किꣳ स्विदासीत्पिलिप्पिला ?[१]"—इति । हे ब्रह्मन् ! पूर्वचित्तिः किं स्विदासीत् ? चित्तिर्ज्ञानं 'पूर्वचित्तिः' जन्मप्रभृतिज्ञानमुत्पन्नानां यस्यां विद्यते, सा पूर्वचित्तिः; तादृशं ज्ञानं किं नामासीदित्यर्थः । सोऽयमेको होतुः प्रश्नः । कान्त्यर्थाद् 'वा'-धातोर्वयशब्दनिष्पत्तिः। अत्यन्तं कमनीयं वस्तु किं नामासीदिति द्वितीयः प्रश्नः । 'पिशङ्गिला' मिश्रवर्णा किं नामासीदिति तृतीयः प्रश्नः। 'पिलिप्पिला' अत्यन्तं प्रकाशमाना श्वेता कि नामासीदिति चतुर्थः प्रश्नः । सामान्याभिप्रायेण किमिति नपुंसकनिर्द्देशः ॥

अथ द्वितीयामाह— "द्यौरासीत्पूर्वचित्तिरश्व आसीद् बृहद्वय । रात्रिरासीत्पिशङ्गिलाविरासीत्पिलिप्पिला[२]"—इति । तान्येतानि ब्रह्मण उत्तराणि । येयं द्यौः सैव 'पूर्वचित्तिः' पूर्वप्रवृत्तं हि ज्ञानं तत्रास्ति, तत्रत्यानां देवानां जन्मप्रभृतिज्ञानोपेतत्वात् । तदिदं प्रथममुत्तरम् †। अश्वोऽत्यन्तं कमनीयं वस्तु; अत एव हि राजानः

---

* 'प्रष्टानि' क , एव मिहोत्तरत्रापि ।

† "द्यौर्वै वृष्टि पूर्वचित्तिर्दिवं मेव वृष्टि मव रुन्धे"—इति ब्रा० ३ ९.५।

सर्वप्रयत्नेनाप्यश्वान् सम्पादयन्ति। तदिदं द्वितीयमुत्तरम् *। रात्रिर्मिश्रवर्णा, अन्धकारस्य नक्षत्रचन्द्रप्रकाशस्य च विद्यमानत्वात्। तदिदं तृतीयमुत्तरम् †। अवति सर्वं प्राणिजातमिति श्रीः 'अविः', सैवातिप्रकाशा। अत एव ब्राह्मणे—'श्रीर्वै पिलिप्पिला'–इत्याख्यातम् (३ ९ ५ ३)॥

अथ तृतीयामाह—"क स्विदेकाकी चरति? क उ स्विज्जायते पुनः? किंᳲ स्विद्धिमस्य भेषजं? किंᳲ स्विदावपनं महत्?[१]" –इति। त एते होतुः प्रश्नाः। को नामात्र लोके सहायान्तरनिरपेक्ष आलस्यरहितः सर्वदा चरति?, को नाम पुनः पुनः शुक्लपक्षे जायते?, किं नाम वस्तु शैत्यकृतस्योपद्रवस्य औषधम्?, किं नाम स्थानं बहूनां बीजानामावापायोपयुक्तं विशालम्?॥

अथ चतुर्थीमाह—"सूर्य एकाकी चरति, चन्द्रमा जायते पुनः। अग्निर्हिमस्य भेषजं, भूमिरावपनं महत्[४]"–इति। तान्येतानि ब्रह्मण उत्तराणि स्पष्टार्थानि ‡॥

अथ पञ्चमीमाह—"पृच्छामि त्वा परमन्तं पृथिव्याः, पृच्छामि त्वा भुवनस्य नाभिम्। पृच्छामि त्वा वृष्णो अश्वस्य रेतः, पृच्छामि वाचः परमं व्योम[५]"–इति। होतुः प्रश्नाः। हे ब्रह्मन्! त्वा पृथिव्याः परमन्तं पृच्छामि। यतः परमुत्कृष्टप्रदेशोऽन्यो नास्ति, सोऽयं 'परोऽन्तः'। तथा चक्रस्य नाभिरिव सर्वस्य भुवनस्य नाभिस्थानीयं वस्तु

---

* "अश्वो वै बृहद्वयः, पश्वमेवावरुन्धे"–इति ब्रा० ३ ९ ५।

† "रात्रिर्वै पिशङ्गिला रात्रिमेवावरुन्धे"–इति ब्रा० ३ ९ ५।

‡ ब्रा० ३ ९ ५ ४ एतानि व्याख्यातानि।

किंस्विदासीत्पूर्वचित्तिरित्येतस्यानुवाकस्य पृष्टानि * होतुः, प्रतिज्ञातानि ब्रह्मणः"–इति। एकविंशतियूपेषु मध्यवर्त्ती यूपः 'अग्निष्ठः', ब्राह्मणयोरुक्तिप्रत्युक्तिरूपेण संवादः 'ब्रह्मोद्यम्', 'पृष्टानि' प्रश्नवाक्यानि, 'प्रतिज्ञातानि' प्रत्युत्तरवाक्यानि। तस्मिन् ब्रह्मोद्ये पृष्टामृचमाह— "किंस्विदासीत्पूर्वचित्तिः? किंस्विदासीद् बृहद्वयः?। किंस्विदासीत्पिशङ्गिला? किंस्विदासीत्पिलिप्पिला?[१]"–इति। हे ब्रह्मन्! पूर्वचित्तिः किं स्विदासीत्? चित्तिर्ज्ञानं 'पूर्वचित्तिः' जन्मप्रभृतिज्ञानमुत्पन्नानां यस्यां विद्यते, सा पूर्वचित्तिः; तादृशं ज्ञानं किं नामासीदित्यर्थः। सोऽयमेको होतुः प्रश्नः। कान्त्यर्थाद् 'वा'-धातोर्वयशब्दनिष्पत्तिः। अत्यन्तं कमनीयं-वस्तु किं नामासीदिति द्वितीयः प्रश्नः। 'पिशङ्गिला' मिश्रवर्णा किं नामासीदिति तृतीयः प्रश्नः। 'पिलिप्पिला' अत्यन्तं प्रकाशमाना श्वेता किं नामासीदिति चतुर्थः प्रश्नः। सामान्याभिप्रायेण किमिति नपुंसकनिर्देशः॥

अथ द्वितीयामाह— "द्यौरासीत्पूर्वचित्तिरश्व आसीद् बृहद्वयः। रात्रिरासीत्पिशङ्गिलाविरासीत्पिलिप्पिला[२]"–इति। तान्येतानि ब्रह्मण उत्तराणि। येयं द्यौः सैव 'पूर्वचित्तिः' पूर्वप्रवृत्तं हि ज्ञानं तत्रास्ति; तत्रत्यानां देवानां जन्मप्रभृतिज्ञानोपेतत्वात्। तदिदं प्रथममुत्तरम्†। अश्वोऽत्यन्तं कमनीयं वस्तु; अत एव हि राजानः

* 'प्रष्टानि' क; एवं मिष्टोत्तरत्रापि।

† "द्यौर्वै वृष्टिः पूर्वचित्तिर्दिवं मेव वृष्टि मव रुन्धे"–इति ब्रा० ३.९.५।

सर्वप्रयत्नेनाप्यश्वान् सम्पादयन्ति। तदिदं द्वितीयमुत्तरम् *। रात्रिर्मि-श्रवर्णा; अन्धकारस्य नक्षत्रचन्द्रप्रकाशस्य च विद्यमानत्वात्। तदिदं तृतीयमुत्तरम् †। अवति सर्वं प्राणिजातमिति श्रीः 'अविः', सैवातिप्रकाशा। अत एव ब्राह्मणे—'श्रीर्वै पिलिप्पिला'-इत्या-ख्यातम् (३.८.५.३.) ॥

अथ तृतीयामाह—"कः स्विदेकाकी चरति? क उ स्विज्जा-यते पुनः?। किꣳ स्विद्धिमस्य भेषजं? किꣳ स्विदावपनं महत्?[३]" -इति। त एते होतुः प्रश्नाः। को नामात्र लोके सहायान्तर-निरपेक्ष आलस्यरहितः सर्वदा चरति?, को नाम पुनः पुनः शुक्लपक्षे जायते?, किं नाम वस्तु शैत्यकृतस्योपद्रवस्य औषधम्?, किं नाम स्थानं बहूनां बीजानामावापायोपयुक्तं विशालम्? ॥

अथ चतुर्थीमाह—"सूर्य एकाकी चरति, चन्द्रमा जायते पुनः। अग्निर्हिमस्य भेषजं, भूमिरावपनं महत्[४]"-इति। तान्येतानि ब्रह्मण उत्तराणि स्पष्टार्थानि ‡ ॥

अथ पञ्चमीमाह—"पृच्छामि त्वा परमन्तं पृथिव्याः, पृच्छामि त्वा भुवनस्य नाभिम्। पृच्छामि त्वा वृष्णो अश्वस्य रेतः, पृच्छामि वाचः परमं व्योम[५]"-इति। होतु प्रश्नाः। हे ब्रह्मन्! त्वां पृथिव्याः परमन्तं पृच्छामि। यतः परमुत्कृष्टप्रदेशोऽन्यो नास्ति, सोऽयं 'परो-ऽन्तः'। तथा चक्रस्य नाभिरिव सर्वस्य भुवनस्य नाभिस्थानीयं वस्तु

* "अश्वो वै बृहद्वयः, पश्वमेवावरुन्धे"-इति ब्रा० ३.८.५।

† "रात्रिर्वै पिशङ्गिला, रात्रिमेवावरुन्धे"-इति ब्रा० ३.८.५।

‡ ब्रा० ३.८.५.४. एतानि व्याख्यातानि।

पृच्छामि। तथा 'वृष्णः' पुंस्त्वाधिकस्याश्वस्य रेतःस्थानीयं सारं वस्तु पृच्छामि। तथैवाक्षरात्मिकाया 'वाचः' 'परमं व्योम' विशेषेण रक्षकं स्वरूपं वस्तु पृच्छामि॥

अथ पञ्चीमाह— "वेदिमाहुः परमन्तं पृथिव्या, यज्ञमाहुर्भुवनस्य नाभिम्। सोममाहुर्वृष्णो अश्वस्य रेतो, ब्रह्मैव वाचः परमं व्योम(१)"–इति। तान्येतानि ब्रह्माण उत्तराणि। येयं यागवेदिः, तामेव पृथिव्याः परमन्तं याज्ञिका आहुः, न हि वेद्या अधिकः कश्चित् भूप्रदेशोऽस्ति। अत एव हि सोमप्रकरणे श्रुतम्—"एतावती वै पृथिवी, यावती वेदिः"–इति (ब्रा०२.८.१२ २)। तथा यज्ञं सर्वस्य लोकस्य नाभिस्थानीयमाहुः। यथा नाभिमाश्रित्य सर्वं चक्रं परिवर्त्तते, तथा यज्ञाधीनः सर्वेषां प्राणिनामिहलोकपरलोकसञ्चारम्। तथाश्वस्य रेतोवदत्यन्तं सारभूतः सोमः*; अश्वमेधेन हि चिरात्रेण यागेन ब्रह्महत्यादिकं सर्वं निवर्त्तते। यदेतन्मन्त्रसङ्घातरूपं 'ब्रह्म' तदेतदक्षरात्मिकाया वाचः 'परमं व्योम'; तेन हि मन्त्रजातेन प्राणिनो विशेषेण रक्ष्यन्ते†॥ १८॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तदशकाण्डे चतुर्थप्रपाठकेऽष्टादशोऽनुवाकः॥

---

* "असौ वा आदित्यो हयाश्व"–इति ब्रा० ५ ३. १८।

† ब्रा० ३ ८ ५. एतानि व्याख्यातानि।

अम्बे अम्बाल्यम्बिके न मा नयति कश्चन। ससस्त्यश्वकः[१]। सुभगे काम्पीलवासिनि सुवर्गे लोके सम्प्रोर्ण्वाथाम्। आहमजानि गर्भधमा त्वमजासि गर्भधम्[२]। तौ सह चतुरः पदः सम्प्र सारयावहै[३]। वृषा वाꣳ रेतोधा रेतो दधा[४]तूत्सक्थ्योर्गृदं धेह्यञ्जिमुदञ्जिमन्वज। यः * स्त्रीणां जीवभोजनो य आसां (१)

बिलधावनः। प्रियः † स्त्रीणामपीच्यः। य आसां कृष्णे लक्ष्मणि सर्दिगृदिं परावधीत्[५]। अम्बे अम्बाल्यम्बिके न मा यभति कश्चन। ससस्त्यश्वकः[६]। ऊर्ध्वामेनामुच्छ्रयताद्वेणुभारङ्गिराविव। अथास्या मध्यमेधताꣳ शीते वाते पुनन्निव[७]। अम्बे अम्बाल्यम्बिके न मा यभति कश्चन। ससस्त्यश्वकः[८]। यद्धरिणी यवमत्ति न (२)

पुष्टं पशु मन्यते। शूद्रा यदर्यजारा न पोषाय धनायति[९]। अम्बे अम्बाल्यम्बिके न मा यभति कश्चन। ससस्त्यश्वकः[१०]। इयं यका शकुन्तिकाहलमिति सर्पति। आहतं गभे पसो नि जल्गुलीति धाणिका[११]। अम्बे अम्बाल्यम्बिके न मा यभति

---

*, † "य"-इति, "प्रिय"-इति चात्र विसर्गाभाव क-पुस्तके।

काश्चन। ससस्त्यश्वकः[१९]। माता च ते पिता च तेऽग्र वृक्षस्य रोहतः (३)

प्र सुलामीति ते पिता गभे मुष्टिमतꣳसयत्[११]। दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखा करत् प्र ण आयूꣳषि तारिषत्[१३]। आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे[१४]। यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः[१६]। तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ (४)

आपो जनयथा च नः[१७] ॥ १९ ॥

आसां[१] न[२]* रोहतो[३] जिन्वथ[४] चत्वारि च ॥ १९॥

अष्टादशे ब्रह्मोद्यमुक्तम्, अथैकोनविंशे राजपत्नीनां विलापरूपो मृताश्वोपचारोऽभिधीयते। कल्प —"अम्बे अम्बाल्यम्बिक इति प्रतिप्रस्थाता पत्नीरुदानयति"-इति। तत्र पाठस्तु— "अम्बे अम्बाल्यम्बिके। न मा नयति कश्चन। ससस्त्यश्वक[१]"-इति। उत्तमा मध्यमा अधमा चेत्येव त्रिविधा राजपत्न्य। तास्तिसस्त्रिभिर्मातृवाचकै पदै प्रतिप्रस्थात्रा सम्बोध्यन्ते। एव सम्बोध्य आहूताना तिसृणा मध्ये प्रधानभूता 'महिषी' उत्तर वक्ति। कश्चिदपि पुमान्

* 'आसा[१]मस्ति म[२]'-इति क, ख, ग।

मां भोगार्थं रहसि नैव नयति ; एषोऽश्वकः 'ससस्ति' निद्रां करोति, भोगाभावदुःखेन एषैनं गर्हते। गर्हार्थोऽयं क-प्रत्ययः*, कुत्सितोऽश्व इत्यर्थः ॥

कल्पः—"सुभगे काम्पीलवासिनीति चौमेण वाससा अध्वर्यु-र्महिषी मश्वञ्च प्रच्छाद्य"–इति। पाठस्तु—"सुभगे काम्पीलवासिनि सुवर्गे लोके सम्प्रोर्ण्वाथाम्। आहमजानि गर्भधमा त्वमजासि गर्भधम्(१)"–इति। हे 'सुभगे' शोभनभगे महिषि! हे 'काम्पील-वासिनि' काम्पीलशब्देन श्लाघ्यो वस्त्रविशेष उच्यते, तेन वस्त्रेण आच्छादयतीति काम्पीलवासिनी। तादृशी त्वम्, अयमश्वश्च, उभौ 'सुवर्गे लोके' स्वर्गसदृशेऽस्मिन् स्थाने 'सम्प्रोर्ण्वाथाम्' इदं चौमं वस्त्रं सम्यगाच्छादयेताम्। आच्छाद्यमाना च तेनाश्वेन सहैवं ब्रूहि। हे अश्व! 'गर्भधं' गर्भधारिणं त्वाम् 'अहं' महिषी 'आजानि' आभिमुख्येन प्राप्नवानि। त्वमपि 'गर्भधं' गर्भधात्रीं माम् 'आजासि' आभिमुख्येन प्राप्नुहि ॥

कल्पः—"तौ सह चतुरः पदः सम्प्र सारयावहा इति पदः प्रसारयेते"–इति। पाठस्तु—"तौ सह चतुरः पदः सम्प्र सारय-वहै(१)"–इति। हे अश्व! यस्त्वं, या चाहं महिषी, तावावा-मुभौ मदीयं पादद्वयं त्वदीयं पश्चाद्भागवर्त्तिपादद्वयमित्येवं 'चतुरः' पादान् 'सम्प्रसारयावहै' सङ्गताः परस्परं श्लिष्टा यथा भवति, तथा प्रसृतान् करवाव ॥

कल्पः—"वृषा वामित्यभिमन्त्रयते"–इति। पाठस्तु—"वृषा

* "कुत्सिते"–इति पा० ५ ३. ७४ सू०।

वा॒ रेतोधा रेतो दधातु(४)"-इति। 'वां' युवयोर्मध्ये 'वृषा' सेचकोऽयं', सिञ्चत्वित्यध्याहारः; 'रेतोधा.' वीर्यधारिणी महिषी तदीयं रेतो धारयतु॥

कल्पः—"उत्सक्थ्योर्गृदं धेहीति प्रजनने प्रजननꣳ सन्निधाय"-इति। पाठस्तु— "उत्सक्थ्योर्गृदं धेह्यञ्जिमुदञ्जिमन्वज। यः स्त्रीणां जीवभोजनो य आसां बिलधावनः। प्रियः स्त्रीणामपीच्यः। य आसा कृष्णे लक्ष्मणि सर्दिगृदिं परावधीत्(५)"-इति। हे अश्व। 'गृदं' त्वदीयगुदसमीपवर्त्तिनं पाश्चात्यं भागं 'सक्थ्योः' महिषी-सम्बन्धिनोः ऊर्वोः 'उद्धेहि' ऊर्द्धं स्थापय। अज्यते स्त्रीत्वमभि-व्यज्यतेऽनेनेति 'अञ्जिः' योनिः, तथा पुंस्त्वमभिव्यज्यतेऽनेनेति मेढ्रो-ऽप्यञ्जिः। सर्वोन्नतश्चासावञ्जिश्चेति 'उदञ्जिः'। हे अश्व! महिषी-सम्बन्धमञ्जिम् 'अनु'लक्ष्य त्वदीयमुदञ्जिम् 'अज' प्रेरय। कीदृश उदञ्जि'? जीवात्मना भुज्यते प्रीतिपूर्वकमनुभूयत इति 'जीव-भोजनः'। य उदञ्जिः स्त्रीणां जीवभोजनः, स्त्रीजीवो ह्यस्मिनुदञ्जौ प्रीतिमनुभवति। यश्चोदञ्जि 'आसां' स्त्रीणां, 'बिलधावनः' बिलं योनिं प्रति धावति सहसा प्रविशतीति बिलधावनः। किञ्चाय-मुदञ्जि स्त्रीणां 'प्रिय' सन् 'अपीच्य' भवति। अपीच्यते अत्या-दरेण प्राप्यते इत्यपीच्य.। यश्चोदञ्जिरासां स्त्रीणां 'कृष्णे लक्ष्मणि' यत्कृष्णवर्णमसाधारणं लक्षणभूतं स्त्रीव्यञ्जनं तस्मिन् 'सर्दिगृदि' शुक्रपातस्थानविशेषे 'परावधीत्' वेगेन ताडयामास; येन ताडनेन शुक्रपातो भवति, तत्करोति। अन्तर्बहिःप्रदेशभेदेन स्थानत्रयं स्त्रीव्यञ्जने विद्यते। अत एवान्यत्राम्नातम्—"त्रिवृत्प्रजननम्, उपस्थो

योनिर्मध्यमा"–इति ( आ० ३.११.८.६.* )। तत्र येयं मध्यमा गर्भधारिणी, सा 'सर्दिग्दिः'॥

कल्पः—"अम्बे अम्बाल्यम्बिक इति महिष्यथं गच्छते"–इति। पाठस्तु—"अम्बे अम्बाल्यम्बिके न मा यभति कश्चन। ससस्त्यश्वकः(१)" –इति। सा महिषी भोगाभावदुःखेन विलपन्ती, स्वदुःखख्यापनाय स्वकीयां मातरं त्रिः सम्बोध्य स्वदुःखं कथयति। लोके ह्यसन्निहिता माता स्वकीयापदेलायां सम्बोध्यते, बाल्ये मातुरेव सर्वापन्निवारकत्वेन तत्सम्बोधनस्य पठितत्वादन्यदापि तत्सम्बोधनमेव सहसा जिह्वायामायाति। तां सम्बोध्येत्रं ब्रूते—रिरंसुं मां कोऽपि न यभति, अयमश्वकस्तु निद्राति॥

कल्प.—"ऊर्द्धामेनामुच्छ्रयतादिति पत्नयोऽभिमेधन्ते"–इति। पाठस्तु—"ऊर्द्धामेनामुच्छ्रयताद्वेणुभारं गिराविव। अथास्या मध्यमेधताꣳ शीते वाते पुनन्निव(०)"–इति। स्वदुःखख्यापनार्थमम्बादिशब्दैर्मातरं सम्बोधयन्तीम् 'एनां' महिषीं प्रति वस्त्राच्छादनाद् बहिरेव स्थिता इतरा राजपत्न्यो बुद्धिप्रदानं कुर्वन्ति। हे महिषि! 'एनां' तदीयां योनिम् 'ऊर्द्धाम् उच्छ्रयतात्' ऊर्द्धाभिमुखं कृत्वोन्नतामवस्थापय। तत्र दृष्टान्तः—यथा लोके कस्मिंश्चिद्गिरौ वेणून् खण्डयित्वा स्कन्धे नेतुं प्रौढभारमाबध्य प्रथमं भूमौ ऊर्द्धमुच्छ्रयति। तद्वदेनामुच्छ्रय। 'अथ' उच्छ्रयणानन्तरम् 'अस्याः' योनेर्मध्यस्थानम्

---

* "तथा प्रजोत्पादनसामर्थ्यलक्षणं प्रजननमपि त्रिगुणम्,— 'उपस्थ' इन्द्रियशक्तिः, 'योनि' स्त्रीलिङ्गम्, 'मध्यमा' गर्भधारणस्थानम्"–इति तत्र सा० भा०।

'एधतां' स्वाभिमतप्राप्त्याभिवर्द्धताम्। वृद्धिरत्र हर्षविशेषः। तत्र हर्षे दृष्टान्तः— 'शीते वाते पुनन्निव'। यथा लोके कश्चित् स्वहस्तपूरुद्धृतेन शूर्पेण धान्यं पुनन्, व्यापारबाहुल्येन श्रान्तः खिन्नगात्रः शीते वाते प्रवृत्ते सति हृष्यति, तद्वत्॥

कल्पः— "त्रिर्महिष्यश्वं गर्हते, त्रिः पत्न्योऽभिमेधन्त उत्तरयोत्तरयर्चा"—इति। तत्र प्रथमां गर्हार्थामृचमाह— "अम्बे अम्बाल्यम्बिके न मा यभति कश्चन। ससस्त्यश्वकः[८]"—इति॥

अथ प्रथमामभिमेधनार्थामृचमाह— "यद्धरिणी यवमत्ति न पुष्टं पशु मन्यते। शूद्रा यदर्यजारा न पोषाय धनायति[९]"—इति। 'यद्' यदा कदाचित् 'हरिणी' मृगी रात्रौ समागत्य क्षेत्रे फलितं 'यव' भक्षयति, तत्र क्षेत्रे भक्षयित्वा पुनररण्ये गतं पशुं पुष्टमपि 'न मन्यते' न जानाति। हे महिषि! तथा त्वमपि देवतारूपेण त्वामनुभूयान्तर्हितमश्वं न जानासि, भोगस्तु तव जात एवेति पत्नीनामभिप्रायः। किञ्च 'यद्' यदा 'शूद्रा' काचिद्दासी कदाचित्, अर्यः स्वकीयः स्वामी जारो यस्याः सेयम् 'अर्यजारा' भवति, तदानीं सा दासी स्वामिस्वीकारमात्रेणात्यन्तं हृष्यति, न तु स्वकीयकुटुम्बपोषाय 'धनायति' धनमात्मन इच्छति; न हि स्वामिस्वीकाराद् धनमधिकं मन्यते। तथा मनुष्यशरीरात् त्वमपि देवतारूपस्याश्वस्य स्वीकारादेव परितुष्टा भव, न तु तुच्छमिमं मानुषं भोगमपेक्षस्वेत्यभिप्रायः॥

अथ द्वितीयां गर्हार्थामृचमाह— "अम्बे अम्बाल्यम्बिके न मा यभति कश्चन। ससस्त्यश्वकः[१०]"—इति॥

अथाभिमेधनार्थां द्वितीयामृचमाह— "इयं यका शकुन्तिका-हलमिति सर्पति। आहतं गभे पसो नि जल्गुलीति धाणिका[११]" -इति। 'इयं' प्रत्यक्षतो दृश्यमाना 'यका शकुन्तिका' या काचित् पक्षिणी स्त्री विद्यते। 'आहल'-शब्दः पक्षिध्वनेरनुकरणम्। इत्येतादृशं शब्दं कुर्वन्ती, सा शकुन्तिका 'सर्पति' पुमांसं पक्षिणं पृष्ठतो गच्छति; न त्वन्ना क्वचिदवतिष्ठते। हे महिषि! एवं त्वमपि न त्वष्यसि; तदेतदयुक्तमित्यभिप्रायः। किञ्च 'धाणिका' गर्भस्य धारयित्री योषित्, 'गभे आहतं पसो निजल्गुलीति'। गभशब्दे पसशब्दे च वर्णव्यत्ययो द्रष्टव्य', तथा सति योनिं सपजन्यं रेतश्च शब्दद्वयेनाभिधीयते। 'निजल्गुलीति' निगिरति। यथा लोके गर्भधारिणी स्त्री, योनावाहितं रेतो निगिरति, गर्भरूपेणान्तर्धत्ता सन्तुष्यति; एवं त्वमपि देवतारूपाश्वस्वीकारेण सन्तोष्टुमर्हसीत्यभिप्रायः॥

अथ गर्हार्थां तृतीयामृचमाह— "अम्बे अम्बाल्यम्बिके न मा यभति कश्चन। ससस्त्यश्वकः[१२]"-इति॥

अथाभिमेधनार्थां तृतीयामृचमाह— "माता च ते पिता च तेऽग्रं वृक्षस्य रोहतः। प्र सुलामीति ते पिता गभे मुष्टिमतꣳस-यत्[१३]"-इति। हे महिषि! 'ते' तव, या माता, तथा तव यः पिता, तावुभावपि 'वृक्षस्य अग्र' वृक्षस्य कस्यचिच्छाखया निर्मितं तल्पं 'रोहतः' आरुह्य शयाते। तदानीं ते पिता 'प्रसुलामि' प्रवेशयामि इत्येवमुक्त्वा 'गभे' योनौ 'मुष्टिं' मुष्टिसदृशं मेढ्रं

'अतंसयत्' प्रावेशयत्; एवमयमणश्वश्चकार। अतो हे महिषि! त्वमुत्तिष्ठेत्यभिप्रायः* ॥

कल्प.—"दधिक्राव्णो अकारिषमिति सर्वा सुरभिमतीमृचमन्ततो जपित्वा"—इति। पाठस्तु—"दधिक्राव्णो अकारिष जिष्णोरश्वस्य वाजिन। सुरभि नो मुखा करत् प्र ण आयूꣳषि तारिषत्[१७]"—इति। दधि 'क्रामति' प्राप्नोतीति दधिक्रावा,—एतन्नामको दधिप्रियः कश्चिद्देवविशेष, अग्निरित्यन्ये†। तस्य देवस्य 'अकारिषम्' अहं कर्म कृतवानस्मि। कीदृशस्य? 'जिष्णो.' जयशीलस्य, 'अश्वस्य' व्यापिन', 'वाजिन' अन्नवत। स देवः 'न' अस्माक मुखं 'सुरभि करत्' कर्पूरादिद्रव्यमस्मद्भिप्रदानेन सुगन्धोपेत करोतु‡। अस्माकम् आयूꣳषि च 'प्र तारिषत्' प्रवर्द्धयतु ॥

कल्पः—"आपो हि ष्ठा मयोभुव इति मार्जयित्वा"—इति। तत्र प्रथमामाह—"आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे[१८]"—इति। 'हि'-शब्द एवकारार्थ, प्रसिद्ध्यर्थो वा। हे 'आप' यूयमेव 'मयोभुवः स्थ' सुखस्य भावयित्र्यो भवत।

---

* एतदन्तानामेतदनुवाकीयमन्त्राणा शाखाभेदत पाठभेदा अर्थविशेषाश्च वा० स० २३ १८—३१ महीधरभाष्ये द्रष्टव्या।

† "दधिक्रा इत्येतत्०—०तस्याश्ववद् देवतावच्च निगमा भवन्ति"—इति निरुक्ते २ ७.५, पुन १०.२ ७. अत्रापि द्रष्टव्यम्। निघण्टौ १.१४.७, ८, पुन ५.४ १९।

‡ "यज्ञीलमायज्ञेन दुर्गन्धं प्राप्तानि मुखानि, सुरभीणि यज्ञ करोत्विति अर्थः"—वा० सं० भाष्ये महीधर। "सुरभिमतीं मृच मन्ततोऽन्याञ्चर्वाच मेव ब्रुमते"—इति श० ब्रा० १३ २ ९ ९।

स्नानपानादिहेतुत्वेन सुखोत्पादकत्वं प्रसिद्धम्। तास्तादृश्यो यूयं 'नः' अस्मान् 'ऊर्जे' रसाय, भवदीयरसोऽनुभवार्थं 'दधातन' स्थापयत। किञ्च 'महे' महते, 'रणाय' रमणीयाय, 'चक्षसे' दर्शनाय, 'दधातन' अस्मान् परतत्त्वसाक्षात्कारयोग्यान् कुरुतेत्यर्थः ॥

अथ द्वितीयामाह— "यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः[९]"–इति । 'वः' युष्माकं 'शिवतमः' शान्ततमः सुखैकहेतुः, 'यः' रसोऽस्ति, 'इह' अस्मिन् कर्मणि, 'नः' अस्मान्, 'तस्य भाजयत' तं रसं प्रापयत। तत्र दृष्टान्तः— 'उशतीरिव मातरः' कामयमानाः प्रीतियुक्ता मातरो यथा स्वकीयं स्तन्यरसं प्रापयन्ति, तद्वदित्यर्थः ॥

अथ तृतीयामाह— "तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः[१०]"–इति । 'यस्य' रसस्य 'क्षयाय' क्षयेण निवासेन 'जिन्वथ' यूयं प्रीता भवथ, 'तस्मै' रसाय 'वः' युष्मान्, 'अलं' सुष्ठु शाप्नुमः। किञ्च हे 'आपः!' यूयं 'नः' अस्मान् 'जनयथा' प्रजोत्पादकान् कुरुथ ॥ १८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके एकोनविंशोऽनुवाकः॥

---

भूर्भुवः सुवः[१] वसंवस्त्वाञ्जन्तु गायत्रेण छन्दसा रुद्रास्त्वाञ्जन्तु त्रैष्टुभेन छन्दसादित्यास्त्वाञ्जन्तु जागतेन छन्दसा[२] यद्वातो अपो अगमदिन्द्रस्य तनुवं प्रियाम्।

एतं स्तोतरेतेन पथा पुनरश्वमावर्त्तयासि नः[१]। लाजीइञ्छाचीइन् यशोममाँ३ *। यव्यायै गव्याया एतद्देवा अन्नमत्तैतदन्नमद्धि प्रजापते[४]। युञ्जन्ति ब्रध्नम् (१)

अरुषं चरन्तं परि तस्थुषः। रोचन्ते रोचना दिवि[५]। युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे। शोणा धृष्णू नृवाहसा[६]। केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे। समुषद्भिरजायथाः[७] ॥ २० ॥

ब्रध्नं[१] पञ्चविंशतिश्च ॥ २० ॥

एकोनविंशेऽश्वस्य मरणादुत्तरकालीन उपचारोऽभिहितः; विंशे तु पूर्वकालीन उपचारोऽभिधीयते। कल्पः— "पत्नयोऽश्वमलङ्कुर्वन्ति, महिषी वावाता परिवृक्तीति, शतं शतमेकैकस्याः सचिवा राजपुत्रीदारायोषाणां राज्ञां सूतग्रामण्या इति सहस्रं सहस्रं मणयः सुवर्णरजतसामुद्रान् वालेषु मणीनावयन्ति, भूरिति सौवर्णान् महिषी प्राक्वाहाद्, भुव इति राजतान् वावाता प्रत्यग्वाहात् प्राक्श्रोणेः, सुवरिति सामुद्रान् परिवृक्ती प्रत्यक्श्रोणेः"—इति। अत्रोक्ताः 'भूः, भुवः, सुवः'—इत्येतास्तिस्रो व्याहृतयो लोकत्रयवाचिन्यः। तथा सति सौवर्णराजतशङ्खमणयः क्रमेण भूम्यादि-

---

* "लाजीँ३ञ्छाचीन् यशोममाँ३"—इति क, "लाजीइन् छाचीइन् यशोममाँ३"—इति ख, "लाजीइन् छाचीइन् यशोममाइम्"—इति मु०।

लोकत्रयरूपा इति सूत्राणां मर्थः। पाठस्तु—"भूर्भुवस्सुवः[(१)]"—इति। तैरेतैर्मन्त्रैर्मुखमध्यपाश्चात्यभागेषु महिषी वावाता-परिवृक्त्याख्या उत्तममध्यमाधमा राजपत्न्योऽश्वस्य केशेषु मणीन् योजयेयुः॥

कल्पः—"अथाश्वस्य देहानाज्येनाभ्यञ्जन्ति, वसवस्त्वाञ्जन्तु गायत्रेण छन्दसेति गौल्गुलवेन महिषी, रुद्रा इति कौसुम्भेन वावाता, ऽऽदित्या इति मुस्ताकृतेन परिवृक्ती"—इति। पाठस्तु—"वसवस्त्वाञ्जन्तु गायत्रेण छन्दसा, रुद्रास्त्वाञ्जन्तु त्रैष्टुभेन छन्दसा, ऽऽदित्यास्त्वाञ्जन्तु जागतेन छन्दसा[(१)]"—इति। हे अश्व! अष्टौ वसवो गायत्रेण छन्दसा युक्ताः गुग्गुलुजन्येन* तैलेन मुखभागे त्वामञ्जन्तु; एकादश रुद्राः कुसुम्भबीजजन्येन† तैलेन त्वां मध्यभागे त्रिष्टुप्छन्दोयुक्ता अञ्जन्तु; द्वादशादित्या जागतच्छन्दोयुक्ता मुस्तामूलजन्येन तैलेन पाश्चात्यभागे त्वामञ्जन्तु। एतदेव तैलं सूत्रे‡ आज्यशब्देन व्यवहृतम्॥

कल्पः—"यद्वातो अपो अगमदिति प्रदक्षिणमावर्त्तयते; यतः प्रयाति तदवतिष्ठते"—इति। रथयुक्तोऽयमश्वो यतो रथशालायाः प्रयातः, पुनः प्रादक्षिण्येनावृत्तस्तस्यामेव रथशालायामवतिष्ठते। पाठस्तु—"यद्वातो अपो अगमदिन्द्रस्य तनुवं प्रियाम्। एतञ्स्तोतरेतेन पथा पुनरश्वमावर्त्तयासि नः[(१)]"—इति। 'यद्' येन पथा पुरा 'वातः' वायुः 'अपः' जलानि इन्द्रस्य 'प्रियां तनुवं' पर्जन्य-

* "गुग्गुलुजन्येन"—इति ख, ग। वस्तुतो मूले श्रुतस्य गौल्गुलवेनेत्यस्य व्याख्यान मेवैतद् गुग्गुलुजन्येनेति।

† "कुसुम्भजन्येन"—इति क, ख।

‡ "अथाश्वस्य देहानाज्येन"—इति चतुर्थपङ्क्तौ द्रष्टव्यम्।

रूपाम् 'अगमत्' प्रापयत्। हे 'स्तोतः' स्तुतिकर्त्तः। त्वमश्वप्रेरणार्थं शब्दं कुर्वन् 'एतेन' पूर्वसिद्धेन 'पथा' मार्गेण 'एतम्' अश्वं 'नः' अस्मान् 'प्रत्यावर्त्तयासि' आवृत्तं कुरु॥

कल्पः—"लाजी३ञ्छाचीन्३ यशोममां३इति पत्न्योऽश्वायाश्च-परिशेषानुपवपन्ति"-इति। पाठस्तु—"लाजी३ञ्छाची३न् यशो-ममां३। यव्यायै गव्याया एतद्देवा अन्नमत्तैतदन्नमद्धि प्रजापते[४]" -इति। रात्रौ येर्दर्भिरन्नैर्होमाः कृताः, तदन्नशेषेषु लाजा अपि विद्यन्ते, तानयमश्वो भक्षयति; अतो लाजा अस्य सन्तीति 'लाजी'; भक्षयितुं शक्या अन्नविशेषाः शाचाः, ता अस्य सन्तीति 'शाची'; अश्वो हि स्वामिनो 'यशः' कीर्त्तिं सम्पादयति, तद्विवक्षया 'यशोमम' -इति वाक्यमेतन्नामत्वेन प्रयुज्यते। तैरेतैर्लाज्यादिभिस्त्रिभिर्नाम-भिरश्वं सम्बोध्य तिस्रः पत्न्यः आह्वयन्ति। दूराद्धाह्वात् प्लुते स्तुताः*। एवं सम्बोध्याश्वशरीरगतान् देवान् प्रत्येवं ब्रुवते। हे देवाः! 'एतत्' 'अन्नम्' अस्माभिर्दीयमानमश्वरूपेण 'अत्त' भक्षयत। हे 'प्रजापते' देव। स्वामिन्! त्वमप्येतदन्नम् 'अद्धि' भक्षय॥

कल्प—"युञ्जन्ति ब्रध्नमिति दक्षिणस्यां युगधुर्यं तमश्वं युनक्ति" -इति। पाठस्तु—"युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः। रोचन्ते रोचना दिवि[५]"-इति। 'ब्रध्नम्' आदित्यरूपम् 'अरुषम्' अग्निरूपं 'चरन्तं' वायुरूपमिममश्वम्, तथा 'परितस्थुषः' परितोऽवस्थितान् त्रीन् लोकान् एतदश्वस्य रूपान् 'युञ्जन्ति' देवाः सर्वे रथे योज-यन्ति। तथा 'दिवि' द्युलोके वर्त्तमानानि 'रोचना' प्रकाशरूपाणि

* "दूराद्धूते च"-इति पा० ८, २ ८४ सू०।

नक्षत्राणि 'रोचन्ते' अयमेतं प्रकाशयन्ति। अयमर्थः सर्वोऽपि ब्राह्मणे स्पष्टमुच्यते— "असौ वा आदित्यो ब्रध्नः०—०अग्निर्वा अरुषः०—०वायुर्वै चरन्०—०इमे वै लोकाः परि तस्थुषः०—०नक्षत्राणि वै रोचना दिवि०—०"-इति (३.९.४.१.)॥

कल्पः— "युञ्जन्त्यस्य काम्येति प्रष्टी *"-इति। तत्राश्वस्य सहायभूतावितरौ † द्वावश्वौ युनक्ति। पाठस्तु— "युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे। शोणा धृष्णू नृवाहसा[६]"-इति। 'अस्य' अश्वस्य सहायभूतौ 'हरी' द्वावश्वौ 'युञ्जन्ति' देवा रथे योजयन्ति। कीदृशौ हरी? 'काम्या' कमनीयौ, 'विपक्षसा' विशेषेण पक्षे रथस्य पार्श्वे वर्त्तमानौ, 'शोणा' ईषल्लोहितौ, 'धृष्णू' शत्रुधर्षणक्षमौ, 'नृवाहसा' मनुष्यवाहिनौ ‡॥

कल्पः— "केतुं कृण्वन्नकेतव इति रथे ध्वजमुपगूहति"-इति। पाठस्तु— "केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे। समुषद्भिरजायथाः[७]"-इति। 'मर्याः' मनुष्याः 'अकेतवे' पूर्वं ध्वजरहिताय रथाय 'केतुं कृण्वन्' ध्वजं कुर्वन्तु। 'अपेशसे' सुवर्णालङ्काररहिताय रथाय 'पेशः' सुवर्णालङ्कारं कुर्वन्तु। हे रथ! त्वम् 'उषद्भिः' ज्वालासदृशैः सुवर्णरश्मिभिः 'समजायथाः' सङ्गतो जातोऽसि§॥ २०॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके विंशोऽनुवाकः॥

---

* "प्रष्टिभिर्याति"-इति ब्रा० ३ ८ २१ ३, शत० ब्रा० १३ २ ६ ९।
† 'प्रष्टिभि —पार्श्वस्थे'-इति म० सं० १ १००, १७ सा० भा०।
‡ एष च मन्त्रो ब्राह्मणे (३. ९ ४ २ ) व्याख्यात।
§ एषोऽपि मन्त्रो व्याख्यातो ब्राह्मणे ( ३ ९. ४ ३.)।

प्राणाय॒ स्वाहा॑ व्या॒नाय॒ स्वाहा॑पा॒नाय॒ स्वाहा॒ स्ना॑वभ्यः॒ स्वाहा॑ सन्ता॒नेभ्यः॒ स्वाहा॒ परि॑सन्ताने॒भ्यः स्वाहा॒ पर्व॑भ्यः॒ स्वाहा॑ स॒न्धाने॑भ्यः॒ स्वाहा॒ शरी॑रेभ्यः॒ स्वाहा॑ य॒ज्ञाय॒ स्वाहा॒ दक्षि॑णाभ्यः॒ स्वाहा॑ सुव॒र्गाय॒ स्वाहा॑ लो॒काय॒ स्वाहा॒ सर्व॑स्मै॒ स्वाहा॑ ॥ २१ ॥

प्रा॒णाया॒ष्टाविꣳशतिः ॥ २१ ॥

विंशेऽनुवाके जीवतोऽश्वस्योपचार उक्तः; अथैकविंशे सन्ततहोमशेषोऽभिधीयते। तथा च ब्राह्मणम्—"प्राणाय स्वाहा व्यानाय स्वाहेति सन्ततिहोमान् जुहोति"—इति*। पाठस्तु—"प्राणाय स्वाहा, व्यानाय स्वाहा, ऽपानाय स्वाहा, स्नावभ्यः स्वाहा, सन्तानेभ्यः स्वाहा, परिसन्तानेभ्यः स्वाहा, पर्वभ्यः स्वाहा, सन्धानेभ्यः स्वाहा, शरीरेभ्यः स्वाहा, यज्ञाय स्वाहा, दक्षिणाभ्यः स्वाहा, सुवर्गाय स्वाहा, लोकाय स्वाहा, सर्वस्मै स्वाहा"—इति। स्नावसूत्पन्नाः शाखानाड्यः 'सन्तानाः', तासूत्पन्ना उपशाखानाड्यः 'परिसन्तानाः'। एतैश्चतुर्दशभिर्मन्त्रैरश्वहोमेषु सन्तत्याख्यं होमं कुर्यात् ॥ २१ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके एकविंशोऽनुवाकः॥

---

* ३ ८ १८ ५। "सुवर्गस्य लोकस्य सन्तत्यै"—इति तच्छेषः।

सिताय स्वाहासिताय स्वाहाभिहिताय स्वाहा-
नभिहिताय स्वाहा युक्ताय स्वाहायुक्ताय स्वाहा
सुयुक्ताय स्वाहोद्युक्ताय स्वाहा विमुक्ताय स्वाहा
प्रमुक्ताय स्वाहा वञ्चते स्वाहा परिवञ्चते स्वाहा
संवञ्चते स्वाहानुवञ्चते स्वाहोद्वञ्चते स्वाहा यते स्वाहा
धावते स्वाहा तिष्ठते स्वाहा सर्वस्मै स्वाहा ॥ २२ ॥

सितायाष्टाचत्वारिंशत् ॥ २२ ॥

अथ द्वाविंशे अनुवाकेऽप्यश्वमेधहोमेष्वेव प्रमुक्त्याख्या होमा उच्यन्ते। तथा च ब्राह्मणम्— "सिताय स्वाहासिताय स्वाहेति प्रमुक्तीर्जुहोति"—इति*। पाठस्तु— "सिताय स्वाहा, ऽसिताय स्वाहा, ऽभिहिताय स्वाहा, ऽनभिहिताय स्वाहा, युक्ताय स्वाहा, ऽयुक्ताय स्वाहा, सुयुक्ताय स्वाहोद्युक्ताय स्वाहा, विमुक्ताय स्वाहा, प्रमुक्ताय स्वाहा, वञ्चते स्वाहा, परिवञ्चते स्वाहा, संवञ्चते स्वाहा, ऽनुवञ्चते स्वाहोद्वञ्चते स्वाहा, यते स्वाहा, धावते स्वाहा, तिष्ठते स्वाहा, सर्वस्मै स्वाहा"— इति। सितादीनि अश्वविशेषणानि। सितासितशब्दाभ्यामारोहणकालीनबन्धाबन्धौ विवक्षितौ। अभिहितानभिहितशब्दाभ्यां रशनायुगले बन्धाबन्धौ। युक्तादिचतुष्टयेन रथयोजनविशेषाः। विमुक्तप्रमुक्तशब्दाभ्यां मोचनविशेषौ। वञ्चतादिशब्दपञ्चकेन गमनप्रकारविशेषा, उपर्यारूढेन प्रेरिता वञ्चनादय, यतादिशब्दैस्तु

---

* ३ ८ १८ ६। "सुवर्गस्य लोकस्य प्रमुक्त्यै"—इति तच्छेषः।

स्वेच्छाकृता इति विशेष । एतैरेकोनविंशतिमन्त्रैः प्रमुक्तिहोम.*
कार्य ॥ २२ ॥

अथास्य प्रपाठकस्य विनियोगसङ्ग्रह'—

चतुर्विंशतिराचौ द्वौ चतुर्थाद्यद्वितीययोः ।
त्रिंशद्रात्रस्तृतीये स्याद्, द्वात्रिंशद्राच उत्तरे ।
त्रयस्त्रिंशद्ध्योऽन्यस्मिन्, षट्त्रिंशद्राच उत्तरे ।
एकोनपञ्चाशदह सप्तमे समुदीरितम् ।
संवत्सराख्यसचस्य दीक्षाकालोऽष्टमे श्रुत. ।
दीक्षाद्युपसदोऽन्यस्मिन्, दशमे प्रायणीयकम् ।
माघा एकादशे(१-११), ऽश्वमेधमन्त्रा उदीरिता ।
मेषो नवाप्यहोमा, अवन्तौ. परियन्ति हि । (१२)
कूप्याभ्यो विंशतिश्चाद्यो द्वादशापान्तु होमका । (१३,१४)
यो अर्व स्वप्रहार. स्यात्परोऽधसदमस्त्विति' ।
अहं प्रद्या स्वामिदत्ते प्रत्याभिकेति वाचयेत् ।
एते मन्त्रास्तु चत्वारो(१५), यथहोमा नमो नव । (१६)
मयोऽष्टौ स्वर्गव्यहोमा (१७), किं प्रह्मोद्ये यडीरिता. । (१८)
पत्नीमुदानयेदम्बे, सुभेत्याच्छादयेदुभौ ।
तौ सम्प्रसारयेत्पादान्, वृषेत्यध्वर्युर्मन्त्रयेत् ।
उत्सग् दधाति गुह्ये दे, ह्यम्बे अश्व विगर्हयेत् ।

---

* 'प्रमुक्ति'—मुख्यभाव, सर्वदा स्वेन सम्बन्ध, यथापम्मरत्यमित्युक्ति स्वस्यभाव, तद्दद्यिम्—इति सा० भा० (ब्रा० ३ ८ १८ ६)।

ऊर्द्धमन्या बोधयन्ति, चिरेवं स्यात् पुनः पुनः।
दधि सर्वा अपिला हि, मार्जयन्ते त्रिभिर्जलैः।
अम्ब इत्यनुवाकेऽस्मिन् मन्त्रा अष्टादशेरिताः। (१९)
भूस्त्रिपत्न्योऽश्ववालेषु कौलेयुस्त्रिविधान्मणीन्।
वसाश्वभ्रन्ति पत्न्यो, ऽश्वमेतमावर्त्तयेद्गुणान्।
लाज्यमशेष आहार्यां, युञ्जन् युञ्ज्याद्रथेऽश्वकम्।
युञ्जान्यौ योजयिताय, केतुं बन्ध्यो रथे ध्वजः।
भूर्भुवस्सुवरित्यस्मिन् मन्त्रा एकादशेरिताः। (२०)
प्राणमन्ततिहोमा स्युस्तच मन्त्राश्चतुर्दश। (२१)
चिता प्रमुक्तिहोमाः स्युर्मन्त्रा एकोनविंशतिः॥ (२२)

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥ ७॥ ४॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे चतुर्थप्रपाठके द्वाविंशोऽनुवाकः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये 'वेदार्थ-प्रकाश'-नामकृष्णयजुस्तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डीयव्याख्याने चतुर्थः प्रपाठकः समाप्तः॥

---

(१)बृहस्पति॒(२)र्यथ॒(३)र्द्धाः (४)प्र॒जाप॑ति॒(५)र्द्वे (६)आ॒दित्या॒* (७)वसि॑ष्ठः (८)संवत्स॒राय॑ (९)सु॒व॒र्गं (१०)ब्र॑ह्मवा॒दिनो॒ (११)ज्यो॑ति॑ष्टोमं (१२)मे॒षः (१३)कू॒प्या॑भ्यो॒ (१४)ऽद्भ्यो (१५)ऽपो (१६)नमो॒ (१७)मयो॒भूः (१८)कि (१९)मम्बे † (२०)भूः (२१)प्रा॒णाय॑ (२२)सि॒ताय॒ द्वावि॑ꣳशतिः ‡ ॥ ४ ॥

(१)बृहस्पति॒(२)प्रति॑ तिष्ठन्ति॒ (३)वै द॑शरा॒त्रेण॑ (४)सु॒व॒र्गं (५)यो अ॑वन्त॒ (६)भूस्त्रिप॑ञ्चाशत् § ॥ ४ ॥

इति तैत्तिरीयसंहितायां
सप्तमकाण्डे चतुर्थः प्रपाठकः ॥ ४ ॥

---

* "(१)बृहस्पति (२)अथया वा (३)ऋद्धा वै (४)प्र॒जाप॑ति॒र्येन॑ येन (५)द्वे वावा (६)दित्या"—इति क, ख, ग ।

† "(१८)किञ्च स्वि(१९)दम्बे"—इति क, ख, ग ।

‡ प्रपाठकेऽत्र ये द्वाविंशत्यनुवाका समाम्नातास्तेषामेवेमानि प्रतीकपदानि ।

§ ३८६पृ॰ ६प॰, ३९८पृ॰ ११प॰, ४१०पृ॰ ५प॰, ४२९पृ॰ २प॰, ४४३पृ॰ १६प॰, ४६३पृ॰ १९प॰, । मु॰ पुस्तके नास्त्येतद् वाक्यम् ।

# अथ तैत्तिरीयसंहितायां

## सप्तमकाण्डे

### पञ्चम प्रपाठक ।

---

॥ हरिः ओम् ॥

गावो वा एतत्सत्रमासताशृङ्गाः सतीः शृङ्गाणि नो जायन्ता इति कामेन तासां दश मासा निषण्णा आसन्नथ शृङ्गाण्यजायन्त ता उदतिष्ठन्नरात्स्मेत्यथ यासां नाजायन्त ताः संवत्सरमाप्त्वोदतिष्ठन्नरात्स्मेति यासां चाजायन्त यासाञ्च न ता उभयीरुदतिष्ठन्नरात्स्मेति गोसत्रं वै ( १ )

संवत्सरो य एवं विद्वांसः संवत्सरमुपयन्त्यृध्नुवन्त्येव[१] तस्मात्तूपरा वार्षिकौ मासौ पत्वा चरति सत्राभिजितं ह्यस्यै[२] तस्मात् संवत्सरसदो यत्किञ्च गृहे क्रियते तदवाप्तमवरुद्ध*मभिजितं क्रियते[३] समुद्रं वा एते प्र प्लवन्ते ये संवत्सरमुपयन्ति यो वै समुद्रस्य पारं न पश्यति न वै स तत उदेति संवत्सरः ( २ )

---

* "मरुद्ध"–इति मु०–पाठ ।

वै समुद्रस्तस्यैतत्पारं यदतिरात्रौ य एवं विद्वाꣳ-
सः संवत्सरमुपयन्त्यनार्त्ता एवोदृचं गच्छन्ती(४)यं वै
पूर्वोऽतिरात्रोऽसावुत्तरो मनः पूर्वो वागुत्तरः प्राणः
पूर्वोऽपान उत्तरः प्ररोधनं पूर्व उदयनमुत्तरो(५) ज्योति-
ष्टोमो वैश्वानरोऽतिरात्रो भवति ज्योतिरेव पुरस्ताद्दध-
ते सुवर्गस्य लोकस्यानुख्यात्यै(६) चतुर्विꣳशः प्रायणीयो
भवति चतुर्विꣳशतिरर्धमासाः ( ३ )

संवत्सरः प्रयन्त एव संवत्सरे प्रति तिष्ठन्ति तस्य
त्रीणि च शतानि षष्टिश्च स्तोत्रीयास्तावतीः संवत्स-
रस्य रात्रय उभे एव संवत्सरस्य रूपे आप्नुवन्ति(७) ते
सꣳस्थित्या अरिष्ट्या उत्तरैरहोभिश्चरन्ति(८) षडहा
भवन्ति षड्वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति
तिष्ठन्ति(९) गौश्चायुश्च मध्यतः* स्तोमौ भवतः संवत्सर-
स्यैव तन्मिथुनं मध्यतः ( ४ )

दधति प्रजननाय(१०) ज्योतिरभितो भवति विमोचन-
मेव तच्छन्दाꣳस्येव तद्विमोकं यन्त्ययो उभयतोज्योति-
षैव षडहेन सुवर्गं लोकं यन्ति(११) ब्रह्मवादिनो वदन्त्या-
सते केन यन्तीति देवयानेन पथेति ब्रूयाच्छन्दाꣳसि वै
देवयानः पन्था गायत्री त्रिष्टुब् जगती ज्योतिर्वै गायत्री

---

* "मध्यत"–इति निर्विसर्गपाठः कादम्यत्र सर्वत्र।

गौस्त्रिष्टुगायुर्जगती यदेते स्तोमा भवन्ति देवयानेनैव (५)

तत् पथा यन्ति[१२] समानꣳ साम भवति देवलोको वै साम देवलोकादेव न य[१३]न्त्यन्या अन्या ऋचो भवन्ति मनुष्यलोको वा ऋचो मनुष्यलोकादेवान्यमन्यं देवलोकमभ्यारोहन्तो य[१४]न्त्यभिवर्त्तो ब्रह्मसामं भवति सुवर्गस्य लोकस्याभिवर्त्त्या[१५] अभिजिद्भवति सुवर्गस्य लोकस्याभिजित्यै[१६] विश्वजिद्भवति विश्वस्य जित्यै[१७]. मासिमासि पृष्ठान्युप यन्ति मासिमास्यतिग्राह्या गृह्यन्ते मासिमास्येव वीर्यम् (६)

दधति मासां प्रतिष्ठित्या[१८] उपरिष्टान्मासां पृष्ठान्युप यन्ति तस्मादुपरिष्टादोषधयः फलं गृह्णन्ति[१९] ॥१॥

वै[१] संवत्सरो[२]ऽर्द्धमासा[३] मध्यत[४] एव[५] वीर्य[६]* त्रयोदश च ॥ १ ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा, यो वेदेभ्योऽखिलं जगत्।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
सत्रं संवत्सरान्तं यत्, तत् चतुर्थे समीरितम्।
विशेषः पञ्चमे तस्य वत्सराख्यस्य वर्ण्यते ॥ २ ॥

---

* "गोसत्रं वा[१] एति संवत्सरो[२]ऽर्द्धमासा[३] मिथुनं मध्यतो[४] देवयानेनैव[५] वीर्यं[६]"—इति क, ख, ग।

तत्रादौ तावत् संवत्सरसत्त्रं विधत्ते—"गावो वा एतत् सत्त्रमासताशृङ्गाः सतीः शृङ्गाणि नो जायन्ता इति कामेन तासां दश मासा निषण्णा आसन्नथ शृङ्गाण्यजायन्त ता उदतिष्ठन्नरात्स्मेत्यथ यासां नाजायन्त ताः संवत्सरमाप्त्वोदतिष्ठन्नरात्स्मेति; यासाञ्चाजायन्त यासाञ्च न, ता उभयीरुदतिष्ठन्नरात्स्मेति, गोसत्त्रं वै संवत्सरो य एवं विद्वाꣳसः संवत्सरमुपयन्त्यृध्नुवन्त्येव(१)"—इति। यद्यपि गावस्तिर्यक्त्वान्न कर्माधिकारिण्यः, तथापि तदभिमानिदेवता अत्र गोशब्देन विवक्षिता। अभिमन्तव्यानां शृङ्गभावाभावौ स्वस्मिन्नारोप्य गोभिः सह तादृशबुद्ध्या व्यवहरन्ति *। पुरा शृङ्गरहिताः सत्यो गावः शृङ्गोत्पत्तिं कामयित्वा 'एतत्' "संवत्सराय दीक्षिष्यमाणाः"—इत्याद्यनुवाकोक्तं† सत्त्रं सम्यगतिष्ठन्। 'तासां' शृङ्गकामोपेतानामनुष्ठाने प्रवृत्तानां गवां दश मासा निर्गता अभूवन्। 'अथ' मासदशकादूर्द्ध्वं शृङ्गाण्युत्पन्नानि। तदानीं 'ताः' गावोऽपेक्षितेन फलेन समृद्धाः स्म इति मत्वा, तस्मात् सत्रादुत्थिताः। अथैतस्मिन् काले कासाञ्चिद् गवां शृङ्गाणि नोत्पन्नानि, 'ताः' पुनरपि मासद्वयमनुष्ठाय संवत्सरसम्पूर्त्तिं कृत्वा समृद्धाः स्म इत्येव मत्वा, तस्मात् सत्रादुत्थिताः। तदेवं यासां शृङ्गाण्युत्पन्नानि, यासां च नोत्पन्नानि, ता उभयविधा अपि गावो वयं समृद्धा इत्येव मत्त्वोत्थिताः। यस्माद्

* मीमांसायान्त्वन्यथा व्याख्यातम्। तथाहि—"वनस्पतय सत्त्रं मासत इत्येवमादयोऽपि नानुपपन्ना, स्तुतयो ह्येताः सत्त्रस्य,—वनस्पतयो नामाचेतना इव सत्त्रमुपासितवन्तः, किं पुनर्विद्वांसो ब्राह्मणाः"—इत्यादि जै० द० १ १. २२ सू० शब० भा०। † ७ ४. ७—४२३ पृ०।

गोभिरनुष्ठितं, तस्माद् 'गोसत्रम्'-इत्येवाय संवत्सराख्यः कर्मविशेषोऽभिधीयते। 'ये' यजमाना एव विद्वांसः संवत्सराख्य कर्मविशेषमनुतिष्ठन्ति, ते समृद्धिं प्राप्नुवन्त्येव ॥

यदुक्तमर्थवादे— यासाञ्चवां शृङ्गाण्यजायन्त, यासां च नाजायन्त, ता उभय्योऽप्यृद्धिं गता इति; तत्र जातशृङ्गाणां शृङ्गजन्मैवर्द्धिः, इतरासान्तु कथं सा समृद्धिरित्याशङ्क्य तां दर्शयति— "तस्मात्तूपरा वार्षिकौ मासौ पर्त्वा चरति, सत्राभिजितꣳ ह्यस्यै[१]"-इति। यस्मादजातशृङ्गाः 'तूपरा' सत्रेण समृद्धिं गता', तस्मादियं वर्षर्तुसम्बन्धिनौ मासौ 'पर्त्वा' प्रीति प्राप्यारण्ये चरति। वार्षिकयोर्हि मासयोररण्ये सञ्चरन्तीनां दीर्घशृङ्गयुक्तानां गवां महान् क्लेशो जायते। प्रबलवायूपेततया तीव्रदृष्ट्या मुखे प्रतिहताः सत्यो मुखमर्वाग्भूतं कृत्वा शृङ्गभारेण पीड्यन्ते, तूपरायास्तु नास्त्ययं क्लेशः। यथा केशश्मश्रुपूर्णशिरस्कानां पुरुषाणां सत्यपि सौन्दर्याभिमानकृते सुखे नदीस्नानहतभोजनादौ महान् क्लेशः, तद्वत्। यदेतदस्याः तूपराया गोर्वर्षासु प्रीतिसम्पादनं, तदेतत् 'सत्राभिजित' सत्रानुष्ठानलब्धम् ॥

अथ प्रकारान्तरेण सत्रानुष्ठानं प्रशंसति— "तस्मात् संवत्सरसदो यत् किञ्च गृहे क्रियते, तदवाप्तमवरुद्धमभिजितं क्रियते[१]"-इति। यस्मात् सत्रं प्रशस्तं, तस्मात् 'संवत्सरसदः' संवत्सरसत्रमनुष्ठितवतो यजमानस्य गृहे 'यत् किञ्च क्रियते' यत् किमप्यग्निहोत्रादिकमङ्गविकलमप्यनुष्ठीयते, तद् 'अवाप्तम्' सम्पूर्णमेव भवति, तथा 'अवरुद्धम्' अकाले कृतमपि, स्वकाले कृत भवति; 'अभिजित' फलापेक्षा-

राद्वित्येऽपि समादितफलं भवति। अत एव शास्त्रन्यायाभिज्ञा आहुः—"तेषां तेजोविशेषेण प्रत्यवायो न विद्यते"—इति।

अथैतस्य सत्रस्य प्रायणीयोदयनीयावहर्विशेषौ विधत्ते—"समुद्रं वा एते प्र प्लवन्ते, ये संवत्सरमुपयन्ति; यो वै समुद्रस्य पारं न पश्यति, न वै स तत उदेति, संवत्सरो वै समुद्रस्तस्यैतत् पारं, यदतिरात्रौ, य एवं विद्वाꣳसः संवत्सरमुपयन्त्यनार्त्ता एवोदृचं गच्छन्ति[४]"—इति। 'ये' यजमानाः संवत्सरसत्रमुपक्रमन्ते, 'एते' यजमानाः समुद्रमेव बाहुभ्यां तरितुमुद्युञ्जते; सत्रस्य समुद्रवदति-प्रभूतत्वात्। एवं सति 'यः' पुरुषः समुद्रस्य 'पारं' परतीरं न पश्यति, 'सः' पुरुषः समुद्रादुद्गन्तुं न शक्नोति। अयं च संवत्सरस्तेन समुद्रेण समानः; तस्मादस्य समाप्तिपरिज्ञानाभावे तत उत्थातु-मुत्साहो न भवेत्, तस्मात् समाप्तिरूपमहर्विज्ञेयम्। 'तस्य' च समुद्रसमस्य संवत्सरस्य पारावारतीरभूतावतिरात्रौ। एतदभिज्ञाय यजमानाः 'अनार्त्ताः' मनसि उद्वेगरहिता एव 'उदृचम्' उत्तमां समाप्तिसम्बन्धिनीमृचं गच्छन्ति। तस्मादतिरात्रावुभावनुष्ठेया-वित्यर्थः। यदि "ब्रह्मवादिनो वदन्त्यतिरात्रः परम"—इत्यनु-वाके* एव प्रायणीयोऽतिरात्रो विहितः, तथाप्युदयनीयातिरात्रेण सह निर्देष्टुमत्र पुनरुपन्यासः॥

तावेतावतिरात्रौ बहुधा प्रशंसति—"इयं वै पूर्वोऽतिरात्रो-ऽसावुत्तरो, मनः पूर्वो वागुत्तरः, प्राण पूर्वोऽपान उत्तरः, प्ररोधनं पूर्व उदयनमुत्तरः[५]"—इति। 'पूर्वः' प्रायणीयोऽतिरात्रः, प्राथम्यसाम्येन

* ७ ४ १०—४२० पृ०।

पृथिव्यादिरूपः; उदयनीयस्तु पश्चाद्भाविलेन द्युलोकादिरूपः । 'प्ररोधनं' लौकिकस्य वैदिकस्य वा व्यापारस्य प्रारम्भः ॥

यावेतावतिरात्रौ सामान्येनोक्तौ, तयोर्विशेषाकारेण स्वरूपं विधत्ते—"ज्योतिष्टोमो वैश्वानरोऽतिरात्रो भवति; ज्योतिरेव पुरस्ताद् दधते, सुवर्गस्य लोकस्यानुख्यात्यै(६)"-इति । योऽयमतिरात्रः, स ज्योतिष्टोमरूपः, स च वैश्वानरेण दृष्टः, तदनुष्ठानेन स्वर्गमार्गे पुरस्ताज्ज्योतिर्दधते, तच्च स्वर्गप्रकाशनाय भवति ॥

यदुक्तं सूत्रकारेण "प्रायणीयमतिरात्रमुपेत्य चतुर्विंशमुक्थ्यमारम्भणीयमुपयन्ति"-इति, तदिदं विधत्ते—"चतुर्विंशः प्रायणीयो भवति; चतुर्विंशतिरर्द्धमासाः संवत्सरः, प्रयन्त एव संवत्सरे प्रति तिष्ठन्ति; तस्य त्रीणि च शतानि षष्टिश्च स्तोत्रीयास्तावतीः संवत्सरस्य रात्रय, उभे एव संवत्सरस्य रूपे आप्नुवन्ति(७)-इति । यदेतदारम्भणीयमहः, तदेतत् पूर्वोक्तादतिरात्रादुत्तरभाविलेऽपि वक्ष्यमाणेभ्योऽभिप्लवषडहावृत्तिरूपेभ्यो मासेभ्यः प्रथमभाविलात् प्रायणीय इत्युच्यते । स चाहर्विशेषश्चतुर्विंशस्तोमयुक्तः कार्यः । तथा सति सङ्ख्यासाम्यादर्द्धमासद्वारा संवत्सरः सम्पद्यते । तत्सम्पत्तौ सत्यां प्रारभमाणा एव यजमानाः संवत्सरसत्त्रानुष्ठाने स्थिरा भवन्ति । किञ्चैतस्याह्न उक्थ्यरूपलात्, उक्थ्यस्य च पञ्चदशस्तोत्रयुक्तलात्, एकैकस्मिन् स्तोत्रे चतुर्विंशतिसङ्ख्याकास्वृचु स्तोत्रीयासु सतीषु मिलिला षष्ठ्युत्तरशतत्रयपरिमिता स्तोत्रीया भवन्ति । एवं सति संवत्सरस्य यदिदं चतुर्विंशत्यर्द्धमासात्मकं रूपं, यच्च षष्ठ्युत्तरशतत्रयरात्र्यात्मकं रूपं, ते उभे अपि रूपे सङ्ख्यासाम्येन प्राप्नुवन्ति ॥

अनन्तरभावीन्यहानि विधत्ते—"ते सꣳस्थित्या अरिष्ट्या उत्तरैरहोभिश्चरन्ति(८)"—इति। अनुष्ठितप्रायणीयारम्भणीयाः 'ते' यजमानास्तत ऊर्द्ध्वं 'संस्थित्या अरिष्ट्यै' सत्रसमाप्तेरविनाशाय 'उत्तरैः' ज्योतिर्गौरायुरित्यादिभिरहोभिरनुतिष्ठेयुः। अत्र यानि पूर्वप्रपाठकविहितानि, तेषां स्तुत्यर्थोऽनुवादः, यानि त्वविहितानि, तेषामत्र विधिरिति विवेकः॥

ज्योतिरादीनामभिप्लवषडहतां विधत्ते—"षडहा भवन्ति; षड् वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठन्ति(९)"—इति। ज्योतिर्गौरायुरायुर्गौर्ज्योतिरित्येवं षडहत्वम्॥

उक्ते षडहे मध्यवर्त्यहर्द्वयं प्रशंसति—"गौश्चायुश्च मध्यतः स्तोमौ भवतः; संवत्सरस्यैव तन्मिथुनं मध्यतो दधति प्रजननाय(१०)"—इति। योऽयं गोष्टोमः, यश्चायुष्टोमः, तावुभौ षडहस्य मध्ये कर्त्तव्यौ। 'तत्' तेन संवत्सरसत्रस्य मध्ये मिथुनं सम्पादयन्ति; तच्च प्रजननाय भवति॥

षडहस्याद्यन्तावहर्विशेषौ प्रशंसति—"ज्योतिरभितो भवति; विमोचनमेव तच्छन्दाꣳस्येव तद्विमोकं यन्त्ययो उभयतोज्योतिषैव षडहेन सुवर्गं लोकं यन्ति(११)"—इति। षडहस्याद्यन्तयोर्ज्योतिष्टोमः कार्यः। तदेतदादौ ज्योतिष्टोममनुष्ठाय, पुनरप्यन्ते ज्योतिष्टोमस्यानुष्ठानम्, उपक्रमे निरुद्धस्य विमोचनसमानं भवति। तेन ज्योतिर्गौरायुरित्येतत्त्रयरूपाणि 'छन्दांसि' गायत्र्यादीन्येव विमोकं प्राप्नुवन्ति। अपि च पार्श्वद्वये ज्योतिर्युक्तेन दीपद्वयसमानेन षडहेन प्रकाशितं स्वर्गं सुखेन प्राप्नुवन्ति॥

अथ प्रश्नोत्तराभ्यां ज्योतिरादिकं प्रशंसति— "ब्रह्मवादिनो वदन्त्यासते केन यन्तीति, देवयानेन पथेति ब्रूयाच्छन्दाꣳसि वै देवयानः पन्था, गायत्री त्रिष्टुब् जगती, ज्योतिर्वै गायत्री गौस्त्रिष्टु-गायुर्जगती; यदेते स्तोमा भवन्ति, देवयानेनैव तत् पथा यन्ति[११]—इति। 'ये' यजमानाः 'आसते' सत्रमनुतिष्ठन्ति, 'ते' यजमानाः केन पथा स्वर्गं गच्छन्ति? इति ब्रह्मवादिनां प्रश्नः। तत्राभिज्ञो देवयानेन पथा गच्छन्तीत्युत्तरं ब्रूयात्। येन देवा यान्ति, सोऽयं 'देवयानः पन्थाः'। सोऽपि कीदृशः? इति चेत्, श्रूयताम्— गायत्र्यादीनि छन्दांस्येव मार्गसाधनत्वाद् 'देवयानः पन्थाः'—इत्युच्यन्ते; इह तु ज्योतिष्टोमादीन्येव गायत्र्यादीनि। तस्मादेतेषामनुष्ठानेन तेनैव पथा गच्छन्ति॥

अथ सर्वेष्वहस्सु पृष्ठस्तोत्रे सामैक्यं विधत्ते— "समानꣳ साम भवति; देवलोको वै साम, देवलोकादेव न यन्ति[१२]—इति। बृहदेव वा रथन्तरमेव वा सर्वेष्वहस्स्वेकमेव साम पृष्ठस्तोत्रे गायेत्। देवलोको हि पक्षपातराहित्येन सर्वसमत्वात् सामरूपः*। अत एकविधेन साम्ना कदाचिदपि देवलोकान्न निर्गच्छन्ति॥

तस्य साम्न आधारभूतानामृचामेतेष्वहस्सु भेदं विधत्ते— "अन्या अन्या ऋचो भवन्ति, मनुष्यलोको वा ऋचो मनुष्यलोकादेवान्य-मन्यं देवलोकमभ्यारोहन्तो यन्ति[१३]"—इति। ऋचो हि मनुष्य-लोकस्वरूपाः; साम्न आधारभूतत्वात्। यथा कर्मानुष्ठानद्वारा

---

* निरु० ७. ३. ६, ऐ० ब्रा० ३. २ १२, तै० उ० १.२ १, शत० ब्रा० १४. ४. १. २४, ता० ब्रा० ४. ३ ७। एतेष्वप्येव द्रष्टव्यम्।

देवलोकस्याधारभूतो मनुष्यलोकस्तद्वत्। अन्यमन्यमिति पञ्चम्यर्थे द्वितीया। एषामन्यत्वे सत्यूपपादन्यस्मादन्यस्मात् मनुष्यलोकाद् देवलोकमभ्यारोहन्तो यजमानाः सुखं प्राप्नुवन्ति। नानाविधकर्माधारत्वात् मनुष्यलोकस्य नानाविधत्वम्। यद्वा 'अन्यमन्यं देवलोकं' कर्मवैचित्र्येण फलवैचित्र्यमित्यर्थः॥

प्राकृतं साम बाधितुं सामान्तरं विधत्ते—"अभिवर्त्तो ब्रह्मसामं भवति, सुवर्गस्य लोकस्याभिवृत्त्यै(१८)"—इति। ब्रह्मणः सम्बन्धि यत् साम, तदभिवर्त्तनामकं कार्यम्*। तच्च स्वर्गलोकस्याभितः प्राप्त्यै भवति॥

अहरन्तरं विधत्ते—"अभिजिद् भवति, सुवर्गस्य लोकस्याभिजित्यै(१९)"—इति। विषुवदाख्यं यत् प्रथममहः, तस्मात् पूर्वं स्वरसामाख्यास्त्रयोऽहर्विशेषाः; तेभ्योऽपि पूर्वमभिजिदाख्यमेकमहः कर्त्तव्यम्, तच्च स्वर्गाभिजयाय भवति॥

पुनरप्यन्यदहर्विधत्ते—"विश्वजिद् भवति, विश्वस्य जित्यै(२०)"—इति। विषुवदाख्यादह्न ऊर्द्ध्वभाविनो ये त्रयः स्वरसामानोऽहर्विशेषास्तेभ्य ऊर्द्ध्वं विश्वजिदाख्यमहः कर्त्तव्यम्; तच्च विश्वस्य जयाय भवति॥

प्रतिमासमभिप्लवषडहेभ्य ऊर्द्ध्वं पृष्ठ्य षडहमनियाह्मनियमञ्च विधत्ते—"मासिमासि पृष्ठान्युप यन्ति, मासिमास्यतिग्राह्या गृह्यन्ते,

---

* तैत्तिरीयाणामभिवर्त्त इति ह्रस्वेकारमध्य एव पाठ सर्वत्र, अन्येषान्तु दीर्घेकारमध्योऽभीवर्त्त इति। किञ्च ब्रह्मसाममिति टजन्तस्यैव रूपं तैत्तिरीयाणां सर्वत्र (४३१ पृ०), नान्येषाम्। तथाहि—"अभीवर्त्तो ब्रह्मसाम भवति"—इत्यादि ता० ब्रा० ४. ३. १।

मासिमास्येव वीर्यं दधति, मासां प्रतिष्ठित्यै[१८]-इति। प्रतिमासानुष्ठानेन तस्मिन्-तस्मिन् मासि वीर्यं सम्पद्यते ॥

पृष्ठ्यस्य षडहस्य मासेषूर्द्धभागं स्थानत्वेन विधत्ते—"उपरिष्टान्मासां पृष्ठान्युप यन्ति ; तस्मादुपरिष्टादोषधयः फलं गृह्णन्ति[१९]"-इति* ॥

अत्र मीमांसा। सप्तमाध्यायस्य तृतीयपादे (जै० सू० ५. अधि० २.) चिन्तितम्—

"गवामयन आद्येऽह्नि प्रायणीयेति नाम यत्।
तद् द्वादशाहिकादह्नो धर्मानतिदिशेन्न वा॥
पूर्वन्यायेनातिदेशो नैवं† प्रथमता द्वयोः।
अह्नोस्तुल्येति मुख्यत्वं समं नातिदिशेत्ततः॥

द्वादशाहे प्रथमस्याह्नः प्रायणीयमिति नाम। तथा गवामयनेऽपि तत्राग्निहोत्रनामन्यायेनातिदेश इति चेत्, नैवम्;—प्रायणीयशब्दप्रवृत्तिनिमित्तस्य प्राथम्यस्य द्वयोस्तुल्यत्वेनोभयत्र मुख्यत्वेऽपि अनेकार्थत्वाप्रसङ्गात्‡। प्रारभ्यायति गच्छति प्रवर्त्तते कर्मानेनेति 'प्रायणीयम्'। अतो नैतन्नामधर्मानतिदिशति"-इति॥

तत्रैव चतुर्थपादे (जै० सू० १३-२०. अधि० ३.) अन्यच्च चिन्तितम्—

---

* ऐ० ब्रा० ४.२.६ खण्ड', ता० ब्रा० ४, ५ प्रपाठकयोश्च गवामयनं सत्रं विहितं द्रष्टव्यम्।

† "०नातिदिशेन्नैवं"-इति ए. सो. न्या० मा० पु० पाठः।

‡ "अनेकार्थत्वप्रसङ्गाभावात्"-इति ए. सो. न्या० मा० पु० पाठ।

"गवामयनिके ज्योतिरादौ किं द्वादशाहिकी।
ऐकाहिकी वानुमानादाद्योऽन्यो नामबाधनात् ॥

गवामयने ज्योतिर्गौरायुरिति ज्योतिरादिकास्त्रयो यागाः विहिताः। तेषु द्वादशाहिकीति कर्त्तव्यता युक्ता। कुतः? अनुमितशाक्येन तत्प्रापणात्। गवामयनं हि द्वादशाहविकृतिरिति वक्ष्यति, अतस्तत्सम्बन्धिलिङ्गेन तदीयधर्मप्रापकश्चोदकोऽनुमीयत इति प्राप्ते, ब्रूमः,— सन्ति ज्योतिरादिनामकास्त्रय एकाहाः। तदीयधर्मा गावामयनिकेषु ज्योतिरादिषु ज्योतिरादिभिस्त्रिभिर्नामभिः प्राप्ताः, नाम चानुमानिकाच्चोदकात् प्रबलम्, प्रत्यक्षश्रुतित्वात्, अतश्चोदकस्य बाधितत्वादेतेष्वेकाहिकीति कर्त्तव्यता ग्राह्या"–इति ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः॥

---

गावो वा एतत् सत्रमासताशृङ्गाः सतीः शृङ्गाणि सिषासन्तीस्तासां दश मासा निषण्णा आसन्नथ शृङ्गाण्यजायन्त ता अब्रुवन्नरात्स्मोत्तिष्ठामाव तं काममरुत्स्महि येन कामेन न्यषदामेति[1] तासामु त्वा अब्रुवन्नर्धा वा यावतीर्वासामहा एवेमौ द्वादशौ मासौ संवत्सरꣳ सम्पाद्योत्तिष्ठामेति तासाम् (१)

द्वादशे मासि शृङ्गाणि प्रावर्त्तन्त श्रद्धया वाश्रद्धया वा ता इमा यास्तूपरा उभय्यो वाव ता आर्ध्नुवन् याश्च शृङ्गाण्यसन्वन्याश्चोर्जमवारुन्धत[१] र्ध्नोति दशसु मासूत्तिष्ठन्नृध्नोति द्वादशसु य एवं वेद[२] पदेन खलु वा एते यन्ति विन्दन्ति खलु वै पदेन यन्[३] तद्वा एतदृद्धमयनं तस्मात् (२)

एतद्गोसनि[४] ॥ २ ॥

तासां[५] * तस्माद्[६] द्वे च ॥ २ ॥

प्रथमेऽनुवाके गवामयननामकं संवत्सरसत्रं कैश्चिद् विशेषैः सह विहितम्। सोमयागा द्विविधाः,— आवृत्ता अनावृत्ताश्च। ते चानावृत्ता एकाहाः। आवृत्ता अपि द्विविधाः,— अहीनरूपाः सत्ररूपाश्च †। द्विरात्रमारभ्यैकादशरात्रपर्यन्ता अहीनाः ‡। एकादशरात्रद्वादशरात्रौ तु द्विविधौ,— अहीनरूपौ सत्ररूपौ च। त्रयोदशरात्रमारभ्योपरितनानि सत्राण्येव §। तान्यपि द्विविधानि,— रात्रिसत्राण्ययनात्मकसत्राणि च। तत्र शतरात्रपर्यन्तानि रात्रिसत्राणि ‖, संवत्सरमारभ्योपरितनानि अयनरूपाणि ¶। तेषां च सर्वेषां प्रकृति-

* "तिष्ठामेति तासां[५]"—इति क, ख, ग।

† पुरस्तात् १६५—४३८ पृ० द्रष्टव्यम्।

‡ ता० ब्रा० १८ प्र० ११ ख०—२२ प्र० शेषपर्यन्तं द्रष्टव्यम्।

§ ता० ब्रा० २२ प्र० आरभ्य ग्रन्थसमाप्तिपर्यन्तमवलोक्यम्।

‖ ता० ब्रा० २२ प्र०—२४ प्र० १९ ख० पर्यन्त द्रष्टव्यम्।

¶ ता० ब्रा० २४ प्र० २० ख० आरभ्य ग्रन्थशेषपर्यन्तं द्रष्टव्यम्।

भूतमिदं 'गवामयनम्'। तस्य च संवत्सरकालसाध्यः प्रयोगः पूर्वानुवाकेऽभिहितः; अथ द्वितीये दशमाससाध्येन प्रयोगेण सह विकल्पोऽभिधीयते ॥

तमेतं विधातुं पूर्वोक्तमेवार्थवादं कस्य चिद् विशेषस्य विवक्षया पुनः पठति— "गावो वा एतत् सत्रमासताशृङ्गाः सतीः शृङ्गाणि सिषासन्तीस्तासां दश मासा निषण्णा आसन्नथ शृङ्गाण्यजायन्त, ता अब्रुवन्नराल्स्मोत्तिष्ठामाव तं काममरुत्स्महि, येन कामेन न्यषदामेति(१)"-इति। पुरा शृङ्गरहिताः सत्यो गावः, शृङ्गाणि 'सिषासन्तीः' सनितुं लब्धुमिच्छन्त्य 'एतत्' उच्यमानं सत्रमन्वतिष्ठन्। 'तासां' गवां दश मासा अनुष्ठिता अभवन्, 'अथ' अस्मिन् काले शृङ्गाण्युत्पन्नानि। 'ताः' चोत्पन्नशृङ्गाः परस्परमिदमब्रुवन्। 'येन' शृङ्गविषयेण कामेन 'न्यषदाम' सत्रानुष्ठानार्थं वयमेकत्र स्थाने निषण्णाः, 'तं' शृङ्गविषयं कामम् 'अरुत्स्महि' वयं सम्पादितवत्यः। एव मुक्ता काश्चिद् गावः कृतार्थबुद्ध्या सत्रादुत्थिताः; ता उदतिष्ठन्निति पूर्वस्मिन्नर्थवादे (४७१पृ०) श्रवणात्।

तत्रैव यदन्यदुक्तम्— अथ यासां नाजायन्त, ताः संवत्सरमाप्त्वोदतिष्ठन्निति (४७२पृ०), तत्र विवक्षितं विशेषं दर्शयति— "तासामु त्वा अब्रुवन्नर्द्धा वा, यावतीर्वासामहा एवेमौ द्वादशौ मासौ संवत्सरं सम्पाद्योत्तिष्ठामेति, तासां द्वादशे मासि शृङ्गाणि प्रावर्त्तन्त श्रद्धया वाश्रद्धया वा ता इमा यास्तूपराः उभय्यो वाव ता आर्ध्नुवन्, याश्च शृङ्गाण्यसन्वन् याश्चोर्जमवारुन्धत(२)"-इति। 'याः' गावः सत्रमनुतिष्ठन्ति, 'तासाम् उ तु त्वा' तासामेव मध्ये जातशृङ्गास्तत्याय

गतासु अवशिष्टाः 'अर्द्धा वा' काश्चिदेव गावः परस्परमेवमब्रुवन् । एतास्वर्द्धरूपासु गोषु मध्ये राशिद्वयम् । तत्र काश्चिच्छृङ्गकामाः, अपरास्तु किमेभिः शृङ्गैरूर्जमेवोदरपूरणक्षमां सम्पादयाम इति मन्यन्ते । एवं सति शृङ्गकामा अशृङ्गकामाश्च 'यावतीर्वा' यावत्यः सन्ति, 'ताः' सर्वा अपि मिलित्वा परस्परमेवमब्रुवन्। किमब्रुवन्निति, तदुच्यते— 'इमौ' संवत्सरावशिष्टौ द्वादशसङ्ख्यापूरणौ मासौ 'आसामहै एव' सर्वदाप्यनुतिष्ठाम। ततः संवत्सरं पूरयित्वा पश्चादुत्तिष्ठामेति 'तासां' संवत्सरं पूरयन्तीनां गवां मध्ये, यासां शृङ्गे श्रद्धास्ति, तासां तथैव श्रद्धया द्वादशे मासि शृङ्गाण्युत्पन्नानि ; यासान्तु श्रद्धा नास्ति, ता अश्रद्धयैव 'इमाः' सम्पन्नाः असम्पन्नशृङ्गाः, या लोके 'तूपराः' शृङ्गरहिता दृश्यन्ते। एव सति या गावः शृङ्गाणि अलभन्त, याश्चान्यास्तच्छृङ्गारहिताः स्वापेक्षितामूर्जमेव अलभन्त, 'ताः' उभयविधा अपि स्वस्वप्रयोजनसिद्ध्या समृद्धिङ्गताः । अत्र दशमासानुष्ठानेन शृङ्गमात्रम्, द्वादशमासानुष्ठानेन रमणीयशृङ्गत्वम्; कर्मभूयस्त्वात् फलभूयस्त्वमिति न्यायात् ॥

तदेवमर्थवादेन दशमासानुष्ठानं द्वादशमासानुष्ठानञ्च प्रशस्य विकल्पितं पक्षद्वयं विधत्ते— "ऋध्नोति दशसु मास्सूत्तिष्ठन्नृध्नोति द्वादशसु य एवं वेद[१]"–इति । 'यः' यजमानः प्रकारद्वयं वेत्ति, सोऽयं स्वेच्छयान्यतरं प्रकारमनुतिष्ठन् समृद्धिं प्राप्नोति ॥

ननु द्वादशसु मासेषु सम्पूर्णानुष्ठानत्वादस्तु फलम्, दशमासपक्षे तु कथम् ? इत्याशङ्क्योपपादयति— "पदेन खलु वा एते यन्ति, विन्दन्ति खलु वै पदेन यन्[२]"–इति । 'एते' दशमासानु-

छायिनो यजमानाः कालात्यत्वेऽपि 'पदेन खलु वै यन्ति' शास्त्रीयेण मार्गेणानुतिष्ठन्ति; लोकेऽपि 'पदेन यन्' राजमार्गेण गच्छन् पुरुषः स्वल्पस्खलनेऽपि ग्रामप्राप्तिं लभत एव । तद्वच्चापि फलप्राप्तिर्युक्ता ॥

उपपादितं पक्षद्वयमुपसंहरति—"तद् वा एतदृद्धमयनं, तस्मादेतद् गोसनि(४)"-इति । यत् एतद् गवामयनं, तद् यदि दशसु मासेषु समाप्यते, यदि वा द्वादशसु, सर्वथापि 'ऋद्धं' फलप्रदमेव । यस्मादयनस्य महिमा भूयान्, तस्मात् 'एतद्' अयनं 'गोसनि' गवां तिर्यग्जातीनामप्यभिमतलाभहेतुः, किमु वक्तव्यं विशिष्टब्राह्मणानामित्यभिप्रायः ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥

---

प्रथमे मासि पृष्ठान्युपं यन्ति मध्यम उपं यन्त्युत्तम उपं यन्ति(१) तदाहुर्यां वै त्रिरेकस्याह्न उपसीदन्ति दुहं वै सापराभ्यां दोहाभ्यां दुहेऽथ कुतः सा धोक्ष्यते यां द्वादशकृत्व उपसीदन्तीति संवत्सर८ सम्पाद्योत्तमे मासि सकृत् पृष्ठान्युपेयुस्तद् यजमाना यज्ञं पशूनव रुन्धते(२) समुद्रं वै ( १ )

· एतैऽनवारमपारं प्र प्लवन्ते ये संवत्सरमुपयन्ति यद् बृहद्रथन्तरे अन्वर्जेयुर्यथा मध्ये समुद्रस्य प्लवमन्वर्जेयु-

स्तादृक् तदनुंत्सर्गं बृहद्रथन्तराभ्यामित्त्वा प्रतिष्ठां गच्छन्ति सर्वेभ्यो वै कामेभ्यः सन्धिर्दुहे तद् यजमानाः सर्वान् कामानव रुन्धते[१] ॥ ३ ॥

वै[१]* चतुस्त्रिंशच्च ॥ ३ ॥

द्वितीये दशमासद्वादशमासविकल्पोऽभिहितः, अथ तृतीये पृष्ठ्यषडहविषयो विकल्पोऽभिधीयते ॥

यत् पूर्वं विहितं "मासिमासि पृष्ठान्युप यन्ति"-इति (४७५पृ० ८पं०), तत्र पक्षान्तरं विधत्ते—"प्रथमे मासि पृष्ठान्युप यन्ति, मध्यम उप यन्त्युत्तम उप यन्ति[१]"-इति। सर्वेषु मासेषु पृष्ठ्यः षडहो नानुष्ठेयः, किन्तु प्रथममध्यमोत्तमेषु त्रिष्वेव मासेष्वित्ययमेकः पक्षः ॥

पुनरपि पक्षान्तरं विधत्ते— "तदाहुर्या वै त्रिरेकस्याह्न उपसीदन्ति, दह्रं वै साऽपराभ्यां दोहाभ्यां दुहेऽथ कुतः सा धोक्ष्यते यां द्वादशाह उप सीदन्तीति, संवत्सरं सम्पाद्योत्तमे मासि सकृत् पृष्ठान्युपेयुस्तद्यजमाना यज्ञं पशूनव रुन्धते[१]"-इति। लोके दोग्धारः पुरुषा एकस्याह्नो मध्ये 'यां' गां दोग्धुं त्रिवारं प्राप्नुवन्ति, 'सा' गौः प्रथमपर्याये प्रभूतं क्षीरं प्रयच्छति;'अपराभ्यां' द्वितीयतृतीयदोहनपर्यायाभ्यां† 'दह्रं वै दुहे' अल्पमेव क्षीरं दोग्धि। एवं सति 'यां' गामेकस्मिन् दिने द्वादशकृत्वो दोग्धुमुपयन्ति, 'सा'

---

* "समृद्ध वै[१]"—इति क, ख, ग।

† "द्वितीयतृतीयदोहनपर्यायाभ्या"—इति ग।

गौः 'कुतो धोक्ष्यते ?' न हि क्षीराभावे दोहनमुचितम्। तस्माद् गोसमानस्य पृष्ठ्यषडहस्यापि मासत्रयानुष्ठानमनुचितम्; किन्तु वक्ष्यं द्वादशमासानुष्ठानेऽप्यनुचितत्वमित्येव। 'तदाहुः' तस्मिन् पृष्ठ्यषडहविषये अभिज्ञाः कथयन्ति। तस्मात् संवत्सरमनुष्ठायान्ते मासि सकृदेव पृष्ठ्यः षडहोऽनुष्ठेयः, इतरेषु तु मासेषु पञ्चमेना-भिप्लवषडहेनैव मासपूरणं कर्त्तव्यम्। तथा सति यजमानाः पृष्ठ्य-षडहस्य समारलाद् यज्ञं सम्पूर्णं प्राप्नुवन्ति॥

यत् पूर्वं विहितं "समानं साम भवति"–इति (४७५ पृ० ३पं०), तदेवात्र विशेषाकारेण विधत्ते—"समुद्रं वा एतेऽनवार-मपारं प्र प्लवन्ते ये संवत्सरमुप यन्ति, यद् वृहद्रथन्तरे अन्वर्जेयुर्यथा मध्ये समुद्रस्य प्लवमन्वर्जेयुस्तादृक् तदनुत्सर्गं वृहद्रथन्तराभ्यामित्वा प्रतिष्ठां गच्छन्ति, सर्वेभ्यो वै कामेभ्यः सन्धिर्दुहे, तद् यजमानाः सर्वान् कामानव रुन्धते[९]"–इति। 'पारावारे' परार्वाची तीरे *। 'ये' यजमानाः संवत्सरसत्रमनुतिष्ठन्ति, एते तीरद्वयरहितं समुद्रं बाहुभ्यां तरितुमिच्छन्ति। तत्राशक्यम्। यदि तत्र 'वृहद्रथन्तरे' सामनी अनुक्रमेण पृष्ठस्तोत्रे सम्पादयेयुः, तदानीं यथा समुद्रस्य मध्ये तरणसाधनं 'प्लवं' सम्पादयेयुस्तादृक् तद् भवति। तस्मात् 'अनुत्सर्गं' कदाचिदप्यपरित्यज्य, वृहद्रथन्तराभ्याम् 'इत्वा' स्तोत्रं प्राप्य 'प्रतिष्ठां' यज्ञसमाप्तिं गच्छन्ति। अन्यदीयेनापि वत्सेन दोग्धुं शक्या गौः 'सन्धि'–इत्युच्यते। सा च सन्धिः 'सर्वेभ्य' कामेभ्यो

---

* "पारावारे परार्वाची तीरे"–इति अम० को० १. १० ८।

दुह्रे' यथा-यथा क्षीरमपेक्षितं तथा-तथा यं कञ्चिद् वत्समादाय दोग्धुं शक्यते। 'तत्' तथा सति, अत्रापि यजमानाः 'अन्यदीयाभ्यां' प्रकृतिगताभ्यां बृहद्रथन्तराभ्यां तत्तद्दिने प्रयुज्यमानाभ्यां सर्वान् कामान् प्राप्नुवन्ति ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥

---

समान्य ऋचो भवन्ति मनुष्यलोको वा ऋचो मनुष्यलोकादेव न य[1]न्त्यन्यदन्यत्साम भवति देवलोको वै साम देवलोकादेवान्यमन्यं मनुष्यलोकं प्रत्यवरोहन्तो यन्ति[2] जगतीमग्र उप यन्ति जगतीं वै छन्दाꣳसि प्रत्यवरोह[3]न्त्याग्रयणं ग्रहा बृहत् पृष्ठानि त्रयस्त्रिꣳशꣳ स्तोमास्तस्माज्ज्यायाꣳसं कनीयान् प्रत्यवरोहति[4]. वैश्वकर्मणो गृह्यते विश्वान्येव तेन कर्माणि यजमाना अव रुन्धत आदित्यः (१)

गृह्यत इयं वा अदितिरस्यामेव प्रति तिष्ठ[1]न्त्यन्योऽन्यो गृह्येते मिथुनत्वाय प्रजात्या[2] अवान्तरं वै दशरात्रेण प्रजापतिः प्रजा असृजत यद्दशरात्रो भवति प्रजा एव तद् यजमानाः सृजन्त एताꣳ ह वा उदङ्कः शौल्बायनः सत्रस्यर्द्धिमुवाच यद्दशरात्रो यद्दशरात्रो

भवति सत्रस्यर्द्ध्या अथो यदेव पूर्वेष्वहस्सु विलोम क्रियते तस्यैव (२)

एषा ध्वान्तिः[७] ॥ ४ ॥

आदित्य[१] एव[२] * द्वे च ॥ ४ ॥

तृतीये पृष्ठ्यषडहविषयप्रकारविशेषोऽभिहितः, अथ चतुर्थे उत्तरे पक्षसि प्रकारविशेषोऽभिधीयते। द्वे हि संवत्सरसत्रस्य पक्षसी। एतच्चान्यत्र समाम्नातम्— "यथा शालाये पक्षसी, एवं संवत्सरस्य पक्षसी"—इति (तै० ब्रा० १. २. ३ १.)। तत्र प्रथमषण्मासात्मके पूर्वस्मिन् पक्षसि साम्नैक्य मृचां नानात्वं पूर्व मभिहितम्, इदानीं द्वितीयषण्मासात्मके उत्तरस्मिन् पक्षसि पूर्ववैपरीत्येन ऋगैक्यं सामनानात्वञ्चाभिधीयते ॥

तत्रादावृगैक्यं विधत्ते— "समान्य ऋचो भवन्ति, मनुष्यलोको वा ऋचो मनुष्यलोकादेव न यन्ति[१]"—इति। मनुष्यलोके हि कर्म कृत्वा पश्चाद् देवलोकं प्राप्नुवन्ति, एवमाधारभूतामृचमभ्यस्य पश्चात् तस्यां साम गायन्ति†, तस्मादृचो मनुष्यलोकस्वरूपाः। तास्व 'समान्य' एकरूपाः कर्त्तव्याः, एकस्मिन्नहनि या ऋचस्ता एवान्यस्मिन् प्रयोक्तव्याः। एवं सति ऋगात्मकात् मनुष्यलोकात् कदाचिदपि नापगच्छन्ति; अपत्यादिसन्तानाविच्छेदात् ॥

* "आदित्य[१]स्तस्यैव[२]"—इति क, ख, ग।

† "अध्यध्यूढं साम गीयते"—इति छा० ब्रा० १ ७.१-४।

अथ सामगानात्वं विधत्ते— "अन्यदन्यत् साम भवति, देवलोको वै साम, देवलोकादेवान्यमन्यं मनुष्यलोकं प्रत्यवरोहन्तो यन्ति[१]"-इति। साम्नः पद्याद्वाविलक्षण्येन देवलोकत्वम्, तादृश च साम पूर्वस्मिन् दिने यद् भवति, ततोऽन्यदुत्तरस्मिन्नहनि कर्त्तव्यम्। लोकेऽपि देवलोकान्निर्गच्छन्त' पुरुषाः, 'अन्यमन्यं' मनुष्यलोकप्रदेशं गच्छन्ति। यद्वा अन्यमन्यमिति पञ्चम्यर्थे द्वितीया, अन्यस्मादन्यस्माद् देवलोकात्; कर्मफलानां तारतम्योपेतत्वेन विविधत्वात् तदा तदा विलक्षणाद् देवलोकात् प्रत्यवरोहन्तो यजमाना मनुष्यलोकं प्राप्नुवन्तीत्यर्थः॥

विशेषान्तरं विधत्ते— "जगतीमग्र उप यन्ति, जगती वै छन्दाꣳसि प्रत्यवरोहन्ति[२]"-इति। पूर्वस्मिन् पक्षसि गायत्री प्रथममनुष्ठिता, उत्तरस्मिंस्तु जगती प्रथममनुष्ठेया। तथा सति जगती प्रत्यन्यानि सर्वाणि छन्दांस्यवरोह प्राप्तानि भवन्ति॥

पुनरपि विशेषत्रयं क्रमेण विधत्ते— "आग्रयणं ग्रहा, बृहत् पृष्ठानि, त्रयस्त्रिꣳशꣳ स्तोमास्तस्माज्ज्यायाꣳसं कनीयान् प्रत्यवरोहति[३]"-इति। यथा गायत्र्यादिच्छन्दस्सु पूर्वस्मात् पक्षो विपर्ययेणोत्तरस्य पक्षोऽनुष्ठानम्, एवं ग्रहसामस्तोमेष्वपि द्रष्टव्यम्। तत्राग्रयणोऽन्ते गृहीतः, इह त्वादौ; तथा सति ग्रहाः प्रत्यवरूढा भवन्ति। तथा तत्र रथन्तरं पृष्ठं पूर्वदिनेऽनुष्ठितम्, इह तु 'बृहत्' पृष्ठं पूर्वमनुष्ठेयम्, तथा सति सर्वाणि पृष्ठस्तोत्राणि प्रत्यवरूढानि भवन्ति। तथा तत्र त्रयस्त्रिंशस्तोमोऽन्तेऽनुष्ठितः, इह त्वादावनुष्ठेय; तथा सति सर्वे स्तोमाः प्रत्यवरूढा भवन्ति। यस्मादत्र प्रौढस्तय-

स्त्रिंशः प्रथमभावी, अर्वाञ्चस्त्रिणवैकविंशादयः पश्चाद्भाविनः, तस्माल्लोकेऽपि 'ज्यायांसं' पितरं पितामहं वा प्रति 'कनीयान्' पुत्रः पौत्रो वा वाहनादश्वादेरवरोहति ॥

अथातिग्राह्यद्वयं क्रमेण विधत्ते— "वैश्वकर्मणो गृह्यते, विश्वान्येव तेन कर्माणि यजमाना अव रुन्धत, आदित्यो गृह्यत, इयं वा अदितिरस्यामेव प्रति तिष्ठन्ति[४]"–इति। "वाचस्पतिं विश्वकर्माणम्"–इत्यनेन गृह्यमाणोऽतिग्राह्यो 'वैश्वकर्मणः'। 'तेन' अतिग्राह्येण सर्वाण्यपि कर्माणि यजमानाः प्राप्नुवन्ति। "महीमू षु मातरम्"–इत्यनेन गृह्यमाणोऽतिग्राह्यः 'आदित्यः'; भूमेरदितित्वात्। तेनातिग्राह्येण भूमौ प्रतितिष्ठन्ति। अत्र सूत्रकारः। "वैश्वकर्मणमतिग्राह्याणामष्टमं गृह्णाति वाचस्पतिं विश्वकर्माणमूतय इति, श्वो भूत आदित्यं महीमू षु मातरमिति; तावेवमेव व्यत्यासं गृह्णात्या महाव्रतात्"–इति ॥

तमिमं व्यत्यासं विधत्ते— "अन्योऽन्यो गृह्येते मिथुनत्वाय प्रजात्यै[५]"–इति। 'अन्योऽन्यः' एकैकः, यस्मिन् दिने वैश्वकर्मणो गृह्यते, ततः परेद्युरादित्यः, ततोऽपि परेद्युर्वैश्वकर्मणः, पुनरपि परेद्युरादित्यः। एवं सति द्वित्वेन मिथुनरूपत्वात् प्रजोत्पत्तये सम्पद्यते ॥

अथ द्वादशाहीयं दशरात्रं विधत्ते— "अवान्तरं वै दशरात्रेण प्रजापतिः प्रजा असृजत, यद् दशरात्रो भवति, प्रजा एव तद् यजमानाः सृजन्त, एता८ ह वा उदङ्कः शौल्वायनः सत्रस्यर्द्धिमुवाच, यद् दशरात्रो, यद् दशरात्रो भवति सत्रस्यर्द्ध्यां, अथो

यदेव पूर्वेद्युरहस्सु विलोम क्रियते, तस्यैवैषा शान्तिः[७]"-इति। एतच्च वाक्यं "द्वे वाव देवसत्रे"-इत्यत्र * व्याख्यातम् ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥

---

यदि सोमौ सꣳसुतौ स्यातां महति रात्रियै प्रातरनुवाकमुपाकुर्यात् पूर्वो वाचं पूर्वो देवताः पूर्वश्छन्दाꣳसि वृङ्क्ते[१] वृषण्वतीं प्रतिपदं कुर्यात् प्रातस्सवनादेवैषामिन्द्रं वृङ्क्ते[२]ऽथो खल्वाहुः सवनमुखे सवनमुखे कार्येति सवनमुखात् सवनमुखादेवैषामिन्द्रं वृङ्क्ते[३] संवेशायोपवेशाय गायत्रियास्त्रिष्टुभो जगत्या अनुष्टुभः पङ्क्त्या अभिभूत्यै स्वाहा[४] छन्दाꣳसि वै संवेश उपवेशश्छन्दोभिरेवैषाम् (१)

छन्दाꣳसि वृङ्क्ते[५] सजनीयꣳ शस्यं विहव्यꣳ शस्यमगस्त्यस्य कयाशुभीयꣳ शस्यमेतावद्वा अस्ति यावदेतद्यावदेवास्ति तदेषां वृङ्क्ते[६] यदि प्रातस्सवने कलशो दीर्येत वैष्णवीषु शिपिविष्टवतीषु स्तुवीरन् यद्वै यज्ञस्यातिरिच्यते विष्णुं तच्छिपिविष्टमभ्यति रिच्यते तद्वि-

---

* पुरस्तात् ७. ४. ५—४१४ पृ० २-१० पं० द्रष्टव्यम्।

प्णुः शिपिविष्टोऽतिरिक्त एवातिरिक्तं दधात्यथो अति-
रिक्तेनैवातिरिक्तमाप्नोव (२)

रुन्धते[७] यदि मध्यन्दिने दीर्येत वषट्कारनिधनः
साम कुर्युर्वषट्कारो वै यज्ञस्य प्रतिष्ठा प्रतिष्ठामेवैनद्
गमयन्ति यदि तृतीयसवन एतदेव[८] ॥ ५ ॥

एषा[१]*मवैःकान्नविंशतिश्च ॥ ५ ॥

चतुर्थेऽनुवाके उत्तरे पचमि विशेषोऽभिहितः; अथ पञ्चमे मात्सर्येण प्रवृत्तयोर्द्वयोर्गवामयनयोर्विशेषोऽभिधीयते ॥

तमिमं विधत्ते—"यदि सोमौ सꣳसुतौ स्यातां, महति रात्रियै प्रातरनुवाकमुपाकुर्यात्; पूर्वो वाचं, पूर्वो देवताः, पूर्वश्छन्दाꣳसि वृङ्क्ते[१]"–इति। यदि कदाचिद् यजमानसङ्घयोरुभयोः परस्पर-मात्सर्येण गवामयनगतौ सोमौ सम्भूय अभिषुतौ स्यातां, तदानीं महारात्रे बुध्वा प्रातरनुवाकनामकस्य शस्त्रस्योपाकरणं कुर्यात्, "प्रातर्याविभ्यो देवेभ्यः"–इत्यादिमन्त्रपमध्वर्युः पठेदित्यर्थः। यो यजमानसङ्घः† पूर्वं प्रवृत्तः समुपाकरोति, स अन्यस्य सङ्घस्य वागादीन् 'वृङ्क्ते' आदत्ते ॥

तस्मिंश्च प्रातरनुवाके स्वविशेषं विधत्ते— "वृषण्वतीं प्रतिपदं

---

* "छन्दांसि वृङ्क्ते[१]"–इति क, ख, ग।

† सत्रेषु सर्वेषामृत्विजामेव यजमानत्वमिति नियमादुक्तं यजमानसङ्घ इति। तथाहि "यजमाना सर्वे सत्रेषु"–इति कात्या० श्रौ० १२ १.७ सू०।

कुर्यात्, प्रातस्सवनादेवैषामिन्द्रं वृङ्क्ते[१]"-इति। प्रकृतौ "आपो रेवतीः क्षयथा हि वस्वः"-इत्येषा प्रथमा, इह तु तां परित्यज्य वृषण्शब्दवतीमन्यामृचं प्रथमां कुर्यात्। तथा सति (स एव*) अन्येषां यजमानानां देवतारूपम् 'इन्द्रं' प्रातस्सवनादपनयति॥

पक्षान्तरमाह—"अथो खल्वाहुः,—सवनमुखे सवनमुखे कार्येति; सवनमुखात्सवनमुखादेवैषामिन्द्रं वृङ्क्ते[२]"-इति। त्रयाणामपि सवनानां प्रारम्भे सेयं वृषण्वती पठनीयेत्येव केचिदाहुः। तथा सति परेषां सर्वसवनारम्भादिन्द्रमपसारयति॥

अथ तत्राभिभूतिहोममन्त्रान् पञ्च पठति—"संवेशायोपवेशाय गायत्रियास्त्रिष्टुभो जगत्या अनुष्टुभः पङ्क्त्या अभिभूत्यै स्वाहा[३]"-इति। 'संवेशाय' गायत्र्यादीनां छन्दसां स्वकीययज्ञे सम्यक् प्रवेशाय, 'उपवेशाय' प्रविष्टानां चात्र स्थिरावस्थितये, 'गायत्र्या अभिभूत्यै' परकीयस्य गायत्रीच्छन्दसोऽभिभवाय, स्वाहुतमिदमस्तु। त्रिष्टुभ इत्यादिभिश्चतुर्भिः पदैरुत्तरे चत्वारो मन्त्रा भिद्यन्ते, तेषु संवेशायोपवेशायेत्येतदनुषञ्जनीयम्। प्रथममन्त्रे त्वभिभूत्यै स्वाहेत्येतदनुपज्यते॥

मन्त्राणां तात्पर्यं व्याचष्टे—"छन्दाꣳसि वै संवेश उपवेशश्छन्दोभिरेवैषां छन्दाꣳसि वृङ्क्ते[४]"-इति। योऽयं संवेशो यश्चोपवेशः, तावुभौ छन्दोविषयत्वाच्छन्दांस्येव; तथा सति स्वकीयैश्छन्दोभिरितरेषां छन्दांसि विनाशयति॥

अथ शस्त्रविशेषान् विधत्ते—"सजनीयꣳ शस्यं विहव्यꣳ शस्यमगस्त्यस्य कयाशुभीयꣳ शस्यमेतावद् वा अस्ति, यावदेतद् याव-

* एषोऽंशो ग-पुस्तके नास्ति।

देवास्मि, तदेषां वृङ्क्ते(१)"–इति। "यो जात एव प्रथमो मनस्वान्"–इति सूक्ते 'स जनास इन्द्रः'–इत्येवं सजनशब्दस्य विद्यमानत्वात् तत्सूक्तं 'सजनीयम्', निष्केवल्यशस्त्रे "इन्द्रस्य नु वीर्याणि"–इत्यस्य स्थाने सजनीयं सूक्तं शंसनीयम्। "ममाग्ने वर्चो विहवेष्वस्तु"–इति सूक्ते विहवशब्दसद्भावात् तद् 'विहव्यम्'; तच्च महावैश्वदेवशस्त्रे "आ नो भद्राः"—इत्यस्य स्थाने शंसनीयम्। "कया शुभा सवयस."—इत्येतत् सूक्तमगस्त्येन दृष्टत्वात् 'अगस्त्यस्य कयाशुभीयम्', मरुत्वतीयशस्त्रे "जनिष्ठा उग्र."—इत्येतस्य स्थाने शंसनीयम्। यद्वा, तत्तच्छस्त्रादौ शस्त्रात् पुरा यथोक्तं सूक्तजातं पठनीयम्। 'एतत्' उक्तं सूक्तत्रयं यावदस्ति, एतावदेव सारम्। एतत्पाठे तु परेषां यावत् सारमस्ति, तत् सर्वं विनाशयति॥

अथ नैमित्तिकं स्तोत्रविशेषं विधत्ते– "यदि प्रातःसवने कलशो दीर्येत, वैष्णवीषु शिपिविष्टवतीषु स्तुवीरन्; यद् वै यज्ञस्यातिरिच्यते, विष्णुं तच्छिपिविष्टमभ्यति रिच्यते; तद् विष्णुः शिपिविष्टोऽतिरिक्त एवातिरिक्तं दधात्यथो अतिरिक्तेनैवातिरिक्तमाप्त्वावरुन्धते(२)"–इति। यदि प्रातःसवनकाले द्रोणकलशो 'दीर्येत' विदीर्णो भवेत्, तदानीं स्तोतारः सामगा विष्णुदेवताकासु शिपिविष्टशब्दयुक्तास्वृक्षु स्तुतिं कुर्युः। 'यज्ञस्य' सम्बन्धि 'यद्' अङ्गम् 'अतिरिच्यते' शास्त्रीयं फलमुल्लङ्घ्य वर्त्तते, 'तद्' अङ्गं शिपिविष्टगुणविशिष्टं विष्णुमभिलक्ष्यातिरिक्तं भवति। "पशवः शिपि."–इतिश्रुत्यन्तराच्छिपिशब्दः पशुवाची*; तेषु स्वामित्वेन

* पुरस्तात् २ ५ ७—२ मा० ५८५ पृ०।

प्रविष्ट 'शिपिविष्ट'*। 'तत्' च अतिरिक्तमङ्ग शिपिविष्टो विष्णुरेव, तत्स्वामिकत्वात्। ततो वैष्णवीषु स्तुतौ सत्याम् अतिरिक्तस्वामिन्येव विष्णौ अतिरिक्त स्थापयति। अपि च अतिरिक्तस्वामिनैव विष्णुना 'अतिरिक्तम्' अयथाशास्त्रमङ्गम् 'आप्त्वा' शास्त्रीय कृत्वा सत्रफल लभते॥

अथ द्वितीयतृतीयसवनयोर्विशेष विधत्ते—'यदि मध्यन्दिने दीर्यत वषट्कारनिधनꣳ साम कुर्युर्वषट्कारो वै यज्ञस्य प्रतिष्ठा, प्रतिष्ठामेवैनद् गमयन्ति, यदि तृतीयसवन एतदेव[८]"—इति। द्वितीयतृतीयसवनयोर्द्रोणकलशे विदीर्णे सति वषट्कारनिधन साम 'कुर्यु' गातव्यम्। 'निधन' साम्न पञ्चमो भाग, वषट्-शब्दो 'निधन' साम्नो भक्तिविशेषो यस्य साम्न, तदिद 'वषट्कारनिधनम्'। वषट्कारो हि हवि प्रदानसाधनत्वाद् यज्ञस्य समाप्तिस्थानम्, तद्युक्तसामगानेनैव प्रतिष्ठामेव 'एनत्' सत्र 'गमयन्ति' अवैकल्येन समापयन्ति। यदि तृतीयसवने कलशो भिद्येत, तदाप्येतदेव। अत्र यत् साम, तस्य 'एतदेव' वषट्कारनिधनमेव साम कुर्यु†॥५॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके पञ्चमोऽनुवाक॥

---

* यास्ककृत निर्वचनन्तु निरु० ४ २ २, ३ खण्डयोर्द्रष्टव्यम्।

† तद्युक्तसामेत्यादिकुर्युरित्यन्तस्य स्थाने ग पुस्तके लेष पाठ प्रदृश्यते—'तद्युक्तसामगानेन 'एनत्' विकलमङ्ग सम्पूर्त्ति प्रापयन्ति। तस्मात् तृतीय सवनेऽपि कलशविदारणे सति 'एतदेव' साम गातव्यम्'—इति।

पुङ्क्तैर्मासान्त्सम्पाद्याहरुत्सृजन्ति षड्वै हि मासा-न्त्सम्पश्य(१)न्त्यर्द्धमासैर्मासान्त्सम्पाद्याहरुत्सृजन्त्यर्द्ध-मासैर्हि मासान्त्सम्पश्य(२)न्त्यमावास्यया मासान्त्सम्पा-द्याहरुत्सृजन्त्यमावास्यया हि मासान्त्सम्पश्यन्ति(३) पौर्णमास्या मासान्त्सम्पाद्याहरुत्सृजन्ति पौर्णमास्या हि मासान्त्सम्पश्यन्ति(४) यो वै पूर्ण आसिञ्चति परा स सिञ्चति यः पूर्णादुदचति ( १ )

प्राणमस्मिन्त्स दधाति यत् पौर्णमास्या मासान्त्स-म्पाद्याहरुत्सृजन्ति संवत्सरायैव तत् प्राणं दधति तदनु सत्रिणः प्राणन्ति(५) यदहर्नोत्सृजेयुर्यथा दृतिरुपनद्धो विपतत्येवꣳ संवत्सरो वि पतेदार्त्तिमार्च्छेयुर्यत् पौर्ण-मास्या मासान्त्सम्पाद्याहरुत्सृजन्ति संवत्सरायैव तदु-दानं दधति तदनु सत्रिण उत् ( २ )

अनन्ति नार्त्तिमार्च्छन्ति(६) पूर्णमासे वै देवानाꣳ सुतो यत् पौर्णमास्या मासान्त्सम्पाद्याहरुत्सृजन्ति देवानामेव तद्यज्ञेन यज्ञं प्रत्यवरोहन्ति(७) वि वा एतद्यज्ञं छिन्दन्ति यत् षड्हसन्ततꣳ सन्तमथाहरुत्सृजन्ति प्रा-जापत्यं पशुमा लभन्ते प्रजापतिः सर्वा देवता देवता-भिरेव यज्ञꣳ सन्तन्वन्ति(८) यन्ति वा एते सवनाद् ये-ऽहः ( ३ )

उत्सृजन्ति तुरीयं खलु वा एतत् सवनं यत्सान्नाय्यं यत्सान्नाय्यं भवति तेनैव सवनान्न यन्ति[९] समुपहूय भक्षयन्त्येतत् सोमपीथा ह्येतर्हि[१०] यथायतनं वा एतेषाꣳ सवनभाजो देवता गच्छन्ति येऽहरुत्सृजन्त्यनुसवनं पुरोडाशान्निर्वपन्ति यथायतनादेव सवनभाजो देवता अव रुन्धतेऽ[११]ष्टाकपालान् प्रातस्सवन एकादशकपालान् माध्यन्दिने सवने द्वादशकपालाꣳस्तृतीयसवने छन्दाꣳस्येवाप्त्वा (४)

अव रुन्धते[१२] वैश्वदेवं चरुं तृतीयसवने निर्वपन्ति वैश्वदेवं वै तृतीयसवनं तेनैव तृतीयसवनान्न यन्ति[१३] ॥ ६ ॥

उदच[१]त्यु[२]द्दह[३]*राप्त्वा[४] पञ्चदश च ॥ ६ ॥

पञ्चमेऽनुवाके गवामयनप्रसङ्गेन सत्रविषये मासर्यविशेषोऽभिहितः; अथ षष्ठे गवामयनस्य गुणविकाररूप उत्सर्गोऽभिधीयते। तदेतद् विधत्ते— "षड्हैर्मासान्सम्पाद्याहरुत्सृजन्ति, षड्हैर्मासान्सम्पन्नन्ति[१]"-इति। येऽभिप्लवषडहाः, तैः पञ्चकृत्व आवृत्तैः एकं मासमनुष्ठाय, अनन्तरे मासे प्रथमदिने कर्त्तव्यं ज्योतिराख्यमहरुत्सृजेयुः। यद्वा, चतुर्भिरभिप्लवैरेकेन पृष्ठ्येन च मासं समाप्योत्तर-

* "त्यु[२]दिऽह[३]"—इति क, ख, ग।

मष्टहरुत्सृष्टव्यम्। यस्माल्लोकेऽपि पञ्चभिः षड्हैस्त्रिंशद्दिनानि गणयित्वा सावनमासोऽयमिति निश्चिन्वन्ति ॥

पक्षान्तरं विधत्ते*—"अर्द्धमासैर्मासान्त्सम्पाद्याहरुत्सृजन्त्यर्द्धमासैर्हि मासान्त्सम्पश्यन्ति[१]"-इति। पूर्वस्मिन् पक्षे प्रायणीयारम्भणीयावहर्विशेषौ द्वौ परित्यज्य तृतीयदिने षड्हस्यारम्भः, तदारभ्य त्रिंशद्दिनात्मके सावनमासे गते सति तत ऊर्द्धमहरुत्सृष्टव्यम्; इदानीं प्रायणीयदिनमारभ्य पञ्चदशदिनात्मकाभ्यां द्वाभ्यामर्द्धमासाभ्यामेकं मासं समाप्य तदनन्तरभाव्यहरुत्सृष्टव्यम्। लोके हि द्वाभ्यामर्द्धमासाभ्यामेको मासो निष्पद्यत इत्येवमर्द्धमासैरेव मासस्वरूपं निश्चिन्वन्ति। तदिदं पक्षद्वयं सावनमासाभिप्रायम् ॥

अथ चान्द्रमासाभिप्रायेण पक्षद्वयम्; तत्रैकं पक्षमाह—"अमावास्यया मासान्त्सम्पाद्याहरुत्सृजन्त्यमावास्यया हि मासान्त्सम्पश्यन्ति[२]"-इति। चान्द्रमसदर्शिनः केचिदमावास्यया माससमाप्तिं निश्चिन्वते; अतोऽत्रापि तथैव मासं समाप्य शुक्लप्रतिपदि यदहरनुष्ठेयं तत् परित्याज्यम् ॥

चान्द्रममाश्रित्य पक्षान्तरमाह—"पौर्णमास्या मासान्त्सम्पाद्याहरुत्सृजन्ति; पौर्णमास्या हि मासान्त्सम्पश्यन्ति[३]"-इति। शुक्लप्रतिपदमारभ्यामावास्यान्तश्चान्द्रो मास इत्यतीतः पक्षः; कृष्णप्रतिपदमारभ्य पौर्णमास्यन्त इत्ययं च पक्षः; एतस्मिन् पक्षे कृष्णप्रतिपदि यदहः प्राप्तं, तदुत्सृष्टव्यम् ॥

एतमेव पक्षं प्रशंसति—"यो वै पूर्ण आसिञ्चति, परा स

---

* "पक्षान्तरमाह"-इति ग।

षिञ्चति, यः पूर्णादुदचति, प्राणमस्मिनस् दधाति; यत्पौर्णमास्या मासान्सम्पाद्याहरुत्सृजन्ति, संवत्सरायैव तत् प्राणं दधति, तदनु सत्त्रिणः प्राणन्ति[४]”–इति। लोके हि 'यः' कोऽपि पुरुषो घृतचौरादिना 'पूर्णे' पात्रे पुनरप्युपरि तद्द्रव्यमासिञ्चति, 'सः' भूमौ पातयित्वा तद्द्रव्यं विनाशयति। 'यः' तु बुद्धिमान् 'पूर्णात्' पात्रात् 'उदचति' स्वल्पमुद्धरति, 'सः' 'अस्मिन्' पात्रे प्राणरूपं वायुं 'दधाति'; सति ह्यवकाशे वायुः सञ्चरति। एवं सति यदि यजमानास्तत्तत्पौर्णमास्या तं तं मासं पूरयित्वा कृष्णप्रतिपदि कर्त्तव्यमहरुत्सृजेयुः, तदानीं संवत्सरसत्त्ररूपपुरुषार्थं प्राणवायुं तस्मिन् दिने स्थापयन्ति। 'तत्' संवत्सरप्राणस्थापनमनु 'सत्त्रिणः' यजमाना अपि श्वासनिरोधाभावेन जीवन्ति॥

अथ व्यतिरेकमुखेनैतमेव पक्षं प्रशंसति— "यदहर्नोत्सृजेयुर्यथा दृतिरुपनद्धो विपतत्येवꣳ संवत्सरो वि पतेदार्त्तिमार्च्छेयुर्यत्पौर्णमास्या मासान्सम्पाद्याहरुत्सृजन्ति, संवत्सरायैव तदुदानं दधति, तदनु सत्त्रिण उदनन्ति, नार्त्तिमार्च्छन्ति[६]”–इति। उक्तन्यायेनाहन्यनुत्सृष्टे सत्युदकपूर्णो दृतिर्दृढं बध्यमानोऽपि यथा द्वैधीभावेन नश्यति, एवं संवत्सरात्मकः क्रतुर्विनश्येत्, यजमानाश्च मरणं प्राप्नुयुः; तत्परिहारार्थमहन्युत्सृष्टे सति, तेनोत्सर्गेण संवत्सरसत्त्रस्य अविनाशार्थं प्राणसञ्चारस्थानीयमुदानं सम्पादयन्ति। तत्सम्पादनमनु सत्त्रिणोऽपि 'उदनन्ति' उच्छ्वसन्ति, ततो नार्त्तिं गच्छन्ति॥

पुनः प्रकारान्तरेणैतमेव पक्षं प्रशंसति— "पूर्णमासे वै देवानाꣳ सुतो यत्पौर्णमास्या मासान्सम्पाद्याहरुत्सृजन्ति, देवानामेव तद्

यज्ञेन यज्ञं प्रत्यवरोहन्ति(७)"-इति। पौर्णमास्यामेव प्रकृतौ देवानां सम्बन्धी सोमोऽभिषुतो भवति, अतः पौर्णमास्यां मासं पूरयित्वा पश्चादहरुत्सर्गे सति देवानां सम्बन्धिना तेन पूर्वयागेन संयोजयितुमिमं यज्ञं यजमानाः प्रत्यवरोहन्ति॥

यस्मिन् दिने कर्त्तव्यमहरुत्सृज्यते, तस्मिन् दिने कर्त्तव्यमन्यद् विधत्ते—"वि वा एतद्यज्ञं छिन्दन्ति, यत् षडहमन्ततꣳ सन्तमथाहरुत्सृजन्ति; प्राजापत्यं पशुमालभन्ते, प्रजापतिः सर्वा देवता, देवताभिरेव यज्ञꣳ सन्तन्वन्ति(८)"-इति। षड्भिरभिप्लवपृष्ठ्यरूपैः सातत्येन वर्त्तमानं यज्ञमुपेत्य यद्यहरुत्सृजेयुः, एतेन यज्ञं विच्छिन्दन्त्येव; तत्परिहाराय प्राजापत्यं पशुमालभेरन्; प्रजापतिश्च स्रष्टृत्वात् सर्वदेवतात्मकः, अतो देवताभिरेव यज्ञं सन्ततं कुर्वन्ति॥

अथ तत्र कर्त्तव्यान्तरं विधत्ते—"यन्ति वा एते सवनाद् येऽहरुत्सृजन्ति; तुरीयं खलु वा एतत् सवनं, यत् साम्नाय्यं; यत् साम्नाय्यं भवति, तेनैव सवनान्न यन्ति(९)"-इति। 'ये' यजमानाः अहरुत्सृजन्ति, ते सवनादपगच्छन्ति; प्रातःसवनादेरनुष्ठानाभावात्। तत्र क उपाय इति, तदुच्यते—यत् साम्नाय्यमस्ति, तत् प्रातःसवनादिभ्यस्त्रिभ्यो व्यतिरिक्तत्वात्तुर्यस्थानीयः; अतः साम्नाय्येऽनुष्ठिते सवनान्नापगच्छन्ति॥

तस्य साम्नाय्यशेषस्य सोमवदुपाह्वानपूर्वकं भक्षणं विधत्ते—"समुपहूय भक्षयन्त्येतत्सोमपीथा ह्येतर्हि(१०)"-इति। उत्सृष्टेऽह्नि मुख्यसोमाभावादेतस्मिन् काले यजमानाः 'एतत्सोमपीथाः' एतदेव

सान्नाय्यशेषभक्षणं सोमपीथः सोमपानं येषां ते तादृशाः । तस्मात् सोमवत् परस्परमभिज्ञाप्य भक्षयेयुः ॥

पुनरपि कर्त्तव्यान्तरं विधत्ते— "यथायतनं वा एतेषाꣳ सवनभाजो देवता गच्छन्ति, येऽहरुत्सृजन्त्यनुसवनं पुरोडाशान्निर्वपन्ति, यथायतनादेव सवनभाजो देवता अव रुन्धते[११]"–इति । 'ये' यजमाना अहरुत्सृजन्ति, एतेषां सम्बन्धिन्यः सवनभाजो देवताः सवनाभावान्निराशाः सत्यः स्वस्वस्थान गच्छन्ति। अतस्तन्मा भूदिति तत्तत्सवनस्थाने पुरोडाशान् निर्वपेयु । तेन तत्तत्स्थानात् तास्ताः देवताः प्राप्नुवन्ति ॥

तेषु पुरोडाशेषु विशेषं विधत्ते— "अष्टाकपालान् प्रातस्सवन एकादशकपालान् माध्यन्दिने सवने द्वादशकपालाꣳस्तृतीयसवने छन्दाꣳस्येवाप्नाव रुन्धते[१२]"–इति । अष्टत्वादिसङ्ख्यासाम्याद् गायत्र्यादिच्छन्दःप्राप्तिः ॥

पुनरपि कर्त्तव्यान्तरं विधत्ते— "वैश्वदेव चरुं तृतीयसवने निर्वपन्ति, वैश्वदेवं वै तृतीयसवन, तेनैव तृतीयसवनान्न यन्ति[१३]"–इति । तृतीयसवनस्य वैश्वदेवत्वमन्यत्र समाम्नातम्— "यद्वसूनां प्रातस्सवनं, रुद्राणां माध्यन्दिनꣳ सवनं, विश्वेषां देवानां तृतीयसवनम्"–इति। अतो वैश्वदेवचरुणा तृतीयसवनान्नापगच्छन्ति ॥ ६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥

---

* "तु । वाव"–इति पदपाठ ।

उत्सृज्यां३ नोत्सृज्या३मिति मीमा॑ꣳसन्ते ब्रह्मवादिन॒स्तद्वा॑हुरु॒त्सृज्य॑मे॒वे[५]त्य॑मावा॒स्या॑याञ्च पौर्णमा॒स्याञ्चोत्सृज्य॒मित्या॑हु॒रे॒ते हि य॒ज्ञं वह॑त॒ इति॒[२] ते त्वाव* नोत्सृज्ये इत्या॑हु॒र्ये अ॑वान्त॒रं य॒ज्ञं भे॑जा॒ते इति॒[३] या प्र॑थ॒मा व्य॑ष्टका तस्या॑मु॒त्सृज्य॒मित्या॑हु॒रे॒ष वै मा॒सो वि॑श॒र इति॒[४] नादि॑ष्टम् (१)

उत्सृ॑जेयु॒[५]र्यदा॒दि॑ष्टमु॒त्सृजेयु॒र्यादृ॑शे पुनः॑ पर्या॒प्लावे मध्ये॑ षडह॒स्य॑ सम्पद्ये॑त षड्वै॒र्मासा॒न्त्सम्पाद्य॒ यत् स॑प्त॒मम॒हस्तस्मि॒न्नुत्सृ॑जेयु॒[६]स्तद॒ग्नये॒ वसु॑मते पु॒रो॒डाश॑म॒ष्टाक॑पालं॒ निर्व॑पेयु॒रै॒न्द्रं दधीन्द्रा॑य म॒रुत्व॑ते पु॒रो॒डाश॑मेका॑दशकपालं वैश्वदे॒वं द्वाद॑शकपाल॒[७]म॒ग्नेर्वै वसु॑मतः प्रातस्सव॒नं यद॒ग्नये॒ वसु॑मते पु॒रो॒डाश॑म॒ष्टाक॑पालं नि॒र्वप॑न्ति दे॒वता॑ मे॒व तद्भा॒गिनीं कु॒र्वन्ति॒ (२)

सव॑नम॒ष्टाभि॒रुप॑ यन्ति॒[८] यदै॒न्द्रं दधि॒ भव॒तीन्द्र॑मे॒व तद्भा॑ग॒धेया॒न्न च्या॑वय॒[९]न्तीन्द्र॑स्य॒ वै म॒रुत्व॑तो माध्य॑न्दिन॒ꣳ सव॑नं॒ यदिन्द्रा॑य म॒रुत्व॑ते पु॒रो॒डाश॒मेका॑दशकपालं निर्वप॑न्ति दे॒वता॑मे॒व तद्भा॒गिनीं कु॒र्वन्ति॒ सव॑नमेका॒दश॒भि॒रुप॑ यन्ति॒[१०] विश्वे॑षां॒ वै दे॒वाना॑मृभु॒मतां॑ तृतीयसव॒नं यद्वै॑श्वदे॒वं द्वाद॑शकपालं निर्वप॑न्ति दे॒वता॑ ए॒व तद्भा॒गिनीः॑ कु॒र्वन्ति॒ सव॑नं द्वाद॒शभिः॑ (३)

उप यन्ति[११] प्राजापत्यं पशुमा लभन्ते यज्ञो वै प्रजापतिर्यज्ञस्यानंनुसर्गाया[१२]भिवर्त्त इतः षण्मासो ब्रह्मसामं भवति ब्रह्म वा अभिवर्त्तो ब्रह्मणैव तत् सुवर्गं लोकमभिवर्त्तयन्तो यन्ति प्रतिकूलमिव हीतः सुवर्गो लोक[१३] इन्द्र क्रतु न आ भर पिता पुत्रेभ्यो यथा शिक्षा नो* अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहीति ( ४ )

अमुत आयता४ षण्मासो ब्रह्मसामं भवत्ययं वै लोको ज्योतिः प्रजा ज्योतिरिममेव तल्लोकं पश्यन्तोऽभिवदन्त आ यन्ति[१४] ॥ ७ ॥

आदिष्ट[१]† कुर्वन्ति[२] द्वादशभि[३]रिति[४] विंशतिश्च ॥ ७ ॥

षष्ठेऽनुवाकेऽहरुत्सर्ग उक्तः सप्तमे तत्रैव विशेषोऽभिधीयते। तत्र निर्णयाय कञ्चिद् विचारं दर्शयति—"उत्सृज्या३ नोत्सृज्या३-मिति मीमांसन्ते ब्रह्मवादिनस्तदाहुरुत्सृज्यमेवेति[१]"—इति। उत्सर्गपक्षे यज्ञविच्छेद, अनुत्सर्गपक्षे श्रमनिरोध इति दोषद्वयं मनसि निधाय ब्रह्मवादिनो विचारयन्ति। श्रुतिर्विचारार्था। तत्राभिज्ञाः प्राजापत्यपश्वादिभिर्विच्छेदस्य समाधातुं शक्यत्वात् श्रमनिरोधपरिहारायोत्सर्जनपक्षमेवाच निश्चितवन्तः॥

* 'शो"—इति च पाठः।   † 'नादिष्ट[१]'—इति क, ख, ग।

तमेव दिनविशेषं दर्शयति— "अमावास्यायाञ्च पौर्णमास्याञ्चोत्सृज्यमित्याहुरेते हि यज्ञं वहत इति(२)"–इति। एतयोरमावास्यापौर्णमास्योर्यज्ञवाहित्वं प्रसिद्धम्। तथा चान्यत्र स्पष्टमाम्नायते— "ते अब्रूतां वरं वृणावहा आवं देवानां भागधे असाव"–इति*। अतस्तयोस्तिथ्योः यद्दहः प्राप्तं, तदुत्सृज्यमित्येषां निर्णयः॥

अथान्येषां पक्षमाह— "ते त्वाव नोत्सृज्ये इत्याहुर्ये अवान्तरं यज्ञं भेजाते इति(३)"–इति। 'ये' पौर्णमास्यमावास्ये अवान्तरं यज्ञं भेजाते, ते सर्वथैव नोत्सृज्ये। न केवलमेते प्रकृतिरूपं दर्शपूर्णमासकर्मैव निष्पादयतः, किन्त्वयनादिगतमवान्तरं कर्मापि; तस्मात् तयोरुत्सर्गो न युक्त इति॥

तर्हि कस्मिन् दिनेऽहरुत्सर्ग इत्याशङ्क्य, तेषां वचनं दर्शयति— "या प्रथमा व्यष्टका, तस्यामुत्सृज्यमित्याहुरेष वै मासो विशर इति(४)"–इति। 'व्यष्टका'-शब्देनकृष्णप्रतिपदुच्यते; राजसूयप्रकरणे व्युष्टिद्विरात्रे पौर्णमास्या सह निर्देशात्। तथा चाम्नायते— "पौर्णमास्यां पूर्वमहर्भवति, व्यष्टकायामुत्तरम्"–इति (ब्रा० १. ८. १०. २.)। तस्यां व्यष्टकायां यत् प्राप्तमहस्तदुत्सृज्यम्। एष दिनविशेषो 'विशरः' विशीर्णो मासः; पौर्णमास्यामेव पूर्वमासस्य समाप्तत्वात्। अतो मासविच्छेदाभावादप्युक्त उत्सर्गः। तस्यास्तु व्यष्टकायाः प्राथम्य कृष्णप्रतिपदादित्वादुपपद्यते॥

क्वचिदुत्सर्गमपवदति— "नादिष्टमुत्सृजेयु.(५)"–इति। विषुवान् महाव्रतमिति नामग्रहणपुरस्सरं विशेषाकारेण यदुच्यते, तत्

* २. ५. ६ ५ — २ भा० ६०२, ६०७ पृ०।

'आदिष्ट', तत् नोत्स्रष्टव्यम्, यत्तु षडहादिद्वारा सामान्यतः प्राप्तं, तदेवोत्स्रष्टव्यम् ॥

यदानुत्सर्गपक्षम् "एष वै मास"–इत्यादिना स्वीकरोति। यो-ऽयमुत्सर्ग., स एष विशरो मासो भवति । अहरुत्सर्गे सति मास-सम्पूर्त्तेरभावान्मासस्य विशीर्णत्वम्। 'इति'-शब्दो हेत्वर्थ,– यस्मात् मासवैकल्य प्राप्नोति, तस्मात् 'आदिष्ट' शास्त्रेणोपदिष्टमहरेकमपि नोत्सृजेयुरिति पक्षान्तरस्वीकारः। अत एव सूत्रकारः पक्षद्वयस्वी-कारमुपन्यस्योत्सर्गपक्षेऽनुष्ठेयविशेषमुदाजहार "उत्सृज्यां३ नोत्सृज्या३ मित्युक्तं, यद्यहान्युत्सृजेयुः प्रथम पृष्ठ्यं सस्थाप्य"–इत्यादिना ॥

तमिम विशेष वक्तुमथाप्युत्सर्गं पाक्षिक पुनर्विशदयति–"यदा-दिष्टमुत्सृजेयुर्यादृशे पुन' पर्याप्लावे मध्ये षडहस्य सम्पद्येत, षडहै-र्मासान्सम्पाद्य यत्सप्तममहस्तस्मिन्नुत्सृजेयु[१]"–इति । यदि शा-स्त्रोपदिष्टस्याप्युत्सर्गापेक्षा, तदानीमपि 'यादृशे' यादृशमहर्ज्योति-रादिकं पुनः पुन. पर्यावर्त्तमाने षडहस्य मध्ये सम्पद्यते, तादृश-मेवोत्सृजेत्, न तु प्रतिपदोक्त विषुवदादिकमित्यध्याहरणीयम् । तस्मादभिप्लवपृष्ठ्याख्यै. षडहैर्मास पूरयित्वा, पृष्ठ्यषडहादूर्द्धभावि यत् सप्तममहस्तस्मिन्नहनि प्राप्त ज्योतिर्यागमुत्सृजेत् ॥

इत्यमुत्सर्गं विशदीकृत्य तत्रानुष्ठेयविशेष विशदयति– "तदग्नये वसुमते पुरोडाशमष्टाकपाल निर्वपेयुरैन्द्र दधीन्द्राय मरुत्वते पुरो-डाशमेकादशकपालं वैश्वदेव द्वादशकपालम्[२]"–इति । 'तत्' तस्मिन्नुत्सर्गदिने चत्वारि हवींषि निर्वपेयुः ॥

तत्र प्रथमं हवि प्रशंसति– "अग्नेर्वै वसुमतः प्रातस्सवन, यदग्नये

वसुमते पुरोडाशमष्टाकपालं निर्वपन्ति, देवतामेव तद्भागिनीं कुर्वन्ति, सवनमष्टाभिरुप यन्ति(८)"-इति। 'देवता' वसुमतमग्निम्, कपालगताष्टत्वसङ्ख्या गायत्रीद्वारा सवनप्राप्तिः॥

द्वितीयं हविः प्रशंसति—"यदैन्द्रं दधि भवतीन्द्रमेव तद्भागधेयान्न च्यावयन्ति(९)"-इति॥

अथ तृतीयं हविः प्रशंसति—"इन्द्रस्य वै मरुत्वतो माध्यन्दिनꣳ सवनं, यदिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं निर्वपन्ति, देवतामेव तद्भागिनीं कुर्वन्ति, सवनमेकादशभिरुप यन्ति(१०)"-इति। यथा वसुमानग्निः प्रातस्सवनस्य स्वामी, तथा मरुत्वानिन्द्रो माध्यन्दिनस्य सवनस्य स्वामी। वसुमतोऽग्नेस्तत्स्वामित्वं श्रुत्यन्तरादयादवगन्तव्यम्— "तꣳ सृतं देवतास्त्रेधा व्यभजत,—अग्निः प्रातस्सवनमिन्द्रो माध्यन्दिनꣳ सवनं, विश्वेदेवास्तृतीयसवनम्"-इत्येका श्रुतिः, "यद् वसूनां प्रातस्सवनम्"-इत्यपरा श्रुतिः *। यस्त्विन्द्रो माध्यन्दिनसवनस्वामी, स तु मरुत्वान्, "इन्द्र मरुत्व इह पाहि सोमम्"-इति-श्रुत्यन्तरात् (ऋ० सं० ३.५१ ७)। तत्राग्नेर्यथा प्रथमेन हविषा भागित्वम्, एवमिन्द्रस्याप्यनेन हविषा भागित्वम्। कपालगतैकादशसङ्ख्या त्रिष्टुब्द्वारा सवनप्राप्तिः॥

अथ चतुर्थं हविः प्रशंसति— "विश्वेषां वै देवानामृभुमतां तृतीयसवनं, यद् वैश्वदेवं द्वादशकपालं निर्वपन्ति, देवता एव तद्भागिनीः कुर्वन्ति, सवनं द्वादशभिरुप यन्ति(११)"-इति। विश्वेषां देवानां तृतीयसवनस्वामित्वं पुरोदाहृतम्। ऋभुमत्त्वमप्यृभूणां

* ऐ० ब्रा० ३ २ २, निरु० ७ ३ १, ३, ४।

तृतीयसवनदेवतात्वादवगन्तव्यम्। तच्च तृतीयसवनस्य "ऋभुमतो विभुमतः"-इत्यादिमन्त्रादवगम्यते। ताश्च देवता अनेन हविषा भागिन्यः। कपालगतद्वादशसङ्ख्यया जगतीद्वारा सवनप्राप्तिः॥

अथ पूर्वानुवाकोक्तं प्राजापत्यं प्रशंसति— "प्राजापत्यं पशुमा लभन्ते; यज्ञो वै प्रजापतिर्यज्ञस्यानुत्सर्गाय[१९]"-इति। यज्ञस्य प्रजापतिसृष्टत्वात् तद्रूपत्वम्। 'अननुसर्ग.' अपरित्यागः; उत्सृष्टेऽप्यहनि प्राजापत्येन यज्ञोऽपरित्यक्तो भवति॥

अथ पूर्वस्मिन् पक्षसि ब्रह्मसाम विधत्ते— "अभिवर्त्त इतः पक्षसामो ब्रह्मसामं भवति, ब्रह्म वा अभिवर्त्तो ब्रह्मणैव तत्सुवर्गं लोकमभिवर्त्तयन्तो यन्ति; प्रतिकूलमिव हीतः सुवर्गो लोकः[२०]"-इति। गवामयनविकृतित्वादस्याप्युत्सर्गिणामयनस्य द्वे पक्षसी। तत्र प्रथमेन पक्षसा स्वर्गप्राप्तिः; द्वितीयेन पक्षसा पुनर्भूलोकप्राप्तिः। एवं व्यवस्थायां सत्याम् 'इतः' भूलोकान्निर्गत्य स्वर्गं गच्छतां यजमानानामानुकूल्यन पूर्वे पक्षसि षडपि मासान् नैरन्तर्येण प्रतिदिनमभिवर्त्ताख्यं ब्रह्मसामं भवेत्*। तथा सत्यभिवर्त्तसाम्नो ब्रह्मरूपत्वाद् ब्रह्मसामर्थ्येन च स्वर्गाभिमुख्यं गच्छन्तः स्वर्गं प्राप्नुवन्ति॥

अथोत्तरस्मिन् पक्षस्यन्यद् ब्रह्मसाम विधत्ते— "इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा। शिक्षा णो अस्मिन् पुरुहूत यामनि जीवा

---

* "तं वो दस्म ऋतीषहम्"-इत्यत्र (ऋ० ग्रा० ३.१.५.४.) योनावुत्पन्नं सभीवर्त्तं छन्दोगानाम्, तदेव तैत्तिरीयाणां मभिवर्त्तमिति। तच्च साम गे० गा० ६.१.३४। तदेव ऊहे गीतं स्तोत्रं भवति। तस्यर्च ऋक्तं उ० ग्रा० १.१.१३। तत्र गीतं साम तु ऊ० गा० ६.२.१४ द्रष्टव्यम्।

ज्योतिरशीमहीत्यमुत आयताꣳ पश्यामो ब्रह्मसामं भवत्ययं वै लोको ज्योति', प्रजा ज्योतिरिममेव तल्लोकं पश्यन्तोऽभिवदन्त आ यन्ति[१४]"-इति। 'अमुतः' स्वर्गलोकात् 'आयतां' भूलोकं प्रत्यागच्छतां यजमानानामानुकूल्येनोत्तरस्मिन् पञ्चमे षडपि मासान् नैरन्तर्येण प्रतिदिनम् "इन्द्र क्रतुं न आ भर"-इत्यस्यामृचि* यदुत्पन्नं, तद् ब्रह्मसाम भवेत्†। तस्या ऋचोऽयमर्थः। हे इन्द्र! 'नः' अस्मदर्थमिमं क्रतुमा हर। तत्र दृष्टान्तः। यथा लोके पिता पुत्रेभ्यो भागमाहृत्य प्रयच्छति, तद्वत्। हे 'पुरुहूत' इन्द्र! 'अस्मिन्' अनुष्ठीयमाने 'यामनि' क्रतुविशेषरूपे नियमे 'शिक्ष' हितोपदेशं कुरु। वयं त्वत्प्रसादात् 'जीवाः' जीवन्तो 'ज्योतिः' प्रकाशरूपं मनुष्यलोकम् 'अशीमहि' प्राप्नुयामेति। अस्यामृचि ज्योतिःशब्देन भूलोकस्तत्रत्याः प्रजाश्च विवक्षिताः। तथा सत्येतदीयसामप्रयोगेण 'इमं' भूलोकं ज्योतिषा पश्यन्तः प्राप्नुयामेति वाचा वदन्तश्चागच्छन्ति ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके सप्तमोऽनुवाकः॥

---

* ऋ० सं० ७ ३२. २६=छ० आ० ३.२ २.७। तयोरुभयोरेव संहितयो 'शिक्षा णो'-इति पाठः।

† तस्या ऋचि बहूनि सामानि गीयन्ते, तत्र यद् विकीर्णं नाम, तदेव ब्रह्म साम (ता० ब्रा० ४ ६ १५.)। तच्च ऊह्य० गा० २.१ १७ द्रष्टव्यम्।

देवानां वा अन्तं जग्मुषामिन्द्रियं वीर्यमपाक्राम-त्तत्क्रोशेनावारुन्धत तत्क्रोशस्य क्रोशत्वं यत्क्रोशेन चात्वालस्यान्ते स्तुवन्ति यज्ञस्यैवान्तं गत्वेन्द्रियं वीर्यमव रुन्धते[१] सदस्यर्द्धाहवनीयस्यान्ते स्तुवन्त्यग्निमेवोप-द्रष्टारं कृत्वर्द्धिमुप यन्ति[२] प्रजापतेर्हृदयेन हविर्धाने-ऽन्तः* स्तुवन्ति प्रेमाणमेवास्य गच्छन्ति[३] श्लोकेन पुर-स्तात् सदसः (१)

स्तुवन्त्यनुश्लोकेन पश्चाद्यज्ञस्यैवान्तं गत्वा श्लोकभाजो भवन्ति[४] नवभिरध्वर्युरुद्गायति नव वै पुरुषे प्राणाः प्राणानेव यजमानेषु दधाति[५] सर्वा ऐन्द्रियो भवन्ति प्राणेष्वेवेन्द्रियं दध[६]त्यप्रतिहृताभिरुद्गायति तस्मात् पुरुष सर्वाण्यन्यानि शीर्ष्णोऽङ्गानि प्रत्यञ्चति शिर एव न[७] पञ्चदशꣳ रथन्तरं भवतीन्द्रियमेवाव रुन्धते सप्त-दशम (२)

बृहदन्नाद्यस्यावरुद्धा अथो प्रैव तेन जायन्त[८] एक-विꣳशं भद्रं द्विपदासु प्रतिष्ठित्यै[९] पत्नय उप गायन्ति मिथुनत्वाय प्रजात्यै[१०] प्रजापतिः प्रजा असृजत सो-ऽकामयतासामहꣳ राज्यं परीयामिति तासाꣳ राज-नेनैव राज्यं पर्यैत्तद्राजनस्य राजनत्वं यद्राजनं भवति

* निर्विसर्गपाठः क ख पुस्तकयोः। एवं मिद्गोत्तरत्रापि।

प्रजानामेव तद्यजमाना राज्यं परि यन्ति[११] पञ्च-
विꣳशं भवति प्रजापतेः ( ३ )

आस्थै[१२] पञ्चभिस्तिष्ठन्तः स्तुवन्ति देवलोकमेवाभि जयन्ति पञ्चभिरासीना मनुष्यलोकमेवाभि जयन्ति दश सम्पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धते[१३] पञ्चधा विनिषद्य स्तुवन्ति पञ्च दिशो दिक्ष्वेव प्रति तिष्ठ[१४]न्त्येकैकयास्तुतया समा यन्ति दिग्भ्य एवान्नाद्यꣳ सम्भरन्ति[१५] ताभिरुद्गातोद्गायति दिग्भ्य एवान्नाद्यम् ( ४ )

सम्भृत्य तेज आत्मन् दधते तस्मादेकः प्राणः सर्वाण्यङ्गान्यवत्यथो यथा सुपर्ण उत्पतिष्यञ्छिर उत्तमं कुरुत एवमेव तद्यजमानाः प्रजानामुत्तमा भव[१६]न्त्यासन्दीमुद्गाता रोहति साम्राज्यमेव गच्छन्ति प्लेङ्खꣳ होता नाकस्यैव पृष्ठꣳ रोहन्ति कूर्चावध्वर्युर्ब्रध्नस्यैव विष्टपं गच्छन्त्येतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति ( ५ )

तिष्ठन्त्यथो आक्रमणमेव तत्सेतुं यजमानाः कुर्वते सुवर्गस्य लोकस्य समष्ट्यै[१७] ॥ ८ ॥

सदसः[१] सप्तदशं[२] प्रजापते[३]रन्नाद्यं[४]* प्रत्ये[५]कादश च ॥ ८ ॥

उत्सर्गिणामयनं सप्तमे मीमांसया निर्णीतम्; तावता विकृतिं समाप्याथ प्रकृतावेव गवामयने यन्महाव्रतमस्ति, तस्मिन्ननेनानुवाकचयेण विशेषाः केचिदुच्यन्ते। तत्रास्मिन्नष्टमे सामविशेषाः केचिदुच्यन्ते॥

प्रथमं तावत् क्रोशाख्यं साम विधत्ते— "देवानां वा अन्तं जग्मुषामिन्द्रियं वीर्यमपाक्रामत्, तत्क्रोशेनावारुन्धत, तत्क्रोशस्य क्रोशत्वं; यत्क्रोशेन चात्वालस्यान्ते स्तुवन्ति, यज्ञस्यैवान्तं गत्वेन्द्रियं वीर्यमव रुन्धते[1]"–इति। पुरा कदाचिद् देवानां सत्रसमाप्तिं प्राप्नवतामिन्द्रियं तत्सामर्थ्यञ्चापक्रान्तम्, तच्च देवाः क्रोशाख्येन साम्ना* पुनः प्राप्नवन्तः। 'क्रुश आह्वाने'–इत्यस्माद्धातोरुत्पन्नः क्रोशशब्दः आह्वानसाधनमाचष्टे। तस्मादपगतवीर्यस्याह्वानसाधनत्वादेतस्य साम्नः क्रोश इति नामधेयम्। तेन क्रोशाख्येन साम्ना चात्वालसमीपे स्तुतिं कुर्युः। तेन यज्ञसमाप्तिं प्राप्येन्द्रियसामर्थ्यं प्राप्नुवन्ति॥

अथ सत्रस्यर्द्धिनामकं सामान्तरं विधत्ते— "सत्रस्यर्द्ध्याहवनीयस्यान्ते स्तुवन्त्यग्निमेवोपद्रष्टारं कृत्वर्द्धिमुप यन्ति[2]"–इति। यत् सत्रस्यर्द्धिनामकं साम†, तेनाहवनीयसमीपे स्तुतिं कुर्युः। तथा

---

* "इन्द्र सुतेषु सोमेषु"–इति (छ० आ० ४. २. ५. १) योनावुत्पन्नम्, गे० गा० १०. १. २४ साम क्रोशम्। तत्र मानम्—आ० ब्रा० २. १६। तदेव "प्राया भिन्नुर्मद्दीनाम्"–इति (उ० आ० ६ २. १८. १.) तृचे विहितं स्तोत्रीयम्। तच्च ऊ० गा० ६. १. १२। "क्रोशं भवति"–इत्यादिकं तद्विधायकं ब्राह्मणम् (ता० ब्रा० १६, ५)।

† तच्च स्तोभान्वितम्, आ० गा० ४. १. ४। तत्र मानम्— आ० ब्रा० ६, २। तद्विधायकम्— ता० ब्रा० ५. ४ ७।

सत्यग्निमेव तु ते सात्विग्णं कृत्वा समृद्धिमेव प्राप्नुवन्ति ॥

सामान्तरं विधत्ते— "प्रजापतेर्हृदयेन हविर्द्धानेऽन्तः स्तुवन्ति; प्रेमाणमेवास्य गच्छन्ति(३)"-इति। प्रजापतेर्हृदयमिति कस्यचित् साम्नो नामधेयम्*। तेन हविर्द्धानस्यान्तः स्थित्वा स्तुतिं कुर्युः। तेन च स्तोत्रेणास्य प्रजापतेः प्रीतिं गच्छन्ति ॥

अन्यत् सामद्वयं विधत्ते— "श्लोकेन पुरस्तात् सदसः स्तुवन्त्यनुश्लोकेन पश्चाद्; यज्ञस्यैवान्तं गत्वा श्लोकभाजो भवन्ति(४)"-इति। श्लोकानुश्लोकशब्दौ सामविशेषनामनी†। ताभ्यां सदस उभयतः स्तुतिं कुर्युः। तेन च यज्ञसमाप्तिं प्राप्य कीर्त्तिभाजो भवन्ति ॥

तत्रानुश्लोके कञ्चिद्विशेषं विधत्ते— "नवभिरध्वर्युरुद्गायति; नव वै पुरुषे प्राणाः, प्राणानेव यजमानेषु दधाति(५)"-इति। अस्य साम्न आधारभूता स्तोत्रिया ऋचो नवसङ्ख्याकाः‡, गानकर्त्ता चाध्वर्युर्न तूद्गाता§। पुरुषशरीरे नवच्छिद्रवर्त्तित्वेन प्राणानां नवसङ्ख्याकत्वात् तान् सर्वान् यजमानेषु स्थापयति ॥

तास्वृक्षु कञ्चिद्विशेषं विधत्ते— "सर्वा ऐन्द्रियो भवन्ति; प्राणेष्वे-

---

* तच्च स्तोमाश्रितम्, आ० गा० ५. २. १५। तत्र मानम्—आ० ब्रा० ३ २। तद्विधायकम्—ता० ब्रा० ५. ४. ४।

† छ० आ० ५. २. १. ५, ६ ऋचोरुत्पन्ने, गे० गा० १२. १. १, २। तत्र मानम्—आ० ब्रा० २ १६। अनयोर्विधायकं ब्राह्मणम्—ता० ५. ४. १।

‡ "अध्वर्युं शिरसोद्गायेत्"—इत्यादि ता० ब्रा० ५. ६. २ द्रष्टव्यम्।

§ "अथो खल्वाहुः कथ मध्वर्युर्बह्वृचस्य साम गायेत्"—इत्यादि ताण्ड्यस्य इह पर्यालोच्य (५. ६. ६, ७.)।

येन्द्रियं दधति[९]"-इति। इन्द्रो देवता यासां ता 'ऐन्द्रिय'। तथाविधा एव नवसङ्ख्याका सर्वा अपि कार्या। तेन प्राणेषु सामर्थ्यं स्थापयन्ति॥

तासु तु प्रतिहारभागं निषेधति— "अप्रतिहृताभिरुद्गायति तस्मात् पुरुषः सर्वाण्यन्यानि शीर्ष्णोऽङ्गानि प्रत्यचति, शिर एव न[१०]"-इति। ऋचि गीयमानस्य साम्नः पञ्च भागाः,— हिङ्कारप्रस्तावो-द्गीथप्रतिहारनिधनाख्याः*। तेषु प्रतिहारभागं वर्जयित्वा, तद्रहिताभिरेव पूर्वोक्ताभिर्नवभिर्गायेत्। यस्माच्च प्रतिहारो वर्जितः, तस्माल्लोकेऽपि पुरुषः शिरोव्यतिरिक्तानि हस्तपादादीन्यङ्गानि 'प्रत्यचति' प्रत्याहृतानि सङ्कुचितानि करोति। शिर एव लोके सङ्कुचितं न करोति। न हि हस्तपादवदङ्गुलीवच्च शिरः प्रतिहर्तुं शक्यते। तस्माच्छिरःस्थानीयाध्वर्युगाने प्रतिहारो वर्जनीयः॥

अथ तस्य गानस्याश्रितं स्तोमद्वयविशिष्टं सामद्वयं विधत्ते— "पञ्चदशꣳ रथन्तरं भवतीन्द्रियमेवाव रुन्धते, सप्तदशं बृहदन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायन्ते[८]"-इति। पञ्चदशस्तोमकं रथन्तरं† सामैकतो गायेयुः। तेन पञ्चदशस्येन्द्रेण सहोत्पन्नत्वादिन्द्रियप्राप्तिर्भवति। तथा सप्तदशस्तोमयुक्तं‡ बृहदन्यतो गायेयुः। सप्तदशस्याऽन्नप्रजाहेतुत्वात् तत्प्राप्तिः। यथा पक्षिणो द्वौ पक्षौ, एवमेतद्

---

* पञ्चविधसूत्रे १ १ १ द्रष्टव्यम्; छान्दोग्यब्राह्मणेऽपि २ २-८ ख०।
† ता० ब्रा० २ ४ ६ ख०। उह्यगा० १ १ १।
‡ ता० ब्रा० २ ७-१३ ख०। उह्यगा० १ १ २।

गानद्वय द्रष्टव्यम्। अत एवान्यत्राम्नातम्—"पञ्चदशोऽन्य पक्षो भवति, सप्तदशोऽन्य"-इति॥

अथ स्तोमसामविशेषमृग्विशेषेषु विधत्ते—"एकविंश भद्रं द्विपदासु प्रतिष्ठित्यै(९)"-इति। 'एकविंश' स्तोमविशेष*। भद्रशब्दः सामविशेषस्य नामधेयम्†। पादद्वयोपेता ऋचो 'द्विपदाः'। तेन पादद्वित्वेन प्रतिष्ठा भवति॥

एतस्य भद्रसाम्नः समीपे पत्नीगानं विधत्ते—"पत्नय उप गायन्ति, मिथुनत्वाय प्रजात्यै(१०)"-इति। यजमानानां याः पत्नयः, ताः सर्वा भद्राख्यसामगानस्य समीपे स्वयमपि गायेयुः। पुरुषाणां पत्नीनाञ्च गानेन मिथुनं पत्न्याः प्रजोत्पत्तिर्भवति॥

अथ सामान्तरं विधत्ते—"प्रजापतिः प्रजा असृजत, सोऽकामयतासामहंराज्यं परीयामिति, तासाꣳ राजनेनैव राज्यं पर्यैत्, तद्राजनस्य राजनत्वं, यद्राजनं भवति, प्रजानामेव तद्यजमाना राज्यं परि यन्ति(११)"-इति। राजनमिति सामविशेषस्य नामधेयम्‡।

---

* ता० ब्रा० २ १४—१७ ख०।

† तदपि स्तोमाश्रितम्, ग्रा० गा० ३ १, २१। तत्र मानम्—ग्रा० ब्रा० ३, १८। तदेव "इमा नु क भुवना"-इति द्विपदे द्वचे गीतं भवति स्तोत्रीयम्। तत्तु ऊह्य० गा० १.१ २०। "गौतमस्य भद्रं भवति"—इत्यादि च तद्विधायकं ब्राह्मणम् (ता० ब्रा० १५. १२ ९.)।

‡ "इन्द्र नरो नेमधिता"-इति (ऋ० सं० ४. १. ३ ६) योनावुत्पन्नम्, ग्रा० गा० ४. २ १९। ग्रा० ब्रा० ३ २३। तदेव साम "तदिदास"-इति (उ० ग्रा० ६ ३ १७ १) द्वचे गीतं स्तोत्रीयं भवति। तच्च साम ऊह्य० गा० २ २ ११। तद्विधायकम्—ता० ब्रा० ५ २ ६।

राज्यसाधनत्वात् तस्य राजनत्वम्। तत्साम्प्रयोगेण यजमाना राज्यं प्राप्नुवन्ति ॥

तत्रैव स्तोमविशेषं विधत्ते— "पञ्चविंशो भवति*, प्रजापतेराप्त्यै[१२]"-इति। प्रजापतेः पञ्चविंशस्तोमसदृशत्वात् तेन तत्प्राप्तिः ॥

तस्मिन्नेव पञ्चविंशस्तोमे कश्चिद्विशेषं विधत्ते— "पञ्चभिस्तिष्ठन्तः स्तुवन्ति, देवलोकमेवाभि जयन्ति पञ्चभिरासीना मनुष्यलोकमेवाभि जयन्ति, दश सम्पद्यन्ते, दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धते[१३]"-इति। पञ्चविंशाख्यस्तोमे या आद्याः पञ्च स्तोत्रियाः, ता उत्थितैः पठनीयाः याश्चानन्तरभाविन्यः पञ्चसङ्ख्यास्ता आसीनैर्गातव्याः, तेन लोकद्वयप्राप्तिः, दशसङ्ख्यया विराड्द्वारान्नप्राप्तिः ॥

आसीनगाने कश्चिद्विशेषं विधत्ते "पञ्चधा विनिषद्य स्तुवन्ति, पञ्च दिशो दिक्ष्वेव प्रति तिष्ठन्ति[१४]"-इति। पञ्चभिः प्रकारैः स्थानविशेषेषूपविश्य स्तुवन्ति। ऊर्द्ध्वया सह दिशां पञ्चत्वाद्दिक्षु प्रतिष्ठा ॥

तत्रैवान्यं विशेषं विधत्ते— "एकैकया स्तुतया समा यन्ति, दिग्भ्य एवान्नाद्यं सम्भरन्ति[१५]"-इति। पञ्चसु स्थानेषूपवेशनकाले कश्चिदुद्गाता प्रथममुपविशति, तदानीमितरे सर्वेऽप्यस्तुतया स्तोत्रियया तमुद्गातारं समागत्योपविशन्ति। एवं तत्तत्स्थानेषु प्रथममेवोद्गातर्य्युपविष्टे सति तत्तदृचा स्तुते प्रागेव सर्वेऽप्युद्गातारमुपगच्छेयुः। तथा सति सर्वाभ्यो दिग्भ्योऽन्नं सम्पादयन्ति ॥

---

* पुरस्तात् ४ ३ ८ १ तद्ब्राह्मणञ्च ५ ३ ३ द्रष्टव्यम्।

इतरेष्वागतेषूद्गातृकृत्यं विधत्ते—"ताभिरुद्गातोद्गायति, दिग्भ्य एवान्नाद्यꣳ सम्भृत्य तेज आत्मन् दधते, तस्मादेकः प्राणः सर्वाण्य-ङ्गान्यवत्यथो यथा सुपर्ण उत्पतिष्यञ्छिर उत्तमं कुरुत एवमेव तद् यजमानाः प्रजानामुत्तमा भवन्ति(१६)"–इति। यां स्तोत्रियां पुर-स्कृत्योद्गातारमागच्छन्ति, तया स उद्गाता गायेत्। तथा सति दिग्भ्यः सम्पादितमन्नं तेजोरूपं सर्वेऽपि स्वात्मन्येव स्थापयन्ति। यस्माच्च सर्वेषु स्थितेष्वेक एवोद्गाता गायति, तस्माच्छरीरमध्ये-ऽप्येक एव प्राणः सर्वाण्यङ्गानि रक्षति। अपि च यथा कश्चित् पक्षिविशेषः आकाशे उत्पतिष्यन् स्वकीयं शिर ऊर्द्धं कुरुते, एवमेव तेनोद्गातृगानेन प्रजानां मध्ये यजमाना उत्तमा भवन्ति॥

अथ त्रयाणामृत्विजामाधारविशेषान् विधत्ते—"आसन्दीमुद्गाता-रोहति, साम्राज्यमेव गच्छन्ति, प्लेङ्खꣳ होता नाकस्यैव पृष्ठꣳ रोहन्ति, कूर्चावध्वर्युर्ब्रध्नस्यैव विष्टपं गच्छन्त्येतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति तिष्ठन्त्यथो आक्रमणमेव तत्सेतुं यजमानाः कुर्वते सुवर्गस्य लोकस्य समष्ट्यै(१७)"–इति। 'आसन्दी' चतुर्भिः पादैरुन्नतैरुपेता खट्वाकारा†। उद्गातुस्तदारोहणेन सर्वे यजमाना 'साम्राज्यं' देशा-धिपत्यं गच्छन्ति। 'प्लेङ्खः' दोला, तां होता समारोहति। तेन सर्वेऽपि स्वर्गमारोहन्ति। 'कूर्चौ' दर्भविशेषौ तावध्वर्युरारोहति। तेन 'ब्रध्नस्य' आदित्यस्य 'विष्टपं' स्थानं गच्छन्ति*। साम्राज्यस्वर्गादित्यस्थानरूपा ये लोकाः, एतावन्त एवापेक्षिता देवलोकाः, तेष्वनुक्रमेण प्रतितिष्ठन्ति।

---

* एवमेव ता० ब्रा० ५. ५. १—१२ द्रष्टव्यम्।

† लाट्या० सू० ३ १२. १–१५, ऐ० ब्रा० ८ २ १ द्रष्टव्यम्।

अपि च तेनारोहणेन स्वर्गसमुद्रस्याक्रमणसाधनं सेतुं यजमानाः कुर्वते। तच्च स्वर्गप्राप्त्यै भवति॥

अत्र मीमांसा। दशमाध्यायस्य चतुर्थपादे (जै० सू० ८,९; अधि० ६) चिन्तितम्—

"पत्नीनामुपगानं किमृत्विजां तन्निवर्त्तयेत्।
समुच्चितं वा? गानस्य शारीरत्वान्निवर्त्तनम्॥
स्वराभिव्यञ्जनं गानं ग्रहवत् तद्विधीयते।
वादित्रेणोपचयः साम्यात् सान्निध्याच्च समुच्चय"॥

महाव्रते श्रूयते—"पत्नय उप गायन्ति"-इति (५१३ पृ० १६पं०)। प्रकृतौ श्रूयते—"ऋत्विज उप गायन्ति"-इति*। तदेतदृत्विगुपगानं पत्न्युपगानेन निवर्त्यते। ननु प्रकृतावुद्गाता साम्नि गीयमाने सति ऋत्विजोऽन्ये साम्नैवोपगायन्ति, इह तु पत्नयो वादित्रं वादयन्तीति भिन्नविषयत्वान्नास्ति निवृत्तिः? नैवम्; गानशब्दस्य शारीरे प्रसिद्धत्वात्। तस्मादृत्विजो निवर्त्त्य पत्न्यः सामोपगायेयुरिति प्राप्ते, ब्रूमः,—गानशब्दस्य नाक्षरोच्चारणमर्थः, किन्तु स्वराभिव्यञ्जनम्, तच्च शरीरेण वादित्रेण वा सिध्यति। अत एव गानतत्त्वज्ञा आहुः—"दारवी गात्रवीणा च द्वे वीणे गानजातिषु"-इति†। तच्च गानं ग्रहन्यायेनापूर्वक्रियाविधानात् प्रकृतिलिङ्गं स्यात्। एवं तर्हि

---

* ता० ब्रा० ५ ६. "सर्वे महत्विज"-इत्यादिग्रन्थो द्रष्टव्यः।

† "गात्रवीणा तु सा प्रोक्ता यस्यां गायन्ति सामगा"-इत्यादिस्तदुत्तरग्रन्थोऽत्रालोच्यः। ना० शि० ६ ख० १—२४।

गानोपचयवाचिन उपशब्दस्य वैयर्थ्यमिति चेत्, न, वादित्रोपचयसम्भवात्। अस्ति हि तत्र वादित्रनादः, "दिक्षु दुन्दुभयो वदन्ति"-इतिश्रुतेः*। पत्न्युपगानञ्च वादित्रनादः, "काण्डवीणाभिरुपगायन्ति"-इतिश्रुतेः†। अतः सादृश्यात् सन्निधानाच्च तदुपचयो युक्तः। तस्मादनिवृत्तिरुभयोर्गानसमुच्चयः‡"-इति ॥

तत्रैवान्यत् (जै० सू० १६, १७; अधि० ८.) चिन्तितम्—

"बाध्यं स्तोकादिनाज्यादि, न वा? ऽऽद्य', स्तुतिलिङ्गतः।
देशसाम्नोर्विधौ भेदो वैशिष्ट्यात् स्यात्§ समुच्चय' ॥

महाव्रते श्रूयते—"श्लोकेन पुरस्तात्सदसस्तुवन्त्यनुश्लोकेन पश्चात्"-इत्यादि (५१२ पृ० ६प०)। तत्र श्लोकानुश्लोकनामकैः सामभिः प्राकृतान्याज्यपृष्ठादिस्तोत्रगतानि रथन्तरवामदेव्यादिनामकानि सामानि बाध्यानि। कुतः? स्तुवत इति प्रकृतिलिङ्गदर्शनात्, प्रकृतावाज्यैर स्तुवते पृष्ठैः स्तुवत इति हि श्रुतम्। नैतत् सारम्। किमत्र स्तुतिमनूद्य देशसामगुणौ विधीयेते, किं वा गुणद्वयविशिष्टा

---

* "सर्वासु स्रक्तिषु दुन्दुभयो वदन्ति"-इत्यादि ता०ब्रा० ५ ५.१८,१९।

† "गोधावीणा काण्डवीणाश्च पत्न्यो वादयन्त्युपगायन्ति"-इति च कात्या० श्रौ० १३ ३ १७। "पत्न्योऽपघाटिलाभिरुपगायन्ति"-इत्यादि ता० ब्रा० ५ ६.९। "पश्चिमेनोपगातॄन् द्वे द्वे एकैका पत्नी काण्डवीणां पिच्छोरां(ला) च व्यत्यासं वादयेदुपमुख पिच्छोरां(ला) वादनेन काण्डमयीं ता अपघाटिका इत्याचक्षते, ता प्रतिमन्त्रयेत या पत्न्यपघाटिका स्वदुक वादयिष्यति"-इत्यादि लाट्या० ४ २. ५-८।

‡ "तस्मादनिवृत्तेरुपगानयो समुच्चय"-इति ग-पाठ।

§ "तु" ए. सो लि० पु०-पाठ।

स्तुति ? नाद्य , वाक्यभेदापत्तेः। द्वितीये तु कार्यभेदेन बाध्याभावात् समुच्चय स्यात्"-इति ॥८॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥

---

अर्कयेण वै संहस्रशः प्रजापतिः प्रजा असृजत ताभ्य इलान्देनेरां लूतामवारुन्ध यदर्क्यं भवति प्रजा एव तद्यजमानाः सृजन्त इलान्दं भवति प्रजाभ्य एव सृष्टाभ्य इरां लूतामवं रुन्धते तस्माद्याः समाः सचः सर्वं द्यौधुकास्ताः समां प्रजा इषः ह्यासामूर्जमादंदते याः समाः व्यंद्धमद्यौधुकास्ताः समां प्रजाः (१)

न ह्यासामिषमूर्जमाददत[१] उत्क्रोदं कुर्वते यथा बन्धान्मुमुचाना उत्क्रोदं कुर्वत एवमेव तद्यजमाना देवबन्धान्मुमुचाना उत्क्रोदं कुर्वत इषमूर्जमात्मन् दधाना[२] वाणः शततन्तुर्भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठ[३]न्त्याजिं धावन्त्यनभिजितस्याभिजित्यै[४] दुन्दुभीन्त्समा घ्नन्ति परमा वा एषा वाग्या दुन्दुभौ परमामेव (२)

वाचमवं रुन्धते[५] भूमिदुन्दुभिमा घ्नन्ति यैवेमां

वाक् प्रविष्टा तामेवाव रुन्धतेऽथो इमामेव जयन्ति[६] सर्वा वाचो वदन्ति सर्वासां वाचामवरुद्ध्या[७] आर्द्रे चर्मन् व्य यच्छेते इन्द्रियस्यावरुद्ध्या[८] आन्यः क्रोशति प्रान्यः शꣳसति य आक्रोशति पुनात्येवैनान्त्स यः प्रशꣳसति पूतेष्वेवान्नाद्यं दधा[९]त्यृषिकृतं च ( ३ )

वा एते देवकृतञ्च पूर्वैर्मासैरव रुन्धते यद्भूतेच्छदाꣳ सामानि भवन्त्युभयस्यावरुद्ध्यै[१०] यन्ति वा एते मिथुनाद्ये संवत्सरमुपयन्त्यन्तर्वेदि मिथुनौ सम्भवतस्तेनैव मिथुनान्न यन्ति[११] ॥ ८ ॥

प्रजा[१] एव[२]* च त्रिꣳशच्च ॥ ८ ॥

अष्टमे क्रोशसामादीन्युक्तानि, नवमे शततन्तुवीणादिकमुच्यते। तत्रादौ तावत् सामद्वयं विधत्ते—"अर्कैण वै सहस्रशः प्रजापतिः प्रजा असृजत, ताभ्य इलान्देनेरां लूतामवारुन्ध, यदर्कं भवति प्रजा एव तद्यजमानाः सृजन्त, इलान्दं भवति प्रजाभ्य एव सृष्टाभ्य इरां लूतामव रुन्धते; तस्माद् याꣳ समाꣳ सत्रꣳ समृद्धं क्षोधुकास्ताꣳ समां प्रजा इषꣳ ह्यासामूर्जमाददते, याꣳ समां व्यृद्धमक्षोधुकास्ताꣳ समां प्रजा न ह्यासामिषमूर्जमाददते[१]"—इति । 'अर्कम्'—इति

* "व्यृद्धमक्षोधुकास्ताꣳ समां प्रजा [१] एवमामेव[२]"—इति क, ख, ग ।

कस्यचित् साम्नो नामधेयम्*; तेन प्रजापतिः पुरा बहुविधाः सहस्र-संख्यरूपाः प्रजा असृजत। 'इलान्दम्'-इति सामान्तरस्य नामधेयम्†। तेन साम्ना स्वसृष्टप्रजार्थं 'लूताभिरां' पूर्वं विच्छिन्नमन्नम् 'अवारुन्ध' पुनरप्यविच्छेदेन सम्पादितवान्। तद्वद् यजमाना अपि सामद्वयेन प्रजाः सृष्ट्वा तदर्थमन्नं सम्पादयन्ति। यस्मादस्मिन् सत्रे सामद्वयं सम्पाद्यते, तस्माद् 'यां समां सत्र समृद्धं' यस्मिन् संवत्सरे नैरन्तर्येण सत्रं समृद्धं प्रवृत्तम्, 'तां समां प्रजाः क्षोधुका.' तस्मिन् संवत्सरे नैरन्तर्येण क्षुधिताः प्रजाः सत्रिणां समीपे सर्वदिग्भ्यः समागच्छन्ति। सत्रिणो हि 'आसां' प्रजानां नानाविधमन्नं रसञ्च समादाय प्रयच्छन्ति। यस्मिंस्तु संवत्सरे सत्रं 'व्यृद्धं' न प्रवृत्तं, तस्मिन् संवत्सरे प्रजाः 'अक्षोधुकाः' क्षुधिताः काश्चिदपि नागच्छन्ति। यस्माद् 'आसां' प्रजानां मौह्याद्यन्नं चौरादिरसञ्च नैवादाय प्रयच्छन्ति, तस्मादनागमनम्॥

अथान्यदनुष्ठेयं विधत्ते—"उत्क्रोदं कुर्वते, यथा बन्धान्मुमु-

---

* "अयम्पूया रयिर्भग"-इत्यस्याम् (छ० आ० ६.२ १.२) उत्पन्नम्, आ० गा० १.२.८ श्रुतमर्कसाम, तदेवेहार्क्यमिति। मानं चेह आ० ब्रा० ३ १०।

† "अभिरसि जन्मना"-इत्यस्याम् (आ० आ० ३ १२) उत्पन्नम्, आ० गा० ५ १.२ साम। तत्र मानम्—आ० ब्रा० ३ २४। एतदेव "अग्ने तव श्रव"-इति षड्चे सूक्ते (उ० आ० ६. २. १. १-६) गीत मिलान्दं नाम स्तोत्रीयम्। "इलान्द मग्निष्टोमसाम कार्यम्"-इत्यादि च तद्ब्राह्मणम् (ता० ब्रा० ५ ३)। तत् साम उह्यगा० २. २. १४ मदृश्यम्।

घाना उत्क्रोदं कुर्वत एवमेव तद् यजमाना देवबन्धान्मुमुचाना उत्क्रोदं कुर्वत इषमूर्जमात्मन् दधानाः[१]"–इति। हर्षनिमित्तो ह्यत्युच्चध्वनिः 'उत्क्रोदः'। सर्वे यजमानाः सत्रं समाप्य सन्तुष्टा उत्क्रोदं कुर्युः। यथा लोके चिरं शृङ्खलाबद्धाः पुरुषास्तस्माद् बन्धाद् विमोकं गच्छन्तो हर्षेणोत्क्रोदं कुर्वन्ति, एवमेव यजमानाश्चिरकालानुष्ठेय-सत्ररूपाद् देवबन्धाद् विमोकं प्राप्नुवन्तः सत्रसामर्थ्येनान्नं रसञ्च स्वात्मनि सम्पादयन्ति, अत उत्क्रोद कुर्वते॥

यदुक्त सूत्रकारेण "औदुम्बरस्य वीणादण्डस्य दशातिमथिता-न्येकैकच्छिन्नतिमथिते दश मौञ्जान् तन्तून् प्रवयति, स वाण शत-तन्तुः"–इति, तदेतद् विधत्ते– "वाणः शततन्तुर्भवति, शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठन्ति[२]"–इति*। दशे-न्द्रियाणां दशसङ्ख्याकासु नाडीषु वृत्तिभेदेन शतसङ्ख्या॥

उत्साहोपेतानां यजमानानां काञ्चिन्मर्यादां कृत्वा तत्पर्यन्तं धावनं विधत्ते– "आजि धावन्त्यनभिजितस्याभिजित्यै[३]"–इति। यत् पूर्वम् 'अनभिजितम्' असम्पादित फल, तस्य सम्पादनायेद धावनम्॥

उत्साहद्योतकमन्यद् विधत्ते– "दुन्दुभीन्समम् घ्नन्ति, परमा वा एषा वाग् या दुन्दुभौ परमामेव वाचमव रुन्धते[४]"–इति। दिक्षु स्थापिता ये दुन्दुभय, तान् सम्यगाहन्यु'। सोऽयं दुन्दुभिध्वनि' सर्वध्वनीनामुत्तम., अत्युच्चत्वात्। तदादनेन सभारञ्जनरूपां 'परमां' वाच प्राप्नुवन्ति॥

---

* "वाणं वितन्वन्ति,०—० शततन्त्रीको भवति"–इत्यादि ता० ब्रा० ५. ६ १२-१४। लाट्या० सू० ३ १. २-११।

यदुक्तं सूत्रकारेण "अपरेणाग्नीध्रमण्डपं भूमिदुन्दुभिमवटं खनन्त्यर्द्धमन्तर्वेद्यर्द्धं बहिर्वेदितमार्द्रेण चर्मणोत्तरलोम्ना वितत्य शङ्कुभिः परिनिहत्यावैतत् पुच्छकाण्डमाहननार्थं निदधाति"-इति, तत्र तेन पुच्छकाण्डेनाहननं विधत्ते— "भूमिदुन्दुभिमा घ्नन्ति*, यैवेमां वाक् प्रविष्टा, तामेवाव रुन्धतेऽथो इमामेव जयन्ति[६]"-इति। भूमिदुन्दुभ्याघातेन पार्थिवेषु द्रव्येषु परस्परसङ्घट्टनेन जन्याः शब्दविशेषाः स्वाधीना भवन्ति॥

यदुक्तं सूत्रकारेण *"उपाकृते माहेन्द्रस्य स्तोत्रे सर्वा वाचो* वदन्त्युत्क्रोद् यजमानाः कुर्वतेऽपघाटलिकास्तूणवीणा पिच्छोला *इति पत्नयो वादयन्ति वीणाः शङ्खावलीरुपहिताः*"-इति, *तदे*तद्विधत्ते— "सर्वा वाचो वदन्ति†, सर्वासां वाचामवरुद्ध्यै[७]"-इति। अपघाटलिकादिवाद्यविशेषजन्याः मनुष्यगवाश्वादिशब्दजन्याश्च ये शब्दविशेषास्ते सर्वेऽपि प्राप्यन्त इत्यर्थः॥

अथ ब्राह्मणशूद्रयोश्चर्मनिमित्तं कलहं विधत्ते— "आर्द्रे चर्मन् व्यायच्छेते, इन्द्रियस्यावरुद्ध्यै[८]"-इति। तेनार्द्रचर्मनिमित्तेन कलहेन सामर्थ्यसम्पत्तिर्भवति। कलहप्रकारस्तु सूत्रे विस्पष्टमुक्तः— "शूद्रार्यौ चर्मकर्त्ते व्यायच्छेते,— आर्द्रे श्वेते परिमण्डलेऽन्तर्वेदि ब्राह्मणो बहिर्वेदि शूद्रः; आक्रोशति शूद्र‡, प्रशंसति ब्राह्मणः; इमे राद्धुरिमे

---

* ता० ब्रा० ५. ५. १८। लाट्या० सू० ३ १०. १८, ११. १-४।
† ता० ब्रा० ५. ६. ८। लाट्या० सू० ४. २. ७।
‡ ता० ब्रा० ५. ५. २०।

सुभूतमकन्निति ब्राह्मण इम उदासीकारिण इमे दुर्भूतमकन्निति शूद्रस्तं ब्राह्मणः सञ्जित्याशीर्भि र्मर्माध्यस्यति"-इति* ॥

तत्राक्रोशं प्रशंसाञ्च क्रमेण विधत्ते- "आर्य्यः क्रोशति, प्रार्य्य शंसति, य आक्रोशति पुनात्येवैनान्त्स यः प्रशंसति पूतेष्वेवान्नाद्यं दधाति(९)"-इति । इमे सत्रानुष्ठायिनो यजमानाः द्रव्यव्ययं कृत्वा सर्वशून्यकारिणः, अतो दुर्व्यापारमकुर्वन्, इत्येवम् 'अन्यः' एकः शूद्रः 'आक्रोशति' निन्देत। इमे यजमानाः समृद्धिं गताः सद्व्यापार-मकुर्वन्, इत्येवम् 'अन्य' एको ब्राह्मणः प्रशंसेत्। तयोर्मध्ये यः शूद्रः आक्रोशति, स एनान् यजमानान् शोधयित्वा निष्पापान् करोति, यो ब्राह्मणः प्रशंसति, स च पूतेषु यजमानेष्वन्नाद्यं सम्पादयति† ॥

अथ कांश्चित्सामविशेषान् विधत्ते-"ऋषिकृतञ्च वा एते देव-कृतञ्च पूर्वैर्मासैरव रुन्धते, यद् भूतेच्छदाꣳ सामानि भवन्त्युभयस्याव-रुद्ध्यै(१०)"-इति । योऽयमृषिभिर्मनुष्यैः कृत उपकारः, यश्च देवैः कृत उपकारः, तदुभयमप्यस्मान्महाव्रताद् गवामयनगतादुपान्त्या-दह्नः पूर्वमनुष्ठितैर्मासैर्यजमानाः प्राप्नुवन्ति; अतो महाव्रतेऽपि तदुभयप्राप्त्यर्थं भूतेच्छन्नामकानामृषीणां सम्बन्धीनि, तैर्दृष्टानि सामानि गातव्यानि‡ ॥

अथ ब्रह्मचारिपुंश्चल्योर्मिथुनीभावं विधत्ते-"यन्ति वा एते मिथुनाद् ये संवत्सरमुपयन्त्यन्तर्वेदि मिथुनौ सम्भवतस्तेनैव मिथुनान्न

* ता० ब्रा० ५. ५. १४-१७। लाट्या० सू० ४. ३ ७,८।

† ता० ब्रा० ५. ५ १३। लाट्या० ४. ३ खण्डीयसूत्रेषु च स्फुटम्।

‡ "भूतेच्छद प्रशंसति"-इत्यादि च ऐ० ब्रा० ६. ५ १०।

यन्ति(११)"-इति। 'ये' यजमानाः संवत्सरसत्रमनुतिष्ठन्ति, ते चिरकालब्रह्मचर्याभ्यासात् मिथुनशक्तेरपगच्छन्ति; अतः पुनस्तच्छक्तिप्राप्त्यर्थं वेदिमध्ये ब्रह्मचारिपुंश्चलीरूपौ मिथुनावयवौ सम्भवं कुर्याताम्*; तेन सम्भवेन यजमाना मिथुनशक्तेर्नापगच्छन्ति। अन्तर्वेदिदेशश्च सूत्रकारेण दर्शितः—"उत्तरस्यां वेदिश्रोण्यां पुंश्चल्यै मागधाय च परिश्रयन्ति"-इति। मगधदेशोत्पन्नो ब्रह्मचारी 'मागधः' ॥ ९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके नवमोऽनुवाकः॥

---

चर्मावं भिन्दन्ति पाप्मानमेवैषामवं भिन्दन्ति(१) मार्परात्सीर्मानि व्यात्सीरित्याह सम्त्यैवैषां पाप्मानमवं भिन्द(२)न्त्युदकुम्भानधिनिधाय दास्यो मार्जालीयं परिनृत्यन्ति पदो निघ्नतीरिदम्मधुं गायन्त्यो मधु वै देवानां परममन्नाद्यं परममेवान्नाद्यमवं रुन्धते पदो नि घ्नन्ति मह्हीयामेवैषुं दधति(३) ॥ १० ॥

चर्मैकान्नपञ्चाशत् ॥ १० ॥

---

* "पूर्वेणाग्नीध्रीयं ब्रह्मचार्यन्तर्वेद्युदङ्मुखस्तिष्ठेद्, बहिर्वेदि पुंश्चली दक्षिणामुखी। सा ब्रूयाद् दुश्चरितमवकीर्णिन्निति; धिक् त्वा जाल्मि! पुंश्चलि! ग्रामस्य मार्जनि! पुरुषस्य पुरुषस्य शिश्नप्रणेजनीति ब्रह्मचारी"—इत्यादि लाट्या० सू० ४. ३।

नवमेऽनुवाके उत्क्रोदादिकमुक्तम्; अथ दशमे दासीनृत्य*-मुच्यते। तत्रादौ तावच्चर्मवेधनं विधत्ते— "चर्माव भिन्दन्ति, पाप्मानमेवैषामव भिन्दन्ति(१)"-इति। अत्र वेध्यं† चर्म सूत्रकारेण विस्पष्टमुक्तम्— "उत्तरेणाग्नीध्रं कटसङ्घाते तेजनसङ्घाते चार्द्रं चर्म वेधनार्थं‡ वितत्योच्छ्रयन्ति"-इति। वेधनप्रकारश्च तेनैव स्पष्टमुक्तः —"विपरियन्त्येतच्चर्म कवचिनस्तेषामेकैकशः शरास्ति, माप राल्सी-र्माति व्याल्सीरिति, तत्ते विद्धानातिपादयन्ति"-इति। तेन चर्म-वेधनेनैषां यजमानानां पाप्मानमेव भिन्दन्ति॥

अथ वेधनात् पूर्वं कवचिष्वध्वर्योः शासनं विधत्ते— "माप राल्सी-र्माति व्याल्सीरित्याह सम्प्रत्येवैषां पाप्मानमव भिन्दन्ति(१)"-इति। हे कवचिन्! चर्मवेधनाय प्रवृत्तस्य वाणस्य स्खलनरूपमपराधं मा कार्षीः, अस्खलन्नपि चर्म भित्त्वा परतो वाणगमनरूपमतिव्यधनं मा कार्षीरित्येवमध्वर्युर्ब्रूयात्। एवं सति 'एषां' यजमानानां पाप्मानं सम्यगेव भिन्दन्ति॥

अथ नृत्यं§ विधत्ते— "उदकुम्भानधिनिधाय दास्यो मार्जालीयं परि नृत्यन्ति, पदो निघ्नतीरिदम्मधु गायन्त्यो मधु वै देवानां परम-मन्नाद्यं, परममेवान्नाद्यमव रुन्धते; पदो नि घ्नन्ति, महीयामेवैषु दधति(२)"-इति‖। अत्र दासीसङ्ख्यां सूत्रकारो दर्शयति— "मार्जा-लीयस्यान्तेऽष्टौ दासकुमार्य उदकुम्भैर्विकम्पन्ते"-इति। ता एताः

* 'दासीनृत्त' ग। § 'नृत्तं' ग।
† 'भेद्यं' ग। ‖ ता ब्रा० ५। ६ १५।
‡ 'व्यधनार्थं' क।

तान् कुम्भान् शिरसि धृत्वा मार्जालीयस्य धिष्ण्यस्य* परितो 'नृत्यन्ति' नृत्यं† कुर्वन्ति। कीदृश्यो दास्यः? 'पदो निघ्नतीः' दक्षिणान् पादान् भूमौ ताड़यन्त्यः, 'इदमधु'-इत्येतं शब्दं गायन्त्यः, अथवा इदमेव सारघं मध्वित्यादि मन्त्रं गायन्त्यः। मधु च देवानामत्यन्तं प्रियमन्नम्, अतस्तद्दानेन परममन्नं प्राप्नुवन्ति। योऽयं पादघातः तेन 'एषु' यजमानेषु 'महीयां' पूजां‡ सम्पादयन्ति॥ ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके दशमोऽनुवाकः॥

---

पृथि॒व्यै स्वाहा॒न्तरि॑क्षाय॒ स्वाहा॑ दि॒वे स्वाहा॑ सम्प्लो॒ष्य॒ते स्वाहा॑ सम्प्लव॑मानाय॒ स्वाहा॒ सम्प्लु॑ताय॒ स्वाहा॑ मेघायि॒ष्य॒ते स्वाहा॑ मेघाय॒ते स्वाहा॑ मेघि॒ताय॒ स्वाहा॑ मे॒घाय॒ स्वाहा॑ नीहा॒राय॒ स्वाहा॑ नि॒हाका॑यै॒ स्वाहा॑ प्रास॒चाय॒ स्वाहा॑ प्रचला॒का॑यै॒ स्वाहा॑ वि॒द्योति॒ष्य॒ते स्वाहा॑ वि॒द्योत॑मानाय॒ स्वाहा॑ संवि॒द्योत॑मानाय॒ स्वाहा॑ स्तनयि॒ष्य॒ते स्वाहा॑ स्त॒नय॑ते॒ स्वाहो॒ग्रꣳ स्त॒नय॑ते॒ स्वाहा॑ वर्षि॒ष्य॒ते स्वाहा॒ वर्ष॑ते॒ स्वाहा॑भि॒वर्ष॑ते॒ स्वाहा॑ परि॒वर्ष॑ते॒ स्वाहा॑ सं॒वर्ष॑ते (१)

---

* 'धिष्णियस्य' ग।     † 'नृत्त' ग।     ‡ 'प्रशां' ग।

स्वाहानुवर्षते स्वाहा शीकायिष्यते स्वाहा शीकायते स्वाहा शीकिताय स्वाहा प्रोषिष्यते स्वाहा प्रुष्णुते स्वाहा परिप्रुष्णुते स्वाहोद्ग्रहीष्यते स्वाहोद्गृह्णते स्वाहोद्गृहीताय स्वाहा विप्लोष्यते स्वाहा विप्लवमानाय स्वाहा विप्लुताय स्वाहातप्स्यते स्वाहातपते स्वाहोग्रमातपते स्वाहर्ग्भ्यः स्वाहा यजुर्भ्यः स्वाहा सामभ्यः स्वाहाङ्गिरोभ्यः स्वाहा वेदेभ्यः स्वाहा गाथाभ्यः स्वाहा नाराशꣳसीभ्यः स्वाहा रैभीभ्यः स्वाहा (२)

सर्वस्मै स्वाहा ॥ ११ ॥

संवर्षते[१] स्वाहा[१] * द्वे च ॥ ११ ॥

दशमे दासीनृत्य† मुक्तम्, तावता महाव्रतं समाप्तम्, अथोक्तेष्वनुवाकेष्वश्वमेधाङ्गमन्त्रा उच्यन्ते ॥

तत्रापि द्वयोरनुवाकयोरन्नहोममन्त्राः, तन्मध्ये प्रथमानुवाकगतान् मन्त्रानाह— "पृथिव्यै स्वाहा, ऽन्तरिक्षाय स्वाहा, दिवे स्वाहा, सम्प्लोष्यते स्वाहा, सम्प्लवमानाय स्वाहा, सम्प्लुताय स्वाहा, मेघायिष्यते स्वाहा, मेघायते स्वाहा, मेघिताय स्वाहा, मेघाय स्वाहा, नीहाराय स्वाहा, निहाकायै स्वाहा, प्रासचाय स्वाहा, प्रचलाकायै स्वाहा, विद्योतिष्यते स्वाहा, विद्योतमानाय स्वाहा, सविद्योतमा-

* "रैभीभ्यः स्वाहा[१]"—इति क, ख, ग। † "दासीनृत्त" ग।

नाय स्वाहा, स्तनयिष्यते स्वाहा, स्तनयते स्वाहोग्र८ स्तनयते स्वाहा, वर्षिष्यते स्वाहा, वर्षते स्वाहा, ऽभिवर्षते स्वाहा, परिवर्षते स्वाहा, संवर्षते स्वाहा, ऽनुवर्षते स्वाहा, शीकायिष्यते स्वाहा, शीकायते स्वाहा, शीकिताय स्वाहा, प्रोषिष्यते स्वाहा, प्रुष्णते स्वाहा, परि-प्रुष्णते स्वाहोद्ग्रहीष्यते स्वाहोद्गृह्णते स्वाहोद्गृहीताय स्वाहा, विप्लोष्यते स्वाहा, विप्लवमानाय स्वाहा, विप्लुताय स्वाहा, ऽऽतप्स्यते स्वाहा, ऽऽतपते स्वाहोग्रमातपते स्वाहर्ग्भ्यः स्वाहा, यजुर्भ्यः स्वाहा, सामभ्य स्वाहा, ऽङ्गिरोभ्यः स्वाहा, वेदेभ्य स्वाहा, गाथाभ्यः स्वाहा, नाराश८सीभ्यः स्वाहा, रैभीभ्यः स्वाहा, सर्वस्मै स्वाहा"-इति।

पृथिव्यादयस्त्रयो लोकाः। मेघोत्पादनाय धूमज्योतिस्सलिलमरुतां सन्निपातः 'सम्प्लव', स च त्रिविधः— आगामी वर्त्तमानो भूतश्च। अत एव सर्वात्मकप्रजापत्यभिन्नत्वात् तत्तद्रूपेण निर्दिश्यते। धूमादिसम्प्लवादूर्द्धं भविष्यद्वर्त्तमानातीतदशापन्ना मेघोत्पत्तिस्त्रिविधा, त्रिष्वप्यनुगताकारो 'मेघ'। मेघनिष्पत्तेरूर्द्धं द्रप्सपतन 'नीहारः', द्रप्सानां बाहुल्येन ईषदन्धकारापादनं 'निहाका', तदीयशैत्येनावयवसङ्कोचः 'प्रासचः', सङ्कोचादूर्द्धं पलायनं 'प्रचलाका'। तत ऊर्द्धं भविष्यदादिरूपेण त्रिविधा विद्युत्। तथा गर्जनस्याप्यवस्थात्रयम्। वृष्टेरपि तद्वदवस्थात्रयम्। तत्र तृतीयस्यामवस्थायां चत्वारो भेदाः— वायुवशादाभिमुख्येन वर्षणम् 'अभिवर्षणम्', परितो मण्डलाकारेण वर्षणं 'परिवर्षणम्', ऋजुधारारूपं 'संवर्षणम्', गच्छतः पुरुषस्य पृष्ठतो वर्षणम् 'अनुवर्षणं' चेति। वृष्टिक्लिन्नस्य पुरुषस्य त्रिविधा शैत्यावस्था 'शीकायनम्'। घर्मकाले सन्तप्तायां भूमौ प्रथमवृष्टेरव-

स्थाने समुत्थित ऊष्मा 'प्रोषः'। सोऽपि दशात्रयापन्नः। वृष्टेरुपरमः 'उद्ग्रहणम्'; तदपि त्रिविधम्। तत ऊर्द्ध्वं मेघलेशानामपगमनं 'विप्लवः'; सोऽपि त्रिविधः। मेघलेशेष्वपगतेषु सूर्यप्रकाशश्चारः 'आतपः'; सोऽपि त्रिविधः। पादबद्धा मन्त्राः 'ऋचः', प्रश्लिष्टपठितानि 'यजूंषि', गीत्यात्मकानि 'सामानि', अङ्गिरोभिर्मुनिभिर्दृष्टाश्चतुर्थवेदोत्पन्ना: 'अङ्गिरसः'। विधिभागैः सहितास्ते सर्वे 'वेदाः'। देवताविषयाख्यानपरा मन्त्रा 'गाथाः'। मनुष्यविषयाख्यानपरा ऋचो 'नाराशंस्यः'। 'रैभः' शब्दस्तद्ग्मिः, तद्विषया ऋचो 'रैभ्यः' *। अनुक्तसङ्ग्रहार्थः सर्वशब्दः। एतैः पञ्चाशन्मन्त्रैः रात्रावश्वहोमाः कार्याः †॥ ११॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके एकादशोऽनुवाकः॥

---

दृत्वते स्वाहादन्तकाय स्वाहा प्राणिने स्वाहाप्राणाय स्वाहा मुखवते स्वाहामुखाय स्वाहा नासिकवते स्वाहानासिकाय स्वाहाक्षण्वते स्वाहानक्षिकाय स्वाहा कर्णिने स्वाहाकर्णकाय स्वाहा शीर्षण्वते

---

* "रैभी शंसन्ति"—इत्यादि ऐ० ब्रा० ७. ५. ६ द्रष्टव्यम्।

† "एतस्मै स्वाहास्तरिद्याय स्वाहेत्याह, यथायजुरेवैतत्"—इति ब्रा० ३. ८. १८. ७। शब्दस्य किञ्चिन्निगूढं तात्पर्यं ग्राह्यमिति भाव।

स्वाहाशीर्षकाय स्वाहा पद्वते स्वाहापादकाय स्वाहा प्राणते स्वाहाप्राणते स्वाहा वदते स्वाहावदते स्वाहा पश्यते स्वाहापश्यते स्वाहा शृण्वते स्वाहाशृण्वते स्वाहा मनस्विने स्वाहा (१)

अमनसे स्वाहा रेतस्विने स्वाहारेतस्काय स्वाहा प्रजाभ्यः स्वाहा प्रजननाय स्वाहा लोमवते स्वाहा-लोमकाय स्वाहा त्वचे स्वाहात्वक्काय स्वाहा चर्मण्वते स्वाहाचर्मकाय स्वाहा लोहितवते स्वाहालोहिताय स्वाहा मांसन्वते स्वाहामांसकाय स्वाहा स्नावभ्यः स्वाहास्नावकाय स्वाहास्थन्वते स्वाहानस्थिकाय स्वाहा मज्जन्वते स्वाहामज्जकाय स्वाहाङ्गिने स्वाहानङ्गाय स्वाहात्मने स्वाहानात्मने स्वाहा (२)

सर्वस्मै स्वाहा ॥ १२ ॥

स्वाहा[१] स्वाहा[२] * द्वे च ॥ १२ ॥

अथ शरीरहोममन्त्रा उच्यन्ते। तथाच ब्राह्मणम्—"दत्वते स्वाहादन्तकाय स्वाहेति शरीरहोमान् जुहोति"-इति†। पाठस्तु—"दत्वते स्वाहा, ऽदन्तकाय स्वाहा, प्राणिने स्वाहा, ऽप्राणाय स्वाहा,

---

* "मनस्विने स्वाहा•—•ऽनात्मने स्वाहा"—इति क, ख, ग।

† ३. ८. १८. ८। "पितृलोक मेव तैर्यजमानोऽव रुन्धे"—इति सन्धेयः।

मुखवते स्वाहा, ऽमुखाय स्वाहा, नासिकवते स्वाहा, ऽनासिकाय स्वाहा, ऽक्षण्वते स्वाहा, ऽनक्षिकाय स्वाहा, कर्णिने स्वाहा, ऽकर्णकाय स्वाहा, शीर्षण्वते स्वाहा, ऽशीर्षकाय स्वाहा, पद्वते स्वाहा, ऽपादकाय स्वाहा, प्राणते स्वाहा, ऽप्राणते स्वाहा, वदते स्वाहा, ऽवदते स्वाहा, पश्यते स्वाहा, ऽपश्यते स्वाहा, शृण्वते स्वाहा, ऽशृण्वते स्वाहा, मनस्विने स्वाहा, ऽमनसे स्वाहा, रेतस्विने स्वाहा, ऽरेतस्काय स्वाहा, प्रजाभ्यः स्वाहा, प्रजननाय स्वाहा, लोमवते स्वाहा, ऽलोमकाय स्वाहा, त्वचे स्वाहा, ऽत्वक्काय स्वाहा, चर्मण्वते स्वाहा, ऽचर्मकाय स्वाहा, लोहितवते स्वाहा, ऽलोहिताय स्वाहा, माꣳसन्वते स्वाहा, ऽमाꣳसकाय स्वाहा, स्नावभ्यः स्वाहा, ऽस्नावकाय स्वाहा, ऽस्थन्वते स्वाहा, ऽनस्थिकाय स्वाहा, मज्जन्वते स्वाहा, ऽमज्जकाय स्वाहा, ऽङ्गिने स्वाहा, ऽनङ्गाय स्वाहा, ऽऽत्मने स्वाहा, ऽनात्मने स्वाहा, सर्वस्मै स्वाहा"–इति। दन्ता अस्य सन्तीति 'दत्वान्'। न विद्यन्ते दन्ता यस्यासौ 'अदन्तकः'। एवं सर्वत्र विधिनिषेधौ योजनीयौ। जगति हि जीवा द्विविधाः,– तत्तदवयवोपेतास्तत्तद्विकलाश्चेति। अश्वस्य प्राजापत्यत्वेन सर्वात्मकता-मभिप्रेत्यैतानि विशेषणान्युच्यन्ते। तत्र दन्तयुक्ता जीवाः सिंहादयः; अत्यन्तं बाला वृद्धाश्चदन्तरहिताः। 'प्राणिनः' जङ्गमाः, 'अप्राणाः' स्थावराः। वक्ष्यमाणा निषेधाः, तत्तदवयवरहितत्वेन वा सत्यप्यवयवे तदसौकर्येण वोदाहरणीयम् ॥ १२ ॥

इति श्रीमायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके द्वादशोऽनुवाकः ॥

कस्त्वा युनक्ति स त्वा युनक्तु विष्णुस्त्वा युनक्त्वस्य यज्ञस्यर्द्ध्यै मह्यꣳ सन्नत्या अमुष्मै कामायायुषे त्वा प्राणाय त्वापानाय त्वा व्यानाय त्वा व्युष्ट्यै त्वा रय्यै त्वा राधसे त्वा घोषाय त्वा पोषाय त्वाराद्घोषाय त्वा प्रच्युत्यै त्वा ॥ १३ ॥

कोऽष्टाचिꣳशत् ॥ १३ ॥

अतीतयोरनुवाकयोः पञ्चाशन्मन्त्रैरेकपञ्चाशन्मन्त्रैश्च महाव्रहोमा उक्ताः, अथ परिधिमन्त्रा उच्यन्ते। कल्पः—"कस्त्वा युनक्ति स त्वा युनक्त्विति परिधीन् युनक्त्यस्य यज्ञस्यर्द्ध्यै मह्यꣳ सन्नत्या इति सर्वत्रानुषजति"–इति*। पाठस्तु—"कस्त्वा युनक्ति स त्वा युनक्तु विष्णुस्त्वा युनक्त्वस्य यज्ञस्यर्द्ध्यै, मह्यꣳ सन्नत्या अमुष्मै कामायायुषे त्वा, प्राणाय त्वापानाय त्वा व्यानाय त्वा व्युष्ट्यै त्वा रय्यै त्वा राधसे त्वा घोषाय त्वा पोषाय त्वाराद्घोषाय त्वा प्रच्युत्यै त्वा"–इति। हे मध्यमपरिधे। 'कः' प्रजापतिः त्वां 'युनक्ति' वह्निसमीपे योजयति†। हे दक्षिणपरिधे। 'सः' प्रजापतिस्त्वां युनक्तु। हे उत्तरपरिधे। विष्णुस्त्वां युनक्तु। किमर्थम्? अस्य यज्ञस्य समृद्ध्यर्थम्, तथा 'मह्यं सन्नत्यै' मां प्रति सर्वेषां प्राणिनां सन्नमनाय, 'अमुष्मै' प्रजादिरूपाय

---

* "कस्त्वा युनक्ति स त्वा युनक्त्विति परीधीन् युनक्ति। इमे वै लोकाः परिधयः"–इत्यादि ब्रा० ३. ८. १८. ६।

† एतस्माद्योजनादेवैतदनुवाकीयमन्त्राणां योगमन्त्र इति नामधेयम्। ब्रा० ३. ८. १८. ६ द्रष्टव्यम्।

कामाय, 'आयुषे' आयुर्वृद्धये त्वामहं युनज्मि। एवं सर्वत्राध्याहारः। 'प्राणापानस्थानाः' प्रसिद्धाः। 'व्युष्टिः' प्रभातम्। 'रयिः' धनम्। 'राधः' अन्नम्। 'घोषः' कीर्तिः। 'पोषः' पश्वादिपुष्टिः। 'आराद्घोषः' आराच्छब्देह दूरवाची*। 'प्रच्युतिः' सर्वदुःखनिवृत्तिः ॥ १३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके त्रयोदशोऽनुवाकः ॥

---

अ॒ग्नये॑ गाय॒त्राय॑ त्रि॒वृते॒ राथ॑न्तराय वास॒न्ताया॒ष्टाक॑पाल॒ इन्द्रा॑य॒ त्रैष्टु॑भाय पञ्चद॒शाय॒ बार्ह॑ताय॒ ग्रैष्मा॒यैका॑दशकपालो॒ विश्वे॑भ्यो दे॒वेभ्यो॒ जाग॑तेभ्यः सप्तद॒शेभ्यो॑ वैरू॒पेभ्यो॒ वार्षि॑केभ्यो॒ द्वाद॑शकपालो मि॒त्रावरु॑णाभ्यामानु॑ष्टुभाभ्यामेकवि॒ꣳशाभ्यां॑ वैरा॒जाभ्या॑ꣳ शा॒र॒दाभ्यां॑ पय॒स्या॑ बृह॒स्पत॑ये॒ पाङ्क्ता॑य त्रिण॒वाय॑ शाक्व॒राय॒ हैम॑न्तिकाय च॒रुः स॑वि॒त्र आ॑तिच्छन्द॒साय॑ त्रय॒स्त्रि॒ꣳशाय॑ रैव॒ताय॑ शैशि॒राय॒ द्वाद॑शकपा॒लोऽदि॑त्यै॒ विष्णु॑पत्न्यै† च॒रुर॒ग्नये॑ वैश्वान॒राय॒ द्वाद॑शकपा॒लोऽनु॑मत्यै च॒रुः का॒य एक॑कपालः ॥ १४ ॥

अ॒ग्नये॑‡ स॒प्तच॑त्वारिꣳशत् ॥ १४ ॥

---

* "दूरशब्दवाची" टी॰ क॰। "दूरशब्दप्राहितम्" टी॰ ख॰।

† "विष्णुपत्नै"—इति क, ख।

‡ "अग्नये गायत्रायादित्यायनुमत्यै" क, ग, "अग्नये गायत्राय" ख।

यदुक्तं सूत्रकारेण— "अग्नये गायत्रायेति दश हवींषि सर्वपृष्ठान् निर्वपति"-इति, तदिदं विधत्ते— "अग्नये गायत्राय, त्रिवृते राथन्तराय, वासन्तायाष्टाकपाल; इन्द्राय त्रैष्टुभाय, पञ्चदशाय बार्हताय, ग्रैष्मायैकादशकपालो, विश्वेभ्यो देवेभ्यो जागतेभ्य, सप्तदशेभ्यो वैरूपेभ्यो, वार्षिकेभ्यो द्वादशकपालो, मित्रावरुणाभ्यामानुष्टुभाभ्याम्, एकविंशाभ्यां वैराजाभ्यां, शारदाभ्यां पयस्या; बृहस्पतये पाङ्क्ताय, त्रिणवाय शाक्कराय, हैमन्तिकाय चरुः; सवित्र आतिच्छन्दसाय, त्रयस्त्रिंशाय रैवताय, शैशिराय द्वादशकपालो; ऽदित्यै विष्णुपत्न्यै चरुर्, अग्नये वैश्वानराय द्वादशकपालो; ऽनुमत्यै चरुः; काय एककपालः"-इति। अत्र षट्सु हविःषु छन्दसा स्तोमेन साम्ना ऋतुना च देवता विशेष्यते। पयसि भवा आमिक्षा 'पयस्या' ॥१४॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके चतुर्दशोऽनुवाकः॥

---

यो वा अग्नावग्निः प्र ह्रियते यस्य सोमो राजा तयोरेष आतिथ्यं यदग्नीषोमीयोऽथैष रुद्रो यश्चीयते यत्संचितेऽग्नावेतानि हवींषि न निर्वपेदेष एव रुद्रोऽशान्त उपोत्थाय प्रजां पशून् यजमानस्याभि मन्येत यत्संचितेऽग्नावेतानि हवींषि निर्वपति भागधेयेनैवैनं शमयति नास्य रुद्रोऽशान्तः (१)

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः। यस्यच्छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम। उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि तस्य ते पृथिवी महिमौषधयो वनस्पतयो रूपमग्निस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा॥ १७॥

य एकान्न* चत्वारिꣳशत्॥ १७॥

अथ द्वितीयग्रहमन्त्रं† पठति—"य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः। यस्यच्छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम। उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि; तस्य ते पृथिवी महिमौषधयो वनस्पतयो रूपमग्निस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा"—इति। 'यः' प्रजापतिः 'आत्मदाः' सर्वेषां शरीरप्रदः, यश्च तस्मिन् शरीरे बलप्रदः, 'यस्य' प्रजापतेः 'प्रशिषं' प्रकृष्टं शासनं 'विश्वे' सर्वेऽपि 'उपासते' सेवन्ते, देवा अपि यस्य प्रशिषमुपासते, यस्य अमृत छायेव प्रविधेम, तथा प्राणिनां मृत्युरपि यस्य छायेव, तादृशाय 'कस्मै' केनाप्यविज्ञातस्वरूपाय 'देवाय' प्रजापतये हविषा परिचरेम। हे ग्रह! त्वम् 'उपयामेन' पार्थिवपात्रेण गृहीतोऽसि, प्रजापत्यर्थं त्वां गृह्णामि।

* "य आत्मदा एथिवमिरेकान्न"—इति क, ख, ग।

† महिमग्रहग्रहणविध्यादिकम् ब्रा० ३ ९. १०. १—३ द्रष्टव्यम्।

हे प्रजापते! तादृशस्य 'ते' तव पृथिवीरूपो महिमाख्यो ग्रहः, ओषधयो वनस्पतयश्च तव विविधं रूपम्, अग्निस्त्वदीयं तेजः। हे ग्रह! त्वां 'तस्मै' महिमयुक्ताय प्रजापतये जुहोमि* ॥१७॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके सप्तदशोऽनुवाकः ॥

---

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामास्मिन् राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलिन्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ १८ ॥

ऐकचत्वारिंशत् † ॥ १८ ॥

अथाश्वहोममन्त्राः। तथा च ब्राह्मणम्— "आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामिति समस्तानि ब्रह्मवर्चसानि जुहोति‡"—

---

* अस्यापि महिममन्त्र इत्येव नामधेयम्। एतस्यापि तात्पर्यव्याख्यानं ब्रा० ३. ८. १८. १० द्रष्टव्यम्।

† "आ ब्रह्मन्नेकचत्वारिंशत्"—इति क, ग, "आ ब्रह्मन्नेकान्न चत्वारिंशत्"—इति ख।

‡ ३. ८. १८. ११। "ब्रह्मवर्चसमेव तेषां ज्मानोऽव रुन्धे"—इति तत्रैव।

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः। यस्यच्छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम। उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि तस्य ते पृथिवी महिमौषधयो वनस्पतयो रूपमग्निस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा॥ १७॥

य एकान्न * चत्वारिंशत्॥ १७॥

अथ द्वितीयग्रहमन्त्रं† पठति—"य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः। यस्यच्छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम। उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि; तस्य ते पृथिवी महिमौषधयो वनस्पतयो रूपमग्निस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा"—इति। 'य.' प्रजापतिः 'आत्मदाः' सर्वेषां शरीरप्रदः, यश्च तस्मिन् शरीरे बलप्रदः, 'यस्य' प्रजापतेः 'प्रशिषं' प्रकृष्टं शासनं 'विश्वे' सर्वेऽपि 'उपासते' सेवन्ते, देवा अपि यस्य प्रशिषमुपासते, यस्य अमृतं छायेव प्रविधेम, तथा प्राणिनां मृत्युरपि यस्य स्वाधीनः, तादृशाय 'कस्मै' केनाप्यविज्ञातस्वरूपाय 'देवाय' प्रजापतये हविषा परिचरेम। हे ग्रह! त्वम् 'उपयामेन' पार्थिवपात्रेण गृहीतोऽसि, प्रजापत्यर्थं त्वां गृह्णामि।

---

* "य आत्मदा एथिर्यमिरेकान्न"—इति क, ख, ग।

† महिमग्रहग्रहणविध्यादिकम् ब्रा० ३ ८. १० १—२ द्रष्टव्यम्।

हे प्रजापते! तादृशस्य 'ते' तव पृथिवीरूपो महिमाख्यो यहः, ओषधयो वनस्पतयश्च तव विचित्रं रूपम्, अग्निस्त्वदीयं तेजः। हे यह। त्वां 'तस्मै' महिमयुक्ताय प्रजापतये जुहोमि * ॥१७॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके सप्तदशोऽनुवाकः ॥

---

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामास्मिन् राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलिन्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ १८ ॥

ऐकचत्वारिंशत् † ॥ १८ ॥

अथाश्वहोममन्त्रा। तथा च ब्राह्मणम्— "आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामिति समस्तानि ब्रह्मवर्चसानि जुहोति ‡"—

---

* अस्यापि महिममन्त्र इत्येव नामधेयम्। एतस्यापि तात्पर्यव्याख्यानं ब्रा० ३ ८ १९ १० द्रष्टव्यम्।

† "आ ब्रह्मन्नेकचत्वारिंशत्"—इति क, ग, "आ ब्रह्मन्नेकान्न चत्वारिंशत्"—इति ख।

‡ ३ ८ १८ ११। "ब्रह्मवर्चसमेव तैर्यजमानोऽव रुन्धे"—इति तच्छेषः।

इति। पाठस्तु—"आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामास्मिन् राष्ट्रे राजन्य इषव्यः शूरोमहा रथो जायतां, दोग्ध्री धेनुर्वोढानड्वा-नाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां, निकामे-निकामे नः पर्जन्यो वर्षतु, फलिन्यो न ओषधयः पच्यन्तां, योगक्षेमो नः कल्पताम्"-इति। 'ब्रह्मन्' ब्राह्मणजातौ 'ब्रह्मवर्चसी' श्रुताध्ययनसम्पन्नो ब्राह्मणः 'आजायताम्' सर्वत उत्पद्यताम्। एतदेकं वाक्यमेको मन्त्रः*; एवमुत्तरत्रापि। 'इषव्यः' बाणाद्यायुधेषु कुशलः। धेन्वित्यादिषु आजायतामित्य-नुवर्त्तते। 'सप्तिः' अश्वः, 'आशुः' शीघ्रगामी। पुरवासिभिर्ध्यायत इति 'पुरन्धिः' रूपवतीत्यर्थः। अस्य यजमानस्य जिष्णुत्वादिगुण-विशिष्टः पुत्र आजायताम्। 'नः' अस्माकं यदा-यदा अपेक्षा, तदा-तदा पर्जन्यो वर्षतु, ओषधयश्च बहुफलयुक्ताः पच्यन्ताम्। अलब्धस्य लाभो 'योगः', लब्धस्य परिपालनं 'क्षेमः', योगसहितः क्षेमो 'योगक्षेमः', सोऽस्माकं सम्पद्यताम्। एतैर्द्वाभिर्मन्त्रैर्ब्रह्मवर्चस-नामकं होमं कुर्यात्* ॥१८॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके अष्टादशोऽनुवाकः॥

---

* एतदनुवाकीयानां वाक्यानां ब्रह्मवर्चसमन्त्र इति नामधेयम्। एतेषां विशेषतो व्याख्यानं ब्रा० ३. ८. १४ अनुवाके द्रष्टव्यम्।

आक्रान्वाजी पृथिवीमग्निं युजमकृत वाज्यर्वाक्रान्वाज्यन्तरिक्षं वायुं युजमकृत वाज्यर्वा द्यां वाज्याक्रंस्त सूर्यं युजमकृत वाज्यर्वाग्निस्ते वाजिन्युङ्नु त्वा रंभे स्वस्ति मा सम्पारय वायुस्ते वाजिन्युङ्नु त्वा रंभे स्वस्ति मा सम् (१)

पारयादित्यस्ते वाजिन्युङ्नु त्वा रंभे स्वस्ति मा सम्पारय प्राणधृगसि प्राणं मे दृꣳह व्यानधृगसि व्यानं मे दृꣳहापानधृगस्यपानं मे दृꣳह चक्षुरसि चक्षुर्मयि धेहि श्रोत्रमसि श्रोत्रं मयि धेह्यायुरस्यायुर्मयि धेहि ॥ १८ ॥

सं[1]*चित्वारिꣳशच्च ॥ १८ ॥

अथाश्वानुमन्त्रणम्। तथा च ब्राह्मणम्—"आक्रान्वाजी क्रमैरत्यक्रमीद्वाजी द्यौस्ते पृष्ठं पृथिवी सधस्थमित्यश्वमनुमन्त्रयते"—इति†। एतेषु त्रिषु मन्त्रेषु प्रथमं मन्त्रं पठति— "आक्रान्वाजी पृथिवीमग्निं युजमकृत, वाज्यर्वाक्रान्वाज्यन्तरिक्षं वायुं युजमकृत, वाज्यर्वा द्यां वाज्याक्रंस्त सूर्यं युजमकृत, वाज्यर्वाग्निस्ते वाजिन्युङ्नु त्वा रंभे स्वस्ति मा सम्पारय, वायुस्ते वाजिन्युङ्नु त्वा रंभे स्वस्ति मा सम्पारयादित्यस्ते वाजिन्युङ्नु त्वा रंभे स्वस्ति मा सम्पारय; प्राणधृगसि

---

* "वायुस्ते वाजिन्युङ्नु त्वा रंभे स्वस्ति मा सं[१]"—इति क, ख, ग।
† ३. ८. ४. २१। "एषा लोकानामभिजित्यै"—इति तच्छेषः।

प्राण मे दृꣳह, व्यानदृगसि व्यान मे दृꣳहापानदृगस्यपान मे दृꣳह, चक्षुरसि चक्षुर्मयि धेहि, श्रोत्रमसि श्रोत्र मयि धेह्यायुरस्यायुर्मयि धेहि'-इति। 'वाजी' वेगवानयमश्व, पृथिवीम् 'आक्रान्' आक्रान्तवान्। सोऽयं तस्यां पृथिव्याम् अग्निं 'युजं' योजयितारं व्यवहारनिर्वाहकम् अकृत। एवमुत्तरत्रापि योज्यम्। हे वाजिन्! अग्नि 'ते युङ्' तव योजयिता सहायभूत, तस्मात् त्वाम् अन्वारभे, त्वञ्च 'स्वस्ति' विनाशराहित्येन मां 'सम्पारय' सम्यक् कर्मसमाप्तिं प्रापय। एवमुत्तरत्रापि योज्यम्। प्राणं दृंहति दृढीकरोतीति 'प्राणदृक्'। हे अश्व! त्वं तादृशोऽसि, अतो मे प्राणं दृढीकुरु। एवमुत्तरत्रापि। हे अश्व! त्वं चक्षुरसि, अतो मयि चक्षु स्थापय। एवमुत्तरत्रापि ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके एकोनविंशोऽनुवाक ॥

---

जग्धि बीजं वर्षं पर्जन्यः पक्ता सस्यꣳ सुपिप्पला ओषधयः स्वधिचरणेयꣳ सूपसदनोऽग्निः स्वध्यक्षमन्तरिक्षꣳ सुपावः पवमानः सूपस्थाना द्यौः शिवमसौ तपन् यथापूर्वमहोरात्रे पञ्चदशिनोऽर्धमासास्त्रिꣳशिनो मासाः क्लृप्ता ऋतवः शान्तः संवत्सरः ॥ २० ॥

जग्ध्येकत्रिꣳशत् ॥ २० ॥

अथान्येऽन्नहोममन्त्रा उच्यन्ते। तथा च ब्राह्मणम्— "अग्नि मौज-मिति जुहोत्यन्नमरित्यै"-इति (३. ८. १८. १२.)। पाठस्तु— "अग्नि मौजं, वर्षा पर्जन्यः, पक्ता सस्यम्, सुपिप्पला ओषधयः, स्वधिचरणे-यम्, सूपसदनोऽग्निः, स्वध्यक्षमन्तरिक्षम्, सुपावः पवमानः, सूपस्थाना द्यौः, शिवमसौ तपन्, यथापूर्वमहोरात्रे, पञ्चदशिनोऽर्द्धमासाः, त्रिंशिनो मासाः, क्लृप्ता ऋतवः, शान्तः संवत्सरः"-इति। यदे-तद् मौद्यादिमौजम्, तत् 'अग्नि' अनलस्वभावमस्तु। अस्त्विति सर्वत्राध्याहारः। पर्जन्यो 'वर्षा' वृष्टिकारोऽस्तु। सस्यं 'पक्ता' पाकशीलम्। ओषधयश्च 'सुपिप्पलाः' शोभनफलाः। 'इयं' पृथिवी 'स्वधिचरणा' सुखेनाधिष्ठाय चरितुं शक्या। अग्निः 'सूपसदनः' सुखेनोपसत्तुं परिचरितुं शक्यः। अन्तरिक्षं 'स्वध्यक्षं' सुखेनाध्य-क्षितव्यम्; धूमकेत्वाद्युत्पातरहितमित्यर्थः। 'पवमानः' वायुः 'सुपावः' अनुपद्रवकारी सञ्चारयुक्तः। द्यौः 'सूपस्थाना' सुखेनावस्थातुं शक्या; दैविकोपद्रवरहितेत्यर्थः। 'असौ' आदित्यः 'शिवम्' उपद्रवराहित्यं यथा भवति तथा तपन् वर्त्तताम्। अहोरात्रे 'यथापूर्वे' कल्पादे-रारभ्य येन क्रमेण प्रवृत्ते, तथैवाद्यापि प्रवर्त्तेताम्। अर्द्धमासाः न्यूनाधिकराहित्येन पञ्चदशदिनयुक्ताः। तथा मासाः त्रिंशद्दिन-युक्ताः। ऋतवः 'क्लृप्ताः' तत्तद्धर्मोपेताः। संवत्सरः 'शान्तः' प्रजा-पीडारहितः। एतैः पञ्चदशभिर्मन्त्रैरन्नहोमाः कर्त्तव्याः ॥२०॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके विंशोऽनुवाकः॥

---

आग्नेयोऽष्टाकपालः सौम्यश्चरुः सावित्रोऽष्टाकपालः पौष्णश्चरू रौद्रश्चरुरग्नये वैश्वानराय द्वादशकपालो मृगाखरे यदि नागच्छेदग्नयेऽꣳहोमुचेऽष्टाकपालः सौर्यं पयो वायव्य आज्यभागः ॥ २१ ॥

आग्नेयश्चतुर्विꣳशतिः ॥ २१ ॥

अथाश्वस्य रोगादिनिमित्ते प्राप्ते प्रायश्चित्तेष्टय उच्यन्ते। तथा च ब्राह्मणम्—"यद्यश्वमुपतपद्विन्देत्, आग्नेयमष्टाकपालं निर्वपेत्"—इत्यादि *। इष्टीनां पाठस्तु—"आग्नेयोऽष्टाकपालं, सौम्यश्चरुं, सावित्रोऽष्टाकपालं, पौष्णश्चरू, रौद्रश्चरुर्, अग्नये वैश्वानराय द्वादशकपालो, मृगाखरे यदि नागच्छेदग्नयेऽꣳहोमुचेऽष्टाकपालं, सौर्यं पयो, वायव्य आज्यभाग"—इति। 'मृगाखरे' अश्वनिवासस्थाने यदि नागच्छेत्, तत्रानागमनमेकं निमित्तम्। निमित्तान्तराणि तु ब्राह्मणे द्रष्टव्यानि †। तान्येतानि नव हवींषि प्रायश्चित्तरूपाणि ॥ २१ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके एकविंशोऽनुवाकः ॥

---

* ३ ९ १७ १। उपतपत् उपताप—सन्तापकरो रोगविशेष।

† १ उपताप २ त्वग्दोष, ३ उपद्रवकारिदेवतागृहीतत्वम् ४ मृगाखरेऽनागमनम् ५ वडवादिध्यानमिति पञ्चनिमित्तानि। ब्रा० ३ ९ १७ १—१३।

अग्नयेऽꣳहोमुचेऽष्टाकपाल इन्द्रायाऽꣳहोमुच एकादशकपालो मित्रावरुणाभ्यामागोमुग्भ्यां पयस्या वायोसावित्र आगोमुग्भ्यां चरुरश्विभ्यामागोमुग्भ्यां धाना मरुद्भ्य एनोमुग्भ्यः सप्तकपालो विश्वेभ्यो देवेभ्य एनोमुग्भ्यो द्वादशकपालोऽनुमत्यै चरुरग्नये वैश्वानराय द्वादशकपालो द्यावापृथिवीभ्यामꣳहोमुग्भ्यां द्विकपालः ॥ २२ ॥

अग्नये* त्रिꣳशत् ॥ २२ ॥

यदुक्तं सूत्रकारेण "अग्नयेꣳहोमुचेऽष्टाकपाल इति दशहविषं मृगारेष्टिमनु निर्वपति"-इति, तदेतद्विधत्ते— "अग्नयेऽꣳहोमुचे† ऽष्टाकपाल, इन्द्रायाꣳहोमुच एकादशकपालो, मित्रावरुणाभ्यामागोमुग्भ्यां पयस्या, वायोसावित्र आगोमुग्भ्यां चरुर्, अश्विभ्यामागोमुग्भ्यां धाना, मरुद्भ्य एनोमुग्भ्यः सप्तकपालो, विश्वेभ्यो देवेभ्य एनोमुग्भ्यो द्वादशकपालो, ऽनुमत्यै चरुर्, अग्नये वैश्वानराय द्वादशकपालो, द्यावापृथिवीभ्यामꣳहोमुग्भ्यां द्विकपालः"-इति । अंहसो मोचयतीति 'अंहोमुक्' । आगसो मोचयत इति 'आगोमुचौ' ।

---

* "अग्नयेऽꣳहोमुचे"-इति क, ख, ग।

† "अग्नयेऽꣳहोमुचेऽष्टाकपाल इति दशहविषमिष्टिं निर्वपति"-इत्यादि ब्रा० ३ ८ १६ १२। अस्मिन्ननुवाके दश हवींष्याम्नातानि।

वायुश्च सविता च 'वायोसावित्र' वायुसवितृभ्यामित्यर्थः। 'धाना' भृष्टयवाः। एनसो मोचयन्तीति 'एनोमुच' ॥ २१ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके द्वाविंशोऽनुवाकः ॥

---

अ॒ग्नये॒ सम॑नमत् पृथि॒व्यै सम॑नम॒द्यथा॒ग्निः पृ॑थि॒व्या स॒मन॑मदे॒वं मह्यं॑ भ॒द्राः सन्न॑तयः॒ सन्न॑मन्तु वा॒यवे॒ सम॑नमद॒न्तरि॑क्षाय॒ सम॑नम॒द्यथा॑ वा॒युर॒न्तरि॑क्षेण॒ सूर्या॑य॒ सम॑नमद्दि॒वे सम॑नम॒द्यथा॒ सूर्यो॑ दि॒वा च॒न्द्रम॑से॒ सम॑नम॒न्नक्ष॑त्रेभ्यः॒ सम॑नम॒द्यथा॑ च॒न्द्रमा॒ नक्ष॑त्रै॒र्वरु॑णाय॒ सम॑नमद॒द्भ्यः सम॑नम॒द्यथा॑ ( १ )

वरु॑णो॒ऽद्भिः साम्ने॒ सम॑नमदृ॒चे सम॑नम॒द्यथा॒ साम॒र्चा ब्रह्म॑णे॒ सम॑नमत् क्ष॒त्राय॒ सम॑नम॒द्यथा॒ ब्रह्म॑ क्ष॒त्रेण॒ राज्ञे॒ सम॑नमद्वि॒शे सम॑नम॒द्यथा॒ राजा॑ वि॒शा रथा॑य॒ सम॑नम॒दश्वे॑भ्यः॒ सम॑नम॒द्यथा॒ रथो॒ऽश्वैः॑ प्र॒जाप॑तये॒ सम॑नमद्भू॒तेभ्यः॒ सम॑नम॒द्यथा॑ प्र॒जाप॑तिर्भू॒तैः स॒मन॑मदे॒वं मह्यं॑ ( २ )

भ॒द्राः सन्न॑तयः॒ सन्न॑मन्तु ॥ २३ ॥

यथा॒[१] * मह्यं॑[२] च॒त्वारि॑ च ॥ २३ ॥

---

* "यद्य समनमद्यथा[१]"—इति क, ख, ग।

अथ सन्नतिहोमा उच्यन्ते। तथा च ब्राह्मणम्— "अग्नये समनमत् पृथिव्यै समनमदिति सन्नतिहोमान् जुहोति"-इति*। पाठस्तु— "अग्नये समनमत्, पृथिव्यै समनमद्, यथाग्निः पृथिव्या समनमदेवं मह्यं भद्राः सन्नतयः सन्नमन्तु, वायवे समनमदन्तरिक्षाय समनमद्, यथा वायुरन्तरिक्षेण, सूर्याय समनमद्, दिवे समनमद्, यथा सूर्यो दिवा; चन्द्रमसे समनमत्, नक्षत्रेभ्यः समनमद्, यथा चन्द्रमा नक्षत्रैर्; वरुणाय समनमदद्भ्यः समनमद्, यथा वरुणोऽद्भिः, साम्ने समनमदृचे समनमद्, यथा सामर्चा, ब्रह्मणे समनमत्, क्षत्राय समनमद्, यथा ब्रह्म क्षत्रेण, राज्ञे समनमद्, विशे समनमद्, यथा राजा विशा, रथाय समनमदश्वेभ्यः समनमद्, यथा रथोऽश्वैः, प्रजापतये समनमद्, भूतेभ्यः समनमद्, यथा प्रजापतिर्भूतैः समनमदेवं मह्यं भद्राः सन्नतयः सन्नमन्तु"-इति। सर्वोऽपि यजमानोऽग्नये 'समनमत्' सन्नतिं परिचर्यामकरोत्। तथा पृथिव्यै 'समनमत्' परिचर्यामकरोत्। स च पृथिव्या सहितोऽग्निः 'यथा समनमत्' येन प्रकारेण तस्मै यजमानाय 'सन्नतिम्' उपकारमकरोत्, 'एवम्' अनेन प्रकारेण 'मह्यं' मदर्थं 'भद्राः सन्नतयः' कल्याणा उपकाराः देवकृताः 'सन्नमन्तु' प्राप्नुवन्तु। एवमुत्तरेष्वपि मन्त्रेषु योजनीयम्। समनमदेवं मह्यमित्यादिकं सर्वत्रानुषज्यते, तदर्थमेवान्ते पुनः पाठः। एतैर्द्वाविंशतिमन्त्रैरश्वहोमेषु सन्नतिहोमाः कर्त्तव्याः॥ २३॥

---

* ३ ८. १८ १३। "सुवर्गस्य लोकस्य समष्ट्यै"—इति तच्छेषः। इत उत्तरं ब्राह्मणग्रन्थे भूतभव्यहोमयोर्विधानम्, तन्मन्त्रौ चाम्नातौ।

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके त्रयोविंशोऽनुवाकः॥

---

ये ते पन्थानः सवितः पूर्व्यासोऽरेणवो वितता अन्तरिक्षे। तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च देव ब्रूहि[1]। नमोऽग्नये पृथिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि नमो वायवेऽन्तरिक्षक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि नमः सूर्याय दिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि[2] ॥ २४ ॥

ये * चतुश्चत्वारिंशत्॥ २४ ॥

कल्पः—"ये ते पन्थानः सवितः पूर्व्यास इत्यध्वर्युर्यजमानं वाचयति"-इति। पाठस्तु—"ये ते पन्थानः सवितः पूर्व्यासोऽरेणवो वितता अन्तरिक्षे। तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च देव ब्रूहि[1]"-इति। हे सवितर्देव। 'ते' तव सम्बन्धिनः 'पूर्व्यासः' पूर्वसिद्धाः, अन्तरिक्षे 'वितताः' विस्तृताः, 'अरेणवः' धूलिरहिताः 'ये' मार्गाः सन्ति, 'सुगेभिः' सुष्ठु गन्तुं शक्यैः, 'तेभिः' तैर्मार्गैरागत्य 'अद्य' अस्मिन् कर्मणि 'नः' अस्मान् 'रक्ष', तथा 'नः' अस्मान् 'अधि ब्रूहि च' अधिकोऽयं यजमान इति देवानामग्रे कथय च॥

---

* "ये ते"-इति क, ख, ग।

कल्पः— "नमोऽग्नये पृथिविक्षित इत्येतैश्च यथालिङ्गम्"-इति। उपतिष्ठते इत्यनुवर्त्तते। पाठस्तु— "नमोऽग्नये पृथिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि, नमो वायवेऽन्तरिक्षक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि, नम सूर्याय दिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि(१)"-इति। 'पृथिविक्षिते' भूनिवासिने, 'लोकस्पृते' लोकस्य प्रीणयित्रे, 'अग्नये नम' अस्तु। अस्मै यजमानाय 'लोकम्' उत्तमस्थानं देहि। एवमुत्तरयोरपि योज्यम् ॥२४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके चतुर्विंशोऽनुवाकः॥

---

यो वा अश्वस्य मेध्यस्य शिरो वेद शीर्षण्वान्मेध्यो भवत्युषा वा अश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुर्वातः प्राणश्चन्द्रमाः श्रोत्रं दिशः पादा अवान्तरदिशाः पर्शवोऽहोरात्रे निमेषोऽर्धमासाः पर्वाणि मासाः सन्धानान्यृतवोऽङ्गानि संवत्सर आत्मा रश्मयः केशा नक्षत्राणि रूपं तारका अस्थानि नभो मांसान्योषधयो लोमानि वनस्पतयो वाला अग्निर्मुखं वैश्वानरो व्यात्तम् (१)

समुद्र उदरमन्तरिक्षं पायुर्द्यावापृथिवी आण्डौ

ग्रावा शेपः सोमो रेतो यज्जञ्जभ्यते तद्वि द्योतते यद्विधूनुते तत् स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाग-हर्वा अश्वस्य जायमानस्य महिमा पुरस्ताज्जायते रात्रिरेनं महिमा पश्चादनु जायत एतौ वै महिमाना-वश्वमभितः सम्बभूवतुर्हयो देवानवहद् ( २ )

अर्वासुरान्वाजी गन्धर्वानश्वो मनुष्यान्त्समुद्रो वा अश्वस्य योनिः समुद्रो बन्धुः * ॥ २५ ॥

व्यात्तं॑मवहद्॒ द्वादश च ॥ २५ ॥

अथान्तिमेऽनुवाके सर्वजगदात्मकत्वेनाश्वः स्तूयते, अथ वा विराड्रूपेणाश्वोपासनप्रतिपादकोऽयमनुवाकः, प्रकरणादुत्थायोपनिषदादौ द्रष्टव्यः। अत एव वाजसनेयिन एतदर्थप्रतिपादकं ब्राह्मणमुपनिषदादावामनन्ति†। पाठस्तु—"यो वा अश्वस्य मेध्यस्य शिरो वेद, शीर्षवान्मेध्यो भवत्युषा वा अश्वस्य मेध्यस्य शिरः, सूर्यश्चक्षुर्वात प्राणश्चन्द्रमा श्रोत्रं, दिशः पादा, अवान्तरदिशाः पर्शवो, ऽहोरात्रे निमेषो, ऽर्द्धमासाः पर्वाणि, मासाः सन्धानान्यृतवोऽङ्गानि संवत्सर आत्मा, रश्मयः केशा, नक्षत्राणि रूपं तारका अस्थानि, नभो मांसान्योषधयो लोमानि, वनस्पतयो वाला, अग्निर्मुखं वैश्वानरो व्यात्तम्,

* 'बन्धुः'—इति पदमनुवाकप्रतीकवाक्योक्तद्वादशसङ्ख्यापूरकम्, उपनिषत्सम्मतम् ( ब० १ १ब्रा० ), भाष्यसम्मतञ्च क ग घ ङ पुस्तकेषु नास्ति।

† ब० उप० १ १ब्रा० द्रष्टव्यम्।

समुद्र उदरमन्तरिक्षं पायुर्द्यावापृथिवी आण्डौ, ग्रावा शेपः, सोमो रेतो, यज्जञ्जभ्यते तद्वि द्योतते, यद्विधूनुते तत्स्तनयति, यन्मेहति तद्वर्षति, वागेवास्य वाग्वर्ता अश्वस्य जायमानस्य महिमा पुरस्ताज्जायते, रात्रिरेनं महिमा पश्चादनु जायत, एतौ वै महिमानावश्वमभितः सम्बभूवतुर्हयो देवानवहद्वर्वासुरान्वाजी गन्धर्वानश्वो मनुष्यान्समुद्रो वा अश्वस्य योनिः, समुद्रो बन्धुः"–इति। 'यः' पुमान् 'मेध्यस्य' यागयोग्यस्य अश्वस्य 'शिरो वेद' शिरःप्रभृतीनवयवान् विराडवयवभूतोषःकालादिरूपेणोपास्ते, सोऽयम् 'शीर्षण्वान्' उषःकालादिरूपैः शिरःप्रभृतिभिर्विराडवयवैर्युक्तो 'मेध्यः' यागफलयोग्यो भवति। क्रत्वनुष्ठानस्य चोपासनस्य च समानं फलम्। तथा च पञ्चमकाण्डे समाम्नातम्–"सर्वं पाप्मानं तरति, तरति ब्रह्महत्यां, योऽश्वमेधेन यजते; य उ चैनमेवं वेद"*"–इति†। तत्र कस्मिन्नश्वावयवे को विराडवयवो ध्यातव्य इति तत्सर्वमुच्यते। मेध्यस्याश्वस्य यच्छिरः, तत् 'उषाः' उषःकालरूपम्। यदश्वस्य चक्षुः, तत्सूर्यः। यत्तदीयः प्राणः, सोऽयं बाह्यो वायुः। यत्तदीयं श्रोत्रं, सोऽयं चन्द्रमाः। ये तदीयाः पादाः, ताः प्राच्यादिदिशः। ये 'पर्शवः' पार्श्वास्थिविशेषाः, ता इमा आग्नेय्याद्यवान्तरदिशः। यत्तदीयो निमेष उन्मेषसहितः, त उभे अहोरात्रे। यानि तदीयहस्तपादगतपर्वाणि, ते शुक्ल-

---

* "ज्ञानञ्च द्विविधम्,—अर्थनिर्देश्य, उदाहरणञ्च। तत्रार्थनिर्देश्य वाक्यप्रमाणपर्यालोचनया सम्पद्यते; उदाहरणप्रकारस्तु समनन्तर- 'यो वा अश्वस्य मेध्यस्य शिरो वेद'–इत्यादिनाभिधास्यते"–इ[illegible]

† ५का० ३प्र० १२अनु० [illegible] (५ भा० ८३ [illegible]

कृष्णपक्षरूपा अर्द्धमासाः। यानि च पर्वणां सन्धानानि, ते चैत्राद्या मासाः। यानि चानुक्तविशेषाणि खुराद्यङ्गानि, ते वसन्ताद्यृतवः। यः 'आत्मा' मध्यदेहः, स संवत्सरकालः। ये तदीयाः केशाः, ते सूर्यरश्मयः। यदश्वस्य भास्वरं रूपं, तानि कृत्तिकादिनक्षत्राणि। यान्युक्तान्यस्थीनि, तानि वृहस्पतिशुक्रध्रुवाद्याः प्रौढतारकाः। यानि तत्र तत्र स्थितानि मांसखण्डानि, तदेतन्नभः। यानि क्षुद्रलोमानि, ता ओषधयः। ये 'वालाः' पुच्छगता दीर्घकेशाः, ते वनस्पतयः। यदेतन्मुखं सम्पद्यते, अयं लोकप्रसिद्धोऽग्निः। यद् 'व्यात्तं' मुखविदारणं, सोऽयं वैश्वानरनामको देवताविशेषः। यदुदरं, सोऽयं समुद्रः। यः पायुः, तदन्तरिक्षम्। यावाण्डौ, ते द्यावापृथिव्यौ। यः शेपः, सोऽयमभिषवार्थो 'ग्रावा'। यद्रेतः, स सोमरसः। यत् 'जञ्जभ्यते' गात्राणि विनामयति, सेयं विद्युत्। यद्, 'विधूनुते' सशब्दं शरीरं कम्पयति, तदेतद्गर्जनम्। यदेतन्मेहनं, सेयं वृष्टिः। अस्य हेषा-शब्दरूपा या 'वाक्', सेयं वेदरूपा वागेव। 'जायमानस्य' क्रतौ प्रयुज्यमानस्याश्वस्य यः सञ्ज्ञपनात् पुरस्तान्महिमाख्यो राजतग्रहः, तदिदमहरेव। 'एनं पश्चात्' एतस्याश्वस्य सञ्ज्ञपनादूर्द्धं यो महिमाख्यः सौवर्णग्रहः, सेयं रात्रिः। 'एतौ' एवोभौ 'महिमानौ' ग्रहौ 'अश्वमभितः सम्बभूवतुः' अश्वस्य सञ्ज्ञपनात् पूर्वं पश्चाच्च व्यवस्थितौ। हयार्ववाज्यश्वाः अवान्तरजातिविशेषास्तत्तद्रूपेण देवादीन् वहन्ति। एवंविधस्य विराड्रूपस्याश्वस्य समुद्र एव 'योनिः' कारणम्। सम्यगुद्रवत्युत्पद्यते जगदस्मादिति 'समुद्रः' परमात्मा; न ह्यन्यस्मादयं विराडुत्पत्तुमर्हति। स एवास्य 'बन्धुः'

स्तम्भ., स्थितिहेतुरित्यर्थः। एवमुपासित.* पापक्षयद्वारा विराड्रूपं प्राप्नोति, "तं यथायथोपासते, तथैव भवति"-इति श्रुत्यन्तरात्॥

विराट्प्राप्तिश्च क्रममुक्तिहेतुः†, तत्र ज्ञानोत्पत्तौ सत्यां तेन विराजा सह मुच्यमानत्वात्। तथा च स्मृतिः—

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे‡।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥"-इति§॥

एतच्च भगवान् व्यास "कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्"-इत्यस्मिन्नधिकरणे (४ ३. ७-१४ सू० ५ अधि०) महता प्रबन्धेन प्रतिपादयामासेत्यशेषमतिमङ्गलम्॥ २५॥

अथास्य प्रपाठकस्य विनियोगसङ्ग्रहः—

विहितं पञ्चमस्याद्ये गवामयनसत्रकम्।
तद्द्वैविध्यं द्वितीये स्यात्, तृतीये पृष्ठनिर्णयः।
चतुर्थे व्यत्यय' पूर्वपक्षस्यान्यस्य पञ्चमे।
षष्ठमे संभव', षष्ठे भवेदुत्सर्गसत्रकम्।
तन्मीमांसा सप्तमे स्यादष्टमे तु महाव्रतम्।

---

* "एवमुपासीन"-इति क, ग।

† 'क्रममुक्तिरनावृत्त्यादिश्रुत्यभिधानेभ्योऽभ्युपगन्तव्या'-इति ब्र० सू० ४. ३. १० शा० भा०।

‡ "यदा तु प्रकृतौ याति लयं विश्वमिदं जगत्। तदोच्यते प्राकृतोऽयं विद्वद्भिः प्रतिसञ्चरः"-इति मार्क० पु० ४६. ३। "प्रतिसङ्क्रम"-इति भाग० पु० ११ १९ ३५। प्रलय इति तदर्थं इतलक्ष श्रीधरेय।

§ ब्र० सू० ४. ३ ११ शा० भा० द्रष्टव्यम्।

सामानि नवमे, प्रोक्ता वीणाद्या दशमे पुनः।
दासीनृत्यं* (१-१०), ततऊर्द्धं मन्त्राश्चैवाश्वमेधगा.† ।
पृथग्नवहोमाः पञ्चाशदेकपञ्चाशदीरिताः।
इलते, परिधीनान्तु कल्प्या मन्त्रत्रयं भवेत्।
अग्नये सर्वपृष्ठेष्टिः, प्रयोगोऽनन्तरे श्रुतः।
यः प्राणतो य आत्मेति तावुभौ महिमग्रहौ।
आ ब्रह्मन् दशभिर्मन्त्रैर्ब्रह्मवर्चसहोमकः।
आक्रानथं मन्त्रयेत, अज्ञीतिद्शभिर्हुति।
आग्नेय‡ नैमित्तिका यागा, मृगारेष्टिरथाग्नये।
अग्ना सन्नतिहोमाः स्युर्दश, ये ते सुवाच्यता§।
(नमस्त्विभिरुपस्थानं, यो वै विधिरुपासने॥ (११-२५)
ऋतुराडश्वमेधोऽयं विराड्स्थानमुपास्तिराट्।||)
ताभ्यामुत्पद्यते ज्ञानं कृतकृत्यो भवत्यतः॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥

---

* "दासीन्टत्तं"—इति ग।

† "ततस्तूर्द्धानुवाके अश्वमेधगा"—इति क, "ततस्तूर्द्धमश्वमेधस्य मन्त्रका"—इति ग। ‡ "अय"—इति क।

§ "ये स्वामिवाचनम्"—इति क।

|| बन्धनीचिह्नान्तस्थितपद्यस्य स्थाने क पुस्तके त्विदम्—
"यो वा अश्वोपास्तिर् (११—२५), इत्य च मंविदो प्रपश्चिते"—इति।

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डे पञ्चमप्रपाठके पञ्चविंशोऽनुवाकः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरबुक्क-भूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये 'वेदार्थ-प्रकाश'-नामकृष्णयजुस्तैत्तिरीयसंहिताभाष्ये सप्तमकाण्डीयव्याख्याने पञ्चमः प्रपाठकः समाप्तः॥

(१)गावो (२)गावः (३)प्रथमे (४)समान्या (५)यदि (६)पड्-हे(७)रुत्स्ज्यांइ (८)देवानां(९)मर्क्येण (१०)चर्म (११)पृथिव्यै (१२)दृत्वते (१३)क्वा(१४)ऽग्नये (१५)यो (१६)यो (१७)य (१८)आ (१९)आ (२०)ज(२१)ह्यांग्नेयो(२२)ऽग्नये (२३)ऽग्नये (२४)ये (२५)यः* पञ्चविंशतिः†॥ ५ ॥

(१)गावः (२)समान्यः (३)सवनमष्टाभि(४)र्वा एते देव-

---

* "(१)गावो (२)गाव सिर्मासन्तो (३)प्रथमे मासि (४)समान्यो (५)यदि सामो (६)पडूहे(७)रुत्स्ज्याइ (८)देवानां (९)मर्क्येण (१०)चर्मांव (११)पृथिव्यै (१२)दृत्वते (१३)क्व(१४)क्वामये (१५)यो वै (१६)य प्राणतो (१७)यथात्मदा (१८)व्या मध्व (१९)माका(२०)ज्जद्धि वीज(२१)माग्नेयो (२२)ऽष्टाकपालोऽग्नयेऽंहो-मुचेऽष्टाकपालो(२३)ऽग्नये सर्मनम(२४)यो ते पर्यानो (२५)यो वा घर्मस्य मेधांस्य शिरः पञ्चविंशति"–इति क, ख, ग।

† प्रपाठकेऽत्र ये पञ्चविंशत्यनुवाकाः श्रुतास्तेषामेवेमानि प्रतीकपदानि।

ह्वंता[५]भिजित्या इत्याहु[६]र्वंहंणोऽह्निः साम्ने चतुःपञ्चा-
शत् * ॥ ५४ ॥

इति तैत्तिरीयसंहितायां

सप्तमकाण्डे पञ्चमः प्रपाठकः ॥ ५ ॥

प्रजननं[१] साध्याः[२] प्रजव[३] वृहस्पतिर्[४] गावः[५]
पञ्च † ॥ ५ ॥

इति तैत्तिरीयसंहितायां सप्तमः काण्डः ॥

इषे[१] वायव्यं[२] प्रजापतिर्[३] युञ्जानः[४] सावित्रा-
णि[५] प्राचीनवंशं[६] प्रजननं[७] सप्त ‡ ॥

॥ इति तैत्तिरीयसंहिता समाप्ता ॥

---

* ४७३ पृ० ६ पं०, ४८१ पृ० ८ पं०, ५०६ पृ० १४ पं०, ५२४ पृ० ६ पं०, ५४० पृ० ८ पं०, ५५२ पृ० १२ पं०। मुद्रितपुस्तके नास्त्येतद्वाक्यम्।

† सप्तमकाण्डीयप्रपाठकप्रतीकपदानीमानि १४६, २३४, ३२१, ३८६, ४३३ पृष्ठेषु द्रष्टव्यानि। मु०-पुस्तकादन्यत्रैतद्वाक्यं नास्ति।

‡ काण्डप्रतीकपदानीमानि १ भा० १३ पृ०, २ भा० २४१ पृ०, ३ भा० १ पृ०, ४ भा० १ पृ०, ५ भा० १ पृ०, ६ भा० १ पृ०, ७ भा० १४० पृ० द्रष्टव्यानि। मु०-पुस्तकादन्यत्रैतच्च वाक्यं न दृश्यत इति शिवम्॥

# सूचीपत्रम्

## तैत्तिरीयसंहितायाः पञ्चभागस्य ।



(तत्र)

## अथ सोमब्राह्मणं नाम षष्ठं काण्डम् ।

इह प्रपाठका षट् ।



प्रथमप्रपाठकस्थ—

## द्वितीयप्रपाठकस्य—



---

## तृतीयप्रपाठकस्य—

चतुर्थप्रपाठकस्य—

पञ्चमप्रपाठकस्य—



---

षष्ठप्रपाठकस्य—

---

## अथ सोमकाण्डं नाम सप्तमं काण्डम् ।

तत्र प्रपाठकाः पञ्च ।

प्रथमप्रपाठकस्य—

---

* अथेदमाख्यानम्—"मां वराको भूत्वाचरत्"—इति ।

द्वितीयप्रपाठकस्य—

---

तृतीयप्रपाठकस्य—

---

चतुर्थप्रपाठकस्य—

---

तत्र

॥ शमिति ॥

॥ षष्ठभागस्य सूचीपत्रं समाप्तम् ॥

---

॥ अथ ॥

# तैत्तिरीयसंहितायाः

(प्रथमादिसप्तकाण्डानां)

## ॥ मन्त्रसूची ॥



का = काण्डे, प्र = प्रपाठके, अ = अनुवाके, म = मन्त्रसंख्या ।
भा = भागे, पृ = पृष्ठे ।



| मन्त्र | का । | प्र । | अ । | म | भा | पृ |
|---|---|---|---|---|---|---|
| अंशाय स्वाहा ... | १ | ८ | १३ | २९ | २ | १३८ |
| अंशुना ते अंशुः पृच्यताम् ... | १ | २ | ६ | १ | १ | ३४६ |
| अंशुरंशुस्ते देव सोमा० .. | १ | २ | ११ | १ | १ | ३८४ |
| अंशुश्च मे रश्मिश्च मेऽदाभ्यश्च . | ४ | ७ | ७ | १ (७) | ४ | ६८६ |
| अंहोमुचे प्र भरेमा मनीषा ... | १ | ६ | १२ | ९ | १ | ९३९ |
| अंहोमुचे विवेय यन्मा | २ | ५ | १२ | ३० | २ | ६६९ |
| अक्ष्णं रिहाणा वियन्तु ... | १ | १ | १३ | ६ | १ | २२५ |
| अक्रन्कर्म कर्मकृत सह वाचा . | १ | ८ | ३ | ५ | २ | ३३ |
| अक्रन्ददग्निस्तनयन्निव द्यौः ... | १ | ३ | १४ | ५ | १ | ५६८ |
| अक्रन्ददग्निस्तनयन्निव द्यौः . | ४ | २ | १ | ५ | ४ | १५२ |

(७) य खल्वेकादशभिरंशेरेको मन्त्र, तस्य सप्तमांश एष । एव मन्यत्रापि ।

| मन्त्र॰ | का | प्र | अ | म | भा | पृ |
|---|---|---|---|---|---|---|
| अग्निर्वृत्राणि जङ्घनद् … … | ४ | ३ | १३ | १ | ४ | ३९६ |
| अग्निर्होता निषसादा … … | १ | २ | १४ | ३ | १ | ५६८ |
| अग्निश्च म इन्द्रश्च मे … … | ४ | ७ | ६ | १ (६) | ४ | ६८४ |
| अग्निश्च मे घर्मश्च मे … .. | ४ | ७ | ९ | १ (९) | ४ | ६८९ |
| अग्निष्वात्ताः पितर एव गच्छत … | २ | ६ | १२ | ५ | २ | ८१३ |
| अग्निस्तिग्मेन शोचिषा … … | ४ | ६ | १ | २१ | ४ | ५६४ |
| अग्निस्ते तनुवं मा … … … | १ | १ | ८ | १३ | १ | १३५ |
| अग्निस्ते तेजो मा विनैत् … … | १ | १ | १ | १५ | १ | १९७ |
| अग्निस्त्रीणि त्रिधातून्याक्षेति … | ३ | २ | ११ | ७ | ३ | १६२ |
| अग्नीषोमयोरहं देवयज्यया .. | १ | ६ | २ | १९ | १ | ८६० |
| अग्नीषोमयोरहं देवयज्यया … | १ | ६ | २ | २२ | १ | ८६० |
| अग्नीषोमयोरहमुज्जितिमनूज्जेषम् | १ | ६ | ४ | ७ | १ | ८७६ |
| अग्नीषोमाभ्याम् … … … | १ | १ | ४ | १० | १ | ८४ |
| अग्नीषोमाभ्याम् … … … | १ | १ | ५ | ४ | १ | १०३ |
| अग्नीषोमाभ्याम् … … … | १ | १ | ८ | ६ | १ | १३५ |
| अग्नीषोमा सवेदसा सहूती … | १ | ३ | १४ | ७ | २ | ४६५ |
| अग्नीषोमौ प्रथमौ वीर्येण .. | ३ | ५ | १ | ४ | ३ | ३०७ |
| अग्ने अङ्गिरः शतं ते सन्त्वावृतः … | ४ | २ | १ | ७ | ४ | १५२ |
| अग्ने अङ्गिरो यो द्वितीयस्या … | १ | २ | १२ | ७ | १ | ४१० |
| अग्ने अङ्गिरो योऽस्या पृथिव्या .. | १ | २ | १२ | ६ | १ | ४१० |
| अग्ने अच्छा वदेह नः … … | १ | ७ | १० | ४ | १ | १०४४ |
| अग्ने पद्यतिः … … … | ५ | ७ | २१ | १ | ५ | ३४९ |
| अग्ने पुरीषमसि … … … | ४ | ३ | ४ | ४ | ४ | ३२८ |
| अग्ने स्विष्टकृतोऽहं देवयज्यया … | १ | ६ | ४ | ३ | १ | ८७६ |
| अग्नेः स्विष्टकृतोऽहमुज्जितिमनूज्जेषम् | १ | ६ | ४ | ११ | १ | ८७३ |

